F-16.



श्रीगणेशाय नमः।

ग्रन्थमध्ये कृतं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नाति। श्रीशेति। हायनान्तयुवादिभ्योऽणिति सूत्रे श्रोत्रियस्य यलोपश्चेति वार्तिकाच्छ्रौत्रं श्रोत्रियत्वम्। आर्हन्ती योग्यता। गुणवचनब्राह्मणादिभ्यः कर्मणि चेति सूत्रे अर्हतो नुम्चेत्युक्तेः। ताभ्यां वित्तैः। किं च गुणैर्गुणवद्भिः। रूपाद्वाहतप्रशंसयोर्यबिति सूत्रे ऽन्येभ्योपि दृश्यतइत्युक्त्या गुण्या ब्राह्मणा इत्यस्य भाष्यादावुदाहृतत्वात्। तोष्टूयमान इति। स्तौतेर्यङन्तात्कर्मणि शानच्। अपिशब्देनापाततो विरोधं ध्वनयति। वस्तुतस्तु न विरोधः। स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिसिद्धत्वे ऽपि वियदादिवद्व्यावहारिकत्वात्। तदभावस्य पारमार्थिकत्वात्। एतच्चोत्तरमीमांसायां निरूढमेव। पूर्वार्द्धइति। हलन्तेषु क्विनादिव्युत्पादनं तु प्रासङ्गिकमिति भावः। अथेति। इहापि कृत्सु णचः स्त्रियामञ्, अणिनुण, इत्यादि प्रासङ्गिकं बोध्यम्। प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्तइति भावः। इह प्राचा, धातोः। आतृतीयाध्यायान्तवक्ष्यमाणाः प्रत्यया धातोर्ज्ञेया इत्युक्तम्। यङ्विधौ धातुग्रहणं योगविभागेन व्याचष्टे इति तद्व्याख्यातृभिरुक्तं तत्सर्वमिहोपेक्षितं योगविभागस्य निर्बीजत्वात्। दशेति। अनुबन्धवैलक्षण्यादिति भावः।

---

ग्रन्थमध्ये कृतमिति। "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणी"त्यादिभाष्योक्तफलोद्देशेनेत्यर्थः। ताभ्यां वित्तैरिति। तेन वित्त इति चणप्। वेदाध्ययनकर्तृत्वेन तदुक्तानुष्ठानकर्तृत्वेन च प्रसिद्धैरित्यर्थः। श्रुतिसिद्धत्वे ऽपीति। "एष आत्मा ऽपहतपाप्मे"त्यादिश्रुतिसिद्धत्वे ऽपीत्यर्थः। पारमार्थिकत्वादिति। "नेह नानास्ति किं चने"ति श्रुतेरिति भावः। निरूढं प्रसिद्धम्। तत्सर्वमिति। मूलं व्याख्यानं चेत्यर्थः। तत्र मूले इह[illegible] स्वतन्त्रं सूत्रम्। गुप्तिज्किद्भ्य इत्यादौ वक्ष्यमाणे तदसम्बन्धात् हेतुमति चेत्यादौ तत्सम्बन्धाच्च। व्याख्यानमप्यसङ्गतमित्याह। योगविभागस्येति॥

६८ म०

प्रदर्श्यन्तइति। यद्यपि पञ्चमलकारे रूपाणीह न व्युत्पाद्यन्ते तथापि स्वरूपेण लकारः प्रदर्श्यते तथापि लः कर्मणि लस्येत्यादिसूत्रविषयतां व्युत्पादयितुमिति भावः॥

वर्त्तमाने लट्॥ वर्त्तमानइति प्रकृत्यर्थविशेषणं तदाह। वर्त्तमानेत्यादि। लट् स्यादिति। तस्य वाच्यं तु उत्तरसूत्रे स्पष्टम्। वर्त्तमानकालस्तु द्योत्यः। एवं लङादिष्वपि भूतादिकालो यथायथं द्योत्य एवेति निरूढः पन्थाः। वस्तुतस्तु वाच्यत्वे ऽपि न क्षतिरिति विध्यादिसूत्रे वक्ष्यामः॥

लः कर्मणि च॥ चात्कर्त्तरीत्यनुकृष्यते। सकर्मकविषयं चेदम्। अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्। उत्तरवाक्येन तत्र विशेषविधानाच्च। तदेवदाह। सकर्मकेभ्य इति। भावे चेति चकारेणापि कर्त्तैवानुकृष्यते न कर्म, असंभवात्। तदाह। भावे कर्त्तरि चेति। यद्यपि भावकर्मणोरात्मनेपदविधानाच्छेषात्कर्तरीति परस्मैपदविधानाच्च ज्ञापकात् लकाराणां भावकर्मकर्त्तारो ऽर्था अनुमातुं शक्यन्ते तथा ऽपि असत्यस्मिन् सूत्रे सकर्मकेभ्योपि घञादिवद्भावे लकाराः स्युः। ततश्च घटं क्रियते देवदत्तेनेत्यादि प्रसज्येत। तन्निवृत्त्यर्थमिदं सूत्रम्। न चैवमकर्मकेभ्यो भावे इत्येवास्तु भावे अकर्मकेभ्य एवेति नियमार्थ-

---

प्रकृत्यर्थेति। प्रतिधातु अनन्तलडादेशानां शक्तिकल्पनापेक्षयैकधातोरेव शक्तिकल्पने लाघवादिति भावः। तुल्ययुक्त्या कर्त्रादीनामपि धातुवाच्यत्वं प्रत्ययास्तद्द्योतका अत एव तेषां विशेषणत्वमिति परे। तस्य। लटः। स्फुटमिति। भावकर्मकर्तृरूपप्रसिद्ध्यर्थः। द्योत्य एवेति। लक्ष्यबीजं तूक्तम्। निरूढः। भाष्यादिप्रसिद्धः॥

अनुमातुं शक्यन्ते इति। 'गुणः कृतात्मसंस्कार' इति न्यायेन भावकर्मणोः कर्तरीति लविशेषणम्। तत्र वर्त्तमानस्येत्यर्थ इति भावः। तयोरेवेत्यस्य स्थाने कर्मणि कृत्यक्तखलर्थाः, भावे ऽकर्मकेभ्य, इति न्यासः कार्यः। अनुदात्तङित इति

मिति वाच्यम्। भावे एवेति विपरीतनियमापत्तेः। तस्माद्भावे चेति च-कार आवश्यकः। नचैवं भावे चेत्याद्येवास्तु इति वाच्यम्। भावे इव कर्तर्यपि अकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यः कर्त्तरि लकारा-भावापत्तेः। नन्वेवमपि लश्चेत्यस्तु। कर्मणि तु ज्ञापकाद्भविष्यतीति चे-त्, उत्तरसूत्रे तयोरित्यनेन परामर्शार्थं कर्मणीत्यस्यावश्यकतया ज्ञा-पकानुसरणक्लेशस्य वैयर्थ्यात्। तस्माद्यथान्यासमेव रमणीयम्। अत्र नैयायिकाः। लकाराणां कृतावेव शक्तिर्लाघवात्। न तु कर्त्तरि। कृ-तिमतः कर्त्तृत्वेन तत्र शक्तौ गौरवात्। प्रथमान्तपदेनैव तल्लाभाच्च। देवदत्तः पचतीत्यत्र हि देवदत्तो विशेष्यो यत्नो विशेषणम्। आश्रय-त्वं तु संसर्ग इति। तन्न। पचन्तं देवदत्तं पश्य, पचते देवदत्ताय देहि इत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाविशेषेण तेभ्यः कृ-तिमात्रबोधापत्तेः। न चेष्टापत्तिः। तत्राभेदसंसर्गस्यैव वक्तव्यतया क-र्त्तृवाचकत्वस्यैव त्वया ऽभ्युपगमात्। नामार्थयोरभेदस्यैव संसर्गत्वात्। नन्वत एव गौरवप्रामाणिकतया शत्रादीनां कर्त्तरि शक्तिः। तिबादी-

---

कर्त्तरि कर्मव्यतिहारे इत्युत्तरमेव पठनीयमिति तात्पर्यम्। इत्येवास्त्विति। भाव-कर्मणोरित्युत्तरं भावेऽकर्मकेभ्य इति नियमार्थं कार्यमित्यर्थः। विपरीतेति। एवं च कर्त्तरि न स्यादिति भावः। चकार इति। स च कर्मणो ऽसम्भवात्कर्त्तुः समुच्चा-यक इति नोक्तदोष इति भावः। न च भावकर्मणोरित्यस्य स्थाने कर्मणि भावे ऽकर्मकेभ्य इति विधायकमस्त्विति वाच्यम्। एवं वचने आनुमानिकवचनकल्पने च लाघवाभावात्। इत्याद्येवास्त्विति। भावकर्मणोरित्युत्तरमिति भावः। लश्चेत्यस्त्विति। कर्त्तरि कृत्, लश्च, भावे ऽकर्मकेभ्य इति न्यासो ऽस्तु। भावे इत्यादि विधायक-मेवेति भावः। ज्ञापकादिति। कर्मणि इति कर्मार्थकलानुवादेन तद्विधानाज्ज्ञाप-कादित्यर्थः। वैयर्थ्यादिति। न च तत्र कर्मणि कश्चेत्याद्यस्तु। चेन पूर्वसूत्रानुकर्ष इति वाच्यम्। लाघवाभावादिति तात्पर्यम्। गौरवादिति। अनन्तकृतीनां श-क्यतावच्छेदकत्वेनानुगमः तासां कृतित्वेनानुगमे च गौरवमित्यर्थः। तल्लाभाच्चे-ति। एवं चान्यलभ्यतया तत्र शक्तिर्वक्तुमशक्येति भावः। नामार्थयोरिति। स-

नां तु कृतावेवेति वैषम्यमिति चेत्। नैवम्। स्थान्येव वाचको लाघवान्न त्वादेशो गौरवादिति हि तव मतम्। अत एव राम इत्यादौ सुप्त्वेनैकत्वे शक्तिरित्यादिस्त्वदीयानां व्यवहारः। एवं स्थिते तिबादीनां णचादीनां च स्मारकतया लिपिस्थानत्वं बोधकस्तु लकार एव स च णचाद्यन्ते कर्त्तरि शक्त इति स्थिते तिङन्ते कथं कृतिं बोधयेत्। 'अन्याय्यश्चानेकार्थत्व'मिति न्यायात्। अथ वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इति ब्रूषे तर्हि घटं घटेन हरेव विष्णोवेत्यादिषु 'सर्वे सर्वपदादेशा' इति न्यायेन पदस्फोटो वाक्यस्फोटश्च सिद्ध्येदिति मदुक्तवानिष्टम्। किं च। कर्तरि कृदिति यत्कर्तृग्रहणं तदेव लः कर्मणीति सूत्रे चकारेणानुकृष्यते तत्कथं ण्वुलादीनां लकाराणां च शक्तौ वैलक्षण्यम्। न च नामार्थयोरभेदः संसर्ग एव ण्वुलादौ कर्तुर्वाच्यत्वे बीजमिति वाच्यम्। पचतिरूपं पचतिकल्पः देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यतौचित्यात्। ननु तिङ्प्रत्ययो न नामेति चेत्, अकोपि नेति तुल्यम्। अकान्तं नामेति चेत् रूपबाद्यन्तमपि नामेति तुल्यम्। किं च युष्मदि समानाधिकरणे मध्यमः, अस्मद्युत्तम इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था, अभिहिते क-

---

मानविभक्तिकनामार्थयोरित्यर्थः। न्यायादिति। किं च त्वया लत्वं शक्ततावच्छेदकं वाच्यं तच्च न तदज्ञानतोपि बोधात्। किं च स्थानिनां कटचडादिभेदेनानैयत्यादव्यवहृतत्वाच्च तेषु शक्तिग्रहो दुरुपपाद इत्यपि बोद्धव्यम्॥ इत्यादिष्विति। आदिना वः न इति। न्यायेनेति। तथा हरे ऽवेत्यादौ पूर्वरूपादिस्थाने व्याकरणान्तरे परलोपादीनां विधानाद्व्याकरणानां कलहे पदसम्मोहेनार्थस्यापि संमोहाद्बोधानापत्तौ समुदाये एव शक्तिकल्पनापत्त्येऽसपि बोद्धव्यम्। तवानिष्टमिति। ननु प्रत्येकपदानामवधृतशक्तिकानां समुदायेन यथाव्युत्पत्ति स्थितानां तदर्थोपस्थानद्वारा वाक्यार्थबोधसम्भवान्न तयोरापत्तिरित्यरुचेराह। किं चेति। तत्कथमिति। एवं च लाघवात्कृतामपि कृतिर्वाच्या स्यात्। न च केवलकृतौ प्रयोगाभावः। आख्याते ऽपि समत्वात्, पक्त्वा जात इत्यादेः सत्त्वाच्च। ननु भावांशे तत्रापि कृत्तिङोर्वैषम्यं

र्त्तरि प्रथमे, त्यादिकं च कर्त्तुर्वाच्यतायां प्रमाणम्। यत्तु अनभिहित-इत्यस्य अनभिहितसंख्याके इत्यर्थवर्णनं, तन्न। कृत्तद्धितसमासेषु संख्याभिधानस्याप्रसिद्धत्वात्। अपि च धातूपात्तव्यापाराश्रयः कर्ता। तत्राश्रयमात्रं कृतां लकाराणां चार्थो न तु व्यापारोपि तस्य धातुनैव लब्धत्वात्। अत एव कर्ता कारक इत्यादावपि नानन्वयः। रथो गच्छतीत्यादावपि न कदाचिदनुपपत्तिः। एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव तल्लाभात्। क्वचित्तु त्वया ऽपि तस्यास्त्यक्तव्यत्वात्। एतेन कर्त्रधिकरणे आख्यातवाच्यत्वं कर्त्तुर्निरस्य जञ्जभ्यमानाधिकरणे शानजर्थत्वं स्वीकुर्वन्तो मीमांसकाः प्रत्युक्ताः। यत्तु तैरुक्तं शानजंशे कर्त-

---

दुर्वारमसत्त्वभूतो भाव आख्यातार्थः सत्त्वभूतश्च कृदर्थं इति। किं च नामार्थयोरिति व्युत्पत्तौ नामपदेन सत्त्वप्रधानस्य ग्रहणं किं च नामार्थयोरित्यस्य नामजन्यप्रतीतिविशेष्ययोरित्यर्थं इति न दोष इत्यरुचेराह। किं चेति। प्रमाणमिति। एवं च पाचको देवदत्त इत्यादाविव देवदत्तः पचतीत्यादावपि युष्मद्युपपद इति सूत्रानुवादबोधितऋष्यनुभवसिद्धसामानाधिकरण्यानुभवेन धर्मिणो वाच्यत्वमिति भावः। अन्यादृशसामानाधिकरण्यं तु न शब्दार्थः। प्राधान्यानुरोधात् कृतेर्वाच्यतेति न युक्तं, प्रत्ययार्थः प्रधानमित्यस्याजेत्यादौ व्यभिचारात्। आश्रयमात्रमिति। आश्रयतानामनन्तत्वे ऽपि आश्रयतात्वमखण्डं शक्यतावच्छेदकानामनुगमकमिति न शक्यतावच्छेदकाननुगमः। आश्रयत्वमेव शक्तिविशेषरूपमखण्डमेकं समवायवदित्यभेदान्वय इति। तव तु धातुना च कृतेर्बोधनादनन्वयः स्यादिति भावः। व्यापारे लक्षणाया इति। यदि तु व्यापारस्य धातुनैवोक्ततया तत्राश्रयत्वे लक्षणेत्युच्यते तदा सर्वत्र तदेव शक्यमस्तु किमनेन प्रयासेनेति भावः। सम्बन्धरूपलक्षणाज्ञानाननुभवाच्च। क्वचिदिति। रथो गच्छति, कर्त्तेत्यादौ। किं च कर्मलकारे तव कः प्रत्ययार्थः। न फलं, तस्य धातुत एव लाभात्। न कृति, स्तस्या अभिहितत्वेन पच्यते चैत्रेणेत्यादौ तृतीयानापत्तेः। न चाश्रयत्वं सर्वत्र तस्यैव शक्यत्वौचित्यात्। प्रथमान्तलभ्य आश्रय इत्यपि न। आश्रयत्वाख्यशक्तिमत्त्वेन ततो ऽलाभात्। कर्त्रधिकरणे इति। तत्र हि आख्यातार्थो न कर्त्ता प्राधान्यापत्तेः। किं तु फलावच्छि-

रि कृदिति व्याकरणं शक्तिग्राहकमस्तीति। तन्न। कृद्वाक्यशेषो ह्ययमनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते न तु शत्रादिषु, अन्यार्थेनैव तेषां निराकाङ्क्षत्वात्। 'आकाङ्क्षितविधानं ज्याय' इति न्यायात्। अन्यथा तेन शय्यमाने आस्यमाने चायं गत इत्यादौ भावे, क्रियमाण इत्यादौ कर्मणि च शानचो दौर्लभ्यापत्तेश्च। किं च। कर्त्तरि कृदिति यत्कर्तृग्रहणं तस्यैव लः कर्मणीत्यत्राप्यनुवृत्तेः कृतां तिङां च वैलक्षण्यं दुर्लभमित्यवोचाम। यत्तु भट्टपादा आहुः। कर्त्तरि यदेकत्वं तत्र तिबित्यादिक्रमेण लः कर्मणीत्यस्य द्व्येकयोरित्यादेरेकवाक्यतया व्याख्यानान्न कर्त्तुर्वाच्यता सूत्रादायातीति। तच्चिन्त्यम्। द्विवचनादिसंज्ञा ह्यादेशनिष्ठा। ततश्च तद्विधिना द्व्येकयोरित्यस्य एकवाक्यता ऽस्तु। न च तत्र कर्त्तरीत्यस्ति यद्द्वित्वादिविशेषणतया कथं चिन्नीयेत। ननु लविधितिबादिविध्योरपि एकवाक्यता ऽस्तीति चेत्सत्यम्। वाक्यैकवाक्यता सा। लविधिलभ्यलकारानुवादेन आदेशविधेः प्रवृत्तत्वात्। तथा च लविधौ श्रूयमाणं कर्त्तृग्रहणं कथं संख्यां विशिनष्टु। न हि तत्र संख्योपस्थापकमस्ति लकारस्य द्विवचनादिसञ्ज्ञाविनिर्मुक्तत्वात्। स्यादेतत् लः कर्मणि चेति सूत्रे ल इति लङ्लटोर्लकारानुबन्धयोर्न सामान्यग्रहणं किं तूत्सृष्टानुबन्धलकारसामान्यग्रहणमिति तावन्निर्विवादम्।

---

न्व्यापारानुकूलो व्यापारः कृत्यादिरूपः। स च व्यापारत्वेनैवात एव जानाति रथो गच्छतीत्यादौ न लक्षणा। कालान्वयो धात्वर्थव्यापारे आख्यातार्थे ऽपि वा आश्रयबोधस्तु लक्षणया लक्षितमादायैव च समानाधिकरण्योपपत्तिः। लः कर्मणीत्यादिकं तु लाक्षणिकार्थानुशासनमिति उक्तम्। निराकाङ्क्षत्वादिति। अर्थांशे इति शेषः। कर्मणि चेति। चेन शय्यमाने आस्यमाने गत इत्यादौ भावे चेत्यर्थः। एकवाक्यतयेति। कर्तृगते द्वित्वे इत्यादिक्रमेणैव कर्त्तुर्विशेषणत्वान्न वाच्यतेत्यर्थः। तद्विधिनेति। तिप्तस्झीत्यादिना। विशेषणतयेति। तेन गुणानां च परार्थत्वादिति न्यायविरोधोऽपि सूचितः। लविधिः लः कर्मणीत्यादि। सत्यमिति। उक्तन्यायविरोधेन तत्सत्त्वेऽपि तथान्वयासम्भव इति भावः। न हि तत्रेति। न चावान्तरवाक्यार्थे ऽ-

तत्र ल इति जसन्तं मा भूत्। किं तु ङसन्तमस्तु। लः परस्मैपदमितिवत्। आदेशापेक्षा चेयं षष्ठी। लस्य य आदेशः स कर्मणि चेत्यादि। केन विहितस्य लस्येहानुवाद इति चेत्। वर्त्तमाने लडित्यादिभिरिति गृहाण। एवं च कर्त्तरि यदेकत्वमिति भट्टपादोक्तयोजनिका निर्बाधैवेति चेत्। मैवम्। ल इत्यस्य षष्ठ्यन्तत्वे आदेशानामेवार्थं उक्तः स्यात् सोपि तिबादीनामेव न तु शत्रादीनां तेषान्द्विवचनादिसञ्ज्ञाविरहात्। द्व्येकयोरित्यादिनास्यैकवाक्यतायास्त्वयोक्तत्वात्। न च त्वदुक्तरीत्या कर्त्तरि कृदित्यनेन निर्वाहः। भावकर्मणि शानचो दुर्लभत्वापत्तेरुक्तत्वात्। न च शानज्विधिना सहात्मनेपदव्यवस्थापकानामेकवाक्यतया भावकर्मणोरित्यनेनेष्टसिद्धिः। सकर्मकादपि भावे शानजापत्तेः। किं च। आम्विषयस्य लकारस्यार्थों न निर्दिष्टः स्यात्तस्य हि लुगादेशः। न चाभावरूपस्य द्विवचनादिसञ्ज्ञाविनिर्मुक्तस्य च तस्यार्थादेशनं युज्यते लभ्यते वा। ततश्च सोपि कर्त्तर्य्येव स्यात्। ततश्चानुप्रयुज्यमानोपि तदनुरोधेन कर्त्तृप्रत्ययान्त एव स्यात्। इष्यते तु भावकर्मणोरपि। अपि च जसन्तत्वे श्रुतेनैव सम्बन्धः। षष्ठ्यन्तत्वे त्वादेश इत्यध्याहार्य्यमिति गौरवम्। अत एव ल इति प्रथमान्ततयैव व्याख्यानं पुरस्कृतं, हरदत्तेन चोक्तरीत्या लः कर्मणीति सूत्रे आदेशा अप्यनुवाद्या इति फलितं ते च लस्येत्यधिकृत्य तिप्तस्-

---

न्वितस्य तदेकवाक्यतायामावृत्त्या एकत्वादिविशेषणत्वमपीति वाच्यम्। आवृत्तौ मानाभावान्निराकाङ्क्षत्वाच्च। आदेशानामेवेति। न तु लस्येत्यर्थः। न तु शत्रादीनामिति। एवं च तेषामनिर्दिष्टार्थकत्वात्स्वार्थे आपत्तिरिति भावः। कर्मणि शानच्च इति। भावे तु स दुर्लभः। भावपदार्थे संख्यानन्वयात्। ननु लः कर्मणीत्यनेनाप्येकवाक्यतया न सकर्मकेभ्यो भावे शानजत आह। किं चेति। युज्यते इति। तदा हि द्विवचनत्वाद्यभावेनेति भावः। नन्वाम इत्यनेन लः कर्मणीत्यस्यैकवाक्यत्वाल्लुक्शब्देन तत्सहचरितामन्तलक्षणेन न दोष इत्यरुचेराहापि चेति। जसन्तत्वे इति। प्रथमान्तत्वोपलक्षणमेतत् तदाह। प्रथमान्ततयैवेति। आकरे

ह्नीति विहिताः। तथा च तदेकवाक्यतयैव पदविशेषपुरुषविशेषव्यवस्थापकानामिव वचनविशेषव्यवस्थापकस्यापि प्रवृत्तिध्रौव्ये पुनरिदानीं प्रवृत्तिर्निर्मूला व्यर्था अनिष्टावहा चेत्यास्तां तावत्। अत्रेदमवधेयम्। भावे चाकर्मकेभ्य इत्यत्राविवक्षितकर्मकाणामपि ग्रहणमिष्टं तथा च णेरणाविति सूत्रे नेह पच्यते नेह भुज्यते इति भावे लकार इति हरदत्तः। अत्यन्ताविद्यमानकर्मकाणामेवेह ग्रहणं नेह पच्यतइत्यादौ तु कर्मण्येव लकारः। गम्यमानत्वाच्च तन्न प्रयुज्यते इति मतान्तरम्। एतच्च गतिबुद्ध्यादिसूत्रे हरदत्तग्रन्थे स्पष्टम्। पक्षद्वयमपीदं भाष्यकैयटहरिग्रन्थारूढं क्षोदक्षमं चेति प्रपञ्चितं शब्दकौस्तुभे। यत्त्वत्राविवक्षितकर्मकाणां भावे लकार इति प्रसादग्रन्थमनूद्य भाष्यादिविरोधोद्भावनेन दूषयां चक्रुः। तच्चिन्त्यम्। पक्षद्वयमप्याकरसंमतमित्युक्तत्वात्। किं च अविवक्षितकर्माणोऽप्यकर्मका इति पक्ष एव प्रबलः। तथा हि। समानकर्तृकेषु तुमुन् इति सूत्रे इच्छता क्रियतइति भावे ल-

---

इति। पदमञ्जर्यामित्यर्थः। भाष्यस्वरसोऽप्येवमेव। तदेकवाक्यतयेति। परिपूर्णवाक्यस्यैवानुवाद्यसमर्पकत्वान्महावाक्यार्थबोधं प्रति कारणत्वाच्चेति भावः। इदानीमिति। महावाक्यार्थबोधकाले इत्यर्थः। व्यर्थेति। तिंपूतसुझि,द्व्येकयो,रित्येकवाक्यतयैव द्वित्वादौ वाच्यतायाः सिद्धत्वात्। न च कर्त्रादौ शक्त्यबोधनेन मीमांसकमतासिद्धिरेव फलम्। मतसिद्धौ पुनरन्वयः, पुनरन्वये च मतसिद्धि,रित्यन्योन्याश्रयादिति भावः। अनिष्टावहेति। गौरवात्कर्मणि शानचो दौर्लभ्यापत्तेश्च संख्यायाः परिच्छेदकत्वेनैकस्मिन्कर्त्तरीत्येव विशेषणताया एवौचित्याच्चेति भावः। ग्रहणमिष्टमिति। कृतपूर्वी कटमित्यस्य कर्तृकर्मणोरिति सूत्रे मातुः स्मर्यतइत्यादौ कर्मणो ऽविवक्षया भावे लस्याधीगर्थेति सूत्रे भाष्ये उदाहृतत्वादिति भावः। न च कृतपूर्वी कटमितिवत् पूर्वमविवक्षितकर्मतया भावे प्रत्यये घटं क्रियमाणं देवदत्तेनेत्यादिप्रयोगो दुर्वारः। विवक्षायाः प्रयोगाधीनत्वात् ईदृशी विवक्षा कृतपूर्वीत्यादिवृत्तिविशेषमात्रविषयेत्यर्थस्य कर्तृकर्मणोरिति सूत्रे भाष्ये ध्वनितत्वाच्चेति ध्वनयन्नाह। प्रबल इति इति। इति सूत्रे इति। तत्र हि वृत्तपारायणस्येत्यत्र वृत्तेर्भावे क्तोकर्मकत्वान्न

डुक्तो हरदत्तेन वच्यते च तत्र स्वयमपि तथैव । अपि च णेरध्ययने वृत्तमिति सूत्रे नपुंसके भावे क्तोप्यकर्मकेभ्य एव तयोरेव कृत्यक्तख-लर्था इत्यत्र क्तमात्रस्य ग्रहणात् । तत्र भावे चाकर्मकेभ्य इत्यनुवर्त्त-नात् । अन्यथा घटं कृतमित्यपि प्रसज्येतेति कैयटहरदत्तादिभिः सिद्धान्तितम् । एवं स्थिते पीता गावो, भुक्ता ब्राह्मणा, इत्यादौ भावे क्तान्तादर्शआद्यजिति निष्ठाप्रकरणे स्वयमेव वच्यमाण,मादिकर्म-णि क्त इति सूत्रे हरदत्तेन वच्यमाणं, कृतपूर्वीत्यत्र भावे क्त इति कै-यटाद्युक्तञ्च कथं संगच्छताम् । कथं च 'गतन्तिरश्चीन'मित्यादयः प्र-योगाः । यद्यप्यविवचितकर्माणो ऽपीह सूत्रे ऽकर्मकग्रहणेन गृह्येर-न्, गतिबुद्धीति सूत्रे तु न गृह्यन्तइत्युक्तन्तेन देवदत्तेन पाचयतीति सिद्धम् । गत्यर्थाकर्मकेति सूत्रे ऽपि न गृह्यते । दत्तवान् पक्तवानित्या-द्यर्थे दत्तः पक्त इत्यापत्तेः । इह तु ग्रहणे न कोपि दोष इत्यास्तान्ता-

---

तु ण्यन्तात्सकर्मकत्वादिति भाष्यमुपादाय कैयटेनेदमुक्तं न त्वेतदविवक्षितकर्मणा-मत्र ग्रहणे प्रतिकूलं ण्यन्तादप्यविवक्षितकर्मकाद्भावे क्तप्रत्ययसम्भवाद्दर्शयते भव इत्यादौ ण्यन्ते ऽविवक्षितकर्मकतादर्शनादिति चेन्न । एवं हि वाक्यवृत्त्योः समानार्थ-तया वृत्तिर्नैवोचिता । यस्य विभाषेति निषेधात् । वृत्तं पारायणस्येत्यादिसिद्धौ ण्य-न्तस्याविवक्षितकर्मतया निरर्थकणिचस्तादृशे विषये प्रयोगकल्पने मानाभाव इत्या-शयात् । अन्यथेति । सकर्मकेभ्योपि तत्प्रवृत्ताविसर्थ- । कृतपूर्वी कटमित्यादिवन्ने-ते प्रयोगा इत्यनुपदमेवोक्तम् । एवञ्च कृतपूर्वीत्यादिसिद्धये अविवक्षितकर्मकाणां तत्र ग्रहणमावश्यकमिति तात्पर्यम् । भावे क्त इति । अनेनैव च तेषां परस्परग्र-न्थविरोधमात्रदर्शनम् । न त्वयं सिद्धान्त इति भ्रमितव्यम् । कर्त्तरि कृदिति सूत्रभाष्या-त्पीतमुदकं येषां, विभक्तं धनं येषामिति कर्मक्तान्तादर्शआद्यजिति प्रतीयते तत्रस्य-कैयटाच्चेति बोद्धव्यम् । गतन्तिरश्चीनमिति । अयमभ्युच्चयः । गत्यर्थाकर्मकेत्यनेन तेभ्यो भावेपि क्तस्य विशेषतो विधानादित्यन्यत्र प्रपञ्चितम् । इत्युक्तमिति । प्रा-चीनैरिति शेषः । निवृत्तप्रेषणपक्षतृतीयकक्षायां लावयति केदारं देवदत्त इति कैयटादिप्रयोगात् । देवदत्तेन पाचयतीति । अविवक्षितकर्मकात्पचेर्णिचीदं रूपं, वस्तुतः प्रयोगानुसारित्वाद्विवक्षाया अत्र तादृशविवक्षैव न । अन्ययोक्तकैयटप्रयो-

वत् ॥

लस्य ॥ लुनाति चूडाल इत्यादौ कुतो नेति चेत्। अत्राहुः। लः कर्मणि चेत्यत्र निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लस्येह ग्रहणमिति। अतोपि आदेशानुवादेन तत्रार्थविधिरिति कल्पना प्रत्युक्ता। अन्योन्याश्रयापत्तेरिति बोध्यम्। यद्वा धातोरित्यधिकारात् धातोर्विहितस्यैव लस्येह ग्रहणम्। लस्येत्सञ्ज्ञा तु न भवति फलाभावात्। न चाश्रवणमेव फलम्। आदेशविधिनैव तल्लाभात्। नापि लित्स्वरः फलम्। णलो लित्त्वेन तदभावस्य ज्ञापनादिति दिक्॥

तिप्तस्झि ॥ समाहारद्वन्द्वः पृथक्पदानि वा । इटष्टकार इटोदिति विशेषणार्थः। एरत् इति ह्युच्यमाने एधेमहीत्यत्रापि स्यात् आगमलिङ्गन्तु न भवति सप्तदशभिरादेशैः समभिव्याहारात्। महिङो ङकारस्तिङ्तङिति प्रत्याहारार्थः समुदायानुबन्धः। न त्ववयवानुबन्धः।

---

णविरोधो दुष्परिहरः स्यादिति बोद्धव्यम्। सूत्रेपि न गृह्यतइति। अत्र च आशितः कर्त्तेति सूत्रस्थं भाष्यं मानम्। तत्र ह्याङ्पूर्वादशेः सकर्मकत्वात्कर्तर्यप्राप्तः क्तो निपात्यते इत्युक्तम्। अन्यथा मातुः स्मर्यतइतिवदविवक्षितकर्मकत्वेनाकर्मकतायां सूत्रेणैव सिद्धे निपातनं व्यर्थं स्यादिति भावः॥

प्रत्युक्तेति। तत्र कर्त्राद्यर्थविहितलकाराप्रसिद्धेरिति भावः। अन्योन्याश्रयापत्तेरिति। कर्त्राद्यर्थविहितलानुवादेनादेशविधिस्तत्स्थानिकादेशानुवादेन अर्थविधौ स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति न्यायेन लस्य तदर्थविहितत्वकल्पनमित्यन्योन्याश्रय इत्यभिमानः। न भवतीति। लस्य तु परस्मैपदमित्याद्यनुवादसामर्थ्यादिति भावः। दोषान्तरमप्याह फलाभावादिति। णल इत्युपलक्षणं थलोपि ज्ञापनात्। न चासञ्जातविरोधन्यायेन स एव श्रवणार्थोस्तु बभूथाततन्थेति निर्देशेन थलो लस्येत्संज्ञावश्यकत्वादिति भावः॥

एधेमहीत्यत्रापीति। तकाराभावे तत्र लिङ इत्यनुवृत्तावपि इवर्णान्तस्य लिङोदित्यर्थः स्यात् प्रत्ययाप्रत्यययोरित्यस्या अर्थवत्परिभाषायाश्च वर्णग्रहणे ऽप्रवृत्तिरित्यङ्गसञ्ज्ञासूत्रे कैयटेन स्पष्टमुक्तेरिति भावः। समभिव्याहारादिति। सादृश्यादित्यर्थः।

व्याख्यानात्। तेन संपाप्रच्छिमहे वात्रश्चिमहे इत्यत्र ग्रहिज्येति संप्रसारणं न। तथा इषेः कर्मण्याशीर्लिङि एषिषीमहीत्यत्र क्ङिति चेति गुणनिषेधो न॥

तङानौ॥ ल इति षष्ठ्यन्तानुवृत्तेर्लादेश एवानौ गृह्येतइत्याह। शानच्कानचौ चेति। तेन ताच्छील्यादिषु चानश् परस्मैपदिभ्योपि भवति। क्तीह निघ्नानाः॥

अनुदात्तङितः॥ द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते। तत्रानुदात्तांशे तदन्तविधेः फलाभावात् अंशान्तरे एव तदन्तग्रहणम्। तदाह। उपदेशइत्यादि। उपदेशेजनुनासिक इति सूत्रात् उपदेशग्रहणमनुवृत्तं तदपि ङिदंशएव सम्बध्यते नान्यत्राव्यभिचारादिति भावः। तदन्तविधिलाभार्थं विशेष्यमाह। धातोरिति। एतच्च भूवादय इति सूत्रान्मण्डूकप्लुत्या ऽनुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामाल्लभ्यतइति प्राञ्चः। वस्तुतस्तु इको झलित्यत्र सना धातोरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः। तिङां लादेशत्वात्। लस्य

व्याख्यानादिति। एतेन स्थसस्थकाराद् सिपः पकारेण प्रत्याहारं कृत्वा स्यपान्तान्तन्ताम इति सूत्रयितुमुचितमित्यपास्तम्। तथा सति सिपः पित्त्वानापत्तेः। इदमेव ज्ञापयति इह सूत्रे सम्भावितसमुदायानुबन्धत्वं नान्तावयवानुबन्धत्वमिति। एतेन प्रत्याहारार्थानुबन्धे स्थानिवदादिसूत्रस्यभाष्यविरोधः। तत्र ह्ययचश्चकारस्य प्रत्याहारार्थत्वमुक्तम्। इष्यते चायचि चित्कार्यमपीति परास्तम्। प्रकृते ज्ञापकबलेन तथा ऽङ्गीकारे ऽप्यन्यत्र तथा ऽङ्गीकारे मानाभावात्। संपाप्रच्छिमहे इति। संपूर्वात्कर्त्तरि तङ्। वात्राश्चिमहे इत्यत्र कर्मणि॥

अन्यत्राव्यभिचारादिति। द्वन्द्वसाधुत्वायानुदात्तांशे शाब्दान्वयसत्त्वे ऽपि तस्य नैष्फल्यं बोधयितुं अनुदात्तांशे उपदेशे इत्यस्यासम्बन्धः। इति प्राञ्च इति। अत्रारुचिबीजं तु विभक्तिविपरिणामकल्पने गौरवमिति। धात्वोराक्षेप इति। इदं च भिन्नवाक्यतया सामान्यशास्त्रविहितानामनेन नियम एतदभावे पर्यायेण प्रसक्तस्य सर्वस्यानेन निवृत्तिः क्रियतइति न भुक्तवन्तमित्यादिन्यायविरोधो लुगादिनेव

च धातोर्विधानात्। उपदेशइति किम्। चुकुटिषति। गाङ्कुटादिभ्य इति सन आतिदेशिकं ङित्त्वम्। धातोः किम्। चङङ्भ्यां मा भूत्। अदुद्रुवत्। अवोचत्। ननु वृद्भ्यः स्यसनोरिति सूत्रे स्यग्रहणेन विकरणेभ्यो नियमो बलीयानिति ज्ञापितत्वात् चङङोर्न दोष इति चेत्, सत्यम्। स्यग्रहणं विकरणव्यवधानेऽपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङङोर्दोषः स्यादेव। अयञ्च पक्षः शदेः शित इति सूत्रे भाष्यकैयटयोः स्पष्टः। किं च। तदन्तविधिलाभार्थमपि धातुग्रहणम्। फलन्तु यङन्तादीयङन्ताच्चात्मनेपदसिद्धिः। बोभूयते। ऋतीयते। कथं तर्हि शेते इति। व्यपदेशिवद्भावेन शीङो ङिदन्तत्वात्। चिचीयते इत्यादौ तु अवयवेऽचरितार्थेन ङकारेण क्यजन्तस्य विशेषणान्ततो

---

नियमेनापि जातस्य निवृत्त्यङ्गीकाराद्वा न विरोध इति मतेन लक्ष्यानुसाराच्चाक्षिप्तस्यापि शाब्दबोधे भानम्। यदा त्विदं प्रकरणं तिबादिविधिना सहैकवाक्यतयाऽनुदात्तङितो धातोर्विहितस्य लस्य स्थाने एकत्वे गम्ये आत्मनेपदैकवचनं ते, इत्यादिक्रमेण व्याख्यानाद्विधायकमिति पक्ष,स्तदा विशेष्यलाभः स्पष्ट एव। आत्मनेपदशब्दादौ च भाविसञ्ज्ञाश्रयणमत्र पक्षे। तत्र सर्वेषां खलेकपोतन्यायेनैकवाक्यता। एतदभावे प्राप्तातिप्रसङ्गपरिहारेण परमेतेषां नियमत्वव्यवहार इति बोद्ध्यम्। ज्ञापितत्वादिति। अन्यथा ऽन्तरङ्गत्वात्सामान्यतस्तिबादिषु संख्याविशेषाद्यपेक्षया ऽन्तरङ्गत्वाद्विकरणेष्वनुदात्तेत्यादेर्विहितविशेषणत्वे मानाभावेन तेन व्यवधानान्नियमाप्रवृत्तौ सामान्यविधिना सर्वेषां सिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। अत्र पक्षे वृद्भ्य इत्यत्र स्ये इति विषयसप्तमी ज्ञेया। यङन्तादिति। अन्यथा यङाद्यन्तसमुदायस्य तिङ्निरूपिताङ्गत्वानापत्त्यावडाद्यव्यवस्था स्यादिति भावः। विशेषणमिति। तेन वैशिष्ट्यइत्यर्थ इति बोद्ध्यम्। अन्ये तु स्यग्रहणमिदमेकवाक्यतया विधायकमित्यर्थस्य ज्ञापकम्। तत्र धातोरिति पञ्चम्या विहितविशेषणत्वेन तत्समानाधिकरणस्यानुदात्तङित इत्यादेरपि तत्त्वमेव। तेन चङङोर्न दोषः। तदन्तस्य धातुत्वाभावाच्च। वृद्भ्य इत्यादौ स्यइति च विषयसप्तमीति तद्विषये विकल्पसिद्धिरित्याहुः। इदं च सूत्रं नामधातोर्न प्रवर्त्तते। एतद्विषयस्य तस्यानभिधानात्। ध्वनितं चेदं लोहितादिसूत्रे क्यषः ककारषकारप्रत्याख्यानपरभाष्येण। अन्यथा वा क्यष इत्यस्य स्थाने वा यादिति सू-

व्यपदेशिवद्भावेन ङिदन्ततेति बोध्यम् ॥

स्वरितञितः ॥ कर्त्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम् । कर्मण्यण् ॥

तिङस्त्रीणि ॥ ननु तिङः षट्त्रिकाः, सञ्ज्ञास्तु तिस्र, इति यथासंख्यं न प्राप्नोत्यत आह । उभयोरिति । परस्मैपदमात्मनेपदमिति चानुवर्त्तते, तेन पदद्वये प्रत्येकं सञ्ज्ञा प्रवर्त्तते इति भावः । ननु प्रथममध्यमोत्तमा इत्यत्र कृतद्वन्द्वानामेकशेषमाश्रित्य सञ्ज्ञा अपि षडिति कुतो नाश्रीयतइति चेत् । एकशेषाश्रयणे गौरवात् वैयर्थ्याच्चेति गृहाण । त्वया ऽपि हि परस्मैपदात्मनेपदग्रहणमनुवर्त्त्यमेव । अन्यथा शतृक्वसोः सावकाशा परस्मैपदसञ्ज्ञा प्रथमादिसञ्ज्ञया बाध्येत । णलुत्तमो वेत्यादिज्ञापकानुसरणे तु सुतरां प्रतिपत्तिगौरवम् ॥

तान्येकवचन ॥ तानीत्यस्य व्याख्यानं लब्धेत्यादि । अन्यथा एकसञ्ज्ञाधिकारात्प्रथमादिसञ्ज्ञानां एकवचनादिसञ्ज्ञानां च पर्य्यायः स्यात् इति भावः । प्रत्येकमिति । यत्तु प्राचा एकैकश इत्युक्तं तदशुद्धमिति सुप इति सूत्रे ऽवोचाम । माधवदुर्घटग्रन्थावपि एकैकश इति समर्थयितुं प्रवृत्तौ प्रागुक्तरीत्या प्रामादिकावेवेत्यवधेयम् ॥

युष्मदि ॥ स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमानइति । समानाधि-

---

ञिते आचाराक्विन्तसभ्यशब्दादौ दोषस्य स्पष्टत्वेन भाष्यासङ्गतिः । बहुव्रीहेरूधस इति सूत्रे भाष्ये ऽपि ध्वनितमिति निरूपितम् । अवगल्भतइत्यादौ त्वनुदात्तत्वानुनासिकत्वप्रतिज्ञासामर्थ्यात्प्रवृत्तिः । चित्रीयतइत्यादाववयवे ऽचरितार्थेन ङकारेण क्यजन्तविशेषणतया व्यपदेशिवद्भावेन ङिदन्तता बोद्ध्या ॥

इति चानुवर्त्तते इति । तच्च षष्ठ्यन्ततया विपरिणम्यते इति भावः । ज्ञापकानुसरणे त्विति । प्रथमादिसञ्ज्ञया परस्मैपदसञ्ज्ञाया बाधे हि परस्मैपदानां विहितो णलेव दुर्लभ इति भावः ॥

पर्यायः स्यादिति । तथा चादानीत्यादावाडुत्तमस्येत्याट्सिद्धिरिति भावः । प्रागुक्तरीत्येति । सुप इति सूत्रोक्तरीत्येत्यर्थः ॥

करणे किम्। त्वां पश्यति। त्वया क्रियते॥

तिङ् शित्॥ धात्वधिकारेति किम्। हरीन्। अस्तः सार्वधातुकम-पिदिति ङित्त्वे घेङितीति गुणः स्यात्। लिङः शिय इत्यादौ सार्व-धातुके यक् च स्यात्। यत्तु वदन्ति। वारिणी इति शीभावस्य सार्व-धातुकत्वाल्लघूपधगुणः स्यादिति, तन्न। क्ङितीति निषेधात्। इग-न्तत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च॥

झोन्तः॥ आयनेयीनोयिय इति सूत्रात्प्रत्ययग्रहणमनुवर्त्तते। आदि-ग्रहणं निवृत्तम्। अन्यथा शयातै इति न सिद्ध्येत्। शीङो लेट्। लेटो ऽडाटावित्याटि कृते झस्यानादित्वात्तदेतदाह। प्रत्ययावयवस्येति। एतेन प्रत्ययादेर्झस्येति प्राचो ग्रन्थः प्रत्युक्तः। यत्तु व्याचक्षते। आडा-गमे कृते अस्तु नाम तत्सहितोपि प्रत्ययो न तु तत्सहित एवेति नियमः। अन्यथा प्रणिदापयतीति पुकि कृते दा, इत्यस्यानर्थकत्वादधातु-त्वाच्च घुसञ्ज्ञा न स्यात्। अत एव कैयटेनोक्तम्। अनागमकानां सागमका आदेशा भवन्तीत्येतत्तु नित्यतासमर्थनायैवोक्तं प्रक्रियादृ-शायां त्वागमागमिभाव एवेति। अत्रेदं वक्तव्यम्। प्रणिदापयतीत्यादौ पुगागमात्प्रागेव घुसञ्ज्ञाप्रवृत्तौ पुग्विशिष्टस्यापि घुग्रहणेन ग्रहणा-

---

इत्यस्य व्याख्यानमिति। स्थानं प्रसङ्गस्तद्वाति युष्मदीति तदर्थ इति भावः। त्वां पश्यतीति। तिङ्वाच्यकारकवाचित्वं हि सामानाधिकरण्यन्तिङर्थे ऽभेदान्व-यित्वमिति यावत्॥

नन्वित्संज्ञकङकारादावित्यर्थेन गुणो वारयितुं शक्य इत्यरुचेराह लिङ इति। लघूपधेति। वृद्धयौत्वेति पूर्वविप्रतिषेधेन सार्वधातुकेति गुणं सार्वधातुकसञ्ज्ञासापेक्ष-त्वेन समं बाधित्वा नुमुत्पत्तौ जातायामिति भावः। विभाषोर्णोरित्यादिपूर्वोत्तरसा-हचर्येण धातोः परस्यैव ङित्त्वे ऽप्याह। इगन्तत्वेति॥

इत्यादि कृते इति। लावस्थायामेवाटि निर्दिश्यमानपरिभाषया लस्य झीत्यादेशे कृते इति भावः। नियम इति। एवं च तद्रहितस्यापि प्रत्ययत्वमर्थवत्त्वं चेत्यादि-ग्रहणानुवृत्तावपि न दोष इति भावः। अन्यथा तत्सहितस्यैवार्थवत्त्वादौ। अत

न कश्चिद्दोषः। 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति न्याया-त्। यत्तूक्तम्। कृतेऽप्यागमे तत्सहितस्यैव प्रत्ययत्वमिति नियमो ना-स्तीति, तन्न। अवयवविनिर्मुक्तस्यावयवित्वायोगात्। अन्यथा भूया-स्तामित्यादौ तामादीनामिडागमापत्तेः। नन्वङ्गात्परस्य इट्, यासुड-न्तं च नाङ्गमिति चेत्, न। भवामि भविष्यामीत्यादौ विकरणान्तस्यैव तदादिग्रहणबलेन त्वन्मते यासुडन्तस्यापि अङ्गताया दुर्वारत्वात्। कैयटग्रन्थोपन्यासस्तु वृथैव। न हि तेन कृतेऽप्यागमे तद्विनिर्मुक्तस्य प्रत्ययत्वमिति त्वदभिमतं लभ्यते। किं च। लविषीयेत्यत्र विशेषविहित-त्वात्सीयुटि कृते लिङ इट् तस्यागमेनादित्वविघातात् प्रत्ययाद्युदात्त-त्वं न प्राप्नोतीत्याशङ्क्य प्रत्ययस्वरे कर्तव्ये आगमा अविद्यमानवदित्य-तिदेश आद्युदात्तश्चेति सूत्रे भाष्यादौ स्वीकृतः। न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते इत्यलमाकरविरुद्धग्रन्थसमर्थनाभिनिवेशेन॥

अतो दीर्घो॥ सार्वधातुके किम्। केशवः। अङ्गना। अत आदिति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यात्। अनन्त्यस्यापि प्रश्नाख्या-

---

एवेति। आदेशत्वइवागमत्वे ऽपि अवयवानामानर्थक्यस्य सत्त्वादेव। घुग्रहणेनेति। इदमुपलक्षणं दाधातुग्रहणेन पुग्विशिष्टस्य घुत्वमित्यपि बोद्ध्यम्। अवयवित्वायो-गादिति। अत एवोस्यपदान्तादिति सूत्रे भाष्ये भिन्द्युरित्युसोनर्थकत्वमुक्तम्। इडा-गमापत्तेरिति। न चार्धधातुकस्येडित्यादौ आर्धधातुकेन धातोराक्षेपाद्धातोः पर-स्यार्द्धधातुकस्येत्यर्थान्न दोष इति वाच्यम्। आर्धधातुकसञ्ज्ञायां धातुविहितत्वस्यैव निमित्तत्वेन विहितपञ्चम्यन्तस्यैवाक्षेपापत्तौ दोषतादवस्थ्यात्। न त्वङ्गादिति। अ-ङ्गाधिकारादिति भावः। दुर्वारत्वादिति। अङ्गनिमित्तस्यार्द्धधातुकस्येत्यर्थे ऽदोषाच्चे-त्यपि बोद्ध्यम्। सीयुटि कृते इति। लावस्थायामिति शेषः। इडिति। इडादे-श इत्यर्थः। युज्यतइति। तदयुक्तत्वञ्च प्रकृतसूत्रे भाष्ये ध्वनितम्। स्यसिच्सूत्रे कैयटे च स्पष्टम्। एतेनागमे कृते तद्रहितस्यार्थवत्त्वमिति येन विधिरिति सूत्रस्थ-कैयटोक्तमपास्तम्। अनिनस्मन्ग्रहणानीति सुस्रोता इत्यनर्थकेनेति तत्सूत्रस्थभा-ष्यविरोधाच्चेति दिक्॥

नयोरिति प्लुतो मा भूदित्येतदर्थम्। अपाक्षीरोदनं देवदत्त, ननु पचामि भोः॥

परोक्षे॥ यद्यपि क्रिया सर्वा परोक्षैव। उक्तं हि भाष्ये। "क्रिया नामात्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितु"मिति। तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां पारोक्ष्यमिह विवक्षितम्। तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिड् भवत्येव। अयं पपाच त्वं पेचिथेति। एवं स्वव्यापारस्यापि

---

प्लुतो मा भूदिति। न चानन्त्यस्य पदस्य टेरिति तदर्थात्कथं पचामीत्यादौ तत्प्राप्तिरिति वाच्यम्। दीर्घग्रहणसामर्थ्येनान्त्यविषयएव तत्सम्बन्धात् वाक्यटूयोः क्लृप्तसम्बन्धत्यागे मानाभावात्। तेन वाक्यस्यानन्त्यस्य पदस्याचः प्लुतः स्यादनन्त्यस्य पदस्य च टेरिति तदर्थः। आदिति तपरकरणेन तु तद्व्यावृत्तिः। प्लुतस्यासिद्धत्वात्। अत एव गीः पूरित्यादौ दीर्घः। अन्यथा तस्यापीदुदिति तपरत्वसामर्थ्यादप्रवृत्तिः स्याद्दीर्घग्रहणे तु तत्सामर्थ्यादसिद्धत्वस्यापि बाधः। आकारान्तरप्रश्लेषेण वारणन्तु क्लिष्टं तत्र तात्पर्यग्राहकाभावात्। अस्तु वा तदुपायान्तरमिति भावः। एतच्च हरदत्तानुरोधेनोक्तम्। वस्तुत इदं चिन्त्यम्। ज्ञाजनोर्जेति सूत्रे जायते जानातीत्यादौ ह्रस्वादेशे ऽप्यतो यञीति दीर्घेण सिद्धे दीर्घनिर्देशस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यविरोधात्। दीर्घे ऽजानाम्भो इत्यादौ प्लुतानापत्त्यां तत्साधनेन जा इति दीर्घोच्चारणस्य सार्थक्याच्च। तस्माद्वैकल्पिकत्वेनेदृशे विषये प्लुताप्रवृत्तिरुचिता दीर्घग्रहणं हलि लोप इति सूत्रे हल्यशिति वक्तव्ये लोपग्रहणवदिति बोद्धव्यमिति दिक्॥

क्रिया सर्वेति। अवयवक्रिया समूहरूपा चेत्यर्थः। अत्यन्तापरदृष्टेत्यस्यावयवशः समूहश्च अपरेण प्रमाणेन प्रत्यक्षेणादृष्टेत्यर्थः। पूर्वापरीभूतावयवेति तल्लक्षणकथनं, एकैकक्षणस्तु सूक्ष्मकालत्वादपर इत्यत एव पिण्डीभूता निदर्शयितुं शक्या। पिण्डीभावस्यैवाभावादिति भावः। अत एवैतच्छेषे भाष्ये सासावनुमानगम्येति। पश्य मृगो धावतीत्यादौ पश्येत्यस्य ज्ञानसामान्यपरत्वं तस्याः फलानुमेयत्वादिति बोद्धव्यम्। एवं चाव्यावर्त्तकत्वात्परोक्षइति विशेषणमनुपपन्नमिति भावः। शक्तिमतामिति। तां विना व्यापारावेशासम्भवादिति भावः॥

वर्तमानताद्भाषायां व्यासङ्गादिना स्वयमप्रतिसन्धाने ततः कार्य्येणा-नुमितौ भवत्येव। 'बहु जगद् पुरस्तात्तस्य मत्ता किलाह'मितिवत् ॥

लिट् च ॥ लङः शाकटायनस्यैवेति सूत्रादेवकारो ऽनुवर्त्तते। तदाह। आर्धधातुकसञ्ज्ञ एवेति ॥

परस्मैपदानाम् ॥ अत्र थशब्दस्य अकारो विधीयमानो ऽन्त्यस्य प्राप्नोति। न च विधिवैयर्थ्यं, यथासंख्यसंपादनेन कृतार्थत्वात्। अत्राहुः। धातोरित्यधिकारादादेः परस्येति व्यञ्जनमात्रस्य कृते द्वयोरतो गुणइति पररूपम्। यद्वा द्वयोरकारयोः पररूपेण सूत्रे निर्द्देशः। अनेकाल्त्वात्सर्वादेशः ॥

भुवो वु ॥ अचीति किम्। अभूत्। अभूः। वुकि सति लोपो व्योरिति बाधित्वा परत्वाद् हल्ङ्यादिलोपः स्यात्। स्यादेतत्। हल्ङ्यादिलोपादन्तरङ्गत्वाद्वलिलोप एव भविष्यति। तथा च मव्यतेर्यङ्लुगन्तात्लङि तिप्सिपोः, अमामत्, अमाम इति माधवादिभिरुक्तम्। एवं चाज्ग्रहणमूदुपधाया इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिरुपयोजितं, न त्वावश्यकमित्येव निष्कर्ष उचित इति चेन्नैवम्। हल्ङ्यादिलोपस्येव वुको ऽपि बह्वपेक्षत्वेन बहिरङ्गतया असिद्धत्वे सति वलि लोपस्य प्राप्तेरेवाभावात्। तस्मादज्ग्रहणमिहार्थमपीत्येव युक्तम्। अजादेरिति। न बहुव्रीहेः षष्ठी। इन्द्रियि-

---

एवकार इति। अन्यथैकसञ्ज्ञाधिकारादन्यत्र सत्त्वेन सञ्ज्ञासमावेशः स्यादिति भावः ॥

ननु धातोरिति सूत्रे भाष्ये तिपूतसूज्ञीःयादौ धातोरित्यस्य विहितविशेषणताया उक्तत्वेनेहाप्यधिकारात्तथैवापत्तौ आदिरित्यस्याप्रवृत्तिरित्यरुचेराह। यद्वेति। लोपः स्यादिति। सान्निपातपरिभाषायास्तु नैतद्विषये प्रवृत्तिः। अचिभरित्याद्यसिद्ध्यापत्तेरिति भावः। अन्तरङ्गत्वादिति। प्रत्ययविशेषापेक्षहल्ङ्यादिलोपापेक्षया वर्णमात्राश्रयत्वेन तस्यान्तरङ्गत्वमिति भावः। प्राप्तेरेवाभावादिति। वलि लोपे वग्रहणप्रत्याख्यानेन तदप्राप्तेश्चेत्यपि बोद्ध्यम्। एवञ्च माधवाद्युदाहृतं चिन्त्यमेवेति

षतीत्यत्र दकारस्य नन्द्रा इति द्वित्वनिषेधापत्तेः । किं तु कर्मधारयादेषा पञ्चमी तद्वाह । आदिभूतादिति । भूवभूविति । अत्र धात्ववयवत्वं प्राथम्यञ्च व्यपदेशिवद्भावेन बोध्यम् । यद्यपीह चत्वार एकाचः, तत्रावयवास्त्रयः, भू,ऊ,ऊव्, इति । समुदायस्तुर्थः । तथाऽपि समुदायैकाच एव द्वित्वम् । तस्मिन्हि द्विरुच्यमाने त्रयोऽप्यवयवा द्विरुच्यन्तएव । वृक्षचलने सर्वावयवचलनवत् ॥

पूर्वोभ्यासः ॥ अत्रेति । एकाचो द्वे इति प्रकरणे ॥

हलादिः ॥ अभ्यासस्येति जातिपरो निर्देशः । तेनाटतुरित्यादौ टकारादिनिवृत्तिः सिद्ध्यति । क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् ॥

भवतेरः ॥ अत्र प्राचोक्तम् । भवतेरिति कर्त्तुर्निर्देशाद्भावकर्मणोर्नात्वमिति । व्याख्यातञ्च पौत्रेण कर्त्रर्थयोस्तिप्शपोर्निर्देशादित्यर्थ इति । तन्न । धातुनिर्देशमात्रे श्तिपो विधानात् । शपस्य विकरणत्वेनान-

———

दिक् । निषेधापत्तेरिति । स्पष्टं चेदं संयोगसञ्ज्ञासूत्रे भाष्ये । कर्मधारयादिति राजदन्तादित्वात्सौत्रत्वाद्वा विशेषणस्याप्यादिशब्दस्य परनिपात इति भावः । चत्वार एकाच इति । निजौ चत्वार एकाच इति भाष्यस्थैकदेश्युक्तिरीत्येदम् । व्यपदेशिवद्भावस्यासहाये एव प्रवृत्त्येतद्घटके ऊकारे एकाच्त्वोपपत्त्यभावात् । सम्भावनामात्रेण त्वेकदेशिना तथोक्तमिति बोद्धव्यम् । द्विरुच्यन्तएवेति । अवयवद्वित्वे हि समुदायस्यावयवान्तरस्य चाननुग्रहः स्पष्ट एवेति भावः । पुनः पुनः प्रवृत्त्या सर्वावयवानुग्रहः शक्य इति तु न वाच्यम् । एकवारन्द्वित्वे लक्ष्ये लक्षणस्येति न्यायेन पुनर्द्वित्वाप्रवृत्तौ एकाचोऽभावेन पुनस्तदप्रवृत्तेः । युगपत्तु सर्वेषां द्विः प्रयोगोऽशक्यः । वाचः क्रमवृत्तित्वात् ।

प्रकरणे इति । पूर्वोऽभ्यास इत्यस्याप्यधिकारसूत्रत्वादेतदर्थलाभः । बभुर्जहुरित्यादौ बाहुलकादभ्यासकार्यमिति । भाष्ये तु “कृञादीनां कादौ द्वित्वं वक्तव्यम्” चक्रुर्बभुर्जहुर्ययुरित्याद्युदाहृतम् । एवञ्चोणादिषु द्वित्वविधानमनार्षमिति लभ्यते ॥

लोपविधानादिति । इदञ्चाजादेरिति सूत्रे भाष्ये स्पष्टम् । अनर्थकत्वादिति ।

र्थकत्वात्। कर्त्रर्थके परे विहितस्यापि तस्य श्नितपः श्नित्त्वसामर्थ्यादेवे-च प्रवृत्तेः। अन्यथा त्वदुक्तरीत्या उपसर्गात्सुनोतिसुवतीत्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात्। अपसिद्धान्तश्चायमिति स्पष्टमेवाकरग्रन्थम्। प्रयुञ्जते च कर्मण्यप्यकारं कवयः। "तस्मातपत्रं बिभरां बभूवे, विभावरीभिर्बिभरां बभूविरे" इत्यादि॥

असिद्धवदत्रा॥ अभिविधावाङ् भाधिकारमभिव्याप्येत्यर्थः। अधिकारश्चायम्। अत्रग्रहणं समानाश्रयप्रतिपत्त्यर्थम्। भाद्ग्रहणं विषयनिर्देशार्थम्। एवञ्चानुदात्तोपदेशेत्यत्रास्योपस्थाने सत्ययमर्थो भवति। एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे स चासिद्धो भवति। अत्र झलादौ क्ङित्येव निमित्ते सति यदाभीयं प्राप्नोति तस्मिन्कर्तव्यइति। न त्वस्मिन्कर्त्तव्यइति। नन्वस्याधिकारे यत्र यत्रोपस्थानं तत एवारभ्य यदाभीयन्तस्मिन्नेव कर्त्तव्ये ऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि, ततश्च यसोरित्यत्रैव पूर्वस्मिन् धित्वे कर्त्तव्ये नासिद्धं स्यादिति

---

स्वस्य अर्थवाचकत्वाभावाद्वाचकस्य कस्य चिद्भावेन द्योतकताभावाच्चेति भावः। तस्य शपः। शित्वसामर्थ्यादेवेति। इदं कैयटाद्यनुरोधेन। वस्तुत उपसर्गात्सुनोतीत्यादिनिर्देशाज्ज्ञापकादेव विकरणः। शित्वस्य पित्वाद्यादेशार्थमादेच इत्यात्वप्रतिषेधार्थं रुदादिभ्य इति इडाद्यर्थञ्च चारितार्थ्यादिति बोद्धव्यम्। इदञ्चेकृश्तिपाविति वार्त्तिकमूलएव स्फुटीभविष्यति।

भाधिकारमिति। अर्थवतो भशब्दस्य ग्रहणादिति भावः। नन्वस्य विधित्वे आभाद्ग्रहणमासिद्धवद्भवतो निर्देशार्थं यं प्रत्यसिद्धत्वं तन्निर्देशार्थं च स्यात्। विनिगमनाविरहात्। एवञ्चाभीयमाभीये ऽसिद्धमित्यर्थलाभे ऽपि समानाश्रयत्वं न लभ्येतात्रग्रहणञ्चानर्थकं स्यात्। अत्र सूत्रे निमित्तानुल्लेखादित्यत आह। अधिकारश्चायमिति। समानाश्रयेति। अत्रपदेन यत्रानुवृत्तिस्तत्सूत्रस्थसप्तम्यन्तोल्लिखितो निमित्तसमुदायः परामृश्यते। सप्तमी च वैषयिकी। इदमेवाभिप्रेत्य निमित्तत्वं यथा कथं चिन्न तु कार्यिभिन्नत्वेनैव सप्तम्यन्तोल्लिखितत्वेनैवेत्याग्रह इति प्राञ्चस्तेन लुको हिस्थानिकत्वे ऽपि जहीत्यादावसिद्धत्वसिद्धिः। विषयेति। असिद्धवद्भवतीयं प्रत्यसिद्धत्वं तस्य चेत्यर्थः। अवधिलाभस्तु अङ्गस्येत्यादाविव व्या-

चेत्, भवेदयं दोषः शब्दाधिकारे, अयन्त्वर्थाधिकारः। ततश्चेह श्नान्न-लोप इत्यवधिर्निर्णीतः। स एव प्रतिसूत्रमुपतिष्ठते। तदेतत्सकलमभि-प्रेत्याह। इत ऊर्ध्वमिति। अत्रापि शास्त्रासिद्धत्वमेवाकरे स्थितम्। तेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिवर्त्तितत्वात्तन्निमित्तं धित्वं सिद्ध्यति। यत्तु प्राचा कार्यासिद्धत्वमुक्तं तत्प्रामादिकम्। स-मानाश्रयइति किम्। पपुषः। चिच्युषः। लुलुवुषः। इह वसोः संप्रसा-रणमल्लोपे यणि उवङि कर्त्तव्ये नासिद्धम्। अल्लोपादीनि हि क्वसौ, संप्रसारणन्तु विभक्ताविति व्याश्रयत्वात्। वुको वुक्त्वाखस्य। एव-मग्रे ऽपि। वुग्युटाविति। युट उदाहरणन्तु दिदीये। बभूवेति। अत्र प्राचा इन्धिभवतिभ्याञ्चेति सूत्रं पितोपि लिटः कित्त्वार्थं व्याख्याया-

---

ख्यानत एव भविष्यतीति भावः। अर्थाधिकार इति। शब्दाधिकारे तु शब्दमात्रस्येति लाघवादिति भावः। इहपदार्थमाह। श्नान्नलोप इति। इ-त्यत्रेत्यर्थः। अवधिरिति। यं यं प्रत्यसिद्धत्वं तद्रूप आभातपदबोद्ध्यो निर्णीत इत्यर्थः। स एवेति। तावान् सर्व इत्यर्थः। तत्प्रामादिकमिति। तदा हि देवद-त्तहन्तृहतन्यायेन धित्वं न स्यादिति भावः। न च जनसनेति सूत्रभाष्योक्तरीत्या परत्वाद् द्वित्वे कृते शाभाव इति वाच्यम्। धिभावविषयपरिहारेण शाभावस्य विषया-भावेन परत्वाप्रवृत्तेः। अल्लोपादीनि हीति। अयं भावः। वसोरिति सूत्रे ऽसिद्ध-वत्सूत्रानुवृत्त्या संप्रसारणस्यासिद्धत्वं वाच्यम्। तच्चात्रेत्यनेनोपस्थितसंप्रसारणसूत्रगृ-हीताश्रयाश्रितं प्रत्येव, तादृशं च नाल्लोपादि। संप्रसारणनिमित्तभूतविभक्त्यानिमि-त्तत्वात्। असिद्धपरिभाषया तु न तस्या ऊठ्सूत्रे निष्पन्नत्वेन बहिरङ्गान्तरङ्गयोरुभयो-रप्यसिद्धतया तदप्राप्तिः। व्याश्रयत्वादिति। समानाश्रयत्वं च तत्प्रयोगप्राप्तासिद्धत्वा-श्रयशास्त्रीयशब्दरूपनिमित्तरूपसमुदायापेक्षया ऽन्यूनानतिरिक्ताश्रयत्वं तत्र पपुष इत्यादौ न्यूनः। चाखायितेत्यादावधिकः। तत्र यङ्निमित्तं ये विभाषेत्यात्वं तृज्-निमित्ते यस्य हल इति लोपे नासिद्धमतिरिक्तमपि पूर्वनिर्दिष्टध्युपात्ततावच्छेदकरूपेणा-श्रितञ्चेत्तदपि समानाश्रयमेव समानशब्दस्वारस्यात्। अत एव चिणो लुकि चिणो लुगसिद्ध इति स्त्री ईयतीत्यत्र यस्येति लोपापेक्षया स्त्रिया इतीयङि अधिक-स्य स्त्रीशब्दस्यापेक्षणाद्व्याश्रयत्वमित्यङ्गसञ्ज्ञासूत्रभाष्यध्वनितञ्च सङ्गच्छतइति दि-

वो ऽणुतीति वृद्धिप्राप्तौ क्ङिति चेति निषेध इत्युक्तं तदुपेक्षितं,मिग्लक्ष-णयोरेव गुणवृद्ध्योर्निषेध इति सिद्धान्तात्। न च कित्त्वसामर्थ्यादनि-ग्लक्षणाया अपि वृद्धेर्निषेध इति वाच्यम्। थलि उत्तमे णलि च गुण-निषेधेन कित्त्वस्य चरितार्थत्वात्। सूत्रन्तु प्रत्याख्यातमाकरे। तथा च वार्त्तिकम्। "इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमि"ति। बभूविवेति। श्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमादिट्। अनेकव्यवेति। सार्वधातुकादिकमिको विशेषणं न त्वङ्गस्येति भावः॥

रि च॥ अङ्गाच्छिन्नस्य प्रत्ययस्य रेफेण विशेषणात् यस्मिन् विधिरि-ति तदादिविधिः। तदिदमाह। रादाविति। प्राग्वदिति। तासेर्लोप इत्यर्थः। अस्तु नेह सम्बध्यते। ततो रादेः प्रत्ययस्यासंभवात्॥

लृट् शेषे॥ तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति प्रागुक्तं ततो ऽन्यः शेष इत्याह। असत्यामिति। चार्थमाह। सत्यामिति। अत्र हरदत्तः। अस्वरितत्वादेव क्रियार्थायामित्यादि नानुवर्त्तते। एवञ्च शेषे चेति सु-त्यजमित्याह। तच्चिन्त्यम्। शयिष्यतइति स्थीयते इत्यादौ तुमुना लृटो

---

कू। वार्त्तिकमिति। एतेन ङिदित्यप्यनुवर्त्यातिदेशद्वयसामर्थ्यादनिग्लक्षणाया अ-पि निषेध इति परास्तम्। भुवो वुको नित्यत्वेनैव सिद्धेः। भाष्यविरोधाच्च। न च द्विर्वचने ऽचीत्यस्य प्रवृत्त्या द्वित्वात्पूर्वं गुणवृद्ध्योरभावे वुको निर्विघ्नत्वान्नित्यत्वादि-ति हेतुर्वार्त्तिकोक्तो ऽसङ्गत इति वाच्यम्। तत्र द्वित्वे कर्त्तव्ये इति वाक्यशेषेण वुकि कर्त्तव्ये तत्प्रवृत्तौ मानाभावेन परत्वात्तयोः प्राप्तौ तस्य निर्विघ्नत्वादिति दिक्॥

असम्भवादिति। न च व्यतिसे इत्यत्रास्तेः कर्मव्यतिहारे लिटस्तङि झस्ये-रेचि इरयो रे आदेशे सम्भवो ऽस्तीति वाच्यम्। छन्दसि तथाप्रयोगानुपलम्भा-त्। अस्त्यर्थस्य व्यतीहारानुपपादनाच्चेति भावः। लृटो बाधापत्तेरिति। तुमुन्वि-धावपि भविष्यति गम्यादय इत्यतो भविष्यतीत्यनुवृत्तेः। शयिष्यतइत्यत्र भावे भविष्यति ल एवं हरिष्यामीति व्रजतीत्यादौ ण्वुला बाधापत्तिरपि बोद्ध्या। शे-षे चेति सत्त्वे हि चकाराल्लृडपि तत्र विशेषविहित इति न दोष इति भावः।

बाधापत्तेः। क्तल्युडादिषु वासरूपविधेरभावात्। अत्र च ज्ञापकं वक्ष्यते। इदमपि ज्ञापकमित्यन्यदेतत्। यत्तु प्राचा भविष्यतीति प्रत्युदाहृतम्। तन्न। तत्र तुमुनोऽप्राप्तेः। भावे हि सः। समानकर्तृकेष्वेवेति वक्ष्यते॥

आशिषि लिङ्लोटौ॥ ननु विध्यादिसूत्रएव संप्रश्नप्रार्थनाशीःष्वित्युच्यताम्, किमनेन सूत्रेणेति चेत्। मैवम्। इह हि क्तिच्क्तौ चेत्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम्। लिङ्लोटावपीहैव विधेयौ विध्यादिसूत्रे आशीर्ग्रहणे हि स्मे लोडित्यादिना स्वविषये परत्वाद्बाधः स्यात्। सिद्धान्ते तु परत्वाद् विधिः स्मे लोडित्यादेर्बाधक इति महान् विशेषः॥

लोटो लङ्॥ षष्ठ्यन्तात्तसिः। लोट इत्युपमेये षष्ठीदर्शनात्तदाह। नेनेति। अडाटौ तु नातिदिश्येते। न हि तौ लङः क्रियेते। किं तु लङि अङ्गस्येति भावः। स्यादेतत्। यान्तु,वान्तु, इत्यत्र लङः शाकटायनस्येति जुस्स्यात्। जुह्वतु विदन्तु सिजभ्यस्तेति जुस्स्यात्। अत्राहुः। विदो लटो वेति वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणान्न जुस्। यद्वा लङः शाकटायनस्येति सूत्रे ङित इत्यनुवृत्त्यैव सिद्धे लङ्ग्रहणम-

---

ननु तदभावे ऽपि वासरूपविधिना न दोषो ऽत आह। ल्युडादिष्विति। क्तल्युट्तुमुन्खलर्थेष्वित्यर्थः। अत्र तुमुन् ण्वुलोऽप्युपलक्षणम्। वक्ष्यतइति। कृदन्तइति शेषः। इदमपीति। शेषे चेति ग्रहणमपीत्यर्थः। वक्ष्यतइति। नन्वेवमपि ण्वुल् प्राप्नोतीति चेन्न। ण्वुलेपि शब्दशक्तिस्वाभाव्याद्बाहुलकेन समानकर्तृकेष्वेवेष्टेरिति भावः॥

बाधः स्यादिति। लिङ इति शेषः। न चाधीष्टे चेति सूत्रारम्भात् स्मे लोडित्यत्र विध्यादयो नानुवर्त्तन्ते किं तु प्रैषादय एवेति कथमाशिषि प्राप्तिरिति वाच्यम्। प्रैषाशीरर्थयोर्युगपद्विवक्षायां परत्वादनेन लिङो बाधापत्तेः। किं च तस्यां लिङ्लोड्भ्यां परत्वात् कृत्यबाधार्थमपीदमावश्यकम्। न ह्यत्र न युगपद्विवक्षेत्यत्र मानमस्तीति भावः॥

तिरिच्यते। तद्विभज्यते। नियमश्चायं अत्र लङेव यो लङ् तस्यैव झेर्जुस् न तु लङ्वद्भावेन यो लङ् तस्येति नोक्तदोषः। सकारान्तस्येति। प्राचा तु ङिल्लकारोत्तमसकारस्येति व्याख्यातं तन्न। भूयासमित्यादावतिप्रसङ्गादिति भावः॥

इतश्च॥ परस्मैपदेष्वित्यनुवृत्तम्। षष्ठ्येकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्यते। तदाह। परस्मैपदमिकारान्तं यत्तस्येति। यत्तु प्राचा परस्मैपदेष्विकारस्य लोप इत्युक्तं तन्न। भवेदित्यादावतिव्याप्तेः। ननु ईत् दीर्घादिरस्तु। एवं च नोक्तातिव्याप्तिः। इतस्येति तपरकरणात्। अत एवाबोभवीदित्यादावपि न दोष इति चेत्। मैवम्। रुदेर्लङि अरुदितामित्यादौ दोषप्रसङ्गात्॥

---

ङित इत्यनुवृत्त्येति। नित्यं ङित इत्यतः सिजभ्यस्तेत्यत्रावश्यमनुवर्त्तमानस्येति भावः। स्पष्टं चेदमात इत्यत्र भाष्ये। नन्वत्र ङित इत्यस्यानुवृत्तौ अधुरस्थुरित्यत्र लुङ्यपि परत्वाद्विकल्पापत्तिः। न चात इति सूत्रेण नित्यतया जुस्विधानान्निस्तारः। एवमात इत्यस्य विदूभ्यर्थत्वे ऽभूवमित्यादौ जुसभावापत्तेरिति चेन्न। भाष्यप्रामाण्येन पूर्वविप्रतिषेधकल्पनेन दोषाभावात्। लङ इति पदोच्चारणापेक्षयेष्टवाचिपरशब्दाश्रयणे गौरवाभावादिति दिक्। तस्यैवेति। योगविभागसामर्थ्याच्च जुसुमात्रस्य नियम इति बोद्ध्यम्। अड् गार्ग्यगालवयोरित्यदः सर्वेषामिति च लङ एव विधीयमानावप्यडीडागमौ नातिदिश्येते। अपृक्तसार्वधातुकाभावात्। अतिप्रसङ्गादिति। वैयधिकरण्यापत्तेश्चेत्यपि बोद्ध्यम्॥

परस्मैपदेष्विकारस्येत्यत्र किं परस्मैपदेषु परेष्वित्यर्थः उत तेषु विद्यमानस्येति। नाद्यः। अभवदित्यादावव्याप्तेः। नान्त्य इत्याह भवेदित्यादाविति। अत्रेय इकारान्तरङ्गत्वाद् गुणं बाधित्वा लोपापत्तिरित्यस्याप्यद्ध्याहारे तु तदपेक्षया षष्ठ्या विपरिणाम एव न्याय्य इति भावः। न चातो य इत्येव सूत्रं कार्यम्। लिङः सलोप इत्यतो लोपपदानुवृत्त्या आतः परस्य या इत्यस्यान्त्यस्य लोप इत्यर्थस्तेनाकारलोपे सिद्धे इकारोच्चारणसामर्थ्याल्लोपाभावः। आतो ङित इति सूत्रे एव वा कार्य इति वाच्यम्। नानर्थक इति निषेधेन सर्वलोपापत्तेः। मैवमिति। तदपेक्षया विभक्तिविपरिणामस्यैव न्याय्यत्वात्। इतश्च लोपः परस्मैपदेष्वित्यस्य षष्ठ्यर्थत्वाच्चेति भावः।

विधिनिम॥ द्योत्येषु वाच्येषु वेति। पक्षद्वयस्यापि भाष्यादौ स्वीकृतत्वादिति भावः। अत्राद्ये उपपत्तिं ब्रूमः। विङ्आदीनां प्रत्ययार्थत्वं नोचितम्। तथा हि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विङ्आदयो ऽर्था बाधकाः स्युः। तथा च लिङा कर्त्रादीनामभिधानं न स्यात्। ततश्च द्विवचनबहुवचने न स्याताम्। शबादयश्च न स्युः। पुरुषव्यवस्था च न स्यात्। अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिद्ध्येदिति। द्वितीये त्वित्थमुपपत्तिः। विङ्आदिभिः कर्त्रादयो न बाध्यन्ते विरोधाभावात्। लः कर्मणीत्यत्र सर्वलकारसङ्ग्रहार्थं ल इति बहुवचननिर्देशाच्च। किं च कर्त्रादयोपि निरवकाशाः। न च लडादयो ऽवकाशः। न्यायसाम्येन विङ्आदिवद्वर्त्तमानत्वादेरपि तत्त-

———

दोषान्तरमप्याह। रुदेरिति। न चार्धधातुकस्येडित्यत्रेडित्यनुवर्त्तमाने पुनरिड्ग्रहणादिडिडेवेति नियमस्य दीधीवेवीटामित्यत्र भाष्ये उक्तत्वेन न दोष इति वाच्यम्। प्रत्यासत्त्या ऽऽङ्गमेव तेन वार्यतइति स्पष्टं तत्र कैयटोक्तेः। अन्यथा ऽलावीदित्यत्र दीर्घानापत्तिः। सिज्लोप एकादेशे सिद्ध इति वार्त्तिकेन प्रत्यासत्त्याश्रयणमेव तत्र ज्ञाप्यतइत्युचितम्। वस्तुतस्तु आर्द्धधातुकस्येडिति सूत्रस्थेड्ग्रहणप्रत्याख्यानपरेण नेड् वशीतिसूत्रस्थभाष्यविरोधेन दीधीवेवीति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वात्। तत्र सूत्रे इड्ग्रहणप्रत्याख्यानाय तदुक्तम्। तत्र इड्ग्रहणं कृत्वा गुरुतरयत्नमाश्रित्यात्रत्येड्ग्रहणप्रत्याख्यानस्यानौचित्यात्। यदि त्वङ्गापेक्षतया प्रकृतिप्रत्ययविशेषापेक्षतया च बहिरङ्गत्वादिटो ऽसिद्धत्वादरुदितमित्यत्र लोपाप्राप्तिरित्युच्यते तदा वैयधिकरण्यादेरन्याय्यत्वमित्येव दोषो बोद्धव्यः॥

लकारान्तरे इति। लडादिष्वित्यर्थः। कालस्तु द्योत्य एवेति भावः। शबादयश्चेति। कर्त्रर्थसार्वधातुके परे तद्विधानादिति भावः। पुरुषेति। युष्मदादेस्तिङ्वाच्यकारकवाचित्वरूपसामानाधिकरण्याभावादिति भावः। विरहश्चेति। चैत्र पचेत्यादौ द्योत्यत्वे त्वेषां विषयभावेनोपादानात्कर्त्रादीनां च लादेशवाच्यत्वान्न बाधप्रसक्तिरिति भावः। ननु सत्यपि सम्भवे बाधनं भवतीति न्यायेन विरोधाभावे ऽपि बाधकत्वं स्यादत आह। बहुवचननिर्देशाच्चेति। लः कर्मणीत्यस्य सर्वान्ते करणेन सर्वलकारोद्देशेन तदर्थबोधनान्नैतेषां बाध इत्यपि बो-

ल्लकारवाच्यत्वात् । न चैवन्धात्वर्थं प्रति वर्त्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यादिति वाच्यम् । कर्त्रादावपि तुल्यत्वात् । ननु प्रत्ययार्थ-प्राधान्यमौत्सर्गिकमप्याख्याते त्यज्यतइति चेत्तर्हि तत एव नोक्तदोषावकाश इति दिक् । प्रवर्त्तनायामिति । प्रवर्त्तनात्वस्य विध्यादिचतुष्टये ऽनुस्यूतत्वादिति भावः । एवन्धातूपात्तव्यापारस्य विषयविषयिभावेन द्वेधा ऽन्वये तात्पर्यग्राहका लिङादय इति पर्य्यवसानात् द्योतकतापक्ष एव ज्यायान् । एवं णिच्यपीति तत्त्वम् । प्रार्थनं याञ्ञा । क

---

द्धव्यम् । एतेनोच्चारणार्थोकारेण ल इत्येकवचनमिति भाष्यकैयटोक्तपक्षे दोष इत्यपास्तम् । न चात्र पक्षे निमन्त्रये ऽद्य भवन्तमिति न स्यान्निमन्त्रणाया उक्तत्वादिति वाच्यम् । प्रद्योतकनिष्ठयोर्निमन्त्रणामन्त्रणयोरन्ययोरेवावश्यकर्त्तव्यत्वादिलक्षणयोः प्रत्ययार्थत्वस्वीकारात् । यद्वा ऽर्हे कृत्यतृचश्चेत्यनेनेदृशविषये लिङ्लोटाविति बोद्धव्यम् । दिगिति । दिगर्थस्तु कालावाचकेषु माङि लुङादिषु सावकाशता धात्वर्थभावनायाः कालाकाङ्क्षत्वे ऽपि शास्त्रेण तेषां तद्वाचकत्वात्बोधनेन तत्र चारितार्थ्यसम्भवात् । अतो द्योतकतैव युक्ता । किं च पचेत्यादौ प्रत्ययं विनापि प्रवर्त्तना प्रतीता ऽपि चतुर्भिर्हलैः कृषतीत्यादौ प्रवर्त्तनाया अपि धात्वर्थस्य दृष्टत्वाच्च सैव युक्ता । कर्त्रादीनामपि द्योत्यत्वमिति मते च तत्त्वमेव युक्तमिति । प्रवर्त्तनात्वस्येति । प्रवर्त्तना च प्रवृत्त्यनुकूलो व्यापारः स च लोके लिङादिघटितशब्दप्रयोगरूपः । वेदे लिङादिसमभिव्याहाररूपः शब्दनिष्ठः । इयमेव शाब्दभावनेत्युच्यते । शब्दरूपत्वात् प्रेरणत्वेन च तस्य लोडादिवाच्यता तेन रूपेण तस्य शब्दनिष्ठत्वाच्छब्दनिष्ठ इति चोच्यते । प्रेरणात्वेन सविषयपदार्थश्चायम् इष्टसाधनत्वन्तु न प्रवर्त्तनेत्यन्यत्र निरूपितम् । चतुष्टये इति । याच्ञा त्विच्छाविशेष इति न तदनुस्यूतं प्रवर्तनात्वम् । अनुस्यूतत्वादिति । तदतिरिक्तांशस्य प्रकरणादिरूपप्रमाणान्तरलभ्यत्वान्न शक्यत्वम् । न चैवं प्रैषादिग्रहणं व्यर्थं निमन्त्रणादौ कृत्याभावार्थन्तस्यावश्यकत्वल्लिङ्विधानं तु प्राप्तकालार्थमिति भावः । तत्र द्योतकतापक्षे प्रयोजकव्यापारो ऽपि पचेदित्यादौ धात्वर्थः । तस्यापि पाकानुकूलत्वात् तत्र फलानुकूलत्वेनोपस्थितव्यापाराणां मद्ध्ये प्रयोजकव्यापारस्य विषयितया विशेषणत्वेनान्वयः । इतरविषयतया विशेष्यत्वेन । एवञ्चैकाश्रयिका प्रवर्त्तनाविषयीभूता पाकानुकूला क्रियेत्यादिक्रमेण पचेदित्यादौ बोधस्तदाह । एवं धात्विति । ज्याया-

चिदिति । ज्ञापकफलन्तु वक्ष्यमाणेत्यादौ टिदुगिल्लक्षणङीनभाव इत्यवोचाम ॥

सुट्तिथोः ॥ तकारादिकार उच्चारणार्थः ॥

लिङः स ॥ सेति लुप्तषष्ठीकम् । अनन्त्यस्येत्यनेन विशेष्यते तदाह । अनन्त्यस्य सस्येति । सकारद्वयस्यापीति । अवयवावयवस्य समुदायं प्रत्यवयवतया सुटोपि लिङ्भक्तत्वादिति भावः । आशीर्लिङीति । भूयास्तामित्यादाविति भावः । ननु अनचि चेति सकारद्वित्वेनापीदं सिद्धम् । न च सकारत्रित्वं फलम् । उच्चारणे विशेषस्य दुर्लक्षत्वात् । किं च सुटि कृते स्कोरिति यासुटः सकारो लुप्यते झलि परे यः संयोगः स्तदादित्वात् । अत आह । स्फुटतरन्त्विति । एधिषीष्टेत्यादाविति भावः ॥

अतो येयः ॥ सार्वधातुकेति किम् । चिकीर्ष्यात् । भवेत् । सार्वधातुकाननुवृत्तौ हि मध्ये ऽपवादन्यायेनातो लोप एव बाध्येत । भवेदि-

---

निति । वाच्यत्वे हि णिचीव तस्या धात्वर्थं प्रति विशेष्यत्वापत्तौ देवदत्तस्य प्रधानभूतधात्वर्थानाश्रयत्वेनाकर्तृत्वे तत्र कर्त्तरि लिङाद्यनापत्तिः । न च प्रत्ययार्थप्राधान्यस्याख्याते त्यागेन निर्वाहः । द्योतकत्वस्यैवौचित्यात् । एवं णिच्यपीति । तत्त्वमिति । अत्र वदन्ति । एवं हि लिङीव प्रवर्त्तनाया विशेषणतापत्तिः । द्योत्ये ऽर्थे विशेषणताया एव न्याय्यत्वात् । किं चैवन्तदर्थस्याप्राधान्ये तदाश्रयस्य कर्तृत्वानापत्तौ प्रयोजककर्त्तरि ण्यन्ताल्लकारानापत्तिः । किं च गमितो ग्रामं देवदत्तो यज्ञदत्तेनेत्यादौ प्रधानीभूतव्यापारानाश्रयत्वेन प्रयोज्यस्य कर्तृत्वानापत्तिः । मम तु धातुभेदान्न दोष इति स्पष्टं हेतुमति चेत्यत्र भाष्ये इत्यन्यत्र विस्तरः । अवोचामेति । टिड्ढेति सूत्रे इति शेषः ॥

लिङ्भक्तत्वादिति । लक्ष्यभेदाच्च शास्त्रस्य पुनः प्रवृत्तिरिति भावः । दुर्लक्षत्वादिति । न व्यञ्जनपरस्यानेकस्योच्चारणे विशेषाभाव इति भाष्योक्तेः । सुटि कृते झल्परसंयोगादित्वेन यासुटः सस्य लोपाच्चेत्यपि बोध्यम् ।

बाध्येतेति । एवञ्चात्रैव स्यादिति भावः । विषयभेदे ऽप्यानर्थक्यप्रतिहतानां

त्यादौ तु परत्वाद्दीर्घः स्यात्। अन्तरङ्गत्वादिति। प्रत्ययमात्रापेक्षत्वादिति भावः। व्याख्येयमिति। एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम्। आर्द्धधातुकेति एवकारो बोद्ध्यः॥

क्तिदाशिषि॥ ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे कित्वचनमिज्यादित्यादौ संप्रसारणार्थं जागर्यादित्यत्र गुणार्थं च। जागर्त्तेर्गुणो हि ङिति पर्युदास्यते। ङित्त्वञ्चेह विशेषविहितेन कित्त्वेन बाध्यते। सलोप इति। झल्परसंयोगादित्वेन यासुटः सस्य लोपः सुटस्तु पदान्तसंयोगादित्वेनेति भावः। इग्लक्षणे इति। इक इत्येवं विहिते इत्यर्थः। इग्लक्षणे किम्। लैगवायनः। लिगोर्नडादित्वात्फक्। इह्वादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वे ऽपि न निषेधः। भूयादिति। इह स्कोरिति लोपस्यासिद्धत्वात्तकारस्य संयोगान्तलोपः प्राप्तः। पदान्तसंयोगादिलोपेनानवकाशेन बाध्यते। नन्वेवमपि संयोगादिलोपस्य पूर्वत्रासिद्धमित्यसिद्धत्वाद्धल्ङ्यादिलोपः स्यादिति चेन्नैवम्। सुड्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावात्। हलन्तायाः

---

विपरीतं बलाबलमिति दीर्घादेर्बाधः। बाधकत्वसामान्याच्चापवादत्वव्यवहार इति बोद्ध्यम्। प्रत्ययमात्रेति। इयादेशस्तु आङ्गत्वात्प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्ग इति भावः। नन्वनेनार्धधातुकत्वे ऽप्येकसंज्ञाधिकारादन्यत्र सञ्ज्ञा ऽपि स्यादत आह। एवकार इति। लङः शाकटायनस्यैवेति सूत्रादनुवृत्तेरिति भावः॥

बाध्यतइति। अत एव ङ्यासुडिति नासूत्रि। तथा सति आतिदेशिकेनानेन कित्त्वेनौपदेशिकङित्त्वस्य बाधानापत्तिरिति भावः। झल्परेति। इदं भूयास्तामित्यादौ। सुटास्त्विति। सुटश्चेत्यर्थः। चार्थेन तुना यासुटः सस्य सङ्ग्रहः। इदं भूयादित्येतद्विषयम्। पदान्तेति। द्वयोरेव संयोगत्वे प्रथमं सुटः पश्चाद्यासुट इति बोद्धव्यम्। त्रयाणां संयोगत्वे प्रथमं यासुटः पश्चाद् द्वयोः संयोगमाश्रित्य सुट इति बोद्धव्यमिति भावः। झलो लोपस्तु नात्र उदस्थादिति ज्ञापकेन सिच एव तेन लोपात्। इत्येवमिति। चशब्दस्येत्यर्थकत्वादेतल्लाभः। सुड्यासुटोरिति। सुट्लोप-

परत्वाभावाच्चेति दिक् ॥

च्लि लुङि ॥ इकार उच्चारणार्थः । अबाध्यपवाद इति । आदिशब्दा-त्तत्तद्गुणप्रयुक्तानां श्यन्नादीनाम् । इचाविति । तत्रेदित्त्वे प्रयोजनम-मंस्तेत्यत्रानिदितामित्युपधालोपाभावः । गापाविति । गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरणादेशो गृह्यते । लुग्विकरणालु-ग्विकरणयोरलुग्विकरणस्य ग्रहणमिति परिभाषया पिबतिर्गृह्यते न तु पातिरित्यर्थः ॥

भूसुवोः ॥ षूङ् प्राणिगर्भविमोचने । सुवतिसूयत्योस्तु न ग्रहणम् । तिङो विकरणेन व्यवधानात् ॥

अस्तिसिचो ॥ अत्र प्राञ्चः । अस्तेः सिचश्च परस्येति व्याचख्युः, त-च्चिन्त्यम् । अस्तेर्भूरिति भूभावस्य स्थानिवद्भावेनास्तितया तत्रातिप्रस-ङ्गात् । गातिस्थेति सिचो लुक्यपि स्थानिवद्भावेन अगादस्थादभूदित्या-दौ सर्वत्रातिप्रसङ्गाच्च । तदेतद्ध्वनयन्नाचष्टे । सिच्च अस् चेति । एवञ्च

---

स्याप्यसिद्धत्वादागमसत्त्वे तद्ग्रहितस्य प्रत्ययत्वाभावादिति भावः । हलन्तायाः प्रकृतेरित्यभ्युच्चयहेतुः ॥

उच्चारणार्थ इति । न त्विसंज्ञया अपीदित्कार्यार्थस्तस्यासंभवादिति भावः । स चासंभवः प्रकृतसूत्रभाष्ये एव निरूपित इत्यन्यत्र विस्तरः । उपधालोपाभाव इति । नुम्तु न गोः पादान्तइत्यतो ऽन्त इत्यनुवर्त्यान्तेदित इति व्याख्यानादिति भावः । सिचूतासावनिदितौ वक्तुं शक्यौ । हनः सिजिति किच्चविधानाच्च नामं-स्तेत्यादौ लोप इति इदितो नुमित्यत्र भाष्ये, चित्त्वं तु मा हि लावीत्यत्रेटः प्राप्तमाग-मानुदात्तत्वं बाधितुं बोद्धव्यम् । चुलिसिचोरन्यतरस्य चित्त्वं शक्यमकर्त्तुम् । विकरण-शून्यस्येति । इदमपि वृद्धव्याख्यानमूलकम् । न्यायेन विकरणप्राप्तिः गामादाग्रहणे-ष्विति तु न प्रवर्त्तते । अनित्यत्वात्तस्य केवलगाग्रहणविषयत्वाच्च । स्थासाहचर्येण स्वाभाविकाकारान्तस्य ग्रहणमिति तत्त्वम् ॥

व्यवधानादिति । यङ्लुक्तु छान्दस इति भावः । तस्मात् साहचर्येण दीर्घा-न्तस्य षूङो ऽदादेर्ग्रहणम् ॥

समासान्तप्रसङ्गो नास्तीत्यपरमनुकूलम् । अस्तिस्य सिचेति प्राचां व्याख्याने द्वन्द्वाच्चुदषहान्तादिति टच् स्यात्। सिचस्याल्पाच्तरत्वेन पूर्वनिपातः स्यादिति भावः। विद्यमानादिति। तेन लुप्तात्सिचः कृतभूभावादस्तेश्च नेति भावः। भाष्यकारास्त्वाहुः। अस्तिसिचो ऽपृक्तइति द्विसकारको निर्देश इति। अत्र माधवः। अस् स् इति समुदायस्याधातुतया तिप्प्रत्ययो न स्यादिति। तद्भसोक्तिमात्रम्। इत्थं हि भाष्याशयः। सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते न तु तिपः प्राक् । अत एव सिचोपृक्तइति द्विसकारको निर्देश इत्युक्तं भाष्ये। अन्यथा अस्तीति निर्देश इत्येव ब्रूयात्। एवञ्च सान्तादस्तेः सान्तात्सिच इति चार्थो निर्बाध एव। द्वितीयस्य सकारो लुप्यते। संयोगान्तस्य पदान्तस्येति व्याख्यानात् । न च तस्यासिद्धत्वाद्रोरुत्वं दुर्लभमिति वाच्यम्। संयोगान्तलोपो रोरुत्वे इति वार्त्तिकेनासिद्धत्वनिषेधात्। संयोगान्तं यत्पदमिति व्याख्याने तु नेह संयोगान्तस्य लोपः। किं तु सकारद्वयस्यापि रुत्वे कृते ऽतो रोरित्यनेन एक एव उकारो भविष्यति। विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वादिति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च सम्भवात्। न च परत्वाद्धशि चेति प्रथम-

---

प्राचां व्याख्याने त्विति । अस्तिश्च सिच्चेति अस्तिसिजिति द्वन्द्व इति तेषां व्याख्यानम् । अनेनास्तीत्यस्य लुप्तषष्ठ्यन्तपृथक्पदत्वे नैतौ दोषौ किन्तु प्रागुक्तावेवेति सूचयति । सकार इति । लुप्तपञ्चम्यन्त इति शेषः । अस्तीति निर्देश इति । अस्तीति द्विसकारको निर्देश इति ब्रूयादित्यर्थः । इति व्याख्याने त्विति । संयोगान्तस्य पदान्तस्येति व्याख्याने तु ध्वसोरेद्धाविति सूत्रे द्विसकारको निर्देश इति भाष्यासङ्गतिः । तव मते संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसङ्गतिः स्पष्टैवेति भावः । रुत्वे कृते इति । रुद्वये कृते इत्यर्थः । न त्वेको रुर्द्वयोः स्थाने लभ्यते । सु इत्यस्य भिन्नत्वेन सत्वत्तासन्तपदत्वाभावेन रुत्वाप्राप्तेः । जातिपरनिर्देशेनेति । तदाश्रयादेव तज्जात्याश्रयस्य सर्वस्य सिद्धत्वं सुलभमिति भावः । एतेन जातिनिर्देशेपि व्यक्तिद्वारा स्थनित्वं वाच्यम् । तत्रैकव्यक्तिमात्रस्य सिद्धत्व-

स्यैव रोरुः स्यादिति वाच्यम्। रुत्वस्यासिद्धतया हशपरत्वाभावात्। न चाश्रयात्सिद्धत्वमिति वाच्यम्। स्थान्यंशे तथात्वे ऽपि निमित्तीभूतहशंशे तदसम्भवादिति संक्षेपः। विस्तरस्तु शब्दकौस्तुभे बोध्यः। अपृक्तस्य हल इति। यत्तु प्राचोक्तम्। अपृक्तस्य सार्वधातुकस्येति। तन्न। रोदिषि इत्यादावतिव्याप्तेः। सार्वधातुकग्रहणव्यावर्त्याभावाच्च॥

आतः॥ सिज्ग्रहणमनुवर्त्तते। सिच आकाराच्च परस्य झेरिति। तत्र प्रत्ययलक्षणेन सिचः परत्वम्। आकारात्तु श्रुत्या। एवं स्थिते फलितमाह। सिज्लुकीति। पूर्वसूत्रेण सिद्धे नियमोयमित्याह। आदन्तादेवेति। प्रागेवेति। न परतो नापि व्यवहिता इति भावः। अत एव छन्दसि परे ऽपि व्यवहितास्येति सूचितम्॥

आनि लोट्॥ नि लोडित्येव सिद्धे आनिग्रहणमागमशास्त्रस्यानित्यतां ज्ञापयितुं तेन सागरन्कर्त्तुकामस्येत्यादि सिद्धम्। लोड्ग्रहणं स्पष्टार्थम्। प्रकृष्टा वपा येषान्तानि प्रवपानि मांसानीत्यत्र तूपसर्गग्रहणा-

---

ज्ञापने शिवोर्च्य इत्यादौ चारितार्थ्येन व्यक्त्यन्तरे तज्ज्ञापने न मानमिति परास्तम्। हशंशे इति। आश्रयात्पूर्वत्रासिद्धमिति सूत्रस्थपूर्वग्रहणेन रोरिति पदग्रहणे ऽपि हशपदं प्रत्यसिद्धत्वस्य दुर्वारत्वात् इति भावः। ननु वर्णग्रहणे जातिग्रहणं यत्नेन साधयता ऽन्यत्र जातिग्रहणं दुर्लभमिति चेन्न। अनुकरणं चेति सूत्रे भाष्ये ऽनुकरणाकृतिर्निर्दिश्यते। यथा ते प्राग्धातोरित्यादौ गत्या कृतिरित्युक्त्या तद्भाष्यप्रामाण्येनान्यत्र जातिग्रहणवदेतद्भाष्यप्रामाण्येनात्रापि जातिग्रहणस्य सुलभत्वमित्याशयात्। यदि तु रोरुच्चारणप्रसङ्गः प्रयोक्तव्य इत्यर्थात् जातेश्चोच्चारणप्रसङ्गाभावेनेदृशे विषये जात्याश्रयणमशक्यं ध्वनितं चेदं नपुंसकस्य झलच इति सूत्रभाष्ये, तदास्तु सौत्रः सुलोपः द्विसकारइति तु पर्यालोचनकालोपेक्षया। इदं चोक्तव्याख्याने ऽप्यावश्यकम्। संहितायां सद्वयस्य तत्पक्षे ऽप्यभावात्। तदाह। विस्तरस्त्विति॥

निलोडित्येवेति। आङ्विशिष्टस्य तु यदागमा इति न्यायेन सिद्धिः। उपसर्गनेस्तु न ग्रहणं नेर्गदेत्युत्तरसूत्रे पुनर्निग्रहणात् युधातोः क्तिनि निष्ठावद्भावेन नत्वे प्रयूनिरित्यत्र तु न दोषः। लोट्त्वाभावाल्लाक्षणिकत्वाच्च। अनित्यतां ज्ञापयितुमि-

दर्थवद्ग्रहणाच्च न भविष्यति। दुरः षत्वेति। यत्तु प्राचोक्तं दुरः परस्य णत्वं नेति के चिदिति। तन्न। एवं हि सिद्धान्ते णत्वं स्यात्तच्चाकरविरुद्धमिति भावः। यदपि भवत्येव णत्वमिति व्याचख्युः। तदपि रभसमात्रम्। अन्तःशब्दस्येति। अत्शब्दस्याङ्विधावित्यप्युपसंख्यायते तत्तु प्रकृतानुपयोगादुपेक्षितम्। भिदादिपाठेन प्रज्ञाश्रद्धेति निपातनेन वा गतार्थत्वाच्च॥

शेषे विभाषा॥ नेर्गदनदसूत्रापेक्षया शेषइत्याह। गदनदादेरिति। उपदेशे किम्। प्रनिचकार प्रनिचखादेत्यत्रापि निषेधो यथा स्यात्। अषान्ते किम्। प्रतिपिनष्टि। उपदेशग्रहणात्प्रनिचक्शे ऽत्रापि निषेधः। उपलक्षणमिति। कुर्द्द खुर्द्द क्रीडायामेवेत्येवकारो ऽत्र ज्ञापकः। यागादिति। भूवादिसूत्रे धान्यानां भवनइति सूत्रे चाकरे स्पष्टमिदम्॥

टित आत्मने॥ प्रकृतैस्तिवादिभिरात्मनेपदानां विशेषणान्नेह। पचमानो यजमानः। एवं तु टितस्तङां टेरित्येव वक्तुमुचितम्॥

आमः॥ लक्षणप्रतिपदोक्तपरिभाषया नेह। अम गत्यादिषु। आम

---

ति। इदं भाष्ये क्वापि न दृश्यते ऽतस्तत्तुंकामस्येत्यादेरसाधुत्वमेवोचितम्। किंच ज्ञापिते चारितार्थ्यमपि दुरुपपादम्। आडागमशून्यप्रयोगाप्रसिद्धेः। आग्रहणन्तु लोड्ग्रहणवदिति तत्त्वम्। उपसर्गग्रहणादिति च याशब्दस्य क्रियावाचकत्वाभावेन तं प्रति प्रशब्दस्योपसर्गत्वाभावादिति भावः। प्रभत्राणीत्यादौ आनिं प्रत्यनुपसर्गत्वेन तदर्थं प्रत्युपसर्गत्वान्न क्षतिः। निरासमेतां नयति तत्कुलं निरानि इत्यादौ लोड्ग्रहणाभावे उपसर्गार्थवत्त्वयोः सत्त्वेपि न णत्वं प्रत्ययाप्रत्ययोरिति परिभाषया प्रत्ययस्यैव ग्रहणादिति बोद्धव्यम्। ध्वनितं चेदमत्र भाष्ये। आकरविरुद्धमिति। गतिश्चेति सूत्रस्थभाष्यविरुद्धमिति भावः। रभसेति। तद्विरोधादेवेति भावः॥

प्रनिचखादेति। प्रनिपेक्ष्यतीत्यादेरप्युपलक्षणमिदम्। प्रनिचक्शे इति। अयं हि आदेशोपदेशे ख्यादिः स्थान्युपदेशे षान्तश्चेति भावः। अत्र च ज्ञापक इति।

आमतुः। तिबाद्यपवादत्वाल्लावस्थायामेवायं लुक्। तेनामन्तस्यातिङन्तत्वान्न निघातः। ततः परस्य निघातस्य। लिटः कृत्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वमामन्तस्याव्ययत्वात्सुपो लुक्॥

कृञ्चानु॥ कथं तर्हि "तं पातयां प्रथममास पपात पश्चात्" "संयोजयां विधिवदास समेतबन्धुः" "प्रभ्रंशयां यो नहुषञ्चकारे"त्यादि। प्रमाद एवायम्। न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यमस्त्विति वाच्यम्। विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चेति वार्त्तिकविरोधात्। अभेदान्वय इति। एवञ्चाम्प्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलम्। अत एवानुप्रयुज्यमानयोर्भ्वस्त्योरामन्तवशेन सकर्मकत्वात्ताभ्यां कर्मणि लिट्। तथा च माघः। "तस्यातपत्रं बिभरां बभूवे" इति। श्रीहर्षस्य। तपर्त्तुपूर्त्तावपि मेदसां भरा "विभावरीभिर्बिभरां बभूविरे" इति। अस्तेस्तु भावकर्मणोस्तङि एशि इटि च रूपे विप्रतिपद्यन्ते। तथा हि। उभयत्रापि ह एतीति हादेशे

---

अर्थसहितधातुपाठः पाणिनीय इति पक्षस्येत्सञ्ज्ञाप्रकरणस्थभाष्यसंमतत्वादिति भावः। उपलक्षणत्वे ऽप्यर्थसहितपाठः क्रियावाचित्वबोधार्थ इति बोद्धव्यम्। अर्थरहितो ऽपि पाठः पाणिनीय इति धातुसञ्ज्ञासूत्रे भाष्ये। तिबादिभिरिति। अतद्गुणसंविज्ञानबहुव्रीहिणा तादिभिरित्यर्थः॥

लक्षणेति। संनिपातपरिभाषया प्रत्ययग्रहणपरिभाषया चेत्यपि बोद्धव्यम्। अपवादत्वादिति। अन्तरङ्गानपीति न्यायाच्चेत्यपि बोद्धव्यम्। अव्ययत्वादिति। आम इत्यनेनैव लुक् तत्र हि लेरिति नानुवर्त्तते। अत एव विदां कुर्वन्त्वित्यादौ लोटो लुक्सिद्धिरित्यन्ये। सुपो लुगिति। तेन तस्य पदत्वात्कारयाञ्चकारेत्यादौ पदात्परत्वनिबन्धनश्चकारेत्यस्य निघात इति भावः॥

कथं तर्हीति। अनुप्रशब्दाभ्यां विपरीतव्यवहितप्रयोगनिवारणादिति भावः। सकर्मकत्वादिति। फलव्यधिकरणवाचित्वादिति भावः। एवमकर्मकसमभिव्याहारे कृञो ऽप्यकर्मकत्वं बोद्धव्यम्। अन्यत्र कर्मप्रत्ययसमभिव्याहारे फलव्यापारयोर्व्यत्यासे ऽपि आम्समभिहारे न व्यत्यास आमन्तार्थस्यापि व्यत्यासो वेति नाभेदान्वयानुपप-

कृते एधामह्वे ईक्षामह्वइति केचित् । तासिसाह्वचर्यादित्येव ह्वत्वमित्यन्ये । साह्वचर्यादेव सार्वधातुकएव एति ह्वत्वम् । न तूक्तद्वयेऽपि । तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे । वाक्यभेदेनेति । अत्र चाम्प्रत्ययवदिति वचनमेव प्रमाणम् । अन्यथा पूर्ववदित्यनुवृत्त्यैव सिद्धे किन्तेन ॥

द्विर्वचनेऽचि ॥ द्वित्वनिमित्तेऽचीति । द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा । तां विना अचा सामानाधिकरण्यायोगादिति भावः । यद्वा । द्विरुच्यतेऽस्मिन्निति द्विर्वचनम् । अथ वा द्विर्वचनमस्त्यस्मिन्नित्यर्शआद्यच् । इह तन्त्रावृत्त्याद्याश्रयणेन कालावधारणमपि क्रियते इत्याह । द्वित्वे कर्त्तव्ये इति । कृते तु द्वित्वे यथायथमादेशः स्यादेवेत्यर्थः । द्वित्वनिमित्ते किम् । दुद्यूषति । न ह्यूठ् द्वित्वनिमित्तम् । नन्वेवं चक्रतुरित्यत्र यण् स्यादेव । अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्यातथात्वात् । सूत्रन्तु चक्रे इत्यादौ सावकाशमिति चेत्सत्यम् । इह निमित्तशब्देन साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकं सर्वं गृह्यते लक्ष्यानुरोधात् । एतच्च ढलोक इति सूत्रे कैयटग्रन्थे स्पष्टम् । अत एव ऊर्णोतेः सनि सनीवन्तेतीट्पक्षे विभाषोर्णोरिति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम् । सन्नन्तस्य द्वित्वविधाने ऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्प्राप्तयोर्गुणावादेशयोर्द्वित्वे कर्त्तव्ये निषेधात्तदाङः । तन्ना-

---

त्तिरिति वदन्ति । सार्वधातुकएवेति । तासिसाहचर्यादस्तेरपि सार्वधातुकएव एति हत्वमित्यर्थः । एतत्सर्वं सत्यभिधाने बोद्धव्यम् । सिद्धे इति । एधां चकारेत्येतद्व्यावृत्तौ सिद्धायामित्यर्थः । एतेनैधाञ्चक्रइत्यादौ परगामिनि क्रियाफले प्राप्तस्य विधानेऽपि इन्दाञ्चकारेत्यादौ कर्त्तृगामिनि क्रियाफले प्राप्तस्य निवारणमशक्यमित्यपास्तम् ।

लक्षणाया जघन्यत्वादाह । यद्वेति । अधिकरणे ल्युडिति भावः । इदमेव युक्तम् । अन्त्येपि वृत्तिद्वयकल्पनागौरवात् । सर्वमिति । एवञ्च द्वित्वेऽजादिप्रत्ययस्य निमित्तत्वे अवोपि तत्त्वं यण्यवो निमित्तत्वे तदादिप्रत्ययस्यापीति भावः । तद्भावेति । तस्मा-

वभावितामात्रेणेह निमित्तत्वमिति। नन्वेवमरिरिषतीति न सिद्ध्येत्। ऋधातोस्सनि स्मिपूङ्रञ्ज्वशां सनीति इटि कृते इस्शब्दनिमित्तकस्य गुणस्य निषेधे ऽजादेर्द्वितीयस्येति इसो द्वित्वप्रसङ्गात्। इष्यते तु रिस्शब्दस्य द्वित्वम्। सत्यम्। नेह इस्शब्दो द्वित्वनिमित्तम्। कार्यित्वात्। न हि कार्यी निमित्ततया ऽऽश्रीयते। स्थण्डिलाच्छयितरि व्रते इति ज्ञापकात्। अन्यथा शीङो ङित्त्वेन क्ङिति चेति गुणनिषेधापत्तेः। न चैवं सन्नन्तस्य कार्यित्वाद् ऊर्णुनविषतीत्यपि न स्यादिति वाच्यम्। मत्वर्थीयेन इनिना कार्यमनुभवत एव कार्यित्वलाभात्। ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्यमनुभवति न तु सन्। अरिरिषतीत्यत्र तु रिस्शब्दः कार्यभागिति वैषम्यात्। अचीति किम्। जेघ्रीयते। देध्मीयते। शाशय्यते। इह ई घ्राध्मोरितीकारः। अयङ्यि क्-

---

त्सति च तद्भवतीत्येतावता निमित्तत्वं न तु तत्प्रयोजकत्वेनेतीति भावः। यद्यत्र स्थानिवत्त्वं न स्यात् स्यादेव तस्य द्वित्वमिति काल्पनिकं च गृह्यतइत्यपि बोद्धव्यमिति सन्यङोरित्यत्र भाष्ये स्पष्टम्। इनिनेति। ज्ञापकस्य सजातीयापेक्षत्वेनेत्यपि बोद्धव्यम्। कार्यित्वलाभादिति। तथा च तस्यैव निमित्ततया ऽनाश्रयणमिति भावः। द्वितीयाजवधिकस्येति। नटभार्यावद्व्यञ्जनानीति तदवधिकस्य द्वित्वमिति षाष्ठभाष्योक्तेरिति भावः। द्वित्वनिमित्तत्वाभावादिति। न च यङि परत ईत्वमिति तन्निमित्तस्य यङो विशिष्टस्य द्वित्वनिमित्तत्वमस्त्येव। अवयवस्य कार्यित्वे ऽपि न तस्येत्वं प्रति निमित्तत्वं न हि कार्यी निमित्तत्वेनेत्यत्रापि यथाकथंचिन्निमित्तत्वं कार्यित्वञ्च गृह्यतइत्यत्र मानमस्ति। जेघ्रीयतइत्यादेः प्रत्युदाहरणत्वपरभाष्यप्रामाण्येन तत्र निमित्तकार्यिपदयोर्मुख्यार्थत्वस्यैवाङ्गीकारादिति वाच्यम्। अरिरिषतीत्यस्याप्यसिद्धेः। न हि तत्र गुणनिमित्तस्यार्द्धधातुकसञ्ज्ञस्येत्शब्दस्याकारविशिष्टस्य द्वित्वं प्रति कार्यित्वम्। शयितरीत्यत्रापि इकारस्यैव कार्यित्वेन ज्ञापनस्य शिथिलत्वापत्तेश्च। यदि तत्रेगन्ताङ्गस्येत्यर्थात्सर्वस्य कार्यित्वन्तर्ह्यत्रापि यङन्तस्य द्वित्वमित्यर्थात्तुल्यम्। तस्मान्न हि कार्यीत्यत्रापि यथाकथंचिन्निमित्तत्वादि गृह्यतइति युक्तम्। अचीति व्यर्थमित्यस्य जेघ्रीयतइत्याद्यर्थं व्यर्थमित्यर्थः। अधिजगे इति तु प्रयोजनङ्गाङ् लिटीत्यत्र द्वित्व-

ङितीतीयङादेशस्य निषिध्येत इति प्राञ्चः। वस्तुतस्तु अचीति व्यर्थम्। श्रीय ध्नीय अध्य इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाभावात्। अचः किम्। अदूषुपत। इह स्वापेश्चङीति सम्प्रसारणे निषिद्धे ऽभ्यासे उवर्णो न श्रूयेत। न च द्वित्वे कृते पुनः सम्प्रसारणम्। न सम्प्रसारणइति निषेधात्। यद्यपीद्दाजादेशः स्थानिवत्स्यादिति रूपातिदेशपरतया सूत्रे व्याख्यानं काशिकादौ प्रसिद्धं फलं च तुल्यमेव तथा ऽपि स्थानिवद्ग्रहणं निवर्त्य नञश्चानुवर्त्त्य निषेधपरतया व्याख्यानमपि भाष्यारूढं लघु चेति तदेवाश्रितम्। एवं च सति स्थानिवदिति शब्दाधिकारप्रयुक्तक्लेशो नास्ति। न पदान्तेति निषेधानन्तरं पाठस्यानुगृहीतो भवतीति दिक्। उभयान्वयीति। मध्ये पाठात्पूर्वोत्तराभ्यां सम्बध्यतइत्यर्थः। तत्रोत्तरान्वयफलं कर्त्तुङ्गन्तुमित्यादावपि निषेधः। नित्स्वरेण सम्प्रत्युदात्तत्वात्। पूर्वान्वयफलन्तु

---

कारकनिर्देशाश्रयणात्तस्य लावस्थायां प्रवृत्तेः। न च तस्य विषयसप्तमीत्वाङ्गीकारेणानैमितिकत्वं तद्भावभावितामात्रेणेव तद्बुद्धिभावभावितामात्रेणापि निमित्तत्वस्य युक्तत्वादतस्तत्रोपात्तलिङ्बुद्धिभावएव निमित्तमित्यजुनिमित्तत्वाभावः। सर्वत्रैव वा ऽत्र शास्त्रे बुद्धिकृतमेव निमित्तत्वमिति स्पष्टं द्विगोर्लुगिति सूत्रे मनोरमायाम्। अत एवाङ्गाधिकारे आर्धधातुकइत्यादीनां विषयसप्तमीत्वे ऽपि परदेशस्थविषयकबुद्धिभावेन जायमानतया परनिमित्तत्वेन तद्विषये ऽचः परस्मिन्निति स्थानिवत्त्वप्रवृत्तिः। इदमेवाचीति ईदृशनिमित्तत्वाश्रयणे लिङ्गम्। ध्वनितञ्चेदं प्रकृतसूत्रे ऽचो यदिति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः। निषिद्धे इति। द्विर्वचनेचीत्यनेनेति भावः। पुनः सम्प्रसारणमिति। ष्वुतिस्वाप्योरित्यनेनेति भावः। निषेधादिति। अस्य च व्यवहिते ऽपि प्रवृत्तिरिति स्पष्टमेवाकरविदाम्। इदमपि प्राचामनुरोधेन। सम्प्रसारणग्रहणसामर्थ्यादेकवर्णव्यवधाने यून इत्यादावस्तु प्रवृत्तिः। प्रकृते प्रवृत्तौ तु न मानमिति वक्तुं शक्यत्वात्। प्रत्युदाहरणान्तरन्त्वन्यत्रोक्तम्। रूपातिदेशेति। न चात्र द्वित्वपक्षे द्वित्वात्पूर्वमियङः प्रवृत्त्या द्वित्वे कार्ये स्थानिरूपातिदेशे ऽपि यणि तस्त्वे मानाभावेन निन्यतुरित्यसिद्धिरिति वाच्यम्। आभीयत्वेनेयङो ऽसिद्ध्या यण-

बिभित्सति पिपक्षतीत्यादौ निषेधः। द्वित्वे कृते ऽनेकाच्त्वात् । स्यादेतत्। विशेष्यदलमेव तर्हि मा ऽस्त्विति शङ्कते। एकाचः किम्। ननु बिभित्सतीत्यादितौल्याद्यङ्लुक्यपि स्यादेव तत्राह। स्मरन्ति ह्येति। श्तिपा शपेत्यादि। श्तिपा यथा। घ्नतिहन्तियातिवातिद्रातिप्सातीत्यादि। शपा। सनीवन्तेति सूत्रे भरेति। अनुबन्धेन निर्देशो द्विधा। स्वरूपेण इत्संज्ञकत्वेन च। आद्यो यथा। शीङः सार्वधातुके गुणः, दीङो युडिति। द्वितीयस्त्वनुदात्तङित इत्यादि। अत एव नाग्लोपिशास्वृदितामिति सूत्रं शासेर्यङ्लुकि न प्रवर्त्तते स्वरूपेणानुबन्धनिर्देशात्। सूत्रे शासिग्रहणं प्रत्याख्याय ऋशास्तु इति ऋदित्पठनीय इति मते तु इत्सञ्ज्ञकत्वेनानुबन्धनिर्देशात्। ये तु यङ्लुक्यपीच्छन्ति तैः शासेरृकारो न पठ्यते। गणेन यथा। बेभिदीति। चेच्छिदीति। रुधादिभ्यः श्नम्। एकाज्ग्रहणं प्रकृतसूत्रे। तेन बेभिदिता। चेच्छिदिता। अत्रेण्निषेधो न। एतच्चेति। ननु श्तिपाशपेत्याद्यंशे कथमिदं ज्ञापकमिति चेत्। एकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषायाः ज्ञापन-

———

प्रवृत्तेः। सम्प्रत्युदात्तत्वादिति। न च विहितविशेषणान्निस्तारः। धातुस्वरस्य दुर्वारत्वेनासम्भवापत्तेः। अनेकाच्त्वादिति। एवञ्च निषेधो न स्यादिति भावः। एकाचो विहितस्येत्यर्थेनापीदं सुसाधम्। न च तदा लावस्थायामड्ति पक्षे अकार्षीदित्यादौ दोषः। च्लिसिचोरपि स्यतासिवल्लावस्थायामेव प्रवृत्त्या ऽङ्गसञ्ज्ञानिरपेक्षत्वेनान्तरङ्गत्वाद्विकरणोत्तरमेवाडादिप्रवृत्तेः। स्पष्टं चेदमेकाचो द्वे इत्यत्र भाष्ये। तर्हि मा ऽस्त्विति। उपदेशे ऽनुदात्तस्यैकाच्त्वव्यभिचारादिति भावः। न च वधिव्यावृत्त्यर्थं तत्। तत्सामर्थ्येनोपदेशमात्रे एकाचो ग्रहणादिति वाच्यम्। आद्युदात्तनिपातनेन सिद्धेरित्यभिमानात्। स्वरूपेणेति। शासु इति पाठात्। सूत्रे। नाग्लोपीति सूत्रे। इत्सञ्ज्ञकत्वेनेति। ऋदित्पदेन तद्ग्रहणादिति भावः। न पठ्यते इति। पाठे ऽप्यनित्यत्वेन वारणमन्यथा यङ्लुगन्ते भूवादय इति सनाद्यन्ता इति धातुत्वं न स्यात् गणनिर्दिष्टत्वात्। अनित्यत्वे मानञ्च यङो वा गुणो यङ्लुकोरित्यादि। अत एव यङ्लुकि द्वित्वं भष्भावादि सिद्ध्यति। एतन्मूल एव य-

स्य गतिकारकोपपदानामित्यादौ दृष्टत्वात्। अनन्यार्थैः प्रतिपादिनिर्दे-शैर्ज्ञापनसम्भवाच्च। तद्वत इति। न च मत्वर्थलक्षणायां मानाभावः। वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात्। वधेरिति। यत्तु तद्व्यावृ-त्तये ऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव च प्रा-चा ऽनुसृतः स इहोपेक्षितः। सूत्राननुगुणत्वात्। तथा हि। कर्त्ता ह-न्तेत्यादौ सर्वे सर्वपदादेशा इति न्यायेन करित्यादिरादेशः। तस्य य-थास्थान्युपदेशं गृहीत्वा निषेधः प्रवर्त्तते, एवं वधादेशे ऽपि प्रवर्त्तमा-नः केन वार्यताम्। अदन्तपर्युदाससामर्थ्यं नेति चेत्, न। सूत्रकारे-णादेशे पर्युदस्तत्वादिति भावः॥

इणः षीध्वम्॥ इण्कोरित्यधिकारे ऽपि पुनरिण्ग्रहणं कवर्गनिवृ-त्त्यर्थम्। तेनेह न। पक्षीध्वम्। अङ्गात्परेषामिति। विहितानामिति तु नोक्तम् अलीढमित्यादावव्याप्तेः। लिहद्दुहनहां ढत्वघत्वधत्वेषु लिक्षी-ध्वं, नत्सीध्वमित्यत्रातिव्याप्तेश्च। अङ्गात्किम्। वेविषीध्वम्। अर्थवद्-ग्रहणादेव सिद्धे क्व चिदर्थवद्ग्रहणपरिभाषा न प्रवर्त्तत इति ज्ञाप-नार्थमिदम्। तेनानिनस्मन्नित्यादि सिद्धम्। एधिषीढ्वमिति। इणः षी-

---

न्नेकाज्ग्रहणं किञ्चिदिति पाठः श्वीदित इति सूत्रे कैयटे इत्यन्ये। अनुदात्तपा-ठस्यैवेति। न चानुदात्तमन्तोदात्तत्वबाधनार्थं मत्वर्थलक्षणयैवोपपत्तौ शास्त्रबाधे मा-नाभावात्। सूत्रकारेणेति। भाष्यवार्तिककृतोरप्युपलक्षणमेतत्। एतेन वधादेशे आद्युदात्तत्वनिपातनमूलकः स ऊदाद्यन्तानामिवादन्तानामप्युदात्तोपदेशत्वाभावबो-धनात्। तच्च कथादिषु स्वतो वधादेशे उदात्तनिपातनसामर्थ्यादित्यपास्तम्। यत्तु हनो वधेत्यत्रास्य व्यञ्जनान्तत्वे इड्विधिर्वाच्यः। अदन्तत्वे तु न दोष इति भाष्ये उक्तं तत्तु उपदेशे ऽनेकाच्त्वात्प्रतिषेधाभावादिट्सिद्धिरित्येवंपरतया कैयटेन व्याख्यातम्।

विहितानामिति। एवञ्चाङ्गादिति न कर्त्तव्यमिति लाघवमिति भावः। न-त्सीध्वमिति। इणन्ताद्विहितानां षीध्वमादीनामित्यर्थे षीध्वमः साक्षाद्विधानासम्भवः। सीयुटः षत्वस्य च विधानोत्तरकालत्वात्। तस्माद्यस्य विहितस्य षत्वसीयुड्भ्यो-

ध्वमिति ढत्वं तु न भवति। षीध्वभक्तस्येडागमस्य तद्ग्रहणेन ग्रहणा-दिणन्तादङ्गात्परत्वाभावात्। विभाषेट इतीटो विशिष्य ग्रहात्। गो-बलीवर्दन्यायेनेड्व्यतिरिक्त एवेणिह ग्राह्य इति केचित्तदाह। इङ्-भिन्न इति। ऊदृदन्तैरिति। अकारस्तूपेक्षितः। तद्वीजन्तूक्तमेव ऊ-दन्ता भूप्रभृतयः। ॠदन्ताः कॄप्रभृतयः। यु, मिश्रणामिश्रणयोः। रु, शब्दे। रुङ्, गतौ। रेषणे चेत्यपि केचित्। क्ष्णु, तेजने। शीङ्, स्वप्ने। स्नु, प्रस्रवणे। णु, स्तुतौ। टु, नु, शब्दे। टुओश्वि, गतिवृद्ध्योः। डीङ्, विहायसा गतौ। श्रिञ्सेवायाम्। वृङ्, संभक्तौ। वृञ्, वरणे। निहता अनुदात्ताः। इदानीं हलन्तान् कान्तादिक्रमेणाह। शक्लृ, शक्तौ। कान्त एकः। खगघङान्ता न सन्त्येव। चान्ता अपि पकारात्प्राचीना ये वर्णास्तदादयो न सन्तीत्याशयेनाह। पच् इति। डु पचष्, पाके। पच, व्यक्तीकरणे। द्वावपि। फबभादयो न सन्तीत्याशयेनाह। मुचीति। एवमग्रेपि बोध्यम्। मुच्लृ, मोक्षणे। रिचिर्, विरेचने। रिच, वियोजनसम्पर्चनयोरिति यौजादिकस्य। वच, परिभाषणे। ब्रुवो वचिरपि। वचिर्यौजादिकेऽपि भ्वादावपीत्येके। विचिर्, पृथग्भावे। षिच, क्षरणे। चान्ताः षट्। प्रच्छ, ज्ञीप्सायाम्। छान्त एकः। त्यज, हानौ। णिजिर्, शौचपोषणयोः। भज, सेवायाम्। भञ्जो, आमर्द्दने।

---

ग्यता तस्येति वाच्यम्। सा च यदि धत्वं न स्यात् स्यादेव षत्वमिति प्रकृते ऽप्यस्त्येवेत्यभिमानेनेदम्। वेविषीध्वमिति यान्तमिहाङ्गं नेणन्तम्। इणन्तादङ्गादिति। स्वरूपकथनमिदम्। इति केचिदिति। अत्रारुचिबीजन्तु भाष्ये ऽस्यादर्शनं सूत्रान्तरस्थेन गोबलीवर्द्दन्यायग्रहणे च न दृढतरं मानमिति। रेषणे चेत्यपि के चिदिति। अत्रारुचिबीजन्तु निरनुबन्धकत्वेन साहचर्येण च यु,मिश्रणइति लुग्विकरणस्यैव ग्रहणमुचितम्। परिभाषाद्वयेन लुग्विकरणपरिभाषाबाधात्। अत एव संनत्स्याम्यथ योद्धुं किं न रोष्ये सत्त्वहीनवदिति भट्टिः सङ्गच्छते। द्वावपीति। इदं दुर्गवर्धमानादिरीत्या। अन्यैस्तस्येदित्त्वस्वीकारेण भाष्ये निर्दिष्टपाठेन तद्ग्रहासम्भवात्। अत एव पचि, विस्तारवचनइति चुरादेरिदित्त्वात् णिजभावे ऽपि न ग्रहणम्।

भुज, पालनाभ्यवहारयोः । भुजो, कौटिल्यइति च । भ्रस्ज, पाके । टुमस्जो, शुद्धौ । यज, देवपूजादौ । युजिर्, योगे । रुजो, भङ्गे । विजिर्, पृथग्भावे । षञ्ज, सङ्गे । सृज, विसर्गे । जान्ताः पञ्चदश । अद, भक्षणे । णुदिर्, सम्प्रेषणे । खिद, दैन्ये । खिद्यति । खिन्दति । खिन्त्तिश्च । छिदिर्, द्वैधीकरणे । तुद, व्यथने । नुद, प्रेरणे । पद, गतौ । भिदिर्, विदारणे । विद, सत्तायाम् । विद, विचारणे । शद्लृ, शातने । षद, विशरणादिषु । ञिष्विदा, गात्रप्रक्षरणे । स्कन्दिर्, गतिशोषणयोः । हद, पुरीषोत्सर्गे । दान्ताः पञ्चदश । क्रुध, कोपे । क्षुध, बुभुक्षायाम् । बुध, अवगमने । बन्ध, बन्धने । युध, सम्प्रहारे । रुधिर्, आवरणे । अनो रुध, कामे इति दिवादिस्थ । राध, संसिद्धौ । व्यध, ताडने । शुध, शौचे । साध, संसिद्धौ । षिधू, संराद्धौ । धान्ता एकादश । मन, ज्ञाने दिवादिः । हन, हिंसागत्योः । नान्तौ द्वौ । आप्लृ, व्याप्तौ । क्षिप, प्रेरणे । दिवादिस्तुदादिश्च । छुप, स्पर्शे । तप, सन्तापे । तप, ऐश्वर्ये दिवादिः । तप, दाहे इत्यपि णिजभावपक्षे । तिपृ, क्षरणे । तृप, प्रीणने । दृप, हर्षविमोचनयोः । इमौ रधादी वेट्कौ । इह पाठस्त्वनुदात्तेतस्येत्येतदर्थः । लिप, उपदेहे । लुप, छेदने । डुवप्, बीजसन्ताने । शप, उपालम्भे । ञिष्वप्, शये । सृप्लृ, गतौ । पान्तास्त्रयोदश । यभ, मैथुने । रभ, राभस्ये । डुलभष्, प्राप्तौ । भान्तास्त्रयः । गम्लृ, गतौ । णम, प्रह्वत्वे शब्दे च । यम, उपरमे । रम, क्रीडायाम् । मान्ताश्चत्वारः । क्रुश, आक्रोशे । दंश, दंशने । दिश, अतिसर्जने । दृशिर्, प्रेक्षणे । मृश, आमर्शने । रिश, रुश, हिंसायाम् । लिश, अल्पीभावे । लिश, गतौ च । विश, प्रवेशने । स्पृश, संस्पर्शने । शान्ता दश । कृष, विलेखने । भौवादिकतौदादिकौ । त्विष, दीप्तौ । तुष,

---

युजिर्योगइति । युज समाधावित्यस्यापि ग्रहणं बोद्धव्यम् । विनिगमनाविरहात् । भाष्ये युजीति धात्वेकदेशेकारविशिष्टस्यैव ग्रहणं न तिका निर्देश इति त्वयुक्तम् ।

तुष्टौ। द्विष, अप्रीतौ। दुष, वैकृत्ये। पुष, पुष्टौ। पिष्लृ, संचूर्णने। विष्लृ, व्याप्तौ। शिष्लृ, विशेषणे। इह जिषु, विषु, मिषु, इति कष, खष, शिषे,ति च दण्डकद्वये पठितौ भ्वादौ अपि विशि,विषौ, ग्राह्याविति माधवादयः। नेति बोपदेवादयः। शुष, शोषणे। श्लिष, आलिङ्गने। षान्ता एकादश। घस्लृ अदने। शविकरणः प्रकृत्यन्तरम्। अत्तेरादेशस्य तु स्थान्युपदेशे ऽनुदात्तेनापि सिद्धम्। वस, निवासे सान्तौ द्वौ। दह, भस्मीकरणे। दिह, उपचये। दुह, प्रपूरणे। दुहिर्, इति भ्वादिस्तु नेह गृह्यतइति सम्प्रदायः। णह, बन्धने। मिह, सेचने। रुह, जन्मनि प्रादुर्भावे च। लिह, आस्वादने। वह, प्रापणे। हान्ता अष्टौ॥

कचच्छजा दधनपा भमशाः षसहाः क्रमात्।
कचकाणणटाः खण्डा गघजाष्टखजाः स्मृताः॥ इति सङ्ग्रहः॥

तृप्यतिदृप्यतीत्यत्र श्यना निर्देशस्य फलमाह। तुदादाविति। अन्यनिवृत्तये इति। निवर्त्तनीयास्तु। ञिष्विदा, स्नेहनमोचनयोः। युञ्, पदस्थैर्ये। सेधतिबोधती चेति भौवादिकाः। मनु,अवबोधने। तानादिकः। पुष, पुष्टौ। पोषतिः पुष्णातिश्च। श्लिष, दाहे। भौवादिकः। वस, आच्छादने। आदादिकः। एते सेटः। युञ्, बन्धने तु क्र्यादिः अनिट्। तथा। अन्यनिवृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः। तथा हि। णिजि, शुद्धावित्यदादिः। ओविजी, भयसञ्चलनयोरिति तुदादिः। शक्यतिश्च सेडेव। यद्यपि माधवादयः शक्यतेरप्यनिट्त्वमिच्छन्ति तथापि चन्द्रगोमिप्रभृतीनां मतेन बोध्यम्। अत एव वोपदेवो धातुद्वयेन

---

इका निर्देशस्यैव क्रमात्। त्रिषिशिषी जौहोत्यादिकरौधादिकौ। विष विप्रयोगे इति क्र्यादिरपीति न्यासः। कचच्छजा इति। पूर्वार्द्धोपात्तानां कान्तचान्तादयादिरर्थः। उत्तरार्द्धेकरचर्द्दका १ ण १९ ण १९ टाः ११ खोडो १३ ग ३ घ ४ त १० ट ११ ख ८ इत्यर्थः। कादयः क्रमेणेकादिसंख्यापरा इति बोद्धव्यम्।

रूपद्वयं फलतीत्याशयेन शक्नोतिशक्यत्योर्द्वयोरपि लकारमनुबन्धमासजत्। विन्दतिरिनि। लाभार्थः। इष्ट इति। अनिट्त्वेनेष्ट इत्यर्थः तथा च चान्द्रसूत्रम्। "विदेरलुक" इति। भाष्यानुक्ता इति। अनुक्ता न तु प्रत्याख्याताः। भाष्यमप्युपलक्षणतया नेयम्। तेन रक्तं रागात्। शुष्क, धृष्टौ। क्तेन नञ्विशिष्टेनानञ्। इत्यादिसैत्रव्यवहारात्तन्त्रान्तरसंवादाच्च। अत्तुं प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्चेति भावः। शपूर्वा इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शरो न शेषः किं तु खयामेवेति बोद्ध्यम्॥

गाधृ। आस्पदं स्थापना अवस्थानं वा प्रतिष्ठा। एकत्र स्थापनं सन्दर्भो वा ग्रन्थः। नाथृ, नाधृ। उपतापो रोगः। उपघात इत्यन्ये। आशिष्येवेति। अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्त्तिकमित्यर्थः॥

अत एकहल्॥ तन्त्रावृत्त्यादिना लिटीत्यादेशविशेषणमेत्वस्य निमित्तं चेत्याह। लिण्निमित्तेति। किति लिटीति च। यत्तु प्राचा लिट्कृताभ्यासादेशहीनस्येति व्याख्यातम्। तन्न। अभ्यासग्रहणस्याधिक्यात्। आदिग्रहणत्यागेन न्यूनत्वाच्च। पेचतुरित्यादौ हलादिःशेषणाभ्यासस्यानादेर्हलो लुप्ततया ऽसम्भवाच्च। अभ्यासैकदेशस्यादेशः स न तु कृत्स्नस्याभ्यासस्येति चेत्तर्हि व्यावर्त्याप्रसिद्धिः। चकणतुरित्यादावप्येकदेशस्यैव चुत्वादिप्रवृत्तेः। भदि। कल्याणं मङ्गलम्। सुखमात्मगुणः। मदि, स्तुति। मोदो हर्षः। मदो गर्वः। स्वप्नमालस्यम्।

---

ओविजीति। न चास्य ईदित्त्वसामर्थ्यादेव सेट्त्वावधारणे विजिरिति सानुबन्धपाठो व्यर्थ इति वाच्यम्। तत एवैवं पाठात्। आस्पदमिति। प्रसिद्धिकरं नाम ग्रामादि वा। यथा मया प्रतिष्ठा लब्धेति स्थापनेति। यथा त्वया ऽस्य प्रतिष्ठा कृतेति अवस्थानमिति। यथा क्व ते प्रतिष्ठेति। एकत्र स्थापनं मण्यादेः सूत्रादेर्वा। सन्दर्भ इति। शब्दानामित्यर्थः॥

तन्त्रावृत्त्यादिनेति। वक्तुस्तन्त्रेणोच्चारणं बोद्धुरावृत्त्या बोध इत्यर्थः। आदिने-

मदी, हर्षे। दिवादौ। हर्षग्लेपनयोर्घटादौ। मद, तृप्तियोगे चुरादौ॥

न शसदद॥ शसु, हिंसायाम्। दन्त्यान्तः। यत्तु प्राचा शशेति तालव्यान्तं पठित्वा शश, प्लुतगताविति धाताविदं सूत्रं सञ्चारितं तदाकरविरोधादुपेक्ष्यम्। गुणशब्देन भावितस्येति। अवयवावयविभावः षष्ठ्यर्थः। भावितत्वञ्च प्रयोज्यत्वम्। साक्षात्परंपरासाधारणम्। तथा हि। शशरतुः, पपरतु,रित्यादौ गुणशब्देन अर् क्रियते तदवयवोऽकारः। लुलविथेत्यादौ तु गुणशब्देन ओकारः। तस्यावादेशस्तदवयवोऽकारः। सकर्मक इति। यथा। स्वदस्व हव्यानि। अनुभवेत्यर्थः। अकर्मक इति। यथा। अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारे,ति। न स्वदते न रोचतइत्यर्थः॥

धात्वादेः षः॥ यदि तु धातव एव दन्त्यादयः पठ्येरन् तदा ण्यन्ताल्लुङि असिष्वदत्। सिषेधेत्यादौ आदेशप्रत्यययोरिति षत्वं न स्यात्। अतः षोपदेशान्पठित्वा सादेशः क्रियते। येषान्तु षत्वं नेष्टन्ते दन्त्यादय एव पठ्यन्ते। सृ, गताविति यथा। एवं स्थिते धातुपाठस्थस्यैव तालव्यादिव्यवस्थावत् षोपदेशव्यवस्था ऽप्युचिता। तथा ऽपि साधादिषु सादिपाठस्यैव दृश्यमानतया पाठस्य सङ्कीर्णत्वाल्लक्षणमुखेन षोपदेशत्वं व्यवस्थापयति। सेगित्यादि। दन्त्यस्य अच्च दन्त्याचौ। तौ अन्तौ अव्यहितपरौ यस्य स दन्त्याजन्तः। सः सकार आदिर्येषान्ते एकाचः षोपदेशा बोध्याः। तथा च ष्ठा, गतिनिवृत्तौ। षि-

---

कशेषावृत्ती। असम्भवाच्चेति। अभ्यासादेशस्यासम्भव इत्यर्थः। घटादाविति। अपूर्वो घटादौ पठ्यतइति मतेनेदम्। यद्वा ऽस्य दिवादिपठित एवानूद्यतइति शेषः। तेन स नाधिक इति भावः॥

गुणशब्देनारिति। उरण् रपर इति सूत्रेणैकवाक्यतया ऋकारान्ताङ्गान्त्यस्य ऋकारस्यार्गुणो भवतीति विधानादिति भावः। तदवयवोकार इति। न शसददवादिगुणानामित्येव सिद्धे गुणग्रहणसामर्थ्याद् गुणशब्देन भावितस्यानिकावमादाय लुलविथेत्यादावपि प्रवृत्तिरिति भावः॥

ध, गत्यामित्यादौ पठ्यमानः षकारः शुद्ध एव । साधादौ तु सांप्रतम-पठ्यमानो ऽपि षकारः प्राक् स्थित इत्यनुमेयमिति भावः । दन्त्येत्यादि किम् । चुस्कुन्दे । एकाचः किम् सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ । अतिव्याप्तिवारणायाच । सेगित्यादि । सेकृ, गतौ । स्रम्भु, गतौ । स्तृ, गतौ । स्तृञ्, आच्छादने । सृज, विसर्गे । स्तृञ्, आच्छादने । स्त्यै, शब्दसङ्घातयोः । एभ्यो ऽन्यानुक्तलक्षणेनासङ्गृहीतान्षड् धातून् शृङ्ग्राहिकया सङ्गृह्णाति । ष्वष्कित्यादि । ष्वष्क, गतौ । ञिष्विदा, गात्रप्रक्षरणे । स्वद, आस्वादने । ष्वञ्ज, परिष्वङ्गे । ञिष्वप्, शये । ष्मिङ्, ईषद्धसने । एते षोपदेशा इत्यन्वयः । प्राचा तु एकाच इति नोक्तम् । तत्र सूचिसूत्र्यादावतिव्याप्तिः स्पष्टैव । यत्तु व्याख्यातार आहुः । येषां स्वत एव षकारादित्वं पठ्यते ष्ठिवादीनान्तेषाष्टवर्गद्वितीयत्वपक्षे ऽपि षोपदेशत्वं न निवर्त्तते । न ह्येतएव षोपदेशा नान्यइति नियम्यते । तथा हि सति ष्ठिवेर्द्वितीयष्टकार इति पक्षे सत्वनिषेधो ऽनर्थकः स्यात् । नाप्येते षोपदेशा एवेत्ययोगो ऽपि व्यवच्छिद्यते । सेवतिर्दन्त्यादिरप्यस्तीति मैत्रेयन्यासकारादिभिरुक्तत्वात्सम्भवमात्राभिधानमेतदिति । अत्रेदं वक्तव्यम् । यद्ययोगान्ययोगौ न व्यवच्छेद्यौ तर्हि व्यर्थमेवेदम् । अविवेकस्य तदवस्थत्वात् । किं च विवेचनाय षोपदेशत्वलक्षणेन बोधयतीति स्वोक्तावतारिका ऽप्यसङ्गता । अपि च । धातुपाठे येषामादौ षकारो न पठ्यते साम्प्रतिस्थलत्यादीनान्तेषामनेन षोपदेशत्वमावेद्यते इति स्वोक्तिरपि व्याहतैव । यत्त्वन्ययोगव्यवच्छेदे

---

अव्यवहितपराविति । पर्युदासस्य सदृशग्राहित्वादव्यवधानांशलाभः । स्त्यै शब्दे इति । स्त्यै ष्ट्यै इति द्विः पाठः पर्युदासे मूलम् । सेवृ षेवृ इति द्वयोः पाठस्त्वनार्थः । प्यसंगतेति । तथा सति स्यादिति शेषः । लक्षणस्यायोगान्ययोगव्यवच्छेदकत्वस्वभावत्वात् । अन्यथा लक्षणत्वमेव हीयेतेति भावः । व्याहतैवेति । अयोगो न व्यवच्छिद्यतइति स्वोक्तयेत्यर्थः । षोपदेशत्वमावेद्यते इत्यस्य तदयोगो व्यवच्छिद्यत-

ष्ठिवेः सत्त्वनिषेधानर्थक्यं स्यादित्युक्तम् । तन्न । सत्वनिषेधप्रत्याख्यानार्थमेवाकरे द्वितीयष्ठकार इति पक्षस्य प्रक्रान्तत्वेनेष्टापत्तेः । यदप्ययोगव्यवच्छेदे सेवतिर्दन्त्यादिरपीति मैत्रेयादिमतविरोधोद्भावनम् । तदपि न । सेवृ, षेवृ, इति धातुद्वयपाठवादिनान्द्वितीयधातुपाठसामर्थ्येन धातुत्वोपपत्तेः । तादृशयत्नविशेषविरहे ऽयोगव्यवच्छेदस्य निर्दोषत्वादिति दिक् । ह्लादी । ईदित्त्वं श्वीदितो निष्ठायामितीडभावार्थम् । ह्लादो निष्ठायामित्युपधाह्रस्वः । आह्लन्नः । आह्लन्नवान् । स्वद, आस्वादने । अषोपदेशत्वादसिस्वदत् । यकाररहितोऽप्ययमिति । तथा च प्रयुज्यते । 'मधुस्रुतघृतमिव सुपूत'मिति । मन्थ, विलोडने । हिंसासंक्लेशनयोरपीत्येके । अयं क्र्यादौ च इह चाग्रे निरनुषङ्ग एदित् । षिध, गत्याम् । अयमुदिदिति काश्यपादयः । तद् वृत्तिविरोधादयुक्तमिति माधवः । तथा हि । अनिट्कारिकासु सिध्यतिबुध्यत्योः श्यना निर्देशात्सिधितं बुधितमिति वृत्तावुदाहृतम् । ऊदित्त्वे तु उदितो वेति क्त्वायामिड्विकल्पात् निष्ठायामिण्न स्यात् । यस्य विभाषेति निषेधात् । अत एव न्यासपदमञ्जर्यामपि सिधेरुदित्त्वमनार्षमित्युक्तम् ॥

उपसर्गात्सुनोति ॥ सुनोत्यादीनां पञ्चानां श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थस्तेनाभिसोषवीतीत्यादौ षत्वं नेत्याकरः । स्थादिष्वेवाभ्यास-

---

इत्यर्थादिति भावः । प्रत्याख्यानार्थमेवेति । एवं हि तत्र भाष्यं ष्ठिवेरपि द्वितीयष्ठकार इति सत्वे कृते ष्टुत्वेन सिद्धन्ते ष्ठीव्यतइति तर्हि न सिद्ध्यति । द्वितीयथकारकोपि स्वीक्रियते तेष्ठीव्यते टेष्ठीव्यतइत्युभयसिद्ध्यर्थन्तस्य तर्हि सत्वं प्राप्नोति । एवं तर्हि द्विषकारकः स आद्यस्य सत्वे कृते ष्टुत्वेन सिद्धं इवलिट् ष्टीव्रते इत्यत्र तर्हि धुट् प्रसज्येत । एवन्तर्हि यादी ष्ठिव्नुष्वष्कती इति । तादृशयत्नेति । धातुद्वयपाठरूपेत्यर्थः । एकधातुपाठे ऽयोगव्यवच्छेदस्य निर्दुष्टत्वादिति भावः ॥

आकर इति । अत्राहुचित्रीजन्तु स्तौतिस्तोभत्योः शर्पूर्वा इति खयः शेषेण तयोः फलाभावेन पञ्चानामित्यसङ्गतमिति । तद्बीजान्तरमप्याह । स्थादिष्वेवेति । न च गणनिर्देशात्स्थादिष्वित्यस्य यङ्लुक्यप्राप्तिः । गणपाठप्रसिद्धगणनिर्देशस्यैवात्र ग्रहात् ।

स्य षत्वम्। न तु सुनोत्यादिष्विति नियमेनापि गतार्थमेतत्। सेनये-ति ण्यन्तः। सेनया अभियाति अभिषेणयति। श्तिपा निर्देशो यङ्लु-ङ्निवृत्त्यर्थः। न चानेकाच्त्वेन यङसम्भवः। क्वौ णिलोपे तत आचारे यङः सम्भवादित्याहुः। सिधेति। श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थो दै-वादिकनिवृत्त्यर्थश्चेति हरदत्तः। तेन प्रतिसेषिधीतीत्यत्राभ्यासे षत्वं न। अत्र माधवेन मतान्तरमुपन्यस्तम्। सिद्ध्यतिनिवृत्त्यर्थ एवायं श्तिपा निर्देशः। श्तिपा श्पेति निषेधस्तु नेह प्रवर्त्तते। सेधतेर्गताविति निषेध-सूत्रे श्तिपा निर्देशाज्ज्ञापकात्। स हि यङ्लुकि षत्वपरित्राणेनार्थ-वान्न त्वन्यथेति। इण्कोरित्यधिकृतं तच्चोपसर्गे कवर्गस्यासम्भवादिणेव सम्बध्यते। तात्स्थ्यात्ताच्छब्द्यमित्याह। उपसर्गस्थादिति। इणन्तादुप-सर्गादिति तु न व्याख्यातम्। निःषुणोति, निःषेधतीत्यादावव्याप्तेः। सिद्धान्ते तु नुम्विसर्जनीयशर्व्यवाये ऽपीति षत्वं भवत्येव। यत्तु दुष्षु-णोति दुःषेधतीत्यादि प्राञ्च उदाजह्रुस्तच्चिन्त्यम्। दुरः षत्वणत्वयो-रुपसर्गत्वप्रतिषेधात्। यत्क्रियायुक्तास्तं प्रत्येवोपसर्गा इत्युक्तम्। ते-

---

अत्र तूपसर्गात्सुनोतीतिसूत्रस्थस्यादीनां ग्रहणम्। न चाभ्यासेन स्वनिमित्ताक्षेपात्तत्र प-रे नियमो न चैतद्यङ्लुगन्तइति वाच्यम्। सन्यङन्तस्य द्वित्वविधानेन तेन तत्परत्वा-क्षेपात्। यङ्लुगन्तेभ्यासस्य द्वित्वनिमित्तपरत्वासम्भवेन तेन तदाक्षेपासम्भवाच्च। त-दन्तस्याक्षेपे तु दोष एव नेति दिक्। ण्यन्त इति। नामधातुरिति शेषः। इत्याहु-रिति। अत्रारुचिबीजन्तु णिलोपे सनिस्यस्यैकाच्त्वे ऽपि आचारक्विन्ताद्यङ्लुग्विधाने न मानमसिद्धसूत्रस्थभाष्यविरुद्धं च तदिति। हरदत्त इति। तादृशयङ्लुक्सत्त्वे दृढ-तरमानाभावो ऽरुचिः। मतान्तरमिति। अत्रारुचिबीजन्तु गत्यर्थे षत्वप्रवृत्त्या तस्य चारितार्थ्येन गतिभिन्नार्थेपि श्तिपा शपेति निषेधबाधे मानाभाव इति। भवत्येवेति। तत्र तु विरोधात्तत्सम्भव एव न स्यादिति भावः। दुर इति। षत्वणत्वयो रुत्व-स्य सिद्धत्वेन तद्विषयोपसर्गत्वप्रतिषेधपरे दुरः षत्वेति वार्तिके कृतरेफसान्तस्यापि ग्रहणेन सान्तयोरपि तन्निषेधात्। अत एव सुषामादिषु दुष्षुशब्दपाठश्चरितार्थः। स ह्यपदुःसुषु स्थः कुरिति दुष्पूर्वकस्थाधातोः कुप्रत्यये साधुः। अन्यथा दुस्पू-

नेह न। निर्गतः स्रावको ऽस्मान्निःस्रावकः। ण्यन्ते तु प्रादीनां प्रकृत्यर्थविशेषणत्वे ऽभिषावयति। ण्यर्थविशेषणत्वे तु सुनोतिं प्रत्यनुपसर्गत्वाभावान्न षत्वम्। अभिस्रावयति। एवं सनादिष्वप्यूह्यम्। स्थादिष्वभ्यासेन प्राक्सितादिति च वक्ष्यते। तत्र सौत्रक्रमज्ञानस्योपजीव्यत्वात्सौत्रक्रमेणैव षत्वप्रकरणं व्याचष्टे॥

सदिरप्रतेः॥ षष्ठ्यर्थे प्रथमेत्याह। सदेरिति॥

स्तम्भेः॥ सौत्रस्यैवेति। स्तन्भुस्कन्भु इति सूत्रे निर्दिष्टस्य रोधनार्थस्य। न तु ष्टभिस्कभि प्रतिबन्धइति पठिष्यमाणस्येति भावः। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। षत्वविधौ हि नकारविशिष्टरूपमुपात्तन्तच्च सौत्रस्य प्रत्यक्षम्। इदितस्तु लाक्षणिकम्। तेन विष्टभ्नाते इत्यादौ षत्वं न। नन्वेवमुत्तम्भते इत्यादौ उदः स्थास्तम्भ्वोः पूर्वस्येति न प्रवर्त्ततइति चेत्। न। तत्र हि स्थास्तम्भ्वोरिति मकारविशिष्टं रूपमुपात्तन्तच्चोभयोरपि लाक्षणिकमित्यविशेषादुभयग्रहणात्। एतच्च सर्वं माधवग्रन्थे स्पष्टम्। ननु सदिस्तम्भ्वोरित्येव कुतो न सूत्रितं तत्राह। योगेति। अवाच्चेति सूत्रे सदेः सम्बन्धो मा भूदिति भावः। नानुवर्त्ततइति। स्तन्भेरित्यत्रेत्यर्थः। तथा चैतदर्थोपि योगविभाग इति भावः॥

अवाच्चा॥ आलम्बनमाश्रयणम्। यथा यष्टिमवष्टभ्यास्ते। अविदूरस्य भाव आविदूर्यम्। न नञ्पूर्वात्तत्पुरुषादिति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्ययः॥

---

र्वकादेव कुप्रत्ययमङ्गीकृत्योपसर्गादित्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः। अत्यन्तरूढेषु निष्ठादिषु षत्वानापत्तेः। अर्थवत्त्वारोपेणेति चेत्प्रकृते ऽपि तुल्यम्। दुसः पाठस्तु दुरयतइत्यादौ रुत्वस्य सिद्धत्वेन लत्वाभावार्थन्दुरस्तु दुलयतइति रूपं यत्र तु रुत्वमसिद्धं निरः कुष इत्यादौ तत्र रान्तग्रहणे ऽपि न सान्तग्रहणमिति भावः। आविदूर्यमिति। सामीप्यमित्य·

वेस ॥ विष्वणति मांसम् । सशब्दं भुङ्क्ते इत्यर्थः । भोजने किम् । विस्वनति वीणा ॥

परिनिविभ्यः ॥ षेवृ, सेवने । षिञ्बन्धने । क्तान्तः । अजन्तस्य विषितो विषयः । प्रत्ययविशिष्टग्रहणं किम् । विसिनोति । यत्तु केचित् । विषिण्वन्तीति विषया इति प्रयुञ्जते तत्र विग्रहे षत्वणत्वे प्रामादिके । षिवु, तन्तुसन्ताने । षह, मर्षणे । सुट् आगमः । परिष्करोतीति यथा । स्तुस्वञ्ज्योरुपसर्गात्सुनोतीत्येव सिद्धे पर्यादिपूर्वयोरेतयोः सिवादीनां वा ऽड्व्यवाये ऽपीति विकल्पार्थं पुनर्वचनम् ॥

स्थादिषु ॥ द्वे वाक्ये । यद्यपि निषिषेधेत्यादावभ्यासस्योपसर्गात्सुनोतीत्यनेन सिद्धमभ्यासात्परस्य त्वादेशप्रत्यययोरिति तथापि । आद्यं वाक्यं फलत्रयार्थम् । तथा हि । असोपदेशार्थम् । सेनया अभियातुमिच्छति अभिषिषेणयिषति । अवर्णान्ताभ्यासार्थञ्च । "अधीसनङ्गोत्रभिदो ऽधितष्ठौ" । षणि प्रतिषिद्धार्थकम् । अभिषिषिक्षति । षिच, क्षरणे । स्तौतिण्योरेवेति नियमान्निवर्त्तितषत्वं तदप्युपसर्गमाश्रित्य भवति । अभ्यासस्येति द्वितीयवाक्यन्तु नियमार्थम् । स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्विति । तत्फलन्तु षू, प्रेरणे । अभिसुसूषति । अत्रोक्तनियमादभ्याससकारस्य षत्वं न । द्वितीयस्य तु स्तौतिण्योरेवेति नि-

---

र्थः । निपातनादिति । यत्त्वर्थाभावे ऽव्ययीभावस्य नञ्तत्पुरुषेण सह विकल्पादव्ययीभावात् ष्यञ् सुलभ इति । तन्न । धर्मिपराविदूरशब्देनाव्ययीभावे ऽर्थासङ्गतेः । धर्मपरे तस्मिंस्तु ष्यञो वैकल्पिकत्वापत्तिरिति भावः ॥

आद्यं वाक्यमिति । स्थादिष्वभ्यासेन चेत्येतदित्यर्थः । अत्र व्यवायेपीत्यनुवर्त्तते । अपिना ऽव्यवायेपि । सेनयेति । अत्र सेनाशब्दस्याव्युत्पन्नत्वेनादेशसकाराभाव इति भावः । अवर्णान्तेति । तत्रेणः परत्वाभावादिति भावः । न च पूर्वत्रासिद्धत्वस्य द्वित्वे निषेधात् पूर्वन्धातुरुपसर्गेणेति पक्षे ऽन्तरङ्गत्वात्पूर्वं षत्वे कृतषत्वानामेव द्वित्वे ऽधितष्ठाविंत्यस्य सिद्धिरेतद्वचनं विना ऽपीति वाच्यम् । पूर्वं धातुः साधनेनेति पक्षस्य मुख्यत्वादिति बोद्ध्यम् ॥

यमाने। षो, ऽन्तकर्मणि। अभिसिषासति। इह षणो ऽभावादभ्यासात्परस्य षत्वं पूर्वस्य तु न। उक्तनियमात्। षिधू, शास्त्रे। शास्त्रं शासनमिति। अन्ये तु शास्त्रविषयकज्ञानमित्याहुः। माङ्गल्यं मङ्गलक्रिया। स्वार्थे ष्यञ्॥

झलो झलि॥ सस्य लोपः स्यादिति। पदस्येति वर्त्तते तच्च प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानान्त्रयाणामेकपदसम्बन्धित्वे विधिरयम्। न तु सोमसुत्स्थातेत्यादौ। णोपदेशास्त्विति। नद, शब्दे। नट, अवस्यन्दने चुरादिः। यस्तु नट, नृत्ताविति घटादिः स नेह गृह्यते। नाटीति दीर्घनिर्देशात्। नाथृ, नाधृ, याच्ञादौ। टुनदि, समृद्धौ। नक्क, नाशने न्द्द, नये। नृती, गात्रविक्षेपे। एभ्यो भिन्ना इत्यर्थः। दन्दशूकक्रियायामिति। दन्दशूककर्तृकायाङ्क्रियायामित्यर्थः। क्लिदि, परिदेवने। अस्यानुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः। स्वरितेत्सु तु पाठो न कृतः। क्रियाफलस्य कर्तृगामित्वे ऽपि परस्मैपदं यथा स्यात्। शुन्ध, शुद्धौ। अयं शौचकर्मणि युजादौ। शुध, शौचइति दिवादावनिट्। प्रथमं माङ्गलिक एधतिरुक्तस्तदनुरोधेनैव तवर्गीयान्तान्पठित्वा मातृकापाठक्रमेणाह। अथेति। सुब्धात्विति। सुब्धातूदाहरणं षोडयति षण्डयतीत्यादि। एतच्च वार्तिकं भाष्ये प्रत्याख्यातम्। तथा हि। धात्वादे-

---

एकपदेति। पदस्येत्येकत्वविवक्षणात् खण्डैकपदेऽर्थः। तेन सोमसुत्स्थितिरित्यादौ समासे ऽपि नेति बोद्धव्यम्। उदःस्थेति ज्ञापकाज्झलादौ प्रत्यये एवायं लोप इत्यन्ये। घटादिरिति। भ्वाद्यनुवादरूप इत्यर्थः। न च घटादौ चुरादेरेवानुवाद इति वाच्यम्। नान्ये मितो ऽहेताविति ज्ञपादिपञ्चकव्यतिरिक्तस्य स्वार्थणिजन्तस्य मित्त्वनिषेधात्। एवञ्च यस्य नाटीत्येव रूपं तस्यात्र पर्युदासः। भौवादिकस्य नटयति नाटयतीति रूपद्वयसत्त्वेन प्रनाटयतीत्यादौ नाटिरूपेपि णत्वं भवत्येव। वाक्यार्थाभिनयङ्कारयतीत्यर्थ इति भावः। एधतिरिति। भूसहित एधतिरित्यर्थः। महाव्याहृतिसत्तारूपब्रह्मस्मारकत्वेन चोभयोर्माङ्गलिकत्वमिति भावः। षोडयतीति। षोडन्तमाचष्ट इति णिचि टिलोपे पचाद्यचि षण्डमात्मन इच्छतीति क्यचि रूपमिति कैयटः।

रिति सूत्रे उपदेशइति वर्त्तते। न च सुब्धातूनामुपदेशो ऽस्ति। ष्ठिवु-ष्वष्कती तु यकारादी। लोपो व्योरिति यलोपः। यत्तु प्राचा सुब्धा-तु ष्व्यै ष्वष्केत्युक्तम्। ष्व्यायतीत्युदाहृतञ्च। तदनाकरम्। भाष्यवार्त्ति-कयोः ष्व्यै इत्यस्य सत्वनिषेधाभावात्। स्त्यः प्रपूर्वस्य, प्रस्त्योन्यतरस्या-मित्यादौ स्त्यारूपादृ द्वयोर्ग्रहणमिति वृत्त्यादिमहाग्रन्थविरोधाच्च। एवञ्चोभयोरपि स्त्यायति, प्रस्तीतः,। प्रस्तीम इत्यादिरूपाणि तुल्यान्ये-व। यत्तु वदन्ति। धातुपाठे स्त्यै ष्व्यै इति पृथक्पाठसामर्थ्यात्सत्वं ने-त्याशय इति। तन्न। तिष्व्यासति अतिष्व्यपदित्यादौ षत्वप्रवृत्त्या च-रितार्थत्वस्य माधवादिग्रन्थेषु स्पष्टत्वात्। धाघृ, द्राघृ। अत्र द्राघृ आ-याम इत्यपि पठ्यते आयामो दैर्घ्यमिति कौशिकः। कदर्थनमिति स्वामी। उख, उखि। सकृत्प्रवृत्तत्वादिति। यत्तु माधवेनोक्तमभ्या-समात्राश्रयत्वेनान्तरङ्गे ह्रस्वे कर्त्तव्ये पूर्वपराश्रयस्य बहिरङ्गस्य सवर्ण-दीर्घस्यासिद्धत्वाद्ध्रस्वो नेति। तच्चिन्त्यम्। ह्रस्वस्याङ्गत्वेन बहिरङ्ग-त्वात्। आसप्तमसमाप्तेरङ्गाधिकार इति सिद्धान्तात्। प्रागभ्यासवि-कारेभ्य इति पक्षस्य वव्रस्वेत्याद्यसिद्ध्यापत्त्या दूषितत्वात्। अत एव नाभ्यासादीनां ह्रस्वत्वे इति वार्त्तिककृता ऽन्तवद्भावप्रतिषेध आर-ब्धः। किञ्च। यत्रान्तरङ्गे बहिरङ्गे वा ऽचोरानन्तर्यन्तत्र नाजानन्त-र्ये इति निषेधस्य सत्त्वादसिद्धत्वन्दुर्वचमिति। इह उख उखीति द-

---

एतच्चेति। सूत्रस्थन्धातुग्रहणं चेत्यपि बोद्धव्यम्। उपदेशोऽस्तीति। षकारादिभ्य आचारक्विप् नास्त्येवान्यथा सुब्धातुत्वाभावाद्वार्त्तिकारम्भे स्यात् प्रत्याख्याने तु नेति फलभेदः स्यादिति भावः। द्वयोरिति। आङ्गत्वेनोभयोरपि लाक्षणिकतया लक्ष-णप्रतिपदोक्तपरिभाषानवसर इति भावः। षत्वप्रवृत्त्येति। स्त्यै इत्यस्य तिष्ट्यास-तीत्यादीति भावः। तच्चिन्त्यमिति। द्विमात्रबुद्ध्यभावेपि पर्जन्यन्यायेन ह्रस्वो दुर्वार इति भावः। दूषणान्तरमाह। ह्रस्वस्येति। पूर्वं प्रवृत्तिस्तु वर्णादाङ्गन्या-येनेति मूले स्पष्टम्। सत्त्वादपीति। हरदत्तादिमते इति भावः। अपिना ऽरुचि-र्बोधिता। तस्मात्तदुत्तरकालप्रवृत्तिके ऽजानन्तर्ये एव तत्प्रवृत्तिरिति सिद्धान्तविरो-

पडकानन्तरन्त्वगि, कम्पने इति पठ्यते तत् गतौ प्राक् पठितस्य गतिविशेषे ऽपि वृत्तिं बोधयितुम्। अत एव अनतिप्रयोजनत्वादुपेक्ष्यम्। षच, सेचने सेवने च। यद्यपि सेचनइत्येव प्रायेण पठ्यते तथा ऽपि सेवनार्थोऽपि प्रामाणिकः। 'यं पूरवो वृत्रहणं सचन्ते'इत्यादौ भट्टभास्करादिभिस्तथैव व्याख्यानादिति भावः। अयं समवाये स्वरितेदिष्यते। लोचृ, दर्शने। ऋदित्। अलुलोचत्। पचि, व्यक्तीकरणे। इदित्। अनिदिदिति दुर्गवर्द्धमानप्रभृतयः। न्यासकारस्त्वनिदितं परस्मैपदिनञ्च मन्यते। तथा च तिङो गोत्रादीनीति सूत्रे पचतिगोत्रमित्युपादाय पच, व्यक्तीकरणे इति व्याख्यत्। एतान्येवैकदेशिमतानि गृहीत्वा ऽनिट्कारिकाव्याख्यायामस्यापि ग्रहणमित्यवोचाम। सम्मतकारादयोऽपि अनिट्प्रसङ्गे द्वयोर्ग्रहणमूचुः। पचि विस्तारवचने इति चुरादौ। ऋज, गति। अर्जनं प्राधान्येन। उपार्जनन्तु प्रासङ्गिकम्। अयं पाठो मैत्रेयस्य। क्षीरस्वामिप्रभृतयस्तु अर्जनेष्विति पेठुः। नुड्विधाविति। तत्र हि द्विहल्ग्रहणङ्गौणस्येदमस्य हलः परिग्रहार्थम्। अन्यथा तस्मानुडित्येव ब्रूयात्। न चाटतुरित्यादावतिप्रसङ्गः। अश्नोतेस्सेत्यनेनैकहलो यदि भवति तर्हि अश्नोतेरेवेति नियमात्। न चास्य अश्नातिमात्रनिवृत्त्यर्थत्वं शङ्क्यं तथात्वे हि नाश्न इत्येव ब्रूयात्। यद्वा। द्विहल्ग्रहणं प्रत्याख्यायते। अवर्णोपधस्य यदि भवति अश्नोतेरेवेति नियमात्सर्वं सिद्धमिति भाष्यकैयटयोः स्पष्टम्। ऋजि, भृजी,। द्वितीय ईदित्। श्वीदितो निष्ठायामिति नेट्। भृक्तः। भृक्तवान्। भ्रस्ज, पाकइति तौदादिकस्य। भृष्टवान्। ऋञ्जाञ्चक्रे इति। सम्मतातरङ्गिण्योस्तु आनृञ्जे इत्युदाहृतन्तत्प्रामादिकमिति भावः।

---

धात् प्रागुक्त एव हेतुरिति बोध्यम्। गतिविशेषइति। उत्तरदेशसंयोगानुकूलव्यापारत्वमुभयोः सममित्याभिमानः। एकदेशिमतानीति। अनेन वस्तुतस्तासु ग्रहणमनुचितमिति सूचितम्। न चाटतुरित्यादाविति। आटेत्यस्याप्युपलक्षणमि-

एजृ, भ्रेजृ, भ्राजृ। अत्र न्यासकारः। अवश्यपठितव्येन फणादिकेन भ्रेजतइत्यादिसिद्धेरत्र पाठोऽनार्ष इत्याह। तन्न। अस्येति षत्वविरहार्थमिह पाठात्। तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणमिति स्थितम्। यद्वा न्यासेऽपि इवशब्देनायमर्थः सूच्यते। इह भ्राजेरनुदित्वमनुदात्तेत्त्वमात्रफलम्। भ्राजभासेत्यादिना चङ्परे णावुपधाह्रस्वस्य विकल्पितत्वात्। अबिभ्रजत्। अबभ्राजत्। अत्र रेजिरपि क्वचित्पठ्यते तदनार्षम्। "रेजते अग्ने पृथिवी मखेभ्यः" इत्यत्र राजतेश्छान्दसमेत्वमिति भट्टभास्करोक्तेः। कुच, शब्दे। अयं गताविति स्वामी। ज्वलादौ तुदादौ णार्थौ युजादौ। ग्लुञ्चु, षस्ज गतौ। आत्मनेपद्यपीति। हेतुमतिसूत्रे यदभिप्रायेषु सज्जतइति भाष्यप्रयोगादिति भावः। गुजि,अव्यक्ते शब्दे। अयमादिदपीति शाकटायनादयः। गुञ्ज, शब्दइति तुदादौ। अर्च, पूजायाम्। अयं युजादौ स्वरितेत्। इह पाठस्तु कर्तृगे फलेऽपि परस्मैपदार्थः। शाकटायनस्त्वयमात्मनेपदीत्याह। प्रयोजनं त्वकर्तृगेऽपि फले तङ्। एतच्च सर्वमिहैव माधवेनोक्तम्। युजादौ तु तेनैवात्रत्यस्वग्रन्थविपरीतमुक्तं तत्र परिनिष्ठितरूपे विवादाभावेपि वदद्व्याघातो दुर्वार एवेति ज्ञेयम्। युच्छ, प्रमादे। युच्छतीति। अन्तरङ्गत्वात्तुकि अलघूपधत्वान्न गुणः। न च वार्णादाङ्गम्बलीय इति वाच्यम्। यत्राङ्गवार्णयोर्युगपत्प्राप्तिः समानाश्रयत्वञ्च तत्रैव तथेति कैयटादिभिः सिद्धान्तितत्वात्। इह च वैपरीत्यात्। उञ्छे इति। उञ्छतीति सूत्रे उच्चिनोतीत्यर्थ इति न्यासः। बदराण्युञ्छति बादरिकः, श्यामाकानुञ्छति श्यामाकिकः, इत्युदाहरतो वृत्ति-

---

दम्। भाष्यकैयटयोरिति। एओङ्सूत्रे इति शेषः। विकल्पितत्वादिति। परे तु फणादिष्वपि भ्राजृ इति पठ्यते। एवञ्चास्यानुबन्धान्तरमस्तु एवञ्च भ्राजभासेति सूत्रे भ्राजिग्रहणं मास्तु धातुभेदेन रूपद्वयसिद्धेरित्याहुः। समानाश्रयत्वञ्चेति। समानकार्यित्वमित्यर्थः। इदं स्वरूपकथनं न तु समाननिमित्तकत्वमित्यर्थः। बिभि-

कारस्यापि व्यापित्वेनोच्चयनार्थत्वमेवाभिप्रेतम् । भ्रजभ्रजि । षडप्येते तवर्गचतुर्थादयः । तरङ्गिणीकारादयस्तु आद्यौ दन्त्योष्ठ्यादी इत्याहुः । तर्ज भर्त्सने । अयञ्चुरादावपि ॥

अजेर्वी ॥ दीर्घान्त आदेशः । ह्रस्वान्तपाठे तु संवीतं संवीतिरित्यादि न सिद्ध्येत् । आर्धधातुके विषये इति । तेन प्रत्ययोत्पत्तेः प्रागेव वीभावे हलादित्वाद्यङि वेवीयते इत्यादि सिद्ध्यति । परमप्रस्यान्तु यङ्लुक् त्वस्मान्न भवति । यतो लुका यङ आर्धधातुकस्य विषयत्वापहारान्नार्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः । एतच्च न लुमतेति सूत्रे कैयटे स्पष्टम् ॥

कृसृभृ ॥ डुकृञ्, करणे । कृञ्, हिंसायाम् । द्वयोरपि ग्रहणम् । एवं भृ इति भरतिबिभर्त्योः । वृ इति वृङ्वृञोः । इह कृसृभृ एषां एकाच उपदेशइति प्रकृत्याश्रये निषेधे प्राप्ते वृङ्वृञोस्तु श्र्युकः कितीति प्रत्ययाश्रये प्राप्ते नियमोयमित्याह । क्रादीनाञ्चतुर्णामिति । निषेध इति । नेड्वशीति प्रक्रमात् नञा प्रापितस्यैवाभावस्यायं नियमो न तु विभाषावलब्धस्यापि । तेन सिषेधिथ । सिषेद्ध । सिषिधिव सिषेध्वेत्याद्युभयं भवति । के चित्तु यावान्कश्चिदिडभावः प्रतिषेधनिबन्धनो

---

ञनिमित्तके ऽपि इयायेत्यादौ बहुशः प्रवृत्तिदर्शनादिति बोद्धव्यम् ॥

संवीतिरिति । असञ्ज्ञायां क्तिनन्तम् । सञ्ज्ञायां स्त्रीलिङ्गे भावादौ समजेति क्यपा भाव्यमिति बोध्यम् । यङ् न स्यादिति । हलादित्वाभावात् धात्वन्तरस्य त्वेतत्समानार्थस्यार्धधातुके प्रयोग एव नास्तीति भावः । इदञ्चार्धधातुकइति सूत्रे भाष्ये स्पष्टम् । विषयत्वापहारादिति । ज्ञानविषयत्वापहारादित्यर्थस्तदाह । नार्द्धधातुकाभिव्यक्तिरिति । प्रत्ययलक्षणन्तु न । न लुमतेति निषेधात् ॥

द्वयोरपीति । व्याख्यानादिति भावः । नियमोयमिति । अष्टानामपि नियमार्थत्वन्तु न । तुष्टोथेत्यादौ भारद्वाजनियमेनेडापत्तेः । स च नेष्ट इति नेड्वशीत्यत्र भाष्ये स्पष्टं नियमाद्विधेर्बलवत्त्वाच्च । कसृभृवृ इति च लुप्तषष्ठीकं पृथक्पदं क्रादिषु चतुर्षु विनिगमनाविरहेण सर्वेषामेव नियमार्थत्वम् । नञ्प्रापितस्यैवेति । क्रादिषु

विकल्पनिबन्धनो वा सर्वो बाध्यतइति मन्वानाः सिषेधिथेत्यादि एकमेवरूपं न त्वनिट्कमपीत्याहुः। ननु विपरीत एव नियमोऽस्तु। क्रादिभ्यस्त्वेदिण्न तर्हि त्विस्येवेति। मैवम्। कृते ग्रन्थे तमधीष्टो भृतः, परिवृतो रथः, स्तुतस्तोमयो,रित्यादिनिर्देशविरोधापत्तेः। स्यादेतत्। अस्तु प्रकृत्याश्रयस्य नियमः प्रत्ययाश्रयस्य तु न सम्भवति। वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात्। न ह्यत्र प्रकृत्याश्रयः प्राप्नोति। वृञ उदात्तत्वात्। नापि प्रत्ययाश्रयः। थलो ऽकित्त्वात्। एवञ्च बभूविवेत्यादौ श्र्युकः कितीति निषेधो दुर्वार इति चेत्। मैवम्। बभूथाततन्थजगृभ्मववर्थेति निगमइति सूत्रेण छन्दसि ववर्थेति निपातनात्। भाषायां वृञस्थल इटः स्वीकर्त्तव्यतया वृग्रहणस्य थल्विषयत्वायोगात्। वलादीनाञ्च कित्त्वेन नियमस्य सुस्थत्वात्॥

अचस्तास्वत्॥ उपदेशइति। एतच्चोत्तरसूत्रादिहापकृष्यते। नित्यग्रहणमनिटो विशेषणम्। क्व नित्यमनिडित्यपेक्षायान्तासः सन्निधानात्तत्रैवेति विज्ञायते तासि च क्लृप इति सन्निहितं वा ऽनुवर्त्ततइत्या-

---

तस्यैव प्राप्तेरिति भावः। एकमेवेति। अत एवोपदेशे ऽत्वत इति सूत्रे नित्यानिट इत्यस्यात्तिव्यावर्त्यत्वेन भाष्ये उक्तः। अन्यथा तदभावे ऋतो भारद्वाजस्येति विकल्पतत्सत्त्वे ऽप्यूदित्त्वप्रयुक्तविकल्पस्यैव सत्त्वेन तदसङ्गतिः स्पष्टैव। न तु क्रादिनियमेन तत्सत्त्वे नित्य इडिति विशेषो ऽस्त्येवेति इदमेव मतं युक्तमिति भावः। विपरीत इति। अष्टानामपीति शेषः। अत एव स्तुत इति निर्देशप्रदर्शनमग्रे। न च ऋतो भारद्वाजस्येति नियमप्रापितस्येटो निषेधाय क्रादिग्रहणं विदुष्यर्थमिति वाच्यम्। तथा हि सति स्तुद्रुस्रुश्रुऋतो भारद्वाजस्येत्येव पठेदिति भावः। विरोधापत्तेरिति। किं च कृञादीनामनुदात्तपाठवैयर्थ्यापत्तिरित्यपि बोद्ध्यम्। न सम्भवतीति। वृङमादाय तत्सम्भवे ऽपि वृञमादाय विधेः सम्भव इति भावः। अपकृष्यतइति। एतच्च ऋतो भारद्वाजस्येति सूत्रे स्पष्टम्। तदपकर्षे च धेडादेर्दधियेत्यादिसिद्धये जृग्रहणम्। एतेनोपदेशे एजन्तानामात्वविधानेनैजन्तात्परतस्थलो ऽसम्भवेन कृग्रहणमेव युक्तमित्यपास्तम्। अपेक्षायामिति। अजन्तस्य धा-

च्च तासौ नित्यानिडिति। तास्वदिति सप्तम्यन्ताद्वतिः। यथा तासौ न भवति एवं थल्यपीत्यर्थः। नित्यमनिटः किम्। दुधविथ, नायन्तासौ नित्यमनिट्। स्वरत्यादिना विकल्पितेट्त्वात्। अस्य थलि नित्यमिडिति काशिका। एतच्च विकल्पनिबन्धनस्यापीडभावस्य क्रादिनियमेन निवृत्तिरिति पक्षे बोध्यम्। निषेधनिबन्धनस्यैवेति पक्षे तु नित्यग्रहणाभावे स्वरतेस्थलीड्विकल्पो न स्यादिति बोध्यम्। किं च। उत्तरार्थमपि नित्यग्रहणम्। तेन क्रमेरपि चक्रमिथेति भवति हि क्रमिस्तासौ नित्यानिट्। स्नुक्रमोरनात्मनेपदनिमित्ते इति वचनात्परस्मैपदे सेट्कत्वात्। उपदेशइत्यपकर्षस्य फलन्तु भारद्वाजसूत्रे स्फुटीभविष्यति॥

उपदेशे ऽत्वतः॥ उपदेशे किम्। कर्ष्टा चकर्षिथ। अत्वतः किम्। भेत्ता। बिभेदिथ। तपरकरणङ्किम्। राद्धा। रराधिथ। तासौ किम्। जिघृक्षति। जग्रहिथ। नित्यानिटः किम्। अङ्क्ता। अञ्जिता। आनञ्जिथ। चक्रमिथ॥

ऋतो भारद्वाजस्य॥ दीर्घान्तेषु तावन्नायं निषेधः। ऋत इति तप-

---

तोः प्रयोगमात्रावच्छेदेनेडभावाप्रसिद्धेस्तथापेक्षेति भावः। एवं थल्यपीति। तेन तासौ दृष्टस्येडभावस्य थल्यतिदेशः। तेनादेर्घस्लादेशे जघसिथेत्यत्रोवपिथेत्यत्र च नित्यमिट्। न चानयोस्तासेरभावेन विशेषणाभावप्रयुक्तो विशिष्टाभावो ऽस्त्येवेति वाच्यम्। तासि चेत्यतस्तासीत्यस्य न वृद्भ्य इत्यतो नञश्चानुवृत्त्यैव तासि नित्यानिटस्थलीण्णेत्यर्थेनैव सिद्धे तास्वदित्यनेन यस्य तासाविडभावो दृष्टस्तस्यैव थल्यतिदेशान्न दोषः। स्थानिवद्भावेन तु न तासौ नित्यानिट्त्वातिदेशो ऽशास्त्रीयत्वात् इति भावः। थलि नित्यमिडिति। नित्यग्रहणाभावे भारद्वाजनियमेन विकल्पः स्यादिति भावः। इति पक्षे त्विति तुना वृत्तिविरोधादयं पक्षो ऽयुक्त इति सूचितम्॥

अत्वतः किमिति। अत्वतस्तास्वत्थल्यनिटो नित्यमुपदेशे इत्येव कार्यमिति प्रश्नः। अजन्तात्वद्भिन्नो ऽज्वान् व्यावर्त्य इत्युत्तरम्।

रुकरणात्। ह्रस्वान्तेषु अचस्तास्वदित्येव सिद्धेः। वृङ्वृञौ यद्यपि से-टौ तथाऽपि वृङस्थल् नास्ति। आत्मनेपदित्वात्। वृञस्तु छन्दसि ववर्थेति निपातनाद्भाषायामिटा भाव्यम्। न च वृञादिषु परत्वान्नि-त्यत्वाच्च गुणे रपरत्वे च कृते ऽनजन्तत्वादचस्तास्वदित्यस्याप्रवृत्तिरिति वाच्यम्। तत्रोपदेशग्रहणस्यापकर्षणात्। तस्मान्नियमोयमित्याह। ऋद-न्तस्यैवेति। स्यादेतत्। स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात्। न च क्रादिसूत्रे स्वादीनाञ्चतुर्णाङ्ग्रहणेनास्य बाध उचितः। ये-न नाप्राप्तिन्यायेन वमादौ क्रादिनियमप्रापितस्यैव बाधौचित्यादित्या-शङ्क्याह। न चेति। नन्वेवमुपदेशे ऽत्वत इत्यस्यैव बाधः स्यात्। ऋद-न्तेषु तस्य प्रसङ्ग एव नास्तीति। यदि तर्ह्यचस्तास्वदित्यस्यैव स्यात्तत्कथं योगद्वयप्रापितस्येत्युक्तम्। अत्राहुः। द्वयोरनन्तरमस्यारम्भाद्यावां-स्तासौ नित्यानिटस्तत्तोथलिनिषेधः स भारद्वाजस्य मते ऋकारान्तस्यैवेति व्याख्यानात्सर्वेष्टसिद्धिरिति। एवञ्चेह तास्वत्थल्यनिटो नित्यम्। तासी-त्यनुवर्त्ततइति फलितोर्थः। यद्वा क्रादिसूत्रे स्तुप्रभृतीनाङ्ग्रहणमेव इ-ड्द्वयस्यापि बाधकमस्तु। पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्। अ-नाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्ये-तेत्येतदर्थं हि तत्। पक्षद्वयमपीदमाकरे श्र्युकः किति सूत्रे ऽप्युपनिब-

---

इटा भाव्यमिति। न च ऋदन्तेषु विकल्पेन निषेधार्थमिति वाच्यम्। अच-स्तास्वदिति सामान्यसूत्रप्रणयने भारद्वाजातिरिक्तैरप्यृदन्ते निषेधस्यैवाङ्गीकारेण स्मृत्यन्तरानुसन्धानद्वारा विकल्पस्य वक्तुमशक्यत्वादिति भावः। तस्येति। उपदेशे ऽत्वत इत्यस्येत्यर्थः। इहेति। ऋत इति सूत्रे। एवञ्चैतत्पदसम्बन्धवान्य इण्नि-षेध इत्यर्थादुक्तार्थलाभ इति भावः। इदमत्रैव सूत्रे भाष्ये ध्वनितम्। इड्द्वयस्या-पीति। क्रादिनियमभारद्वाजनियमप्रापितस्यापीत्यर्थः। अनाश्रितेति। न आश्रितो विधानविशेषो येन नाप्राप्तिरूपो यस्य तदित्यर्थः। इण्मात्रमिति। अनन्तरमनन-न्तरञ्चेत्यर्थः। अनारभ्याधीतेनेति। विधिमनारभ्याधीतेनेत्यर्थः। इदं वस्वेका-जाद्घसामित्यत्र भाष्ये स्पष्टम्। तदाह। पक्षद्वयमपीति। मूले ऽपीति। तत्रा-

हूम्। खज, मन्थे। अत्र केचित्कज, मदइति पठन्ति। एजृ, कम्पने दीप्तौ त्वात्मनेपदी गतः। टुओस्फुर्जा। द्वितोऽथुच्। स्फूर्जथुः। ओकारो निष्ठानत्वार्थः। स्फूर्णः, स्फूर्णवान्। आदितश्चेत्यनिट्त्वम्। स्फूर्गणं, स्फूर्जितं वाऽनेन। विभाषा भावादिकर्मणोरिति वेट्। अस्य दीर्घनिर्देशेनोपधायाश्चेति दीर्घस्यानित्यत्वज्ञापनान्मूर्कति हूर्कति, इत्यपि भवतीति केचित्। क्षि, क्षये। अस्याजन्तेषु पाठ उचितः। क्षि, निवासगत्योरिति तुदादौ क्षीष, हिंसायामिति क्र्यादौ क्षिणु, हिंसायामिति तनादौ। बोपदेवस्तु क्षि, क्षयैश्वर्ययोरिति भ्वादिम्, क्षीष, हिंसायामिति स्वादिवैदिकं चाह। लज,लजि। लज्यात्। लञ्ज्यात्। ओलजी, ओलस्जी, व्रीडने इति तुदादौ। लज, प्रकाशनइति कथादौ लज्जीति पटपुटादिदण्डके भाषार्थः। तुजि, पालने। भाषार्थोऽयं युजादौ। गज, गजि। गज, मदने च। अयञ्चुरादावपि शब्दार्थः। गर्ज, शब्दे इत्यग्रे। वज, व्रज। ववजतुः। वव्रजतुः। अट्ट। दोपध इति। तथा च नन्द्रा इति द्वित्वनिषेधाद्दकारं विहाय टिशब्दस्य द्वित्वे दकारस्य ष्टुत्वे चर्त्वे च। अट्टिटिषते। आट्टिटदित्यादि सिद्ध्यति। न च परत्वात्प्रागेव ष्टुत्वम्। असिद्धत्वात्। यदाहुः। पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति। न चान्तरङ्गत्वात्ष्टुत्वं स्यादेवेति वाच्यम्। सत्यपि तस्मिन्शास्त्रासिद्धतया दकार एवायमिति बुद्ध्या द्वित्वनिषेधात्। न च पूर्वत्रासिद्धीयमद्वित्वे इति निषेधः शङ्क्यः। द्वित्वे हि सः। न तु द्वित्वनिषेधेऽपीति भावः। तोपध इति। तथा च पूर्वत्रासिद्धीयमद्वि-

---

न्यः क्रादिसूत्रे आद्यो ऽत्रेति बोद्धव्यम्। मदने चेति। मदनश्चित्तविकारविशेषः। गञ्जा तु मदिरागृहम्। इत्यग्रइति। प्रथममित्यर्थः।

अग्रं पुरस्तादुपरिपरिमाणे पलस्य च।
आलम्बने समूहे च प्रान्ते स्यात्तन्नपुंसकम्॥
अधिके च प्रधाने च प्रथमे चाभिधेयवत्। इति मेदिनी।

वंचनइति छुत्वस्य सिद्धत्वाट्टकारद्वयसहितस्य द्वित्वे हलादिःशेषे अ-
टिट्टिषते। आटिट्टदित्यादि सिद्ध्यतीति भावः। अयमनादरे चुरादिः।
घट्ट, चलने। अयञ्चुरादावपि। स्फुट। अयं कुटादावपि। विशरणा-
र्थोऽग्रे परस्मैपदिषु। भेदनार्थश्चुरादौ। वटि एकचर्यायाम्। एकचर्या
असहायगमनम्। वण्टरएडाकलप इति इकस्येति सूत्रे भाष्यम्। अ-
यमनिदित्स्तैन्यार्थः परस्मैपदिषु। मठि, कठि, शोके। मठ, म-
दनिवासयोः। कठ, कृच्छ्रजीवने इत्यग्रे परस्मैपदिष्वनिदितौ। कठ,
शोकइति चुरादौ। हेठ, विबाधायाम्। अमुं परस्मैपदिष्वपि पठन्ति।
विबाधनं शाट्यम्। कुडि, दाहे। वैकल्यार्थः परस्मैपदिषु पठिष्यते। बा-
ल्यार्थः कुटादौ। रक्षणार्थश्चुरादौ। वडि, विभाजने। मडि, च। अत्र
द्वितीयो वेष्टने ऽपि। अत एव पृथक् पठितः। मडि, भूषायामित्यग्रे पर-
स्मैपदिषु धौ हर्षे च। भडि, परिभाषणे। कल्याणार्थश्चुरादौ। पिडि।
अयञ्चुरादावपि। मुडि, खण्डनार्थः परस्मैपदिषु। तुडि। अयमनिदित्
परस्मैपदिषु। हुडि। वरणं स्वीकारः। स्फुडि, विकसनइत्येके पठ-
न्ति। युक्तं चैतत्। स्फुण्डेर्द्विः पाठस्य वैयर्थ्यात्। वरणसङ्घातयोरिति
पाठस्यैवौचित्यात्। चडि, कोपे। अयं चुरादावपि। शडि। ताल्व्यो-
ऽयमादिः। शण्डोऽसुरपुरोहितः। पडि, गतौ। नाशार्थश्चुरादौ। कडि,
मदे। भेदने चुरादिः। अनिदिदिद्वैव। तुदादौ च परस्मैपदी। खडि,
मन्थे। खुडि इत्येके। खडि, भेदने इति चुरादौ। हेडृ, होडृ। हेड,
वेष्टने इति घटादौ। होडृ, गतावित्यग्रे परस्मैपदी। बाडृ। बशादिरि-
ति। पवर्गीयेणैव वृत्तिकृता व्यवहारो न तु दन्त्योष्ठ्येन। तथा सति
व्यावर्त्यालाभात्। बशाद्युक्तिर्व्यर्था स्यात्। शाडृ। डलयोरैक्याच्छालते
इति काश्यपः। अत एव मैत्रेयेण शाली शालेत्युदाहृतम्। शौटृ, गर्वे।
अस्योणादिषु ईरन् वच्यते। तदेतदतिशौटीर्यमौडुलोमेनं म्रष्यती,

इकस्येति सूत्रे इति। सूत्रविषय इत्यर्थः। परिमाणाख्यायामिति सूत्रे इकश्चेति

ति कल्पतरुः। यौटृ, बन्धे। यणादिः। कटे। अयमनिदिद्ग्ये। किट, खिट, त्रासे। त्रासो भयोत्पादनम्। किटिर्गतौ पठिष्यते। इह पाठस्त्वर्थभेदात्। केचित्त्विह न पठन्ति। चटे इत्येके। जट, झट,। जेटतुः। नट, नृतौ। णोपदेशोयम्। तत्पर्युदासे नाटीति सवृद्धिकनिर्देशेनावश्यदानार्थस्य चौरादिकस्यैव ग्रहणात्। हट, दीप्तौ। हाटकम्। सञ्ज्ञायाञ्चेति ण्वुल्। बाहुलकादस्त्रियामपि। षट। सटा। अजन्ताडाप्। लुठ, विलोडने। अयन्दिवादावपि। भाषार्थस्तुरादौ प्रतिघाते द्युतादौ स्तेयार्थः परस्मैपदिषु। डान्तोयमित्येकइति। यद्यपीतः प्रभृति पठत्यन्ताष्टवर्गतृतीयान्ता इति कौशिककाश्यपादयो वदन्ति ते चास्मादनन्तरं पिडहडीति पठन्ति। तथापि पिटकहाटकचेटीविटप्रभृतिषु टवर्गप्रथमस्यैव प्रसिद्धत्वादंशान्तरे तन्मतमुपेक्षितम्। चिट। इन्। चेटिः। कृदिकारादिति ङीष्। चेटी। विट। इगुपधलक्षणः कः। विटः। प्रश्लिष्येति। उदाहरन्तीति वक्ष्यमाणेन सम्बध्यते। ईयतुरिति। द्वित्वे कृते एरनेकाच इति यणं बाधित्वा ऽन्तरङ्गत्वात्सवर्णदीर्घः। तत इयङ्। केचित्तु वार्णादाङ्गम्बलीय इति दीर्घं बाधित्वा यण्। न चेह समानाश्रयत्वं नास्तीति वाच्यम्। अभ्यासोत्तरस्य इकारस्य सवर्णदीर्घयणौ प्रति स्थानितया तयोः समानाश्रयत्वात्। अत एव दीर्घं इणः कितीति दीर्घो विधीयते। नन णलथलोः अभ्यासस्येयङ् दुर्लभः।

---

सूत्रमुपादाय ननु चायमिङ्क्ष एव वण्टरण्डाकल्प इति भाष्योक्तेरेवमुक्तम्। विबाधनमिति। विबाधेति भावे प्रत्यय इति भावः। द्विः पाठस्येति। हुडि संघातइति पूर्वं पाठात्। व्यवहार इति। वश्प्रत्याहारस्येति शेषः। सवृद्धिकेति। नित्यं वृद्धियुतस्येत्यर्थः। एतदुपपादितम्। पठत्यन्ता इति। अतद्गुणसंविज्ञानो बहुव्रीहिः। तत इयङिति। अचि श्नुधातु इत्यनेन। अभ्यासस्येति तु न। तस्य प्रत्यासत्योत्तरखण्डावयवाच्परत्वएव प्रवृत्तेरिति भावः। स्थानितयेति। समानकार्यित्वमेव समानाश्रयत्वं न तु समाननिमित्तकत्वम्। इयायेत्याद्यसिद्धेरिति भावः। अ-

तस्मिन्कर्त्तव्ये ऽचः परस्मिन्निति वृद्धिगुणयोः स्थानिवद्भावेनासवर्णे इति प्रतिषेधादिति चेन्नैवम्। असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः। ननु नास्ति सामर्थ्यम्। इयर्ति इयृत, इत्यादौ सावकाशत्वादिति चेन्नैवम्। न ह्येकमुदाहरणं योगारम्भं प्रयोजयति। अन्यथा हि अभ्यासस्यार्त्ताविति ब्रूयात्। अकृत्सार्वे ति दीर्घः। ईयात्। मडि, भूषायाम्। मण्डते इति विभागे गतम्। कुडि। टवर्गतृतीयान्तः। प्रथमान्त इत्येके। मुठ। डान्त इत्येके। पकारादिडान्तश्चेत्यन्ये। चीरस्वामी तु द्वावपि इदितौ पपाठ। चुडि। चुडेति दुर्गः। तुड, तोडने। तोडनं दारणं हिंसनञ्च। गडि, वदनैकदेशे। टवर्गीयप्रकरणादिहायं न्याय्य एव। अन्तत्यादिषु पञ्चैते न तिङ्विषया इति केषांचिन्मतं व्युत्पादयितुं वृत्तिकृद्भिरुपन्यस्तः॥

लिङ्सिचावात्मनेपदेषु॥ अत्रात्मनेपदग्रहणं सिचो विशेषणं न तु लिङो ऽसम्भवात्। तदाह। आत्मनेपदपरः सिच्चेति। मेपृ, कम्पने च। अस्य पूर्वत्र पाठस्त्यक्तुं शक्यः। केचित्तु पूर्वत्र दिपृ, टेपृ, इति पठन्ति। केपृ गतौ चेति। पृथक्पाठसामर्थ्यादिदं लभ्यतइति स्वामी। मेपृ, रेपृ, लेपृ, गताविति। अयं पाठः स्वामिनः। मैत्रेयस्तु नेपृ, मेप, सेचने। रेबृ, प्लवगताविल्याह। चेपृ, धेपृ, इत्यपि केचित्। रवि,लबि-अबि। अम्बाशब्दः। त्रयः शब्दा अकारोकारमकाराः प्रतिपादका

---

त एवेति। अनेन पूर्वमतस्यायुक्तत्वं ध्वनयति। असवर्णेति। तद्घटितसूत्रारम्भसामर्थ्यादित्यर्थः। तेन ह्यभ्यासस्य कार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति ज्ञाप्यते ऽत एवारियूयादित्यत्र स्थानिवत्वेनेयङ् भवत्येव। तस्याभ्यासकार्यप्रतिबन्धकत्वाभावादिति भावः। अभ्यासस्यार्त्ताविति। यङ्लुकि तु श्तिपा शपेति निषेधानित्यत्वान्न दोषः। वस्तुत उरित्येव वक्तव्यं य्वोरित्यनुवर्तते। इणो यणिति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्तेरिवर्णस्येयङित्यर्थ इत्युचितम्। विस्तरस्त्वन्यत्र द्रष्टव्यः॥

असम्भवादिति। तस्यात्मनेपदपरत्वासम्भवादित्यर्थः। भट्टभास्कर इति।

स्येति त्र्यम्बक इति भट्टभास्करः। अभिरभी इति। असुन्। अम्भः तस्यापत्यम्। आम्भिर्भीष्मः। अम्भसो लोपश्चेति बाह्वादिपाठादिञि सलोपः। तद्वीजन्त्विति। पूर्वसवर्णषत्वाप्रवृत्त्यप्रवृत्तिबीजमित्यर्थः। जभीजृभि। आद्य ईदित्। जभ्यम्। जृभिर्विनाशार्थे चुरादौ। भवार्थे परस्मैपदिष्वपि केचित्॥

सनाद्यन्ताः॥

सन्क्यच्काम्यच्क्यङ्क्यषोथाचारक्विब्णिजयङौ तथा॥

यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥

भूवादय इत्यस्यानन्तरं सनाद्यन्ता इति न सूचितम्। सनादीनामियत्ताया अलाभापत्तेः। सनाद्यन्ता इत्यस्यानन्तरं भूवादयश्चेति पठितुमुचितम्॥

कास्प्रत्ययात्॥ अच्छन्दसीत्येव नोक्तम्। ब्राह्मणेऽप्याम इष्टत्वात्। अथाह शुनश्शेफ ईक्षाञ्चक्रे। पुत्रानामन्त्रयामासेत्यादि॥

अतो लोपः॥ आर्धधातुकेत्यादि। एतच्चानुदात्तोपदेशेत्यादिसूत्रादुपदेशग्रहणानुवृत्त्या लभ्यते। तत्फलन्त्वय, पय, गतौ। आभ्यां क्विपि लोपो व्योरिति लोपश्चलोपाभावः। अत् पत्। नन्वेवं वच्चादित्यादावतो लोपो न स्यात्। आर्धधातुकइत्यस्य विषयसप्तमीत्वेऽपि चिण्डि लुङीत्यादीनां परसप्तमीत्वस्य वार्त्तिककृता स्वीकारात्। वधा-

---

अन्ये तु त्रीण्यम्बकानि नेत्राणि यस्येति तद्व्युत्पत्तिमाहुः॥

उचितमिति। पदलाघवादिति भावः। परन्तु न कृतमनुदात्तङित इत्यादौ तदनुवृत्तये धातोः कर्मण इत्यादौ धातुपदार्थसन्देहनिवृत्तये चेति शेषः॥

उपदेशग्रहणानुवृत्त्येति। एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः। तत्र कस्योपदेशे इत्याकाङ्क्षायामुपस्थितत्वादार्धधातुकइत्येव विभक्तिविपरिणामेन सम्बद्ध्यते इति बोद्धव्यम्। वार्त्तिककृतेति। स्यसिच्सूत्रे वधभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेनेति वदतेत्यर्थः। अन्यथा आदेशानामन्तरङ्गत्वेन विप्रतिषेधासङ्गतिः

देशस्यादन्तत्वाच्चेति चेत्सत्यम्। अत एवापरितोषाद्भाष्यकृता लिङ्गी-त्यादीनामपि विषयसप्तमीत्वं स्वीकृतम्। एतच्च भावकर्मप्रक्रियायां स्फुटीकरिष्यते। विस्तरः शब्दकौस्तुभे बोध्यः। जयादित्यादिमतमाह। स्तुतावेवायप्रत्यय इति। भट्टिस्तु व्यवहारेप्यमुं प्रयुङ्क्ते। "न चोपलेभे वणिजां पणाया"मिति॥

अयामन्ता॥ नेति वाच्ये अयादेशवचनं ल्यपि लघुपूर्वादित्येवमर्थम्। प्रस्तनय्य। न ह्यत्र गुणायौ लभ्येते। आम्। कारयामास। अन्तः। गण्डयन्तो मण्डयन्तः। औणादिको झच्। झो ऽन्तः। आलुच्। स्पृहयालुः। स्पृहिगृहीत्यादिना आलुच्। आय्येतू उणादिषु वक्ष्येते। स्पृहयाय्यः। स्तनयित्नुः। इष्णु। पार इत्येव। णेश्छन्दसीति इष्णुच्। णेरिति णिङ्णिचोः सामान्यग्रहणम। एवमग्रे ऽपि। वार्त्तिकस्योक्तिसम्भवमाह। णिलोपश्चेति। क्तिजन्तमिति। तत्र नितुत्रेतीपिनषेधादिति भावः। आर्द्धधातुकमात्रमिति। मात्रशब्दः कात्स्न्र्ये। क्तिभिन्नमपीति भावः॥

णौ चङि॥ उपधायाः किम्। अचकाङ्क्षत्॥

---

स्यादिति भावः। लिङ्गीत्यादिविशेषनिर्देशे तद्विशेषणार्द्धधातुकइत्यस्यापि परसप्तमीत्वमेव। विशेषनिर्देशाभावे एव त्वस्तेर्भूरित्यादौ विषयसप्तमीत्वमार्द्धधातुके इत्यस्येति स्यासिचूसूत्रे कैयटे एव स्पष्टम्। भाष्यकृतेति। एकाच उपदेशइति सूत्रे इति शेषः। तत्र हि एवमुक्तं वध इट्प्रतिषेधः प्राप्नोति वधिषीष्ट। नैष दोषः। आद्युदात्तनिपातनस्वरः प्रकृतितः प्राप्तस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। यथैव सन्निपातस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरप्रयुक्तनिघातमपि बाधेत। नैष दोषः। आर्द्धधातुकीयाः सामान्येन भवन्तीति। वस्तुतो वार्त्तिकमतमप्येवमेव विप्रतिषेधस्तु यथा तथा ऽग्रे निरूपयिष्यामः। तदाह। विस्तर इति। कौस्तुभे। षाष्ठे। पणायामिति। तत्रायप्रत्ययान्तादप्रत्यये टापि व्यवहारमित्यर्थः॥

नेति वाच्ये इति। णिल्लोपो नेत्यर्थः॥

सन्यतः ॥ तपरकरणङ्किम् । पापच्यतेः सन् । पापचिषते । यत्तु वदन्ति । सनि यो ऽभ्यासः सन्निमित्त इति विज्ञानादत्राप्रसङ्ग इति । तन्न । अधीषिषति । प्रतीषिषतीत्यादावव्याप्तेः । न हि कार्यी निमित्तत्वेनाश्रीयते । अरिरिषतीत्याद्यसिद्ध्यापत्तेः । नन्वेवमपिपचतीत्यादावव्याप्तिः । अभ्यासस्य सन्परत्वाभावात् । न च येन नाव्यवधानन्यायेन सन्प्रकृत्या व्यवहिते ऽपि प्रवृत्तिरिति वाच्यम् । प्रतीषिषतीत्यत्रैवाव्यवधानसम्भवादिति चेन्मैवम् । सना धातुमाक्षिप्य सनि सति यो धातुस्तनन्तस्तदीयाभ्यासस्येति व्याख्यानात् । न चोक्तव्याख्याने प्रमाणाभावः । तपरकरणस्यैव तत्र प्रमाणत्वात् । किञ्च । अकारग्रहणमपि तत्र मानम् । अन्यथा सन इत्येव ब्रूयात् । एवं स्थिते जगद्दानदधानादिशब्देभ्य आचारक्विबन्तेभ्यः सनि कृते इत्वं भवत्येव । पापच्यतेः सनीत्वप्राप्तिं स्वीकृत्य तपरकरणबलेनेत्वं वारयद्भिर्हरदत्तादिभिस्तत्स्वीकारात्सूत्रस्वरसाच्च । यथालक्षणमप्रयुक्ते इति भाष्योक्तेश्च-

---

अचकाङ्क्षदिति । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तदन्वयस्यैवौचित्यात्त्वङ्परे णाविति नाचो विशेषणमिति भावः ॥

सनि य इति । सति य इत्यर्थः । इदञ्च स्तौतिण्योरित्यत्र कैयटे स्पष्टम् । तन्नेति । गुणानाञ्च परार्थत्वादिति न्यायेन सनीत्यस्य साक्षादनुवादे ऽन्वये सम्भवति अश्रुते तद्विशेषणे ऽन्वयायोगादिति भावः । दूषणान्तरमाह । अधीषिषतीत्यादि । अभ्यासस्येति । अभ्यासाकारस्येत्यर्थः । अव्यवधानसम्भवादिति । एवञ्च पापचिषतइत्यादावपि न प्राप्तिरिति भावः । सन इत्येवेति । अलोन्त्यस्येत्यनेनान्त्यस्येति भावः । भाष्योक्तेश्चेति । नन्वेवं व्याख्याने ऽपि प्रत्यासत्त्या सनन्तत्वप्रयुक्ताभ्यासस्येत्यर्थान्न यङन्तात्सनि दोषः । किञ्च तपरत्वाभावे ऽस्येत्युक्तौ न लाघवम् । किंच यथालक्षणमप्रयुक्ते इत्यस्याप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणस्येति अर्थ इति बहुशः कैयटेन व्याख्यानादस्यैवार्थस्य युक्तत्वाच्च जगदादिभ्य आचारक्विबन्तेभ्यः सनो ऽनभिधानमेवोचितम् । अपि च सन्परो यो ऽभ्यासाकारस्तस्येति व्याख्याने ऽपि यङोल्लोपस्य स्थानिवत्त्वात् यङन्तात्सनि दोषः ।

त्यास्तान्तावत् ॥

दीर्घो लघोः ॥ लघोरभ्यासस्येति व्यधिकरणे षष्ठ्यौ। अभ्यासावयवस्य लघोरित्यर्थः। न तु समानाधिकरणे असम्भवात्। न ह्यज्झलसमुदायस्य लघुसञ्ज्ञाऽस्ति ह्रस्वं लघु इति सूत्रितत्वात्। लघुनि चङ्परेऽनग्लोपइति सर्वमिहानुवर्त्तते तच्च प्राग्वदेव द्वेधा व्याख्येयम्। तदाह। सन्वद्भावविषयइति। एतेन हलादेरिति प्राचोक्तं निर्मूलत्वादुपेक्ष्यमित्यपि ध्वनयति। न हि मुनित्रयोक्तिं विना हलादेरिति पूरयितुमुचितम्। न वा वृत्तिकारादिभिरप्युक्तम्। यत्तु तत्पौत्रेण व्याख्यातं हलादेरित्यर्वाचीनमतेनोक्तमिति। यच्च तेनैव हेतुमणौ औन्दिदत्, आड्डिडत्, इत्यादिव्याख्यावसरे उक्तं हलादेरित्युक्तेरर्वाचीनमते दीर्घो न। स्वमते तु दीर्घो भवत्येवेति। तत्तुच्छम्। औन्दिददित्यादावङ्गलघ्वोरुभयोरपि णिचम्प्रति विशेष्यत्वे दीर्घस्याप्राप्तेः। चङ्परे हि यदङ्गं नुन्द इति न तदीयोऽभ्यासः। न वा चङ्परणिच्परं यल्लघु तत्परः। एवञ्च स्वमते दीर्घो भवत्येवेत्युक्तिरसङ्गतैव। आटिटदित्यादिभाष्यादिसकलग्रन्थविरुद्धं च। एतेन भाष्योदाहरणमेव हलादेरित्यस्य पूरणे प्रमाणमिति केषाञ्चिदुत्प्रेक्षापि प्रत्युक्ता। दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात्। यदपि वदन्ति। हलादेरिति सामर्थ्याल्लभ्यते। तथा हि। चङ्परे णौ यदङ्गन्तस्य यो ऽभ्यास-

---

अपि च सन्निमित्ताभ्यासस्येत्यर्थे ऽपि स्तौतिण्योरिति सूत्रे ऽधीषिषतीति प्रयोगादत्र सूत्रे न हि कार्यित्वस्य न प्रवृत्तिरत आह। आस्तान्तावदिति। तपरत्वप्रयोजनविचार इति शेषः॥

सूत्रितत्वादिति। एवञ्च निर्दिष्टस्थानिकत्वादचश्चेति लिङ्गाभावादलोन्त्यस्येति च न प्रवर्तते। परे तु लघ्वन्ताभ्यासस्येत्यर्थे अलोन्त्यपरिभाषया चेष्टसिद्धिरित्याहुः।

चङ्परणिच्परमिति। इदमेव व्याख्यानं प्रकृतसूत्रस्थभाष्यकैयटणिश्रीतिसूत्रस्थकैयटारूढमित्यन्यत्र प्रपञ्चितम्। इत्यादिभाष्यादीति। इत्याद्युदाहरणपरभाष्या-

स्तस्य दीर्घो विधीयते। अजादेस्तु अजादेर्द्वितीयस्येति वचनादङ्गावयवस्याभ्यासो न त्वङ्गस्य। न चावयवावयवः समुदायस्यावयव इति निर्वाहः। तस्यासार्वत्रिकत्वादिति। अत्रेदं वक्तव्यम्। षाष्ठन्द्वित्वन्तावद्भिः प्रयोग एवेति स्थितमाकरे। अस्तु वा स्थाने द्विर्वचनम्। उभयथा ऽपि अङ्गावयव एव किन्त्वभ्यासः। स च नाङ्गावयव इति व्याहतमेव। एवञ्चावयवावयव इत्याद्यपि रभसोक्तिमात्रम्। अवयव एव ह्ययं न तु तस्यागमः। येन तदीयमसार्वत्रिकत्वं प्रकृते उपन्यासार्हं स्यात्। यदपि स्वोक्ते ऽर्थे माधवसंवादकथनन्तदपि रभसमात्रमिति समनन्तरमेव माधवमतविवेचने स्फुटीभविष्यति। लघोः किम्। अचिक्षणत्। सञ्ज्ञाया इत्यादि। अयं भावः। सन्वल्लघुनि दीर्घो लघोरिति सूत्रद्वये ऽङ्गस्येत्यनुवर्त्तने ऽभ्यासस्येति च। तत्राभ्याससञ्ज्ञा कार्यकाला। तेनैकाचो ये द्वे तयोः पूर्वस्येति फलितम्। द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते तच्च कृदन्तम्। तद्योगादङ्गस्येति कर्मणि षष्ठी। तेनाङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानावेकाच्येव फलितौ। किञ्चास्मिन्पक्षे एकाच इत्यङ्गविशेषणं शब्दतो ऽपि सुलभम्। एकाचो द्वे इत्यधिकारात्। तदिदं माधवमतं श्लोकद्वयेनोपनिबद्धम्। तथा च ऊर्णुधातौ माधवेनोक्त-

———

दीत्यर्थः। अवयव एवेति। ऊर्णु इत्यङ्गन्तदवयवो नुः द्विरुक्तो ऽपि स एवेत्यङ्गावयव एवेत्यर्थः। अयमिति। द्विरुक्त इत्यर्थः। न तु तस्येति। द्विरुक्तनुशब्दस्य द्वितीयो नु इत्यर्थः। उपन्यासार्हमिति। वस्तुतस्तदसार्वत्रिकत्वमप्यसिद्धम्। फलितमिति। तत्र हि पक्षे पूर्वो ऽभ्यास इत्यत्र कार्यविधायकसूत्रस्थाभ्यासपदोत्तरा विभक्तिः पूर्वशब्दोत्तरं कल्प्या पूर्वो ऽभ्यास इति प्रथमा साधुत्वार्था। एकाचो धातोरिति चाङ्गेन समानाधिकरणमिति भावः। कर्मणि षष्ठीति। कारकविभक्तेर्न्याय्यत्वादिति भावः। अङ्गाधिकारस्थकार्यसमीपे गमने ऽत्राप्यङ्गसन्निधानात्। माधवमतमिति। अत्रारुचिर्बीजन्तु प्रकृतसूत्रस्थभाष्यविरोधः। तत्र हि इह कस्मा-

म्। ऊर्णुनवत्। दीर्घो लघोरित्यभ्यासस्य दीर्घो न भवति। चङ्पर णौ यदङ्गन्तस्य यो ऽभ्यास इति सूत्रार्थात्। अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्येति। युक्तञ्चैतत्। अङ्गस्येति षष्ठ्याः कारकत्वसम्भवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात्। स्यादेतत्। उक्तरीत्या ह्रस्वदृत्वादिः शेषचुत्वादीन्यप्यनेकाचु न स्युः। न चेष्टापत्तिः। दिदरिद्रासति, जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात्। तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयतइति चेत्तर्हीहापि स एवोचितः। अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्। वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह। वस्तुत इति। ऊर्णौ दीर्घ इति। स्यादित्यनुषज्यते। सन्वद्भावस्त्विह नोपयुज्यते। णौ कृतस्य स्थानिवद्भावेन नुम्बद्द्वित्वे सत्यभ्यासे ऽवर्णाभावादिति भावः। अर्थापयताविति। अर्थमाचष्ट इत्यर्थे णिचि आपुगागमे चेत्यर्थः। अर्थ उपयाञ्चायामित्यर्थं तु यद्यपि बोपदेवेनार्थापयतइति स्वीकृतम्। प्राचा तद्व्याख्यातृभिश्च तदेव पुरस्कृतम्। तथापि तत्सर्वं चुरादिगणे भाष्यादिविरोधोद्भावनेन दूषयिष्यते। व्यवस्थयेति। चङ्परे णौ यल्लघु इति व्याख्याने हि येन नाव्यवधानन्यायेनैकवर्णव्यवाये अपीपचदित्यादावेव भाव्यम्। न त्वनेकव्यवाये। न चैवमचिक्षणदित्यादौ सन्वद्दितीत्वं न स्यात्। न्यायसाम्येन लघौ यो ऽभ्यास इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादिति वाच्यम्। अत्स्मृदृत्वरेतीत्वापवादेनाद्वचनेन तुल्यजातीयापेक्षेण संयोगव्यवधाने ऽपीत्वस्य

---

न्न भवत्यजजागरत्। लघुनि चङ्परइत्युच्यते व्यवहितं चात्र लघु चङ्परइत्युक्तम्। चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमिति तदर्थः। तद्रीत्याङ्गस्य द्विरुक्तयभावेन शङ्काया एवानुत्थित्या तदसङ्गतिः स्पष्टैव। शेषषष्ठीत्वेति। अवयवषष्ठीत्वेत्यर्थः। अरुचिबीजान्तरमाह। स्यादेतदिति। इहापीति। सन्वल्लघुनीत्यत्रापीत्यर्थः। स्थानिवद्भावेनेति। निषेधेन चेत्यपि बोद्धव्यम्। आपुगागमे चेति। इदञ्च लुङि अस्याभिधानं कृत्वा चिन्तया ऽङ्गीकृत्य। वस्तुतस्तत्रानभिधानमेव।

ज्ञापितत्वात्। अत एव दीर्घो लघोरिति सार्थकम्। एतच्च वृत्त्यादिषु स्पष्टम्। माधवोपि जागृधाताबित्थमेवाह। एवञ्च वदन् यथोद्देशपक्षमेवाश्रिश्रियत्। तथा चोर्णोतौ यत्नेनोक्तं तच्च तस्यापि निर्भरो नास्तीति गम्यते। अत एव चकास्तावचीचकासदित्युदाजहार। तथा च मतभेदाभिप्रायेण पूर्वापरस्वग्रन्थविरोधः समाधेयः। यत्तु कातन्त्रे इत्वदीर्घयोरजीजागरदित्युदाहृतन्तन्मतद्वये ऽप्यसम्भवादुपेक्ष्यम्। माधवो ऽप्येवं जागर्त्तावाह। व्यवस्थामेव विवृणोति। सन्निहितमिति हेतुगर्भविशेषणम्। अङ्गमेव वेति। तस्य प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः। कैयटेति। तथा च एकं हरदत्तमतमपरन्तु कैयटमतमिति विषयविभागः कैश्चिदुक्तो नातीवादर्त्तव्य इति भावः। चङ्परइत्यावर्त्त्य अग्लोपविशेषणतया ऽपि योजितन्तस्य फलमाह। णेरिति। अगितामिति। पचिकमिशक्तिप्रभृतीनामित्यर्थः। न होलुङ्ङकानां लोपो णिचम्प्रतीक्षतइति भावः। ओणृ। इतः पैण्यन्ताः पञ्च ऋदितः॥

---

आपुडागम इति भाष्योक्तपक्षान्तरे ह्रस्वाभावेनानयोरप्राप्तौ फलभेदापत्तेः। सार्थकमिति। तद्धि अचिक्षणदित्यादिगुरोर्व्यावृत्त्यर्थं त्वद्रीत्या चङ्परणिपरलघुपरत्वाभावादप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। मतभेदेति। ऊर्णोत्युक्तन्त्वरुचिग्रस्तमेवेति तत्त्वम्। स्पष्ट एवेति। अयं पक्षो भाष्यानारूढः। औन्दिददित्यत्र दीर्घापत्तिरप्यत्र पक्षे चङ्परे णौ यदङ्गमौन्दिद इति तदीयाभ्यासस्य चङमादाय णिलोपस्य स्थानिवत्त्वेन णिमादाय चालघुपरत्वात्। नातीवेति। पक्षद्वयस्योभयोरपि सम्मतत्वादिति भावः। तथा च सन्वत्सूत्रे कैयटः। अङ्गान्यत्वाद्वामीमयदिति सिद्धमिति भाष्यमुपादाय मादीनामङ्गानां सनि मीमेत्यादिना ऽभ्यासलोपो विहितो ऽयन्त्वभ्यासो ण्यन्तानामिति। अन्ये तु चङ्परे णौ यदङ्गन्तदभ्यासस्य सन्वत्त्वं विधीयते। णौ मीमादीत्येवाङ्गानीत्यादि। अन्ये त्वङ्गस्याभ्यास इत्यत्राङ्गङ्किंनिरूपितं ग्राह्यञ्चङ्निरूपितं णिनिरूपितञ्चेति कैयटीयपक्षद्वयतात्पर्यं न तु त्वदुक्तेर्थे इति आद्यपक्ष एव सर्वसम्मत इत्याहुः॥

ष्ठिवुक्लमुचमां शिति॥ वृत्तिकृत्तु वार्त्तिकस्थमाङ्ग्रहणं सूत्रे प्रचिक्षेप। जिमिङ्के चिदिति। तथा च जेमनमिति भोजने प्रयुञ्जते॥

वा भ्राश॥ भ्राशृ, भ्लाशृ, दीप्तौ। फणादिसप्तके तावव्याप्तौ पठितौ। श्यन्विधायके प्रकृतसूत्रे ऽपि तथैव पठिष्यते। वोपदेवस्तु दन्त्यान्तावाह। प्राचा ऽपि स एवानुसृतः। भ्रमु, चलने। भ्वादिर्ज्वलादिः फणादिः। भ्रमु, अनवस्थाने। दिवादिः पुषादिः शमादिः। तत्र भ्वादेर्भ्रम्यति। भ्रमति। शमादेस्तु दीर्घे भ्राम्यतीति त्रैरूप्यम्। क्रमु, पादविक्षेपे। क्लमु, ग्लानौ। त्रसी, उद्वेगे। त्रुट, छेदने। लष, कान्तौ। श्यन्वेति। उभयत्र विभाषेयम्। अनवस्थानार्थो भ्रमिः। क्लमित्रसी च दिवादयः। तेभ्यो नित्यं प्राप्ते त्रुटेस्तौदादिकत्वादितरेषाञ्च भौवादिकत्वादप्राप्ते विधानात्। यत्तु प्राचा ष्ठिवुक्लम्विति सूत्रे दैवादिकस्य क्लमो ग्रहणमित्युक्तम्। यच्च दिवादिगणे भौवादिकस्य तु क्लमतीत्युक्तन्तत्प्रामादिकं भ्वादिषु क्लमेरपाठादिति बोध्यम्॥

क्रमः परस्मैपदेषु॥ ष्ठिवुक्लमुचमां शितीति पूर्वसूत्रात् शितीत्यनुवर्त्तनइत्याह। शितीति। यत्तु प्राचा श्यपीति व्याख्याय क्रम्यतीति श्यनि दीर्घरहितमुदाहृतन्तत्प्रामादिकमिति भावः। यत्तु परिष्कुर्वन्ति इषुगमियमां छ इत्यत्रानुदित्पाठपक्षे इष्यतेरिष्णातेश्च व्यावृत्त्यर्थं कस्याचीत्यतो ऽचीत्यनुवर्त्य शित्यचीति काशिकायां व्याख्यातम्। एवञ्च सन्दंशपठिते क्रमः परस्मैपदेष्वित्यत्राप्यचि

---

पठिष्यतइति। माधवादिभिरिति शेषः। एवञ्च बहुविरोधाद्वोपदेवो हेय इति भावः। फणादिरिति। यद्यप्ययं फणादिषु नास्ति अत एव वा जॄ इत्यत्र भ्रमुग्रहणं तथापि फणादिष्वेव भ्रमुत्रसिञ्च पठित्वा फणाञ्च नवानामिति सूत्रं कार्यं वा जॄ इति सूत्रे भ्रमुत्रसिग्रहणञ्च न कार्यम्। न च दिवाद्योरेत्वाभ्यासलोपापत्तिः। बभ्रमुरित्यादेरिष्टत्वेनेष्टापत्तेरिति तात्पर्यम्॥

अनुदित्पाठ इति। तुदादिगणे इषुगमीति सूत्रे चेत्यर्थः। पक्षे। अनुदित्य-

ष्ठितीति सम्बन्धाच्छ्वप्येव भवितुं युक्तमिति। तन्न। अचीति हि पक्षे ऽनुवर्त्यमानमपि छत्वविधावेव मण्डूकप्लुत्या सम्बध्यते न तु ततः प्रागिति। लुग्वा दुहेत्यत्र सम्बन्धे दन्त्यइवाजादावपि तङि क्सस्य लुक्प्रसङ्गात्। किञ्च। अचीत्यस्यानुवृत्तिर्वृत्तिकृतोक्तेति किमपूर्वं भाष्यकृतैवोक्तत्वात्। किं तु न तावता भवदभिमतसिद्धिः। अनुवृत्तेः पाक्षिकत्वस्य तत्रैवोक्ततया पक्षद्वये फलैकरूप्यार्थं मध्ये ऽसंबन्धस्यैव वक्तव्यत्वात्। वृत्तिकारादिभिरेव श्यनि दीर्घस्योदाहृततया तद्विरुद्धतदाश्रयकल्पनाया असंभवाच्च। यदपि वदन्ति। ष्ठिवुक्लमिवति सिद्धे क्लमः शमादौ पाठः श्यन्येषामेवाष्टानां दीर्घ इति नियमार्थः। तेन क्लमः श्यनि न भवतीति। तदपि न। सिद्धे सत्यारम्भो हि नियमार्थः। न चैषां सर्वेषां श्यनि दीर्घः सिद्धोस्ति येन श्यन्येषामेवेति नियमः स्यात्। अथोच्येत श्यनि क्लम एवेति नियम इति। तदपि न। क्लमेः साक्षादपाठात् अष्टानामित्युक्तेश्च मदिसङ्ग्रहार्थतयोपक्षीणत्वात्। शमादिषु क्लमेः पाठस्य घिनुणर्थतयोपपत्तयाच्च। नन्वेवं

---

पक्षे। लुक्प्रसङ्गादिति। अच्यन्तलोपस्तु धात्वन्तरे चरितार्थ इति भावः। भाष्यकृतैवेति। इषेश्छत्वमहलीति वार्तिकप्रत्याख्यानायेति भावः। एवञ्च धातुपाठे सूत्रे चोदित्पाठो ऽनार्ष इति सूचितम्। तत्रैवोक्ततयेति। वृत्तावेवोक्ततयेत्यर्थः। अनुदित्पाठपाक्षिकत्वस्येति पाठे इदम्। अनुवृत्तेः पाक्षिकत्वस्येति पाठे भाष्ये एवेत्यर्थः। वार्तिकारम्भे ऽनुवृत्त्यभावादिति भावः। मध्ये ऽसंबन्धेति। मण्डूकप्लुत्येति भावः। अत एव प्रथमोपस्थितक्रमः परस्मैपदेष्वित्यत्रैवाहलीति वार्तिकोपन्यासे तत्प्रत्याख्याने चाचीति अनुवृत्त्या कर्त्तव्ये इषेति सूत्रे तत्करणं भाष्ये संगच्छते। ननु वृद्धय इतिवत् शमामिति बहुवचनेनाद्यर्थलाभे ऽपि सिद्धे ऽष्टानामित्युक्तिः प्रत्येकव्यापारार्थेति उक्तनियमः सुलभोऽन्येषान्तु विद्धयर्थमित्यत आह। अष्टानामित्युक्तेरिति। मदिसङ्ग्रहार्थतयेति। मद्यन्तमात्रसंग्रहार्थतयेत्यर्थः। अन्यथा तदुत्तरेषामपि ग्रहणापत्तिः। मद्युत्तरं वृत्करणे तु गौरवमिति भावः। नन्वेवं शमादिषु क्लमेः पाठसामर्थ्यात्तथा नियमो ऽत आह। शमादिषु

क्षमिं मदेरनन्तरमुत्कृष्य शमां सप्तानामित्येव ब्रूयादिति चेन्न। एवमप्यक्षरसन्निवेशे लाघवाभावात्। प्रत्युतार्द्धमात्राधिक्यात्। मकारान्तसन्दर्भसौष्ठवार्थं मदेः पूर्वं क्षमेः पाठसंभवाच्च। यत्तु क्षमेः शमादिषु पाठश्चिन्त्यप्रयोजन इति हरदत्तेनोक्तं तदपि नातिप्रयोजनताभिप्रायमिति दिक्। भाष्यविरुद्धमिति। यदि हि द्वौ धातू सम्मतौ स्यातान्तर्हि षोपदेशलक्षणे स्त्यायतिरिवायमपि पर्युदस्येतेति भावः। स्नुतगतिरिति। यत्तु केचित्स्नवेति धात्वन्तरमित्याहुः। तन्न। तथाहि सति तस्माद्वृञा आस्नावशब्दे सिद्धे तदर्थं विभाषा ङिरुस्नुवोरिति स्नुवः पक्षे घञ्विधानमनर्थकं स्यात्। तथा स्नवतिशृणोतीत्यादिसूत्रेण स्नवतेरुकारस्येत्वविधानं व्यर्थं स्यात्। नहि पक्षे ऽपिस्नवदिति रूपसिद्ध्यर्थं क्रियते। सति चास्मिन्ननेनैवाभिमतरूपसिद्धौ किन्तेनेति दिक्। मव्य, बन्धने। ममव्येति। यस्य हल इति लोपस्तु न भवति। यस्येति सङ्घातग्रहणमिति सिद्धान्तात्। अत एव तत्रार्थवत्परिभाषापि प्रवर्त्तते तेन पुत्रकाम्येत्यादौ लोपो नेति दिक्। आशिषि मव्यात्। हलो यमामिति वा यलोपः। सूर्क्ष्येत्यादि। णल्। सुसूर्क्ष्य। ईर्क्ष्याञ्चकार। ईर्ष्याञ्चकार। एभ्यः क्विपि वलि लोपे स्कोरिति कलोपे जश्त्वचर्त्वयोः। सूर्ट्, सूर्ड्, रात्सस्येति नियमान्न संयोगान्तलोपः। जश्त्वान्त आदरे वक्ष्यते। तस्याप्येतदेव रूपम्। अपदान्ते तु भेदः। सूर्क्षावित्यादि। एवमीर्क्ष्यतेरीर्ष्यतेश्च। ईर्ट्, ईर्क्ष्यौ ईर्ष्यावित्यादि। हय, गतौ। भक्तिशब्दयोरपीति केचित्। शिथिलीकरणमिति। सोममभिषुणोती-

---

क्षमेरिति। मकारान्तेति। इदमुपलक्षणमुवर्णे तत्सन्दर्भेत्यपि बोद्धव्यम्। नातिप्रयोजनतेति। न बहुप्रयोजनेत्यर्थः। घिनुण्रूपैकप्रयोजनार्थत्वादिति भावः। अभिमतेति। अनेनापिस्नवादित्यस्य स्नुङा स्नुवादेशस्य सिद्धाविति भावः। सुषूर्क्ष्येति। षोपदेशत्वादुत्तरस्य षः। एतदेव रूपमित्युत्तरम्। अपदान्ते तु भेद इत्यादिरीर्ष्यावित्यन्तो ऽग्रन्थः॥

त्यादौ तथा दर्शनात्। सुराया इति। तत्प्रकरणे। "सन्धानं स्यादभिषव" इत्यमरोक्तेः। स्नानमिति। वारांश्चीनभिषुण्वते इत्यादौ दर्शनात्स्नानपरतया चान्द्रैर्व्याख्यातत्वाच्च॥

अतो ल्रान्तस्य॥ यद्यवयववचनेनान्तशब्देन बहुव्रीहिः अङ्गस्यान्यपदार्थः तर्ह्यन्तग्रहणमनर्थकम्। विशेषणेनैव तदन्तविधेः सिद्धत्वात्। अथ समीपवाचिनोऽन्तशब्देन षष्ठीसमासः रेफलकारयोः समीपभूतस्यातो वृद्धिरिति। तर्हि लपिरणिश्वल्लिप्रभृतिष्वपि स्यात्। अथ ल्रश्च तदन्तस्येति कर्मधारयस्तर्हि अन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत आह। लुप्तषष्ठीकमिति। अतो वृद्धिः स्यादिति। एतेन अत इत्यस्य तन्त्रावृत्त्यादिकं प्रदर्शितम्। अतः किम्। अखोरीत्। तदन्तस्याङ्गस्येति किम्। श्वल्ल, आशुगमने। अत्राद्यो लकारोऽकारसमीपभूतः न त्वङ्गस्यान्तः। द्वितीयस्य तु नाकारः समीपः। नेटीत्यादि स्वविषये प्राप्तं सर्वं बाध्यते बाध्यसामान्यचिन्तायां पुरस्तादपवादन्यायस्याप्रवृत्तेः। विशेषचिन्तायान्तु नेटीत्येव बाध्येत न तु वि-

---

सिद्धत्वादिति। अन्तशब्दस्य पूर्वनिपातापत्तेश्चेत्यपि बोद्धव्यम्। समीपवाचिनेति। ओदकान्तादावनान्तात्प्रियं प्रोथमनुव्रजे,दित्यादौ दृष्टेनेत्यर्थः। प्रोथः पान्थः। श्वल्लीति। इदञ्चान्तःशब्दः समीपवाची ओदकान्तादित्यादौ पूर्वभूतसमीपे ऽपि दर्शनादित्याशयेन। अत्र परगतसामीप्यवाचित्वदुराग्रहे तु लपिरण्यादावेव दोष इति बोद्धव्यम्। तन्त्रेति। समीपपदार्थस्य शाब्दाकाङ्क्षासत्त्वेन तन्निवृत्तये शाब्दान्वयौचित्येनावृत्तिरुचितेति भावः। अतः समीपभूतरेफलकारान्तस्याङ्गस्यातो वृद्धिरिति अर्थः। नाकारसमीप इति। भाष्यप्रामाण्येनाव्यवहितसमीप एवान्तशब्दशक्तिरिति भावः। तत्र प्रत्यासत्त्या वृद्धिस्थानी ल्रसमीपभूताकार एव गृह्यते ऽतोत्सारीदित्यादावटो न वृद्धिः। भाष्ये तु रेफलकारान्ताङ्गावयवस्य ल्रसमीपस्यात इति ल्रपदावृत्त्यर्थ उक्तस्तत्र लकारयोः प्रत्यासत्त्यैकत्वलाभेनाङ्गान्त्यलकारसमीपाकाराभावादश्वल्लीदित्यादौ न दोषः। अन्तग्रहणसामर्थ्यादेव वर्णग्रहणे ऽपि जातिग्रहणेनेत उत्तरं वृद्धिभाजामेव सिच्परत्वेन विशेषणादन्तग्रहणं व्यर्थ-

कल्पोपीति भावः । यत्तु प्राचा नेटीत्यस्यापवाद इत्युक्तं तद्विकल्पस्याप्युपलक्षणमिति व्याख्यातुमुचितम् । यत्तु व्याचख्युः । विकल्पस्यैवापवाद इति । तच्चिन्त्यम् । बाह्यसामान्यचिन्तायान्तु पुरस्तादपवादन्यायेन वैपरीत्यापत्तेः । न च येन नाप्राप्तिन्यायेन विकल्पस्य बाध इति वाच्यम् । मा भवानाल्लीदित्यत्राद्लादित्वेन विकल्पस्याप्राप्तेरिति दिक् । तृफलेत्येत्वमिति । यद्यप्यभ्यासे चर्चेत्यस्यासिद्धत्वादत इत्येव फलभज्योरेत्वाभ्यासलोपौ सिद्धौ तथापि तयोर्ग्रहणमेत्वविधिं प्रति सिद्धत्वज्ञापनार्थम् । तेन बभणतुः बभणुरित्यादि सिद्धम् । ननु फलनिष्पत्तावित्यस्यैव तत्र ग्रहणमुचितं निरनुबन्धकत्वादिति चेत् । मैवम् । निरनुबन्धकपरिभाषायाः प्रत्ययग्रहणविषयकत्वात् । सा चि वामदेवाड्ड्यड्ड्याविति ड्यप्रत्ययडित्त्वेन ज्ञाप्यते । ज्ञापकञ्च सजातीयापेक्षम् । के चित्तु परिभाषायाः सार्वत्रिकतां मन्वानास्तृफलेति सूत्रे चशब्देन सानुबन्धकममुं समुच्चिन्वन्ति । तत्र हस्य व्रीहिकालयोरित्यत्र सामान्यग्रहणनिर्वाहार्थं क्रियमाणञ्जहातेः कित्त्वं परिभाषायाः सार्वत्रिकत्वे मूलमिति ध्येयम् । मील्श्मील्त्यादि २९ सर्वे दीर्घोपधाः । मिल, श्लेषण इति ह्रस्वोपधस्तुदादौ । नील, वर्णे । पिल, गताविति ह्रस्वोपधस्तुदादौ । मील, समाधौ । उपधारण इति चु-

---

मित्यपास्तम् । नेटीत्येवेति । पुरस्तादपवादन्यायेनेति भावः । तथा च रेफग्रहणवैयर्थ्यापत्तिरिति तात्पर्यम् । विकल्पस्याप्राप्तेरिति । अश्वह्लीदित्यादावङ्गस्येति विशेषणान्न वृद्धिरिति भाष्यविरोधाच्चेत्यपि बोद्धव्यम् । सार्वत्रिकतामिति । दिव औदित्यादिसूत्रस्थभाष्यप्रामाण्येनाप्रत्ययविषये ऽपि तत्प्रवृत्तिः । न हि सर्वत्र सजातीयापेक्षतैव ज्ञापकस्यास्तीति भावः । समुच्चिन्वतीति । ज्ञापकसिद्धं न सर्वत्रेत्यनेनाप्रवृत्तिरिति तत्त्वम् । जहातेः कित्त्वमिति । अन्यथैकानुबन्धपरिभाषया ऽस्यैव ग्रहणं स्यादिति भावः । परिभाषाया इति । सामान्यतो वामदेवाड्ड्यड्ड्याविति सूत्रस्थडित्त्वज्ञापितपरिभाषामात्रस्येत्यर्थः । एतच्च दीर्घोकित इति सूत्रस्थकैयटानुरोधेनोक्तम् । वस्तुतो हस्येत्यत्रानुबन्धानुच्चारणेन तदनुबन्धकग्रहणाभावात्परिभाषा-

रादौ। भ्रिल, उञ्छइति ह्रस्वोपधस्तुदादौ। तिल, गतौ। ५४०। स्ने-
हनइति चुरादौ। खोर्ऋ खोरृ, घोरृ ५८६ त्रयाणामपि ऋदित्त्वान्नो-
पधाह्रस्वः। अचुखोलत्। अचुखोरत्। अदुघोरत्। घोरितकमश्वाना-
ङ्गतिविशेषः। निष्ठान्तात्संज्ञायां कन्। ष्ठिवु, निरसने। ५८६। ष्ठी-
वनम्। ल्युट्। पृषोदरादित्वात्पत्ते दीर्घः। तथा च चान्द्रसूत्रम्। ष्ठि-
वुसिवोर्दीर्घस्वेति। अयं दिवादावपि ॥

सन्लिटोः॥ सन्लिण्निमित्त इति। यदि तु सनि लिटि च परइति
प्राचो व्याख्यानमाद्रियेत तदा यङ्लुगन्तात्सनि कुत्वं स्यात्। न चे-
ष्टापत्तिः। माधवादिग्रन्थविरोधापत्तेरिति भावः। हिविदिवि। ५९०।
प्राचा तु धिन्विकृण्वी स्वादिगणे पठितौ तदयुक्तम्। तथा हि। पाणि-
नीयमते तावदिमौ भ्वादौ एव न तु स्वादौ। किं च स्वादित्वाभ्युपगमे
तत्सामर्थ्यात्पक्षे श्नुः स्यात्। तथा च वस्य ऊठि अनिष्टं स्पष्टमेव। वो-
पदेवेन तु विकरणलोभात्तनादित्वं स्वीकृतं तथा च प्राचो ग्रन्थो नि-
रालम्बन एवेत्यास्तान्तावत्। अतो लोपइति। न चोपदेशे ऽकारान्तत्वं
नास्तीति वाच्यम्। आर्धधातुकोपदेशइति व्याख्यातत्वात्। इह च
धिन्विकृण्व्योर चेति श्रुतत्वादकारादेशे कृते चानुकृष्टस्य प्रत्ययस्य

---

या अप्राप्तिरेवेति तत्त्वम्। अश्वानाङ्गतीति। धातुपाठे गतिचातुर्यमश्वानिष्ठमेव वि-
वक्षितमिति भावः। दीर्घ इति। तदा लघूपधत्वाद्गुणाभावः। दीर्घोपधोऽप्ययं
ल्युड्विषय इत्यन्ये। इति भाव इति। न च तद्व्याख्याने न हि कार्यीति न्यायेन
जयतौ कुत्वानापत्तिः। सन्ग्रहणसामर्थ्येन तस्य न्यायस्येहाप्रवृत्तेः। यदि तु ने-
र्यङ्लुक्सत्त्वे तदन्ताच्च सन्सत्त्वे न दृढतरं मानमित्युच्यते तदा परत्वेन व्या-
ख्याने ऽपि न दोषः। एतच्च माधवादिग्रन्थविरोधापत्तेरित्यनेन सूचितम्।
पक्ष इति। धिन्विकृण्व्योर च्चेत्युप्रत्ययविधानादिति भावः। न च तत्रापि पक्षे
शप् दुर्वारः। शपः सामान्यविधानेन तत्तद्गणप्रयुक्तविकरणैरिव धिन्विकृण्व्योरित्यु-
प्रत्ययेनापि बाधेनादोषात्। तत्र गणे पाठेन सूत्रेण च द्वयोः पर्यायः स्यादिति ता-
त्पर्यम्। वोपदेवेन त्विति। अत्राहुश्चित्रीजन्तु अनयोर्भ्वादौ लुङि तङि तनादिभ्य-

पश्चाद्विधानादिति भावः ॥

स्नोपस्थ ॥ असंयोगपूर्वो य इति । प्रत्ययस्य विशेषणन्तु न कृतम् । अश्नुवद्वे इत्यादावतिव्याप्तेः ।

उतस्य ॥ इहापि प्रत्ययस्य विशेष्यत्वे आप्नुहीत्यादावतिव्याप्तिरत आह । प्रत्ययोकार इति । कृवि १६० । अयमिति । कृणोतिरित्यर्थः । न तु कृण्विरिति भ्रमितव्यम् । स्वादौ हि कृञ्, हिंसायामिति पद्यते । तस्य च श्नविषये परस्मैपदे कृण्विना तुल्यानि रूपाणि । आत्मनेपदे तु कृणुतइत्यादि । तिङादौ तु करोतिवत् । एवं स्थिते ऽयं स्वादाविति यथाश्रुतो धातुवृत्तिग्रन्थ एव प्राचो भ्रमे मूलमिति बोध्यम् । अव, रक्षण । ६०२ । हिंसादानेत्यत्र हिंसा च आदानञ्चेति विग्रहः । एकोनविंशतिरर्थः । तथा च वोपदेवः ।

अव् रक्षणे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ ।
प्राप्तौ श्लेषे ऽर्थने वेशे भागे वृद्धौ ग्रहे वधे ॥

स्वाम्यर्थे ऽवगमे कामे कृताविति । भिक्ष भिक्षायामिति । याञ्चायामित्यर्थः । त्रयो ऽर्थाः । क्लिश । अत्र स्वामी क्लेशे अव्यक्तायां वाचि चेति पठित्वा इमावपि पूर्वधातोरर्थाविति मन्यते धात्वन्तरमिति तु बहवः । क्लिश उपतापे इति दिवादौ । क्लिशू, बाधने इति क्र्यादौ । ईष, गतिहिंसादर्शनेषु । दानेष्विति पाठान्तरं देवादीनां सम्मतम् । ईष । मनस ईषा मनीषा । शकन्ध्वादिः पृषोदरादिर्वा मनीषामभिनिविष्टं मनीषितम् । प्रातिपदिकाद्धात्वर्थे बहुलमिति णिजन्तात् क्तः । मनीषितं द्यौरपि येन दुग्धेति रघुकाव्ये । अयमर्थः परस्मैपदिषु । द्वावपि दी-

---

स्तथासोरिति पक्षे सिचो लुगापत्तिः । पश्चादिति । एककालविधाने ऽपि तदुपदेशे ऽदन्तत्वमस्त्येवेति चिन्त्यम् । आप्नुहीत्यादाविति पाठः ।

प्राचो भ्रमइति । धिविकृवी स्वादिगणे पठिताविश्नाकारे इत्यर्थः । द्युतिर्दीप्तिः । श्रुतिः श्रवणम् । वेशः प्रवेशः । ग्रहो ग्रहणम् । वधो हिंसा । काम

षादौ। ह्रस्वादयस्तु त्रयः। गत्यर्थौ दिवादौ। इच्छार्थस्तुदादौ। आभीक्ष्ण्यार्थः क्र्यादौ। वर्ष स्नेहने। वृषु, सेचनइत्यग्रे परस्मैपदी। शक्त्यर्थश्चुरादौ। वृक्षशब्दे इत्यादि। यदाह केशवस्वामी।

क्रौञ्चे कर्द्दति पर्द्दतिर्गुदरवे रेषेत वाक्ये ह्रसे

बुक्कोच श्वरवे भषेच्च हयजे ह्रेषेत हेषेत वे,ति। तथा हेषा ह्रेषा च निस्वन इत्यश्वप्रकरणेमरः। कासाञ्चक्रे इति। ६२९ कास्प्रत्ययेत्याम्। भासृ, दीप्तौ। ६३ अस्य ऋदित्वन्तङ्मात्रफलकं भ्राजतिवत्। भ्राजभासेत्यादिना उपधाह्रस्वस्य विकल्पात्। उभयोरप्यनुबन्धान्तराकरणन्तु प्रकरणानुरोधात्। आङः शसि। शंस, स्तुतावित्यग्रे परस्मैपदिषु। शसुस्तुतु। शसित्वा शस्त्वा। शस्तः। शसिष्णुरिति हेलाराजीये लिङ्गनिर्द्देशे प्रयुक्तम्। भुवश्चेति चकारस्य अनुक्तसमुच्चयार्थतायाः वृत्तिकृतोक्तत्वात्समर्थनीयम्। एतेन भ्राजिष्णुचयिष्णू व्याख्यातौ। वहिमहि। ६४० मह, पूजायामित्यग्रे परस्मैपदिषु महीङिति कण्ड्वादिषु। वर्ह वल्ह, प्राधान्ये। इमौ भाषार्थौ चुरादौ। आद्यो हिंसायामपि तत्रैव बृह, बृहि, वृद्धाविति इहैव परस्मैपदिषु। के चित्त्विति। मैत्रेयादयः। अत्रापरितोषबीजं वैदिकप्रयोगविरोधः। तथा च बह्वृचब्राह्मणम्। प्रवल्हिकाः शंसन्ति। प्रवल्हिकाभिर्वै देवा असुरान्प्रवल्ह्याथैनानत्यायन् व्याकृतञ्चेदं भगवद्गोविन्दस्वामिना। प्रवल्ह्य अनृतं भाषित्वेति। यत्तु ओष्ठ्यादेर्वर्हशब्दस्य आच्छादयत्यनेनेत्यर्थानुगमो द्वितीयपर्यायपठितयोरोष्ठ्यादित्वे प्रमाणमिति। तन्न। वर्हशब्दस्य सर्वेष्ववयवेषु प्रधानं भवतीति व्युत्पादनात्। एतेन स्तीर्णं बर्हिरित्यपि व्याख्यातम्। एवञ्च मणिप्रवर्हा इत्यत्रापि प्राधान्यार्थत्वादोष्ठ्यादित्वं न्याय्यमिति बोध्यम्। वेह, जेह, बाह,। आद्य इति। उच्चाणं वा वेहतं वा लभन्ते इति हि बह्वृचब्राह्मणम्। वेहच्छन्दस्य वेहतेर-

---

इच्छा। कृतिः क्रिया। तङ्मात्रेति। आत्मनेपदोपलक्षणमिदम्। तेन भासमा-

तिप्रत्यये निपातित इति भावः । अन्य इति । बाहुशब्दस्य भुजपर्यायस्य क्षुब्धस्वान्तेति निपातस्य बाढशब्दस्य च निर्विवादत्वादिति भावः । गत्यर्थेऽपीति । अरेणुभिर्जेहमानं पतत्रीत्यत्र सर्वैर्वेदभाष्यकारैस्तथा व्याख्यातत्वादिति भावः । कासृ ६५० आकारोपधप्रकरणादयमिह पठितः । ऊह । ६५० अनुत्तमप्यूहति पण्डितो जन इति प्रयोगस्त्वनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति समाधेयः । केचित्तु ओहतीत्याङ् पूर्वं पठित्वा उपसर्गादस्यत्यूह्योरिति परस्मैपदमाहुः । अगाढेति । झलो झलीति सलोपः । ढत्वधत्वष्टुत्वढलोपाः । सिज्लोपात्पूर्वं भष्भावस्तु न । असिद्धत्वात् । ननु कृते लोपे प्रत्ययलक्षणेन सादिप्रत्ययपरत्वाद्भष्भावोऽस्त्वित्याशङ्क्य सिज्लोपस्य प्रत्ययलक्षणेन पूर्वत्रासिद्धत्वादिति माधवः । अत्रेदं वक्तव्यम् । शङ्का तावदसङ्गता वर्णाश्रये प्रत्ययलक्षणाभावात् । ननु यत्र वर्णमात्रमाश्रीयते तत्र माभूत् । यथा गवे हितं गोहितमित्यत्रावादेशो न । यत्र तु वर्णविशिष्टः प्रत्यय आश्रीयते तत्र स्यादेव । यथा ऽतृणेडितीमागम इति चेन्न । भष्भावेऽपि वर्णस्यैवाश्रयणात् । प्रत्ययस्याप्रकृतत्वात् । किं च । स्थानिवत्सूत्रेण सिद्धे प्रत्ययलक्षणसूत्रं नियमार्थमिति भाष्ये स्थितम् । स्थानिवद्भावस्य विशेषणत्वेनाप्यलाश्रयणे निषिद्धः । अन्यथा प्रश्नयेत्येडागमापत्तेः । अत एव तृणह इम् इत्यत्राचि नेत्यनुवर्त्तते न तु हलीति कैयटादौ स्पष्टम् । तस्मादिह शङ्का मन्दैव । असिद्धत्वेन समाधानमपि मन्दमेव । स्थानिवत्सूत्रं प्रत्यसिद्धत्वं नास्तीति प्रागेव प्रपञ्चितत्वात् । अन्यथा राम इत्यत्र विसर्गो न सिद्ध्येदिति दिक् । णिक्ष, चुम्बने । प्रणिक्षतीति । उपसर्गादसमासेऽपीति नित्यं णत्वम् । वा निं-

---

नासिद्धिः । ननु भुजपर्यायो बाहुर्बाधतेरित्यरुचेराह । क्षुब्धेत्यादि । केचित्त्विति । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति तु भाष्यानुक्तत्वान्न साधुत्वे नियामकमिति तदाशयः । कैयटादाविति । कैयटस्यादिभूते प्रथमे व्याख्येये भाष्ये इत्यर्थः ।

स्त्रनिन्दामिति विकल्पस्तु कृत्यैव। धातुत्रये ऽपि तिङन्ते तदुदाहरणं प्राचः प्रामादिकमेव। आकरविरोधादिति भावः। अवज्ञेत्यादि। सूक्ष्मणमादरः। ततोन्यदसूक्ष्मणमित्यमरग्रन्थार्थः। कल्पसूत्रे च दृश्यते। "सोमेन यक्ष्यमाणो नर्त्तून्सूर्क्षेन्न नक्षत्र"मिति। तैत्तिरीयब्राह्मणे च तत्तन्न सूर्क्ष्यम्। द्राक्षि, ध्राक्षि, ध्वाक्षि,। ६७८। एभ्यो गुरोश्च हल इत्यप्रत्यये द्राक्षा ध्राक्षा ध्वाङ्क्षा। आद्ययोरनुनासिकलोपो यवादिगणे निपातनान्मतोर्वत्वन्तु त्रिभ्योपि न। अयवादिभ्य इत्युक्तेः। द्राक्षामान्। ध्राक्षामान्। ध्वाङ्क्षामान्। मूष, स्तेये। ६८२। सञ्ज्ञायां कुन्। मूषकः। अयं ह्रस्वोपधः क्र्यादौ। जूष, चेति। ६८६। जुषी, प्रीतिसेवने इति तुदादौ। जुष, परितर्कणे इति युजादौ ह्रस्वोपधः। भूष, अलङ्कारे। अयञ्चुरादावपि। कष,खष,शिष,त्यादि। एषु तृतीयोनिट्कः। "शिषिं पिषिं शुष्यतिपुष्यती त्विषि"मिति व्याघ्रभूतिवचनात्। न च तत्र रुधादेरेव ग्रहणम्। सङ्कोचे प्रमाणाभावादिति मैत्रेयपुरुषकारमाधवादयः। तदनुरोधेनोदाहरति। शेषेत्यादि। वोपदेवादयस्त्वमुं सेट्कमाहुः। तन्मते शेषितेत्यादि बोध्यम्। जिषुविषुमिषु। ७०। ५। इह द्वितीयो ऽनिट्कः। "श्लिषिं विषिन्तुष्यतिदुष्यती द्विषि"मिति वचनात्। वोपदेवस्त्वमुं सेट्कमाह। कैयटादय इति आदिशब्दान्न्यासकारहरदत्तवर्द्धमानस्वामिसम्मताकाराः। घस्लृ, अदने। ७२१। आशिषीति। आशीर्लिङीत्यर्थः। एतच्च कर्त्तरि प्रयोगमभिप्रेत्योक्तम्। कर्मणि तु यन्विषये प्रयोगो नेति बोध्यम्॥

---

नास्तीति। प्रत्यय इत्यादिनिर्देशाश्चेह लिङ्गम्। कृत्येवेति। कृत्यच इत्यतः कृतीत्यनुवर्त्तनात् पूर्वोत्तरसाहचर्याच्चेति भावः। आकराविरोधादिति। कृत्यच इति प्रकरणविरोधादित्यपि बोद्ध्यम्। नर्तून्सूर्क्षेदिति। ऋतून्नाद्रियेतेत्यर्थः। अयञ्चापद्विषयः शास्त्रार्थः। कर्त्तरीति। कर्मणि घित्सीष्टेत्यादौ वलाद्यार्द्धधातुकसत्त्वादस्त्येव प्रयोगः। एवङ्कर्मव्यतिहारे कर्त्तर्यप्यस्त्येव प्रयोग इति भावः। यन्विषयइति। चि-

पुषादिद्युतादि ॥ पुषधातुर्गणचतुष्टये पठ्यते । भ्वादौ दिवादौ क्र्यादौ चुरादौ च । तत्र नेह भ्वादिर्गृह्यते द्युतादीनां पृथक्करणाज्ज्ञापकात् । ते हि तत्र पुषेरुपरि पठ्यन्ते । नापि क्र्यादिः । तत्र हि पुषेरुपरि चत्वार एव धातवः । यदि च तएव जिघृक्षिताः स्युस्तर्हि ऌदित एव क्रियेरन् । न चानेकानुबन्धासङ्गगौरवम् । त्रयाणां निरनुबन्धकत्वात् । श्नेः स्वरितत्वेपि ऌकारेणैव तन्निर्वाहात् । यत्तु हरदत्तादिभिरुक्तम् । स्वरितत्वादेरपि तेनैव सिद्धत्वादिति । तत्रादिशब्दग्राह्यं किमिति तएव प्रष्टव्याः । न चाङ्गेव तथा । अपिशब्दसमुच्चयस्य दुर्वचत्वादित्यास्तान्तावत् । नापि चुरादिः । णिचा व्यवधानेन ततो ऽनन्तरस्य च्लेरसम्भवात् । अतः परिशेषाद्दिवादय एव गृह्यन्ते । तदाह । श्यन्विकरणपुषादेरिति । नन्दिग्रहिपचादिभ्य इतिवत् । पुषद्युतादीत्येक एवादिशब्दः सूत्रे पठितुं युक्तः । ननु पुषादयो द्युतादयश्च ऌदित एव कुतो न कृता इति चेन्नैवम् । प्रत्येकं ऌकारपाठे विपरीतगौरवापत्तेः । न चानुबन्धान्तरेण ऌकारो निर्मातुं शक्यः । तत्तत्कार्यानिर्वाहप्रसङ्गात् । आदितामीदितामुदितामूदिताञ्च तत्र सत्त्वात् । तद्यथा । पुषादिषु । ञिषिदा मन्दी षिधु शमु द्युतादिष्वपि श्विदा ञिमिदा ञिक्ष्विदा स्रंसु ध्वंसु स्यन्दू कृपू इति पठ्यन्ते । यत्तु पुषादिषु षिधू संराद्धावित्यूदित्पठ्यते इति तत्प्रामादिकम् । ऊदित्त्वे तस्यानिट्सु पाठवैयर्थ्यापत्तेः । तस्माद्ध्रस्व एव सिध्यतेरनुबन्धो बोध्यः । जर्ज झर्झ चर्च । एषाञ्चवर्गीयान्तेषु पाठ उचितः । न त्विहोष्मान्तेषु । शश, प्लुतगतौ । शेशतुरिति । इह शशशतुरिति प्राचो ग्रन्थः प्रामादिक इत्युक्तम् । चह । अचहीदिति । हान्तत्वान्न वृद्धिः । रह, त्यागे । अयं कथादौ मित्प्र-

---

णो ऽप्युपलक्षणमिदम् । इत्यास्तामिति । आदिनोच्चारणार्थत्वमिति कश्चित् । पठितुमुचित इति । द्वन्द्वगर्भबहुव्रीहिगर्भो द्वन्द्वो व्याख्यानादिति भावः । न त्विहेति । के चित्त्वाद्यौ दन्त्योष्ठ्यान्तौ द्वावप्यर्थसाम्यात्पठितावित्याहुः । मूलं त्वाद्यस्यापि चव-

करणे च चुरादौ। अनिट्कारिकास्विति। अत्र च व्याख्यानमेव प्रकरणम्। अथ चादेरन्तर्गणानाह। द्युत, दीप्तौ। ञिमिदा। मिदर्गुणः। श्नितीत्यनुवर्त्तते। सा च कर्मधारयात्सप्तमी। अङ्गाच्छित्तस्य प्रत्ययो विशेष्यः। तेन यस्मिन्विधिस्तदादाविति प्रवर्त्तते। तदेतदाह। इत्सञ्ज्ञकशकारादाविति। इत्थं व्याख्यायाः फलमाह। एम इति। श्नितीति बहुव्रीहौ तु मिमिदे इत्यत्र गुणः स्यादिति भावः। पपे तस्थे इत्यादौ पिबादयोऽपि स्युरिति बोध्यम्। अयं दिवादिश्चुरादिश्च। ञिष्विदा। क्ष्वेदतीत्यव्यक्ते शब्दे भविष्यति। स्विद्यतीति स्नेहनमोचनयोर्दिवादौ। स्विद्यतीति गात्रप्रस्रवणे। घुट, परिवर्त्तने। ७५२। अयन्तुदादावपि। रुट लुट लुठ। ७५५। आद्यौ प्रथमान्तौ तृतीयो द्वितीयान्तः। द्वावेव धात्व द्वितीयान्तौ चेत्येके। क्षुभ, सञ्चलने। ७५७। सञ्चलनं प्रकृतिविपर्यासो मन्थनञ्च। अयन्दिवादिः क्र्यादिश्च॥

न वृद्भ्यश्चतुर्भ्यः॥ चतुर्ग्रहणं कृपेर्व्यावृत्त्यर्थमिति व्याचख्युः। तन्न। तत्रापि निषेधस्येष्टत्वात्। चतुर्ग्रहणफलन्तु स्यन्दतौ स्फुटीभविष्यति। स्यन्देरूदित्त्वाद्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधोयम्। अत्र गमेरिडित्यतः परस्मैपदेष्वित्यनुवर्त्तते तच्च तस्मिन्सूत्रे तङानयोरभावं लक्षयति। इहापि तथैवार्थाधिकारात्। तेनासत्यपि परस्मैपदे

---

र्गतृतीयान्तत्वमिति मते बोद्ध्यम्। व्याख्यानमिति। सानुबन्धकत्वन्तूभयोरपीति भावः। गुणः स्यादिति। गौरवञ्च स्यादित्यपि बोद्ध्यम्। सूत्रान्तरेष्वेवमेव व्याख्या इत्याशयेन तत्र फलमाह पपे इत्यादि। एकीयमतागतं क्षिदं समाप्य प्रकृतं स्विदमेव निगमयति। स्विद्यतीत्यादि।

निषेधस्येष्टत्वादिति। तासि च क्लृप इति सूत्रस्थचेनेति भावः। तङानयोरभावमिति। वर्त्तिषीष्टेत्यत्र सादेरार्द्धधातुकस्यैव तङानरूपत्वात्तदभावाभावेन न दोषः। न च विवर्तिषतइत्यत्र लडाद्युत्पत्तेः पूर्वं निषेधापत्तिः। तङानयोरभावशब्देन तङानिरूपितनिमित्तत्वाभावोपलक्षणेनादोषात्। पूर्ववत्सन इत्युक्त्या अत्रापि वृतेरात्मनेपदनिमित्तत्वात्। विवृत्सिषीयतइत्यत्र च न दोषः। वृतेरात्मनेपदनिमित्तत्वा-

क्ते ह्वेर्लुकि च निषेधः सिध्यति। विवृत्सिता। विवृत्स्त्वमिति। तदे-तदाह। तङानयोरिति। अत्र भाष्यवार्त्तिकयोः वृतादीनामात्मनेप-देन समानपदस्थस्येड्वचनादन्यत्र निषेध इति स्थितम्। तेन विवृत्सि-षीयतइत्यत्रात्मनेपदोत्पत्तेः पूर्वन्तत्समानपदस्थत्वाभावादन्तरङ्गो नि-षेधः प्रवर्त्तते स च कृते ऽपि तङि न निवर्त्तते। चतुर्ग्रहणसाम-र्थ्यादिति। वस्तुतस्तु पञ्चभ्य इति वक्तुमुचितम्। एवं हि तासि चेत्ये-वास्तु। क्लृप इति व्यर्थम्। न च वृतादिष्वतिव्याप्तिः। परस्मैपदाभा-वात्तङानयोः सत्त्वाच्च॥

अनुविपर्यभिनिभ्यः॥ प्राणिषु नेत्युक्ताविति। न चैतदेव सूत्रे ऽभिप्रे-तमिति वाच्यम्। प्रसज्य प्रतिषेधे ऽसमर्थसमासापत्तेर्वाक्यभेदापत्ते-श्चेति भावः। कृपेरित्यर्वाचीनानां पाठमपेक्ष्य भाष्यारूढं पाठमाह। कृपो रो ल इति। रेफसदृश इति। वर्णैकदेशानां वर्णग्रहणेनाग्रह-णमिति सिद्धान्तात्। पूर्ववाक्येनाप्राप्तमावृत्तिसिद्धेन द्वितीयवाक्येन

---

भावात्। निमित्तत्वं च फलोपहितं निवेश्यन्तेन विवृत्सितेत्यत्र तृजन्ते न दोषः। हेर्लुकि चेति। परस्मैपदे परे इत्यर्थे तु न सिद्ध्येत्। न च प्रत्ययलक्षणेन तत्परत्वं न लुमतेति निषेधात्। न चार्द्धधातुकस्येडित्यत्रेवाङ्गनिमित्तस्य सादेरार्द्धधातुकस्ये-त्यर्थात् हिनिरूपिताङ्गसञ्ज्ञकस्यात्रोद्देश्यकोटौ न प्रवेश इति न लुमतेत्यस्याप्राप्तिः अत एव भाष्ये वृतादिप्रतिषेधे परस्मैपदेषु चेत्कृत्युपसंख्यानमित्येवोक्तं न तु हे-र्लुकीत्यपीति वाच्यम्। लक्षणापक्षे दोषशङ्कैव नेत्यभिप्रायेणास्य प्रयोजनत्वोक्ते-रदोषात्। स्पष्टा चेयं रीतिः स्नुक्रमोरिति सूत्रे भाष्ये। अत्र भाष्येति। एवं हि अत्र भाष्यम्। अविशेषेण वृतादिभ्य इट्प्रतिषेधमुक्त्वा वृतादीनामात्मनेपदेन स-मानपदस्थस्येड् भवतीति वक्तव्यमिति वृतादिसम्बन्धिनः सादेरार्द्धधातुकस्यात्म-नेपदेन समानपदस्थस्येडिति तदर्थः। न निवर्त्तते इति। वार्त्तिके आत्मनेपदेनैव समानपदस्थस्येत्यर्थात्। अयं च क्यङुत्पत्तेः प्राक् सुबन्तेनापि समानपदस्थ इति न दोष इत्याशयः। एतेनैतद्वार्त्तिकस्य नियमार्थत्वमाश्रित्य निषेधसूत्रप्रत्याख्याने ऽपि न दोष इति बोद्ध्यम्। एवञ्च स्नुक्रमोरितिसूत्रस्थवार्त्तिकसमानाकारवा-

सामर्थ्याद्विधीयते। लुटि च क्लृप इत्यादिसौत्रनिर्देशो भाष्यकारव्याख्यानं चेह प्रमाणमिति भावः। क्लृप्सीष्टेति। लिङ्सिचावात्मनेपदेष्विति कित्त्वान्न गुणः। वृत्। वृत्त इति। वृतु, वर्त्तनइत्यस्मात्क्विप्। घट, चेष्टायाम्। ये धातवो ऽन्यत्राधीता इह पठ्यन्ते तेषामर्थनियमः। ये त्विहैव पठ्यन्ते तेषामुपसर्गादिना ऽर्थान्तरपरत्वे ऽपि मित्त्वमस्त्येवेति न्यासधातवृत्त्यादिषु स्थितं तदेतद्ध्वनयन्नुदाहरति। विघटयतीति॥

व्यथो लिटि॥ हलादिःशेषापवाद इति। अभ्यासान्तर्गतयकारस्य निवृत्तेरपवाद इत्यर्थः। अत एवाह। थस्येति। ञित्वरा। ७८१। आदित्त्वमात्मनेपदमात्रफलकम्। रुष्यमत्वरेति निष्ठायामिटो विकल्पितत्वादिति मैत्रेयहरदत्तादयः। दॄ भये। ८११। आभरणकारमतमाह। केचिदिति। माधव इति। तस्यायं भावः। सूत्रे दीर्घान्तपाठस्तावदविगीतः। व्याख्यातारो ऽपि दॄ विदारणे इति व्याचख्युः। उक्तं चैतत्। ह्रस्वान्ताभ्युपगमे हि शॄदॄप्रां ह्रस्वो वेति हृणातेर्विकल्पेन ह्रस्वविधानमनर्थकं स्यात्। धातुद्वयेन दद्रतुर्ददरतुरिति रूपद्वयसिद्धेः। न चार्थभेदः। धातूनामनेकार्थत्वादिति। लुग्विकरणेति। स्वरतिसूतीति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथग्ग्रहणमस्याः परिभाषाया

---

त्तिककरणेन तत्प्रत्याख्यानरीत्यैतत्प्रत्याख्यानमपि भाष्ये ध्वनितमित्यनेन सूचितम्।

अर्थनियम इति। अन्यथा शविकरणानां घटादिपाठादेव सिद्धौ ध्वनशब्दइत्यादेर्बहिर्भूतपाठस्य वैयर्थ्यापत्तिरिति भावः। मित्त्वमस्त्येवेति। अर्थनिर्देशस्य क्रियावाचित्वबोधार्थं चारितार्थ्यादिति भावः। न्यासेति। अनेन भाष्यमत्रोदासीनमिति सूचितम्।

निवृत्तेरिति। हलादिःशेषेण प्राप्ताया इत्यर्थः। अत्र यद्वक्तव्यन्तदन्यत्रोक्तम्। हरदत्त इति। अत्रारुचिर्बीजमादित्त्वं रुष्यमत्वरेत्यस्य भावादिकर्मणोर्निष्ठायामप्रवृत्तिज्ञापनार्थम्। एवञ्च विभाषा भावादिकर्मणोरित्यर्थन्तत् आत्मनेपदन्तु अकारेणापि सिद्ध्यति। ज्ञापकमिति। न च सूङ इत्युक्ते ऽपि साहचर्यादलुग्वि-

ज्ञापकम् । परिभाषाभ्यामिति । उक्तपरिभाषयोः परस्परविरोधे सति उभयोरप्यप्रवृत्तिः । अथवा अवधारणांशपरित्यागेनाविरोधेन समुच्चय इति भावः । मारणतोषण ॥ माधव इति । अम लश, आलोचनइत्यस्य हि निशामनइति रूपम् । आलोचनञ्चचुर्जन्यं ज्ञानमेव । पश्यार्थैश्चानालोचनइत्यादौ वृत्तिकारादिभिस्तथैव व्याख्यातत्वादिति भावः । ज्ञापनमात्रमिति । स्ताघम्बुङ्स्वेति सूत्रे ज्ञीप्स्यमान इति प्रयोगादिति भावः । एष्वर्थेष्विति । पशुं सञ्ज्ञपयति । मारयतीत्यर्थः । विष्णुं विज्ञपयतीति । सन्तोषयतीत्यर्थः । सञ्ज्ञपयति रूपं दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञापयति शरन्तीक्ष्णीकरोतीत्यर्थः । स्यादेतत् । माधवमते ज्ञीप्स्यमानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थस्य का गतिस्तत्राह । ज्ञप मिच्चेति । ज्ञापनमिति । तथा च बोधने धातुभेदेन रूपद्वयं फलितमिति भावः । यदाह देवः । जानातीति ज्ञि सिद्ध्येत् ज्ञपयति तु पुनर्मारणादौ घटादेर्णौ मित्त्वे ऽपीदमेव ज्ञप मिदिति पदं ज्ञापने मारणादौ । तेनार्थाज्ज्ञापने ऽर्थे ज्ञपयति पदवज्ज्ञापयेदित्यपि स्यादिति । कम्पने चलिः ॥ धातुनिर्देशे इक् । एवं छदिरूर्जने । जिह्वोन्मथने लडिरित्यत्रापि बोध्यम् । घटादयो मितः ॥ माधवादीनां व्याख्यामाह । मित्सञ्ज्ञा इति । मकारानुबन्धा इत्यन्ये । ज्वल ह्वल ॥ एषां मित्त्वमिति । मित इत्यनुवृत्तं क्लेशेन व्याख्येयमिति भावः । ज्वलह्वलह्मलनमोनुपसर्गा वेति पाठान्तरम् ।

---

करणस्यैव ग्रहणं भविष्यतीति वाच्यम् । तस्य बहुशो व्यभिचारात् । लुग्विकरणस्यैवेति नोक्तं लक्ष्यानुरोधेन तथैव कल्पनात् । ध्वनिता चेयं परिभाषा यस्य विभाषेत्यत्र भाष्ये । तत्र हि विदित इत्यत्र निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधः । विभाषा गमहनविदविशामिति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम् । तत्र चो हेतौ । यतोयं लुग्विकरणो ऽतो विशिसाहचर्याच्छविकरणस्यैव ग्रहणं न तु हनिसाहचर्याददादेरेतत्परिभाषानुग्रहायेति तदाशयः । ज्ञीप्स्यमान इति । बोधयितुमिष्ट इति तदर्थः । तथा चेति । माधवमते इति

तत्र न कश्चित् क्लेशः। प्राप्तविभाषेति। ज्वलादीनां पूर्वञ्च पाठान्नमेश्चमन्तत्वादिति भावः। कथं संक्रामयतीति। यत्तु सुधाकरेणोक्तम्। इत्वापि घञन्तात्स्विजिति। तन्न। नोदात्तोपदेशस्येति वृद्धिनिषेधादिति भावः। वृत्तिन्यासादीति। तथा हि। न पादमीति सूत्रे आयामयति इत्युदाहृत्य यमोपरिवेषणे इति मित्त्वं प्रतिषिध्यतइति वृत्तावुक्तम्। तत्र न्यासे न कम्यमिचमामित्यतो नेत्यनुवर्त्ततइत्युक्तम्। तथा मैत्रेयादयो ऽपि नेत्यनुवर्त्य व्याचख्युः। एवं हि निषेधानन्तरं पाठ उपपद्यते। अन्यथा न कमीत्यतः प्रागेव चिसूत्री पठ्येतेति भावः। सामर्थ्यादिति। तपरकरणलभ्यन्तत्कालावधारणं ह्रस्ववत्सु चरितार्थम्। दीर्घवत्सु बाधात्त्यज्यतइति भावः। ८४०५। टुवम। केचिदमुमुदितं पठन्ति। वान्त्वा वमित्वेति उदाहरन्ति च। तदनाकरम्। तथा हि। काशिकायामादितश्चेति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वान्त इत्यत्रेडभावः साधितः। उदित्त्वे तु यस्य विभाषेत्येव सिद्धेस्तदसङ्गतं स्यात्। एवञ्च क्त्वाप्रत्यये वमित्वेत्येव साधु। सुधाकर इति। अन्ये ढद्वरणइति सगुणमेव पठन्ति। भागवृत्तौ त्विति। अत्रेयमुपपत्तिः। न प्रसददेति सूत्रे आदिग्रहणं व्यर्थम्। वेत्यकारान्तसङ्घातग्रहणेनेष्टसिद्धेः। एवञ्चादिग्रहणमौपदेशिकत्वप्रतिपत्त्यर्थम्। अनुबन्धाश्चैकान्ताः। यद्वा। वमेरादौ लकारो लुप्तनिर्दिष्टः। तथा चोपदेशे वादित्वाभावान्निषेधो न। "वेमुश्च केचिद्रुधिर"मित्यादिप्रयोगास्तेषामनुकूला इति। रम, क्रीडायाम्। अयमुदिदिति मत्वा वोपदेवादयो रन्त्वा रमित्वेत्युदाजह्रुस्तन्मद्धान्तो न सहन्तइति माधवः॥

---

शेषः। क्लेशेनेति। षष्ठ्यनुरोधाद्भावप्रधानत्वेनेत्यर्थः। ह्रस्ववत्स्विति। फणस्यमुस्वनेष्वित्यर्थः। त्यज्यते इति। तत्कालावधारणमित्यनुकृष्यते अकारस्य स्थानित्वन्तु न त्यज्यते तत्त्यागे मानाभावात्। अत एव दीर्घोपधानां फणादौ पाठश्चरितार्थ इति भावः। रन्त्वेति। अनुदात्तोपदेशेत्यनुनासिकलोपः।

पाघ्राध्मा ॥ पा, पाने । पा, रक्षणे इति तु न गृह्यते लुग्विकरणत्वा-त् । इस्थेति सौत्रो निर्देशः । इश्यर्तीति पाठस्त्वचित एव । इत्यच्छ-कशकारादाविति । तेन पपे इत्यादौ न । शितीति कर्मधारयस्योक्त-त्वात् । बहुव्रीहौ तु स्यादेव दोषः । अत एवार्त्तिसर्त्तीजींघोत्यादिक-योर्नेह ग्रहणम् । शपः श्लुना ऽपहारात् । चानशः सम्भवे ऽपि शका-रादित्वाभावात् । यत्त्वाहुः । शित्यचीति व्याख्यानाच्चानशि नेति । त-न्न । उक्तरीत्या कर्मधारयस्यैवावश्यकत्वे ऽचीत्यस्य वैयर्थ्यात् ॥

सदेः परस्य ॥ सदिसञ्ज्योरिति पाठस्तु वृत्त्यारूढोपि भाष्याननुगु-णत्वादुपेक्ष्यः । शद्लृ शातने । विशीर्णतायामिति । तथा च तैत्तिरीये श्रूयते । पद्म शीयते इति । शातनन्त्विति । शदेरेव च्चि णिचि शदेर-गताविति तत्वे ल्युटि च शातनमिति रूपम् । तथा चास्यैव धातोरिदं रूपं प्रसिद्धञ्चेति तन्निर्देशः । गम्लृ, गतौ डुपचष्, पाकइत्यादिर्वदिति

---

लुग्विकरणत्वादिति । पै इत्यस्य तु शिति पारूपाभावान्न ग्रहणमिति बोद्धव्य-म् । सौत्र इति । अन्यथा शब्दपरत्वेनागमो न स्यात् गुणश्च स्यादिति भावः । विकरणस्तु कर्त्रर्थकत्वाभावान्नेत्यपि वक्तुं शक्यम् । अत एव प्रकृते ऽनिसर्तीति प्रयोगः सङ्गच्छते । शकारादित्वाभावादिति । न च शबाक्षिप्ते सार्वधातुके श्लुलु-काविति परनिमित्ततया स्थानिवत्त्वेन शपमादाय दोष इति वाच्यम् । आक्षेपे आ-क्षिप्तस्य वा शाब्दे ऽन्वये मानाभावत् । अत एव जुहुत इत्यादौ न गुणः श्तिपि तु नादेशस्तयोः सर्त्तिशास्त्यर्त्तिभ्यश्चेति निर्देशादिति भावः । यद्यपि शतुस्तयोः शकारादेः सम्भवो ऽस्त्येव तिष्ठन्मूत्रयतइत्यादाविव तथापि दृशिशदिसाहचर्यान्न तयोर्ग्रहणमिति बोद्धव्यम् । अत्र परं दृढतरं मानं चिन्त्यम् । शित्यचीति । शिद्रूपे ऽचीत्यर्थः ।

भाष्याननुगुणत्वादिति । स्वञ्जेरुपसंख्यानमिति वार्त्तिकादिति भावः । अ-स्यैव धातोरिति । स्वनिष्पन्नरूपेणैव प्रायेण धातुष्वर्थनिर्देशादिति भावः । नन्वेवं श-दने इत्येव वक्तुं युक्तमत आह । प्रसिद्धं चेति । तत्त्वप्रसिद्धमिति भावः । तत्र दृ-ष्टान्तमाह । गम्लिति । यथा गतिपाकादिभिः शब्दैः फलवाचकैरपि तदनुकूलव्या-पारार्थकस्यार्थनिर्देशस्तथा प्रकृते शातनान्यविशरणार्थकस्य शातनपदेनार्थनिर्देश

भावः । कुच, सम्पर्चनेत्यादि । ८५५ । कुच, शब्दे तारे इति पठितस्यैव पुनः पाठः संपर्चनादावेव उवन्तादित्वप्रयुक्तो णो यथा स्यात् । मेधृ, सङ्गमे च । ८६२ । प्रजायै गृहमेधिनामिति लक्ष्यम् । गृहैर्मेधन्ते सङ्गच्छन्ते इति विग्रहः । बुधिर्, बोधने । पूर्वोत्तरेति । दैवादिकैर्नित्यात्मनेपदिभिश्च साहचर्यात्तथाभूतस्य तस्यैव ग्रहणमित्यर्थः । यत्तु माधवेनोक्तम् । अकर्मकैः साहचर्यादिति । तदुपेक्षितम् । सकर्मकादावपि चिणदर्शनात् । तथा च माघः । "क्रमादमुं नारद इत्यबोधि सः" । श्रीहर्षोऽपि । "अबोधि तज्जागरदुःखसाक्षिणी"ति । उबुन्दिर् । बुन्दित्वा । बुन्त्वा । निष्ठायाम् । बुन्नम् । निशामनञ्चाक्षुषज्ञानम् । वेणृ । ८७० वादित्रस्य वाद्यभाण्डस्य वादनार्थमादानं वादित्रग्रहणम् । नान्तोपीति । इत माता मद्विषमन्ववेनदित्यत्र भाष्यकारैस्तथोक्तत्वादिति भावः । व्यय, गतौ । ८७४ । वित्तत्यागे तु नित्यमात्मनेपदी गतः । अयञ्चुरादावदन्तः । स्पश, बाधनस्पर्शनयोः । ८८० अपस्पशत् । अत्स्मृदृत्वरप्रथेत्यादिना अभ्यासस्यात्वम् । सन्वदित्वापवादः । स्वामी तु पष इत्येके इत्याह । अत्र पाठे यतो व्रतानि पस्पशे इत्यादयः प्रयोगाः प्रतिकूलाः । पस्पशा । यङन्तादचि टाप् । सञ्ज्ञापूर्वकस्य विधेरनित्यत्वान्नाभ्यासदीर्घ इति माधवः । पसेति दन्त्यान्तः सौत्रो धातुः । पसतीत्यादि । यङ्लुकस्तु । जपजभेत्यादिना ऽभ्यासस्य नुक् । पम्पस्यते । पम्पसीति । पम्पसइति कण्ड्वादिः । पम्पस्यति । हृञ् । ८९२ । भारं हरति । ग्रामं प्रापयतीत्यर्थः । अंशं हरति । स्वीकरोति । स्वर्णं हरति । चोरयति । पापं हरति । नाशयति ॥

---

इति भावः । आत्मनेपदी गत इति । यद्यपि पूर्वं न पठितस्तथा ऽपि क्व चिद्धातुवृत्तौ पठ्यतइत्यभिप्रायेणेदम् । माधव इति । पृषोदरादित्वाद्ध्रस्व इत्यन्ये । अव्युत्पन्नः सर्वेतरतन्त्रसिद्धान्तबाधकविचारार्थः पस्पशाशब्द इत्यन्ये । उभयतःस्पाशेत्यप्यस्यैव ।

आदेच उप॥ लिटि धातोरित्यतो धातोरित्यनुवृत्तमेचा विशेष्यते। तदाह। उपदेशे एजन्तस्येति। धातोः किम्। गोभ्याम्। नैभ्याम्। अस्ति ह्यत्रापि गमेर्डोस्। ग्लानुदिभ्याण्डै।रित्युपदेशे एच्। उपदेशे किम्। चेता। स्तोता। लाक्षणिकत्वादेवात्र न भविष्यतीति चेत्। एवन्तर्हि वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इतिज्ञापनार्थमिदम्। तेन क्रापयतीत्यादौ क्नतात्वानां पुक् सिद्ध्यति। अशितीति पर्युदासे बहवो दोषाः। तथा हि। सुग्लः। सुग्ला। सुग्लानः। आकारान्तलक्षणाः काङ्युचो न स्युः। प्रत्ययनिमित्तं ह्यात्वम्। आदन्ताच्च प्रत्यय इत्यन्योन्याश्रयात्। किञ्च जग्ले इत्यत्राभ्यासे इकारः श्रू-

---

धातोः किमिति। ढौकितेत्यादावेजुपदेशसामर्थ्यात्समुदायोपदेशायावयवानां नान्तरीयकतयोच्चारणेनैवोदेपशाभावाच्च न दोष इति प्रश्नः।

उपदेशे एजिति। डोइत्याद्योकाराद्युच्चारणन्तु सर्वनामस्थानविषये गोतो णिदित्यस्य तन्निमित्तकवृद्धेश्च परत्वात्प्रवृत्तौ चरितार्थम्। न चोपदेशइत्येजन्तविशेषणम्। धातोरित्यस्याभावे तदलाभादिति भावः। अत्र वदन्ति। उणादीनामव्युत्पन्नत्वे नेदं फलम्। किं च धातोरित्यनुवृत्तावुदीचां माङ इत्यादावात्वानापत्तिरनुबन्धलोपोत्तरन्तद्विनिर्मुक्तस्यैव धातुताया न धातुलोप इति सूत्रे भाष्यकैयटयोः स्पष्टत्वात्। किं च तस्य धातुसञ्ज्ञायां ङान्तस्य धातुत्वे एजन्तस्य धातुत्वाभावः। न च तत्सत्त्वेपि तत्प्राग्भागस्यैव धातुत्वमिति न दोषः। एवं हि ङकारसत्त्वेपि धातोरुपदेशे एजन्तत्वानपायेनात्वे बाधकाभावादस्य निर्देशस्य नानुबन्धकृतमनेजन्तत्वमित्यर्थज्ञापकता भाष्योक्ता ऽसङ्गता स्यात्। तस्मादुपदेशे इति षष्ठ्यर्थे सप्तमी तस्य चैच इति विशेषणमेजन्तस्योपदिश्यमानस्येत्यर्थ इति भाष्योक्तमेव साधु। गोभ्यामित्येवोपदेशपदफलम्। नौद्व्यच इत्यादिस्त्वनुवादो नोपदेश इति स्पष्टं व्यङ्विधायके भाष्ये। उणादीनामव्युत्पन्नत्वाड्डो इत्यादीनामुपदिश्यमानैजन्तत्वमस्तीति न वाच्यम्। एवञ्चोपदेशग्रहणस्य वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तिज्ञापकतापि चिन्त्या। अत एव भाष्ये गोभ्यामित्येतद्व्यावृत्तये धातुग्रहणानुवृत्तिमुक्त्वा ऽथापि निवृत्तन्तदित्याद्युक्तम्। मेङादौ परङकारसत्त्वे तस्योपदिश्यमानैजन्तत्वाभावेन तस्य नानुबन्धकृतमनेजन्तत्वमित्यर्थज्ञापकता सुस्था। अनुबन्धलोपे तु एजन्तत्वाभावे पि धातुसञ्ज्ञादिकार्यार्थन्तावतो ऽप्युपदेशे तात्पर्याच्चोपदिश्यमानस्यै-

येत द्विर्वचने ऽचीति वचनात् तस्मात्प्रसज्य प्रतिषेध एवायम्। विषयसप्तम्यान्तु पर्युदासे ऽपि न क्षतिः। अत्र च क्त्वावामस्येति सूत्रेण कत्वाधनार्थं पुनरपिविधानं ज्ञापकम्। तदाहुः। अनैमित्तिकमात्वम्। शितितु प्रतिषेध इति। तदेतदाह। न तु शितीति। इत्सञ्ज्ञकशकारादौ प्रत्यये परे नेत्यर्थः। धातुग्रहणाच्छितस्य प्रत्ययस्याशितीति कर्मधारयेण विशेषणात्। यदि तु शितीति बहुव्रीहिः स्यात्तर्हि जग्ले इत्यादि न सिद्ध्येत्। एशः शित्त्वात्॥

आतो लोप इटि च॥ अजाद्योः किम्। ग्लायते। यक्। जाग्लायते। यङ्। दासीय। इट्। आर्धधातुकयोः किम्। यान्ति। व्यतियये। कर्मव्यतिहारे तङ्। लुङ्। उत्तमैकवचनमिट्। द्यै, न्यक्करणे। द्यायति। दद्यौ। घुमास्थेत्यत्रेति। व्याख्यानात्। तन्त्रान्तरस्येति जहातीति श्यना निर्देशाच्चेति भावः। विभाषा घ्रेति। श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः। एवं शाच्छासेति युग्विधावपि बोध्यम्। तेनास्य अर्त्तिह्रीति पुगेव। सापयति॥

ऋतश्च संयोगादेर्गुणः॥ ऋच्छत्यॄताम्॥ इह सूत्रद्वये ऽपि प्राचा अवृद्धिनिमित्ते लिटीति व्याख्यातम्। तत्सूत्राननुगुणम्। इयतेर्दीर्घ लिटीति प्रक्रान्तत्वादवृद्धिनिमित्ते इति कुतस्त्यम्। ननु स्वविषये वृद्धिर्बाधिकेति चेन्न। परत्वेन गुणस्यैव न्याय्यत्वात्। यत्तु पूर्वविप्रतिषे-

---

जन्तत्वसत्त्वेन भवत्येवात्वम्। युग्विधौ गामादाग्रहणेष्विवादुधाप्य गत इत्यादिभाष्यप्रयोगात् लाक्षणिकाकारान्तस्यापि ग्रहणमिति ज्ञापयतीत्यादौ न दोषः। अत एवौत्सूत्रादौ वर्णग्रहणे ऽपि लक्षणप्रतिपदोक्तपरिभाषा भाष्ये सञ्चारिता। चेतेत्याद्यप्यस्य व्यावर्त्यमित्यन्यदिति। अन्योन्याश्रयादिति। पूर्वमनिष्टे प्रत्यये कृते आत्वे तु परदेशस्यावष्टब्धत्वादेषामप्राप्तावनिष्टं स्पष्टमेव। न क्षतिरिति। सुग्ल इत्यादिलक्ष्ये न क्षतिरित्यर्थः। विषयसप्तम्यामपि परनिमित्तत्वसत्त्वाज्जग्ले इत्यस्य त्वसिद्धिरिति बोद्धव्यम्। प्रसज्यप्रतिषेधेपि शितीति विषयसप्तमीति बोद्धव्यम्।

कर्मव्यतिहारे इति। याधातोरिति शेषः।

धेन वृद्धिरिति। तन्निर्मूलं निष्फलञ्च। तदेतदाह। गुणः स्याद्विटीति च॥

गुणोर्त्ति॥ अर्त्तीति श्वादिकयोश्छान्दसेन लुका निर्देशः। ऋग्रहणमेव तु सुकरमिति हरदत्तः। तन्न। यङ्लुग्व्यावृत्त्यर्थत्वात् श्तिवनिर्देशस्य। अकारे विधेये गुणग्रहणं चिन्त्यप्रयोजनम्। अयङ् यि क्ङितीति सूत्रात् योत्यनुवर्त्तते तच्च लिङो विशेषणम्। तदाह। यादीति। तेनेह न। संस्वृषीष्ट॥

सर्त्तिशास्त्यर्त्तिभ्यश्च॥ श्वाद्योरङ् नेति। तथा च प्राचा श्वादौ यदुदाहृतन्तदाकरविरुद्धमिति भावः। प्रसवो ऽभ्यनुज्ञानमिति। सवितुः प्रसवे इत्यादौ तथा दर्शनात्॥

हुश्नुवोः सार्वधातुके॥ हुश्नुवोः किम्। योयुवति। नोनुवति। असंयोगपूर्वेति किम्। अक्ष्णुवन्ति। असंयोगपूर्वग्रहणमोर्विशेषणं न तु प्रत्ययस्य। तेनाप्नुवन्तीत्यत्रापि यण् नेति भावः। स्यादेतत्। हुश्नुग्रहणं व्यर्थम्। योयुवतीति यङ्लुगन्तस्य प्रकारान्तरेणैव वारणात्। तथा हि छान्दसो यङ्लुक्। तच्च प्रत्ययस्यार्द्धधातुकत्वादेव यणन

---

पूर्वविप्रातिषेधेनेति। गुणे वृद्धौ प्रक्रियागौरवं स्यादितीष्टवाचिपरशब्दाश्रयेण पूर्वं वृद्धिस्वीकार एवोचित इति तदाशयः। तन्निर्मूलमिति। ननु ऋधातोर्लिटि गुणे वृद्धिः पूर्वविप्रतिषेधेनेति वार्त्तिकं मूलमत आह। निष्फलमिति। न च पूर्वविप्रतिषेधाभावे परत्वाद् गुणे सकृद्गताविति न्यायाद्वृद्धिर्दुर्लभेति वाच्यम्। गुणप्रवृत्तेः पूर्वमत उपधाया इत्यस्याप्राप्त्योक्तन्यायस्योक्तिसंभवात्। स्पष्टं चेदं कैयटे। प्रक्रियागौरवन्तु न वचनापेक्षयाधिकं दुष्टमिति तदाशयः।

लुकेति। न्यायप्राप्तया तदनुत्पत्त्यर्थः।

व्यर्थमिति। न चायुवन्नित्यादौ दोषः। तत्राडागमस्याभीयासिद्धत्वादेव यणभावासिद्धेः। लावस्थायामडागमे ऽपि तत्स्थान्याश्रयमित्यासिद्धत्वं बोद्धव्यम्। असिद्धवत्सूत्रप्रत्याख्याने तु एरनेकाच इति योगं विभज्य इणो यणित्यनुवर्त्त्य योगविभागस्येष्टसिद्ध्यर्थतया व्याख्यानेन चाडादिसहिताऽनेकाचश्चेद्यण् तदा इवर्णान्तस्येण ए-

भविष्यतीति चेत्सत्यम्। ङस्नुग्रहणादेव ज्ञापकात् भाषायामपि क्व चिद्यङ्लुग्भवतीति भाष्यकाराः। चान्द्रास्तु यङ्लुको भाषाविषयत्वं निःसङ्कोचमेवेच्छन्ति। ज्ञापकतामेव ध्वनयितुमिहानेकाच इत्यस्यानुवृत्तिः प्रदर्शिता। तेन युवन्ति नुवन्तीत्यादेर्व्यावृत्तौ सत्यां हि ङस्नुग्रहणस्य ज्ञापकता निर्वहति। अन्यथा सार्वधातुकपरयोर्ङस्नुवोरनेकाच्त्वाव्यभिचारात्किन्तदनुवृत्त्येति दिक्। इङादेशस्यैवेति। न चास्यापि ग्रहणमस्त्विति वाच्यम्। गाते इत्यादौ तङं प्रवर्त्य ङकारस्य चरितार्थत्वात्। आदेशङकारस्तु न चरितार्थः। स्थानिवद्भावेन ङित्त्वादेव तङः सिद्धत्वादिति भावः। अुङ्गे इति। कुङ्गोस्युरिति ङस्य ञः। ९५०। क्नुङ् इति। अस्मात्पचाद्यचि विक्नवः। बवयोरभेदात् विक्लव इति माधवः। रुङ्। ९५१। रेषणं हिंसेति। रिषेर्हिंसायां पठितत्वात्। वोपदेवो ऽप्याह। रुङ् वधे गत्यामिति। प्राचा तु भाषणे चेति पठितम्। व्याख्यातृभिश्च रोषणे चेति पाठान्तरमुपन्यस्य रोषणं कोपोत्पादनमिति व्याख्यातं तत्सर्वं माधवादिविसंवादादुपेक्षितम्। प्रणिमयतइति। नन्विह नेर्गदेति कथं स्यात्। शिद्विषये आत्वाभावेन माङ्रूपाभावात्। किञ्च। अशिद्विषये कृतात्वे ऽप्यस्मिंस्तत्त्वन्दुर्लभम्। प्रतिपदोक्तस्यैव माधातोर्ग्रहणौचित्यात्। गामादाग्रहणेष्वविशेष इति चेन्मीनातिमिनोत्योरपि कृतात्वयोरतिप्रसङ्ग इत्यत आह तच्चेति। इष्टत्वादिति। अयं भावः। दाधाघ्विति सूत्रे प्रणिदयते प्रणिधयतीत्यत्र णत्वसिद्धये भाष्यकारैरित्थं सिद्धान्तितम्। णत्वविधौ घुमेत्यस्य स्थाने घुप्रकृतिमाङिति पठनीयम्। घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वः प्रकृतिश्च कस्येत्याकाङ्क्षायां सन्निधानात्पूर्वोत्तरयोरेव। अतो न का-

---

वेति नियमान्न दोषः। द्वितीयं त्वेरसंयोगपूर्वस्येत्येतत् अनेकाच इत्यनुवृत्त्या विद्ध्यर्थं बोद्धव्यम्। न चाचारक्विपि भानवतीत्यादौ दोषः। परेण गुणेन बाधात्। अयञ्च मद्ध्येपवादन्यायेनोवङ एवापवाद इति भावः। आरभ्यमाणे ऽप्यस्मि-

प्यव्याप्तिः। नापि मा मानइत्यत्र मीनातिमिनोत्योश्चातिव्याप्तिः। मा-ङो ङकारानुबन्धस्यैवोपात्तत्वादिति । दिग्यादेशेनेति। इयतेर्लिटि द्वित्वं प्राप्तं दिग्यादेशस्य । तत्र विशेषविहितेन दिग्यादेशेन द्वित्व-शास्त्रस्य बाधः। पीप्याभ्यान्द्वित्वं न बाध्यते । विषयसप्तमीमाश्रित्य त्विडुत्पत्तेः प्रागेव तयोः प्रवृत्तत्वात्। दिग्यादेशविधौ तु परसप्तम्येव न तु विषयसप्तमी। लक्ष्यानुरोधात्। तदेतत्सूचयति। इष्यतइति॥

स्थाघ्वोरिच्च॥ इहात्मनेपदेष्विति नानुवर्त्तितम्। परस्मैपदेषु गा-तिस्थेति लुकः प्रवृत्तेः। डीङ्। विहायसा आकाशेन। वा तु पुंस्याका-शविहायसी इत्यमरः। विहायसामित्यनाकरः पाठः॥

मान्बध॥ अभ्यासस्य विकार आभ्यासः स चेत्त्वमेव। तथा हि। दीर्घश्रुत्याऽच इत्युपस्थितम्। न च मानादीनामभ्यासविकारभूतोऽच् इकारादन्यः सम्भवति। यदि तु ह्रस्व इत्येव गृह्येत तर्हि तद्धितनिर्दे-शो व्यर्थः स्यात्। स हि अभ्यासे ईकारश्रवणार्थङ्क्रियते। अन्यथाऽ-जन्तस्याभ्यासस्य विधीयमानो दीर्घः हलादिःशेषमात्रं प्रतीक्षेत न तु सन्वदित्त्वमपि तदेतदाह। इकारस्येति। अत्र न्यासकारः। धा-तोः कर्मण इति सूत्रे वाग्रहणं विभज्य त्रिसूत्रीविशेष्यतया संबध्यते। सा च व्यवस्थितविभाषा। तेनेह सूत्रद्वये ऽर्थविशेषोपहितेभ्य एव सन्निति। स च विशेषो मुनित्रयेण साक्षादनुक्तोपि वृत्तिकारादिभि-

---

न्सूत्रे इति भाष्यात्। एतदर्थमसिद्धवत्सूत्रारम्भएव श्रेयानिति परे। चान्द्रास्त्विति। अत्रारुचिबीजन्तु पाणिनिसूत्रभाष्यविरोधः। इति भाव इति। व्याख्यानादिति त-त्त्वम्। विशेषविहितेनेति । सत्यपि संभवे बाधनं भवतीति न्यायात्। अत एव यासुड्विषये सीयुड् नेति भावः। पीप्याभ्यामिति । प्यायः पी चक्षिङः ख्याञ् इदमस्तेर्भूरित्यादीनामप्युपलक्षणम्। लुकः प्रवृत्तेरिति। न च घेटो ऽधासीदित्यादौ दोषः। स्थासाहचर्येण घोरपि परस्मैपदे ऽप्रवृत्तेरिति भावः। एतदपेक्षया ऽनुवृ-त्तिरेव लघीयसी। तस्य स्वरितत्वप्रतिज्ञा तु उश्च विभाषोपयमने इत्याद्यर्थमावश्यकी-ति परे ।

रूपनिबद्धः । तद्दर्शयति । गुपेर्निन्दायामित्यादिना ॥

सन्यङोः ॥ सन्नन्तस्येत्यादि । यत्तु प्राचा सन्यङोरिति सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्यानम् । तन्न । प्रतीषिषति अटाट्यते इत्यादौ सन्यङोः प्रकृतिभागस्यैव द्वित्वापत्तेः । अट अटतुरित्यादौ लिट्प्रकृतेर्यथा । न हि निमित्तत्वाविशेषे लिटो न द्वित्वम् । सन्यङोस्तु तदिति सम्भवति । यच्चात्र प्राचोक्तं अपो ऽकारेण सिद्धे सन्यङोरकारोच्चारणमजादेरिति द्वित्वार्थम् । तेन यसनोर्द्वित्वमिति । तन्न । निमित्तस्य कार्यित्वायोगात् । न चाकारोच्चारणस्य सामर्थ्यमिति युक्तम् । अकारफलानां बहूनां सत्त्वात् । तथा हि । पापचक इत्यादावल्लोपस्य स्थानिवत्त्वादत उपधाया इति वृद्धिर्न प्रवर्त्तते । किञ्च दित्सधित्सजिघ्सादिभ्य एकाच्त्वाभावाद्यङ् न । अपि च । दित्स्यन्धित्स्यमित्यत्राचो यति कृते यतो ऽनाव इत्याद्युदात्तः सिध्यति । तथा च प्राचाप्युक्तम् । अजन्तभूतपूर्वादपि यत् । दित्स्यं धित्स्यमिति । किञ्च । पिपठिषि ब्राह्मणकुलानीत्यत्राल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम्न । अपि च । यस्य हल इत्यत्र यस्येति सङ्घातग्रहणमहर्यीदित्यादौ यलोपव्यावृत्त्यर्थमिति सिद्धान्तः । तथा चापापचिष्टेत्यादौ

---

उपनिबद्ध इति । परक्षेत्रे चिकित्स्यः । जुगुप्साविरामेत्यादौ विशेषार्थप्रतीतेर्विचिकित्सा तु संशय इति कोशबलात् । गुप गोपने इत्यत्र गोपते इति धातुवृत्तिषु प्रयोगाच्च विशेषलाभ इत्यपि बोद्धव्यम् । आद्युदात्तः सिद्ध्यतीति । यति अतो लोपे यदन्तस्य द्व्यच्कत्वात् । उक्थ्य इति तु च्छान्दसमिति भावः । यदुत्पत्तिवेलायान्द्व्यच्कमित्यर्थे ऽप्यदोषमाह । अजन्तभूतेति । अतो लोप इत्यादावार्द्धधातुकइति विषयसप्तमीति पूर्वं लोपे कृते भौतपूर्विकाजन्तत्वमादाय यदिति यतो नाव इति सूत्रे भाष्ये स्पष्टम् । एवञ्च यदुत्पत्तिवेलायामपि द्व्यच्कत्वमिति भावः । विषयसप्तम्यामपि तद्धितार्थविषये जातस्य द्विगोर्लुगनपत्ये इत्यत्रोक्तं तथा लोपस्यापि परनिमित्तकत्वमस्तीति गणयतीत्यादौ अल्लोपस्य स्थानिवत्वाद्वृद्धिर्नेति बोद्ध्यम् । ननु हलन्तादङ्गादुत्तरस्य यस्य लोप इत्यर्थेन हर्यितेत्यादौ लोपव्यावृत्तौ सङ्घातग्रह-

यल्लोपोप्यकारफलम्। अपि च। पापच्यतेरचो यत्। पापच्यः। हल-न्तत्वे तु ण्यति कथं चिद्यल्लोपे णित्युपधावृद्धौ चजोरिति कुत्वे पापाक्य इति स्यात्। अपि चापापचि फलं स्वयमेवापापचिष्ट वेति। यङ-न्तस्याप्यजन्तत्वे ऽचः कर्मकर्त्तरीति च्लेश्चिण्विकल्पः सिद्ध्यति। तस्मा-त्सन्यङोरिति षष्ठ्येव युक्ता। अत एव यङ्लुकि प्रत्ययलक्षणेन यङ-न्तत्वाद् द्वित्वं सिद्ध्यति। परसप्तम्यान्त्वङ्गकार्यत्वान्न लुमतेति निषेधः प्रवर्त्ततइति दिक्। दानशानौ चेति। आर्जवनिशानार्थाविति भावः। अर्थान्तरे त्विति। गोपनादौ धातुपाठोपात्ते इत्यर्थः। चुरादय इति। तथा चानुपूर्वीमात्रसाम्येपि भ्वादयो भिन्ना एवेत्यर्थः। भेदाभ्युपगम-स्य फलमाह। अनुबन्धस्येत्यादिना। अभेदे तु सनन्तादिवाकर्तृगफ-लाण्णन्तादपि तङ् स्यादिति भावः। इड्गुणाविति। यद्यपि हलन्ता-च्चेति सनः किच्त्वेनापि गुणः सुपरिहरस्तथापीडभावायोक्तहेतुरनुस-र्त्तव्यः। एवञ्च गुणप्रसङ्गस्यैवाभावात्किङ्कित्त्वान्वेषणेनेति भावः। मी-मांसतइति। यत्तूत्तरतन्त्रे वाचस्पत्यादौ मीमांसाशब्दो माङ् मानइ-त्यस्मादुत्पन्न इत्युक्तम्। तद्यदि समर्थनीयमित्याग्रहस्तर्होत्थमाशयः कल्प्यः। इह सन्प्रकृतिस्तावदात्मनेपदार्हा चुरादिकान्निन्नैवेति स्थि-तम्। मान, पूजायामित्यादिवृत्तिकारग्रन्थोपि भङ्क्त्वा व्याख्येय एव।

---

णे न फलमत आह। अपि च पापच्यतेरिति। कथञ्चिदिति। उक्तव्याख्यानेने-त्यर्थः। पापाक्य इति। न च निष्ठायामनिट इत्युक्तेः कुत्वन्दुर्लभं यस्य कुत्वन्तस्य निष्ठायामनिट्त्वेनादोषादिति भावः। भिन्न एवेति। चुरादिभ्य इति शेषः। तेषाञ्च तन्मात्रफलकः पाठ इति भावः। परे त्वेवं सति भ्वादावनुदात्तेषु गुप गोपनइत्यादिः पाठो ऽनर्थकः। तस्माच्छब्विकरणा अप्येते। अत एव दाधर्ती-ति सूत्रे तिजेर्यङ्लुगन्तादात्मनेपदमिति भाष्यं सङ्गच्छते। अन्यथा णिजन्ताद्यङ्-णिलोपयोरपि निपात्यता वक्तव्या स्यात्। गुपादिष्वनुबन्धकरणसामर्थ्यात्सनन्तादा-त्मनेपदमित्यस्य भाष्यस्य सन्प्रकृतिष्वर्थविशेषविशिष्टेषु तत्करणसामर्थ्यादित्यर्थः। मूलद्वयमपि वृत्त्यनुरोधेनेत्याहुः। भङ्क्त्वेति। पूजायां दृष्टान्मानो जिज्ञासापूर्वके

न हि तस्माद्यं सन्। एवं स्थिते सन्प्रकृतिरनुदात्तेदेवेति मानाभावान्ङिदेवास्तु। नुक् च सूत्रे निपात्यताम्। मुण्डमिश्रादिसूत्रे हलक-लयोरदन्तत्ववत्। न च वैयाकरणानामुपायेष्वाग्रहः। "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता" इत्युक्तेः। न चैवं सति मीमेतीसप्रसङ्गः। भ्वादिसाहचर्येणेच्छासन्येव तद्विधानादिति। रभ राभस्ये। राभस्यमुपक्रमः॥

वेः स्कन्देरनिष्ठायाम्॥ अषोपदेशत्वादप्राप्ते विभाषेयम्। यत्तु सात्पदाद्योरिति निषेधे प्राप्ते इति। तन्न। निषेधस्य प्राप्तिपूर्वत्वात्। कृत्यैवेदमिति। एतच्च माधवादिग्रन्थे स्पष्टम्। प्राचा तु विष्कन्दतीत्युदाहृतन्तन्नेति भावः। न सम्बध्यतइति। तथा च पर्युदासाविषयत्वात्परेरुत्तरस्य तिङन्तेपि षत्वं भवत्येवेति भावः। अत एवाह। परिष्कन्दतीति। णम प्रह्वत्वे। अस्य क्वचिदुदित्पाठः प्रामादिकः। अद्दपदिति। द्युतादित्वादङ्। प्राचा त्वसाप्सीत् असाप्सीदिति सिजप्युदाहृतस्तत्प्रामादिकम्। कृषमृषेति वार्त्तिकमध्ये द्दपेः प्रक्षेपोपि प्रामादिक एवेत्यवधेयम्। यम उपरमे। केचिदमुमिदितं पठन्ति। कित निवासे। चिकित्सतीति। रोगमपनयतीत्यर्थः। शत्रुं विचिकित्सति। निगृह्णाति। क्षेत्रे तृणञ्चिकित्सति। अपनयति नाशयति वेत्यर्थः। स्वाश्रयव्रश्चिकित्सत्विति खण्डनम्। तद्व्याख्यावसरे चिकित्सतामिति तु युक्तमिति वर्द्धमानः। तच्च वर्द्धमानस्य प्रमाद इति शब्दकौस्तुभे प्रपञ्चि-

---

विचारे सनित्येवं भङ्ग इत्यर्थः। तस्मादिति। तदर्थकादित्यर्थः। इत्युक्तेरिति। माङ् माने इत्यस्य माने पठितान्माङो विचारे सनित्यर्थः कर्त्तव्यः। अर्थविशेषे ङित्करणात्सनन्तादात्मनेपदम्। भ्वादिसाहचर्येणेति। अत एव प्रनिमीमांसतइत्यत्र नेर्गदेति णत्वं न। तत्साहचर्येणेच्छासनन्तएव माङ्यपि तत्प्रवृत्तेः। अनुदात्तेतश्च हलादेरिति युच् त्वस्मान्न। परेण सनाशंसेत्युप्रत्ययेन बाधात्। अत एव तितिक्षुः क्षमिता क्षमीत्यमरो बीभत्सुरित्यर्जुननाम च सङ्गच्छतइति दिक्।

तम्। तदेतद् ध्वनयति। कश्चिदिति। भज सेवायाम्। ९९५। भज्य-ति। भज्यतइति। यत्तु "हिरण्यदा अमृतत्वं भजन्ते" इति मन्त्रे भ-जिष्यन्तइत्यर्थ इति वेदान्तग्रन्थेषु क चिद् दृश्यते तल्लेखकप्रमादात्। डुवप्। ड्वितः क्त्रिः। उप्त्रिमम्। टुवबिति काचित्कः पाठः प्रामादिकः॥

वेञो वयिः॥ इकार इति। न त्वित्सञ्ज्ञकः। नुमापत्तेरिति भावः। वयेस्तासावभावादिति। न हि तासौ विद्यमानत्वं स्थानिवद्भावेन ल-भ्यमशास्त्रीयत्वात्। न चाचस्तास्वदिति निषेधस्य शास्त्रीयत्वादतिदे-शो ऽस्त्विति वाच्यम्। अच इत्युक्तेरल्विधित्वात्। वद व्यक्तायां वाचि। उवदिथेति। "कूले यदूदिथ वचस्तपनात्मजाया" इति पद्यस्य प्र-माद एव॥

श्वयतेरः॥ पररूपमिति। अतो लोपस्तु न भवति। आर्द्धधातुको-पदेशकाले यदकारान्तमिति व्याख्यातत्वात्। अश्वयीदिति। नन्वि-हान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो ऽस्तु किं णिश्विग्रहणेनेति चेत्सत्यम्। न सिच्यन्तरङ्गत्वमस्तीति ज्ञापनार्थं णि-

---

प्रामादिक एवेति। भाष्ये ऽदर्शनादिति भावः। प्रपञ्चितमिति। वस्तुतस्तु गुपिज्क्तिमना अनुदात्तेत इति भाष्यस्वरसात्कितेरनुदात्तेत्त्वमेवोचितं विचिकित्स-तीति च्छान्दसं कैयटस्य प्रमाद इति वर्द्धमानाशयमन्ये। प्रामादिक इति। मा-धवादिविरोधादिति भावः।

न त्वित्सञ्ज्ञक इति। अनुनासिकपाठाभावादित्यभिप्रायः। उच्चारणार्थानाम-पीत्सञ्ज्ञकत्वमिति भाष्यमते भाविधातुत्वमादायेका निर्देशोयमिति न नुमिति बोद्-ध्यम्। अल्विधित्वादिति। यद्यप्युपदेशइत्यस्य तत्रापकर्षणेन स्थान्युपदेशे एजन्त-त्वमस्त्येवेति न तदर्थं स्थानिवत्त्वापेक्षोपदेशे ऽलत इत्यस्य प्राप्तिश्च तथा ऽप्युपल-क्षणमिदम्। प्रत्यासत्त्या यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशप्रवृत्तिर्मृग्यते तस्य धर्मस्य शास्त्रीयस्यैव ग्रहणान्न दोष इति बोद्ध्यम्।

गुणायादेशयोरिति। गुणे इगन्तत्वाभावाद्वृद्ध्यप्राप्त्यायादेश इति भावः। न सिचीति। सिचि वृद्धेर्येन नाप्राप्तिन्यायेनान्तरङ्गबाधकत्वादिति भावः। ज्ञापनार्थमिति।

श्विग्रहणम् । तेन चिरिणोतिजिरिणोत्योर्यङ्लुगन्तानाञ्चिनीप्रभृतीनाञ्च णिचि अचिरायीत् । अजिरायीत् । अचेचायीदित्यादि सिद्ध्यति । चुलुम्पतीति । लुम्पतीत्यर्थः । उक्तं हि कविकल्पद्रुमे । चुलुं लोपे इति कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति वार्त्तिके व्यवहृतोयम् ॥

इति भ्वादयः ॥

ऋतेरीयङ् ॥ ऋतिः सौत्र इति । तान्तोयं धातुरिका निर्द्दिष्टः । वञ्चिलुञ्च्यृतश्चेत्यनुवादात् । यत्तु वदन्ति । ईयङो दीर्घोच्चारणात्तान्तोयम् । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादिति । तन्न । एरनेकाच इति यणापत्तौ सवर्णदीर्घस्य दुर्लभत्वात् । न च यङेवास्तु अकृत्सार्वेति दीर्घोपपत्तेरित्युत्प्रेक्षोचिता । सन्यङोरिति द्वित्वापत्तेः । कृपायाञ्चेत्येकइति । ऋतीयतइति । कृपापर्यायेषु ऋतीयते स्यात् घृ

---

न्यायसिद्धस्यैव बोधनार्थमित्यर्थः । न त्वपूर्वमिदं ज्ञापकमिति भ्रमितव्यन्तस्यासम्भवादित्यन्यत्र विस्तरः ॥

॥ इति भ्वादयः ॥

अनुवादादिति । ऋदन्तधातोस्तु न तत्र ग्रहणं व्याख्यानात् । कर्मणिङिति साहचर्याच्च हलन्तस्यैव ग्रहणं बोद्ध्यम् । यणापत्ताविति । न च तक्रकौण्डिन्यन्यायेन धात्ववयवभिन्नस्यैकाराभिन्नस्यैव वाचो निमित्तत्वमिति वाच्यम् । ईदृशे स्थले तन्न्यायाविषयस्यान्यत्रोपपादितत्वात् तुल्यन्यायेन णिचि गुणाद्यनापत्तेश्चेति भावः । इत्युत्प्रेक्षेति । तेन सिद्धे ईकारोच्चारणन्तान्तत्वे प्रमाणमित्युत्प्रेक्षेत्यर्थः । ङ्यप्रत्ययेन सिद्धे ईयङ्करणन्तान्तत्वज्ञापनार्थमित्यन्यत् ।

अनुवृत्तेरिति । अर्थान्तरासम्भवाच्च हलादेर्हेरित्यर्थ इति भावः । उच्चारणार्थ इति । यत्राङ्गेन प्रत्ययाक्षेपस्तत्र हकाररूपप्रत्ययस्य हान्तस्य चासम्भवात्प्रत्ययावयवहस्येत्यर्थः । तेन वागुहरिरित्यादौ न दोषः । हुझल्भ्य इति विशेषणन्तु श्रुतत्वाद्धस्यैव । एवञ्च हस्येटा व्यवहितत्वाद्रुदिहीत्यादौ न दोषः । अत्तादित्यत्र तु न धिः । हलस्याल्विधित्वेन स्थानिधर्मत्वाभावेन च स्थानिवत्त्वाभावात् । स्पष्टञ्चेदं प्रकृतसूत्रे भाष्ये । अत एव पुष्णीतात् जहितात् शिष्टात् स्तादित्यादौ शानज्झौ आ च हौ, शा हौ, ध्वसोरेद्धाविति न । तत्रापि हादावित्यर्थात् । पूर्वव्याख्याने तु प-

पायोरिति नानार्थवर्गे च भक्षमन्नेनाभिधानात्। अत्तेनश्च ऋतीया च हृणीया च घृणार्थका इति। जुगुप्साकरुणोभयवाचिना घृणाशब्देनात्तेनादेरर्थनिर्देशं कुर्व्वन्नमरोपि ऋतीयतेर्ह्यर्थतायां प्रमाणमिति धातुचन्द्रोदये उक्तत्वाच्चेति भावः। शेषत्वादिति। यत्तु प्रसादकृता ई-यङभावे आर्त्तिष्टेत्यादावात्मनेपदमुदाहृतम्। तत्प्रामादिकमिति भावः॥

हुझल्भ्यो॥ घसिभसोर्हलीत्यतो हलीत्यनुवृत्तेरिडादेर्न। रुदिहि। स्वपिहि। अत्तादिति। धित्वात्परत्वात्तातङ्। स्थानिवद्भावेन पुनर्धित्वन्तु न। सकृद्गताविति न्यायात्। यद्वा हेर्धिरिति स्थान्यादेशयोर्हधयोरपीकार उच्चारणार्थः। हकारस्य धकार आदेशः। तेन हलीत्यपि नानुवर्त्त्यम्। नापि तातङः प्रसङ्गः॥

अनुदात्तो॥ वनतीतरेषामिति। वनतेरव्यभिचाराच्च विशेषणमिति भावः। यत्तु प्राचा एषामनुनासिकस्य लोप इत्युक्तम्। तन्न। नमिमन्योर्मिहनहमुचमस्जादीनामनन्त्यस्यापि लोपप्रसङ्गात्। अनुदात्तोपदेशा इति। अनुनासिकान्ता इति भावः। तनोत्यादय इति। अत्रापि प्राग्वत्। वधादेशोऽदन्त इति। तेनावधीदित्यत्रातो हलादेरिति वृद्धिर्नेति भावः। चक्षिङ्। अयं दर्शनेपीति। विश्वारूपाभिचष्टे शचीभिरित्यादौ तथा व्याख्यातत्वादिति भावः। अन्तेदित इ-

---

रत्वात्तातङि सकृद्गतिन्यायेनैतानि न। इदञ्च स्थानिवत्सूत्रे भाष्ये स्पष्टम्। न चासम्भवरूपविरोधाभावात्कथं परत्वेन व्यवस्थेति वाच्यम्। युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपासम्भवसत्त्वात् तादृशासम्भव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकालइति युगपदसम्भवः स्पष्ट एवेति दिक्। ध्वनितञ्चेदं स्थानिवत्सूत्रे भाष्ये।

वृद्धिर्नेति। अकारस्य सिच्परत्वेन विशेषणात् अल्त्वस्य तु न वृद्धिण्यल्लोपाविति पूर्वविप्रतिषेधेनाल्लोपेन बाधादिति भावः। वधहिंसायामिति स्वतन्त्रस्य त्वदन्तत्वप्र-

ति। नुम्विधौ गोः पदान्तइति सूत्रादन्तग्रहणानुवृत्तेरिति भावः। एवञ्च चक्षिङ इकारस्थाने अकार एव वक्तुमुचितः। खशादिरिति। तत्फलन्तु प्रागेव प्रपञ्चितम्। अस्यतिवक्तीति। ख्यातीत्यत्र विधिसामर्थ्याद्यत्वं नासिद्धम्। स्वतन्त्रस्य ख्यातेः सार्वधातुकमात्रविषयताया वक्ष्यमाणत्वात्॥

ईशः से॥ ईडजनोर्ध्वे च॥ अत्र सेध्वेइत्येदन्तयोरनुकरणम्। अविभक्तिकश्च निर्देश इत्याकरः। यत्तु प्राचा स्ध्वादौ ईडजनोरितीट् जजनिषीत्युक्तम्। यच्च लिङि ऐडिध्वमित्युक्तन्तदाकरविरोधादुपेक्ष्यं यद्यपि जनेः श्यना भाव्यन्तथापि छान्दसत्वात् श्यनो लुकि उपधालोपाभावे च जनिषे जनिध्वे इति बोध्यम्। णिसि चुम्बने। बभ्रामेति। उदग्रे तवेति मन्त्रे निंसानं जुह्वो मुखइति दन्त्यान्तस्यैव प्रयोगादिति भावः। किं च नुम्विसर्जनीयशर्व्यवायेपीति सूत्रे वृत्तिन्यासपदमञ्जर्यादयः सर्वे ग्रन्था अस्य तालव्यान्तत्वे ऽसङ्गताः स्युः। तत्र हि नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते। तेन निंस्स्वेत्यत्र नेत्युक्तम्। अस्य तालव्यान्तत्वे तु व्रश्चादिषत्वे षढोरिति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति कथं प्रत्युदाह्रियेत। णिजि शुद्धौ। सेट्। व्याघ्रभूतिना णिजं सिचिमिति निरनुषङ्गस्य पठितत्वेन जौहोत्यादिकस्येति

---

तिपादकभाष्यप्रामाण्येन तस्येदृशे विषये प्रयोगाभावानुमानादिति बोद्ध्यम्। तत्फलमिति। पुंख्यानमित्यादौ रुत्वाभावादिरूपम्। विधिसामर्थ्यादिति। न चात्रापि ख्शादेरेवानुकरणं लक्षणवशसम्पन्नञ्च यत्वमिति न सिद्धत्वोपयोग इति वाच्यम्। लौकिके प्रयोगे ख्शेत्यस्य क्वाप्यसत्त्वेन तदनुकरणस्य वक्तुमशक्यत्वात्कृतयत्वप्रयोगस्यख्यानमेवानुकरणादिति भावः। स्पष्टा चेयं रीतिर्दाधा घ्विति सूत्रे भाष्ये।

अविभक्तिकश्चेति। तेन ऐड्ध्वमिति सिद्ध्यति। वृत्तिन्यासेति। भाष्येत्यपि बोद्ध्यम्। तत्रापि निसेः प्रतिषेधो वाच्यः। निस्से निंध्वे इत्युक्तेः। षत्वन्दुर्वारमिति। तथा च निङ्क्षे इति स्यादिति भावः। तालव्यान्तस्याप्यङ्गीकारेण बाधकमित्यन्ये। निरनुषङ्गस्येति। निरनुस्वारस्येत्यर्थः।

एव तत्र ग्रहणात् । शिजि अव्यक्ते । तालव्यादिः । योषेव शिङ्क्ते वितताधि धन्वन्निति दर्शनात् । क्तप्रत्यये शिञ्जितम् । आवश्यकणिन्यन्तान् ङीपि शिञ्जिनी । भूषणानान्तु शिञ्जितमित्यमरः । मौर्वी ज्या शिञ्जिनी गुण इति च । तालैः शिञ्जद्वलयसुभगैरित्यत्रानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् शता बोध्यः । षूङ् । सुषुविषइति । स्वरतावुक्तेन न्यायेनेह नित्यमिट् । सोता सवितेति । स्वरतिसूतीति वेट् ॥

तुरुस्तुशम्यमः ॥ अपिदर्थमिति । यत्तु प्राचा एभ्यः परस्य पितः सार्वधातुकस्येति व्याख्यातन्तत्प्रमादिकमिति भावः । स्मरन्तीति । न्यासकारवर्द्धमानादयः । यत्तु पदमञ्जर्यामुत्तवीतीत्यत्र बहुलं छन्दसीति शपो लुगिति दृश्यते तच्छम्यमोर्वच्यमाणं लेखकप्रमादात्पूर्वं पतितमिति माधवः । आपिशलास्तु तुरुस्तुशम्यमः सार्वधातुके छन्दसीति पठन्ति । इण् गतौ । भौवादिकस्येति । आशीर्लिङीति भावः । विध्यादौ तु समीयादिति न भवत्येव । केचित्तु वीगतीत्यत्र दीर्घमीकारं प्रश्लिष्टमाहुरित्यनुपदं वच्यते तन्मते विध्यादावपि भवत्येवेत्यवधेयम् । वार्तिकमतेनाह । लावस्थायामिति । भाष्यमतेनाह । विवक्षिते इति । उभयथापि द्विर्वचनेचीति सूत्रं नेह प्रवर्तते । आद्ये ऽज्निमित्तत्वाभावात् । द्वितीये त्वनैमित्तिकत्वादिति भावः । वी,गति । एकदेशिमतमाह । अत्रेकारोपीति । तथा च दीर्घोपक्रमे कविकल्पद्रुमः "ई व कान्तिगतिव्याप्तिक्षेपप्रजनखादने" इति । व इत्यदादेः सञ्ज्ञा । प्रयुज्यते च । "न हि तरणिरुदीते दिक्पराधीनवृत्ति"रिति । कर्मव्यतिहारे

---

वार्त्तिकमतेनेति । परसप्तमीति तद्व्याख्यात्रेकदेशीयमतेनेत्यर्थः । भाष्येति । विषयसप्तमीति सिद्धान्तिमतेत्यर्थः । आद्यन्द्विर्वचनेचीत्यत्र भाष्ये ऽन्त्यन्द्वितीये सप्तमे च भाष्ये स्पष्टम् । अनैमित्तिकत्वादिति । आद्यमप्यत्र सुवचम् । उदीतइति । इदंभावे निष्ठायां सप्तम्यन्तम् । उदयकालइत्यर्थः । उदयतीति शेषो भवतीति वे-

 

लङ्। न च न गतिहिंसार्थेभ्य इति निषेधः प्रसङ्गः। तत्पूर्वस्याविर्भा-
वार्थकत्वात्। ख्या प्रकथने। स नेति। अपरे विसर्जनीय इत्युक्तेः। य-
स्मादप्यार्द्धधातुकं स्यात्तर्हि सस्थानो दुर्वार इति भावः। मा माने।
नास्येति। ङित एव तत्र ग्रहणमिति मेङ्धातौ निरूपितत्वादिति
भावः॥

विदाङ्कुर्वन्तु॥ लोटो लुगिति। आम इति सूत्रे लेरित्यनुवर्तयतां
मतेनेदमुक्तम्। निष्कर्षे तु तेनैव लुगित्यवधेयम्॥

उपसर्गप्रादुर्भ्याम्॥ प्रादुरस्येति। प्रादुस् इति सान्तमव्ययम्। प्रादुष्
इति प्राचा ग्रन्थेषु मूर्द्धन्यपाठः प्रामादिकः। मृजू, शुद्धौ। केचिदमुं
षितं पठन्ति तदनाकरम्। भिदादिपाठानर्थक्यापत्तेः। क्ङिन्त्यजा-
दाविति। एतच्चेको गुणवृद्धी इति सूत्रे भाष्यकारैरर्थत उक्तम्। रुदि-
र्। धित्वं नेति। सकृद्गतिन्यायात्। प्रागुक्तरीत्यापि द्वेधा समाधानं
स्मर्तव्यम्। जक्ष, भक्ष। बभ्रामेति। जक्षन् रममाण इत्यादौ जक्षादित्व-
स्य निर्विवादत्वात्। सकलधातुवृत्तिकारैस्तथा स्वीकाराच्चेति भावः।

जुसि च॥ अजादाविति। क्सस्याचीत्यतोऽचीत्यनुवर्त्तत इति भावः॥
यत्तु प्राचा शृणुयुरित्यादौ यासुटो ङित्त्वान्न गुण इत्युक्तम्। तन्न।
जुसि गुणस्य निषेधापवादत्वात्। भङ्क्त्वा व्याख्यानन्तु क्लिष्टत्वादुपे-
क्षितम्। भाष्यारूढस्य स्पष्टसमाधानस्यैव लाभात्। दरिद्रा। प्राचोक्त-
मनुवदति। यत्त्विति। निर्मूलमेवेति। यत्तु व्याख्यातृभिरुक्तम्। आ-

---

स्यन्ये। आविर्भावार्थकत्वादिति। न च व्यतीहारस्यानेकनिष्ठत्वात्कथमत्र स इति
वाच्यम्। कालान्तरस्थतरणौ भेदमारोप्य तदुपपत्तेरित्याहुः।

सकृद्गतीति। अत्र यथा परत्वप्रवृत्तिस्तथोक्तम्। द्वेधेति। तदेव मुख्यम्।
निषेधापवादत्वादिति। श्नो ङित्त्वेऽपि न हि कार्यीति तन्निमित्तनिषेधाप्रवृत्तेः।
अत एव शृणोतीत्यादौ गुण इति भावः।

भङ्क्त्वेति। अयुजुसीति यकारप्रश्लेषेण अयकारादौ जुसीत्येवंरूपमित्यर्थः।

तो लोपे कृते आत औ णल इत्यौत्वं नेत्यादि तद् व्याहतम्। तथा हि। आत औ णल इत्यत्र प्राथम्यादोकारे कर्त्तव्ये औकारवचनं दरिद्रातेरालोपेऽपि श्रवणार्थं सदामभावे लिङ्गमिति पारायणिकहरदत्तमाधवादिभिरुक्तं स्वयमप्युपन्यस्तञ्च। तत्कथमौत्वस्याप्रवृत्तिः। यदपि ददरिद्रेत्यस्य समर्थनार्थमुक्तम्। उच्चारणविशेषाभावादौकारविधानमिति। तदपि रभसात्। तस्मिन्पक्षे आमो दुर्वारत्वात्। विवक्षिते इति। तेन दरिद्र इत्यत्र श्याद्व्यधेत्यादन्तलक्षणो णो न किन्तु पचाद्यजेवेति भावः। अदरिद्रुरिति। सिजभ्यस्तेति झेर्जुस्। लङः शाकटायनस्यैवेत्यादन्तलक्षणो विकल्पस्तु न भवति। परत्वात् श्नाभ्यस्तयोरित्यालोपे आकारान्तस्यैवाभावादिति माधवः। न च दरिद्रा झि इति स्थिते आलोपात्परत्वादपवादत्वाच्च ई हल्यघोरितीत्वं स्यादिति वाच्यम्। अकृतव्यूहा इति न्यायात्। ईत्वे हि हलादित्वं निमित्तम्। तच्च विनाशोन्मुखञ्जुसो भावित्वात्। वश, कान्तौ। भाषायामप्यस्य प्रयोगो दृश्यते। "जयाय सेनान्यमुशन्ति देवा" इति॥ इत्यदादयः॥

चत्वारः परस्मैपदिन इति। ह्नोष्ये इत्यादयस्तु केषाञ्चित्प्रयोगाः प्रामादिका एव। कथन्तर्हि स्मरारौ जुह्वानाः सुरभिघृतधाराहुतिशतैरिति सौन्दर्यलहरी। नायं शानच्। किं तु चानश्। डुभृञ्। ड्वितः क्त्रिः भृत्रिमम्। चान्द्रास्तु ट्वितं पठित्वा भरथुरित्युदाहरन्ति। माङ्। ई हल्यघोः॥ यत्तु प्राचो ग्रन्थं व्याचक्षाणैरुक्तम्। मिमीते। घुमा-

---

भङ्क्त्वेत्यस्य सूत्रं भङ्क्त्वेत्यर्थः। णो नेति। तस्मिन् हि परत्वेन लोपं बाधित्वा युक् स्यादिति भावः। ई हल्यघोरितीत्वं स्यादिति। ई हल्यघोरित्यतो हलीत्यनुवर्तमाने तदपवादभूतमिद्दरिद्रस्येतीत्वं स्यादित्यर्थः। केचित्तु परत्वाल्लोप इति माधवोक्तमसङ्गतमङ्गसंज्ञासापेक्षलोपापेक्षया तन्निरपेक्षजुसोऽन्तरङ्गत्वात्। तस्माद्यदि विकल्पस्यानिष्टत्वे दृढतरं मानन्तदा पूर्वप्रतिषेध एष्टव्यो व्यवस्थितविभाषा वा नो चेत् विकल्पे इष्टापत्तिस्तत्सर्वं माधव इत्युक्त्या ध्वनितमित्याहुः॥ इत्यदादयः॥

ष्ठेतीत्वमिति तत्रामादिकम्। तत्रार्द्धधातुकइत्यनुवृत्तेः। तथा च काशिका। आर्द्धधातुकइत्यधिकारो न ल्यपीति योगं यावदिति। अत एव मातः माथः गाते गाथे इत्यादावीत्वं न। एतेन घुमास्थेतिसूत्रे क्ङिति किन्ददातीति यत्प्रत्युदाजह्रुस्तदपि प्रत्युक्तम्। अत एव तत्र वृत्तिकृता दाता धातेति प्रत्युदाहृतम्॥

दधस्तथोः॥ दध इति कृतद्वित्वाभ्यासकार्यस्य धाञो ऽनुकरणम्। न तु दध धारणे इत्यस्येति व्याचष्टे। द्विरुक्तस्येति। झषन्तस्येति। तेन दधातीत्यत्र न भवति। यद्येवन्धत्तइत्यादावपि न स्यात्। अल्लोपस्य स्थानिवत्त्वेनाझषन्तत्वादत आह। वचनसामर्थ्यादिति। किं च सत्यपि स्थानिवत्त्वे श्रुतिकृतं झषन्तत्वमाश्रयिष्यते। अपि च पूर्वत्रासिद्धे न स्थानिवदित्यपीह परिहारो बोध्यः। यत्तु वदन्ति। नायं परिहारः साधुः। सवर्णादिषु निषेधारम्भेणास्य प्रायिकत्वादिति तन्न। वरे यल्लोपस्वरवर्जन्द्विर्वचनादीनि न वक्तव्यानीति वदता भाष्यकारेण सवर्णादीनां प्रत्याख्यातत्वात्। धन धान्ये। दधन्त इति। ह्रस्वमुदाहरन्ति। अनुनासिकस्य क्विझलोरिति दीर्घस्तु छान्दसत्वान्नेति भावः। सति त्वभिधाने दीर्घो भवत्येवेति बोध्यम्॥ इति जुहोत्यादयः॥

षिवु तन्तुसन्ताने। परिषिषेवेति। स्थादिष्वेवाभ्यासस्येति नियमो

---

अत एव मात इति। लुग्विकरणपरिभाषानिरनुबन्धकपरिभाषाभ्यां माग्रहणे नादादिकस्यापि ग्रह इति भावः। न चायं शब्विकरण एवास्तु माते इत्यादावदुपदेशात्परत्वेन सार्वधातुकानुदात्तत्वापत्तेः। गाते इति। इदञ्चायमदादाविति हरदत्तादिमते। लुङि सिचूलुक्यगातामित्यादावीत्वं नेत्यपि बोद्धव्यम्। न तु दधेति। शपा व्यवधानाद्व्याख्यानाच्चेति भावः। प्रत्याख्यातत्वादिति। एतदुपष्टम्भेनैवेति शेषः। दीर्घो भवत्येवेति। चक्षंसइत्यत्र दीर्घाभावाय सिचूसाहचर्येण तिङ्भिन्नझलादेर्ग्रहणस्यावश्यकत्वेनेदं चिन्त्यम्॥ इति जुहोत्यादयः॥

नियम इति। स्थादयश्च तत्रोपसर्गात्सुनोतीत्यादिसूत्रस्थाः सितात्प्राचीना एव

नेह प्रवर्त्तते। तत्र प्राक्सितादित्यनुवृत्तेः। अस्य चाप्राक्सितीयत्वात्तेनाभ्यासस्य षत्त्वं भवत्येवेति। परस्य तु आदेशप्रत्यययोरिति षत्वम्। न्यषेवीदिति। सिवादीनां वाड्व्यवायेऽपीति विकल्पः। व्युष दाहे। दन्त्योष्ठ्यादिर्मूर्द्धन्यान्तः। तथा च वैद्यके। त्रिकटुकपर्यायो व्योषशब्दः पठ्यते। नृती। ईदित्करणं यस्य विभाषेत्यस्यानित्यत्वज्ञापनार्थम्। तेन धावितमिभराजधियेत्यादि सिद्ध्यति। पुष्प विकसने। ओष्ठ्यान्तः। अकर्मकः। तथा नभः पुष्प्यतु कोरकेणेति श्रीहर्षः। कालात्साधुपुष्प्यत्पच्यमानेष्विति सूत्रम्। अच्। पुष्पम्। सञ्ज्ञायाङ्कन्। पुष्पकम्। तिम ष्टिम ष्टीम। अत्र के चित्तीमेत्यपि पठन्ति। व्रीड। घञ् "व्रीडमावहति मे स संप्रति" इति कालिदासः। "व्रीडादिवाभ्यागतैर्विविल्ये" इति माघः। गुरोश्चेत्यकारः मन्दाक्षं ह्रीस्त्रपा व्रीडेत्यमरः। षह षुह। अत्र सहेः पाठो हरदत्तादीनामनभिमत इति माधवः। तदापाततः। शकिसहोश्चेति सूत्रे षह मर्षणइति वृत्तिमुपादाय ननु षह षुह चक्यर्थइत्यस्यैव परस्मैपदिनोऽनुबन्धकस्य ग्रहणं प्राप्तमित्याशङ्क्यानुबन्धपरिभाषायाः प्रत्ययविषयत्वादुभयोरपीह ग्रहणमिति हरदत्तोक्तेः। अत्राचेयः। परिनिविभ्य इति षत्वम्। परिषह्य इति। तीषसहेतीड्विकल्पस्तु नास्य भवति। सहेति शबन्तनिर्देशादित्याह। अ-

---

गृह्यन्तइति सितात्परस्मिन् षत्वव्यावृत्तिः स्यादिति भावः। अनुवृत्तेरिति। एवञ्च प्राक्सिताच्चेत्स्यादीनामेवेति नियमेन नियमस्य सजातीयापेक्षत्वात्तत्प्राग्वर्तिनामेव स्यादिभिन्नानान्तेन व्यावृत्तिर्न परभूतानामिति अभ्यासस्य परिनिविभ्य इति षत्वं भवत्येव। एतच्च सुविनिदुर्भ्य इयत्र भाष्ये स्पष्टमिति भावः। अनित्यत्वज्ञापनार्थमिति। अन्यथा से सिचीति विकल्पितेट्कत्वात् यस्य विभाषेत्येव सिद्धौ श्वीदित इत्येतत्प्रवृत्तिर्व्यर्थैवेति भावः। प्रत्ययविषयत्वादिति। यद्यपीदं भूवादयोदिवउत्सूत्रस्थभाष्यविरुद्धं तथापि तत्र सहेः पाठो हरदत्तसंमत इति विवक्षिते ऽर्थे न दोष इति भावः। उभयोर्ग्रहणे इष्टे व्याख्यानमेव शरणम्। महद्भिरिति। तीषेति सूत्रे

चेदं वक्तव्यम्। षत्वविधावपि शबन्तनिर्देशस्तुल्यः। तथा च षत्वमपि मा भूत्। तत्राकार उच्चारणार्थ इति चेदिड्विकल्पेपि तथास्तु। तस्मादुभयमस्तु मास्तु वा न त्वर्द्धजरतीयं युक्तम्। आकरग्रन्थास्तु सर्वेऽप्यत्रोदासीनाः। तदिह तत्त्वं मद्वङ्गिर्निर्णेयमिति। नपुंसके भावे क्तः। सूचितं टीनः। जेरतुरिति। ऋच्छत्यॄतामिति गुणे कृते वा जॄभ्रमुत्रसामित्येत्वविकल्पः। षूङ्। नित्यमिडिति। एवञ्च प्राचो ग्रन्थं व्याचक्षाणैर्यदुक्तं सुषुवहे इत्यादि तत्प्रामादिकमिति भावः। दीङ्। दिदीये इति। परमपि यणं बाधित्वा नित्यत्वादादौ युट्॥

मीनाति॥ एज्निमित्ते इति विषयसप्तमी। तेनोपदाय इत्यत्र घञ् सिद्ध्यति। अन्यथा एरच् स्यात्। अदास्तेति। स्थाघ्वोरिच्चेत्येतत्तु न भवति। दीङोऽनुकरणे दारूपासंभवेनाघुत्वात्। अत एव प्रनिदातेत्यादौ नेर्गदेति णत्वमपि न भवति। डीङ्। डीनः डीनवान्। स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न। इटि हि सति व्यवधानादोदितश्चेति नत्वस्याप्रसङ्गः। डयितशब्दस्तु भौवादिकस्य। निष्ठा शीङित्यत्र निष्ठेति योगविभागादकित्त्वमिति सीरदेवादयः। मीङ्। हिंसात्रेति।

---

इषेः श्यन्प्रत्ययात्तकारे प्रतिषेध इति वार्त्तिकात्सहेः श्यन्विकरणस्येड्विधौ ग्रहणं भवत्येव इषत्लुभादेरिव सहेरप्यकार उच्चारणार्थ एव। षत्वविधावप्युच्चारणार्थतैवोचितेत्यन्ये।

दीङोनुकरणइति। ये घुसञ्ज्ञासूत्रे दोदेङ्धेटामनुकरणानि व्यवस्थाप्य प्रकृतिवदित्यतिदेशादनैमित्तिके आत्वे चतुर्णां दारूपाणां द्वयोर्धारूपयोरेकशेषङ्कृत्वा द्वन्द्व इति वदन्ति तन्मतेनेदम्। परन्त्विदमसङ्गतं प्रकृतिग्रहणं शिदर्थं कर्त्तव्यं प्रणिधयतीत्यादौ नेर्गदेति णत्वं यथा स्यादिति वार्त्तिकोत्थानानापत्तेः। दीङः प्रतिषेधः स्थाघ्वोरित्वे इति वार्त्तिकानुत्थानप्रसङ्गश्च तस्मात्कृतात्वदाधामेवानुकरणं सूत्रे ऋषितात्पर्यस्य ऋषिवाक्यैरेव निर्णेयत्वात्। तस्मादत्र स्थाघ्वोरिति सन्निपातपरिभाषया वारणीयमिति कृन्मेजन्तसूत्रे भाष्ये स्पष्टम्। एवञ्च प्रणिदातेत्यादौ नेर्गदेति णत्वं भवत्येवेत्यन्ये। सीरदेवादय इति। अत्रारुचिर्भाष्यानुक्तत्वम्। इति

अत एवाकर्मकत्वमिति भावः । मीञिति क्र्यादौ । डुमिञिति ह्रस्वान्तः स्वादौ । मी गताविति चुरादौ । रीङ् । रेता रेष्यते । लीङ् । यकेति । सार्वधातुके यगिति विहितेन । व्रीङ् । दन्त्योष्ठ्यादिः । व्री वरणइति क्र्यादौ । प्रीङ् प्रीतौ । प्रेता प्रेष्यते । प्रीञ् तर्पणे । क्र्यादौ युजादौ च । षो ऽन्तकर्मणि । अभिष्यतीति । उपसर्गात्सुनोतीति षत्वम् । अभिससाविति । स्थादिष्वेवाभ्यासस्य षत्वमिति नियमादभ्यासस्य न षत्वम् । नापि द्वितीयस्य । स्थादिष्विति सूत्रेण स्थादिष्वेव तद्विधानात् । धूरी गूरी । गूर उद्यमनइत्याकुस्मीयः । गुर इति लघूपधस्तुदादौ । पाठान्तरमिति । द्रविडाचार्यनिरुक्तकारादिबहुसंमतमेतत् । अत्र मन्त्रप्रयोगमुदाहरति । द्युतद्यामेति । हिरण्यपाणिः सवितेति वर्गस्य प्रथमचरममन्त्रयोरपि पत्यमानशब्दो ऽत्रोदाहर्त्तव्यः । ननद्धेति । नहो ध इति धत्वम् । उदाहरणमाहेति । अकर्मकत्वप्रयोजकस्य कस्य चिदर्थस्येति भावः । प्लुष प्रोषणे । प्रोष्टा । प्रोक्ष्यतीत्यादि । श्लिष, आलिङ्गने । अनिट्कोयम् । न तु दाहार्थकभौवादिकवत्सेट्क इति दर्शयति । श्लेष्टेति । शल इगुपधादिति सूत्रानन्तरं श्लिष आलिङ्गनइति पठितं तच्चैकयोगत्वेनैव प्राचा व्याख्यातम् । तथा च सतीदं सूत्रमङो बाधनार्थं स्यात् । अङ् त्वर्थान्तरे सावकाशः । एवञ्च कर्त्तरि परस्मैपदे सिद्धमिष्टम् । कर्मणि तु तशब्दे समाश्लेषि कन्या देवदत्तेनेति चिणिष्यते । सोपि परत्वात्सिद्धः । तथा च समाश्लिक्षाताङ्कन्ये इत्यादौ क्सः । किं तु क-

---

विहितेनेति । अर्थाभावे ऽपि सौत्रत्वात्प्रकृते साधुतेत्यर्थः । तत्र क्र्यादिराधृषीयश्च निरनुबन्धो लीधातुः परस्मैपदी अयमात्मनेपदीति बोद्धव्यम् । स्थादिष्वेवेति । अनिणः परस्य सस्येत्यर्थः । तुदादाविति । चुरादौ त्वत्र ह्रस्वोपध इति वक्ष्यति । अर्थस्येतीति । अर्थस्योक्तयेतीत्यर्थः । अङो बाधनार्थमिति । तदर्थमपूर्वविधिरेव स्यान्न नियम इत्यर्थः । क्स इति । सिद्धो यद्यपीति शेषः । किं तु इति । तथा

मेण्यातांप्रभृतिष्वनालिङ्गने मत्र इगुपधेति क्सः प्राप्नोति । इष्यते च सिच् । समाश्लिक्षत जतूनि काष्ठैरिति । तमिमन्दोषमुद्धर्तुं योगविभागेन व्याचष्टे । श्लिष इति । अनिटः किम् । श्लिषु, दाहे इति सेटो मा भूत् । सामर्थ्यादिति । यदि हि श्लिष इति प्राप्त एव नियम्येत तर्ह्येकवाक्यतया विधिरेवास्तु । फलस्य तुल्यत्वादिति भावः । मत्र इगुपधादित्यस्येति । तेनात्मनेपदे ऽनालिङ्गने चिण्विषयादन्यत्र सिजेव न तु क्स इति भावः । प्रत्यासत्ताविति । आलिङ्गनं ह्युपगूहनं परिष्वङ्गापरपर्यायं प्राणिकर्तृकमेवेति भावः । योगविभागफलं दर्शयति । कर्मणीत्यादिना । अश्लिक्षातामित्यादौ क्ससिचोर्विशेषाभावात् । अश्लिक्षत । अश्लिक्षा इत्युदाहृतम् । उभयपदीत्यर्थ इति । तन्त्रान्तरे विभाषितशब्दस्योभयपदिषु प्रसिद्धेरिति भावः । एक इति । चन्द्रगोमिप्रभृतय इत्यर्थः । क्षुध । तस्यालमेषा क्षुधितस्य तृप्त्यै इत्यादिप्रयोगाणाङ्गतिं पृच्छन्ति । कथमिति । षिधु । संराद्धिर्निष्पत्तिः । सिधित्वा । सेधित्वा । सिद्ध्वा । उदितो वेति वेट् । इट्पक्षे रलो व्युपधादिति कित्त्वविकल्पः । दीर्घानुबन्धपाठं दूषयति । ऊदित्पाठ इति । अनुदात्तेषु पाठस्य वैयर्थ्यापत्तेरिति भावः । रध हिंसायाम् । रध्यतीति । पचतीत्यर्थः । अरधदिति । प्राचो ग्रन्थे अरन्धदिति नुमनुषक्तं पठ्यते तत्प्रामादिकम् । नलोपस्यावश्यकत्वादिति भावः । णश । अनंष्टेति । प्राचा अनङ्धेत्युदाहृतं तदपाणिनीयमित्युपेक्षितम् । न हि नशेर्वेति कुत्वमिह लभ्यते । पदान्ते एव तद्विधानात् । किं च कुत्वेन खः स्यात् । तथापि झषन्तत्वाभावात्तथोर्धत्वं दुर्लभमेव । नष्टं नष्टि-

---

ऽपीत्यर्थः । कर्मणीति । कर्मव्यतिहारे कर्तरि चेत्यपि बोद्धव्यम् । इष्यते च सिजिति । अन्यथा समश्लिक्षतेत्यत्रानत इति प्रतिषेधाददादेशो न स्यादिति भावः । सेट इति भ्वादिरिति शेषः । ननु नशाक्किन्प्रत्ययस्य कुरिति वक्तव्ये पृथक्सूत्रकरणेनैव विकल्पलाभे वेति कथनं योगविभागेन झलि नित्यकुत्वार्थं कुत्वेन च महा-

रित्यादिप्रयोगाश्च लोकवेदप्रसिद्धा विरुध्येरन्निति भावः। पुषादय-स्त्विति। केचित्तु इदं वृत्करणं रधादीनामिव पुषादीनामपि समाप्त्यर्थमिति व्याचक्षते। तद्भाष्यकैयटविरोधादुपेक्ष्यमिति भावः। भ्रमु अनव। शेषमिति। श्यनि दीर्घो लुङि अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः। चक्षणवेति। ष्वोस्वेति नत्वे कृते णत्वम्। देवकृतं श्लोकार्द्धमुदाहरति। अषितः क्षाम्यतेः क्षान्तिरिति॥ इति दिवादयः॥

वृञ् वरणे॥

बभूथ॥ विज्ञातमुक्तं यत आबभूथ। येनान्तरिक्षमुर्वाततन्थ। जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। यस्य मदे अपगोत्रा ववर्थ। अवारीदिति। अवारिष्टाम्। अवारिषुः। वृतो वेति दीर्घस्य सिचि च परस्मैपदेषु इति निषेधः॥

हेरचङि॥ अचङीति किम्। अजीहयत्। यद्यपि ण्यन्तस्य धात्वन्तरत्वादवयवस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्प्राप्तिरेवेह नास्ति। तथापि ण्यधिकस्यापि कुत्वं भवतीति ज्ञापनार्थमिदन्तेन जिघ्रापयिषतीति सिद्धम्॥

राधो हि॥ एतत्सूत्रं प्राचा दिवादावुपन्यस्तम्। इहैव तूचितमकर्मकस्यैव दिवादित्वमिति राधोऽकर्मकादित्यत्र निर्णीतत्वादिति भावः। ञिधृषा। धृष्णोति प्रगल्भते धृष्णक्। धृष्णधृषौ। दधृगिति ऋत्विगादिसूत्रेण क्विनो विधानादन्यत्रापि पदान्तविषये

---

प्राणत्वादत आह। किं चेति। खः स्यादिति। अघोषमहाप्राणरूपप्रयत्नान्तरतम्यादिति भावः। जातस्य कुत्वस्यासिद्धत्वादित्यपि बोद्धव्यम्। तद्भाष्येति। अस्यतिवक्तीति सूत्रे ऽस्यतिग्रहणमात्मनेपदार्थं पुषादित्वादङ्सिद्धेरिति भाष्ये उक्तमिति भावः। लुङि चाङ्विशेष उक्त इति पाठः॥ इति दिवादयः॥

अभ्यासनिमित्तेति। अभ्यासाक्षिप्तप्रत्यययोः प्रत्यासत्त्या यत्रैक्यन्तत्रैवास्य प्रवृत्तिरिति भावः। अकर्मकस्यैवेति। हिंसा तु प्राणवियोगानुकूलव्यापारत्वात्सकर्मिकेति भावः। न च कर्मकर्त्तरि तत्संभवः। कर्मकर्तृप्रक्रियायां लेखस्यौचित्येऽपि

कुत्वम्। हृपप्रीणनइत्येकइति सेट्कः। अनुदात्तेषु श्यना निर्देशात्॥ इति स्वादयः॥

भ्रस्ज। भ्रस्जो इत्यपपाठः। भ्रष्टः भ्रष्टवानित्यत्र निष्ठाया ओदितश्चेति नत्वप्रसङ्गात्। स्थानषष्ठी। स्थानं हि प्रसङ्गः। तेन रोपधयोः प्रसङ्गे रम् प्रयुज्यते इत्यर्थः। प्रयुज्यमानो रम् मित्त्वादन्त्यादचः पर एव। यस्य हि देशान्तरे नास्ति विधानं स स्थानिदेश एवेत्युचितम्। देशविशेषे एव स्थानिनः प्रसक्तत्वेनोपस्थितं परित्यज्यानुपस्थितकल्पनायोगात्। इह तु मित्त्वेन न्यायो बाध्यते। स्थानषष्ठीनिर्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानोपि रोपधे निवर्त्तयति। तदिह रम आदेशत्वागमत्वे द्वे अपीष्टे यथा श्नमः प्रत्ययत्वागमत्वे इति स्थितम्। भारद्वाजीयास्तु पठन्ति। "भ्रस्जो रोपधयोर्लोप आगमो रम्विधीयते" इति। अस्यार्थः। सनः क्तिचीत्यतो लोपग्रहणमनुवर्त्तते। रम् तु आगम एवेति। अत्र हरदत्तः। भ्रस्जो रस् रन्यतरस्यामित्येव सूत्रमस्तु। रस् इति यः सङ्घातस्तस्य रू इत्यादेशः स्यादित्यर्थः। तत्राक्ङिति गुणे कृते भर्जनमित्यादि सिद्ध्यति। ऋकाराभावपक्षे भ्रज्जनमित्यादि। क्ङिति तु ऋकारपक्षे भृष्टिरित्यादि तदभावे संप्रसारणे तदेव रूपम्। एवञ्च पूर्वविप्रतिषेधो न वक्तव्यो भवतीति महल्लाघवम्। किं च। यथान्यासे वरीभृज्ज्यते इत्यत्र रीको रेफस्य निवृत्तिं वारयितुमुपदेशग्रहणमनु-

---

दिवादावनौचित्यात्। अन्यथा तद्विषयशास्त्रान्तराणामपि तत्र तत्रलेखापत्तिरिति दिक्॥ इति स्वादयः॥

स्थानिदेश एवेति। तस्यैवोपस्थितत्वादिति भावः। तदाह देशेत्यादि। भारद्वाजीयास्त्विति। अत्रारुचिबीजन्तु शबादेशाः श्यनादय इति भाष्योक्तपक्षे श्नमादेशयेर्निवृत्तेरिव रोपधयोर्निवृत्तिसिद्धौ लोपपदानुवृत्तिर्व्यर्था गौरवावहा चेति। रसोरन्यतरेति। रस इति षष्ठ्यन्तन्तद् ध्वनयन्नाह। सङ्घातस्तस्येति। समुदायस्य स्थानित्वेन निर्देशादलोन्त्यस्येति न। न वक्तव्य इति। ऋकारविकल्पस्तु

वर्त्यमिदानीन्तु तदपि मास्त्वित्यपरं लाघवम्। तथा तु न कृतमित्ये-वेति। अत्रेदं वक्तव्यम्। एषा कल्पना तावदार्त्तिकारूढैव। रसोर्व-चनात्सिद्धमिति वदता रस इत्यस्याप्युक्तप्रायत्वात्। किं तु भाष्यकृता गूढाभिसन्धिना सूत्रं भिद्यतइत्युक्तोपेक्षिता। तथा तु न कृतमित्ये-तावन्मात्रन्तु हरदत्तीयम्। तच्चात्यन्तभाष्याभिसन्धिपर्यालोचनविरह-प्रयुक्तम्। तथा हि॥

रस ऋचेदपिल्लिट्सन्लिङ्सिच्चङ्परणिषु ते।
दोषो भ्रस्जेर्भृजौ चैवं दोषो यङ्लुकि चाधिकः॥
साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्विधिर्यथा।
द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्दधेरिव।
तस्मादस्तु यथान्यासं स्वातन्त्र्ये ऽस्तु रसोरिति॥

अयं हि भगवतो गूढो ऽभिसन्धिः। रस ऋभावे पञ्च दोषाः। अपित्लिटि बभर्जतुः बभर्जुरित्यादीष्यते। बभृजतुर्बभृजुरित्यादि स्यात् सनीवन्तेत्यिड्विकल्पपाद्बिभर्जिषतीत्यादीष्यते। बिभृक्षतीत्यादि स्यात्। हलन्ताच्चेति सनः कित्त्वात्। लिङ्सिचोरात्मनेपदेष्विति भर्क्षीष्ट। अभर्ष्टेत्या-दीष्यते। भृक्षीष्ट। अभृष्टेत्यादि स्यात्। लिङ्सिचावात्मनेपदेष्विति कित्त्वात्। चङ्परे णौ अबभर्जदितीष्यते अबीभृजदित्यपि स्यात्। उर्ऋदिति ऋत्वप्रवृत्तेः। इररारामपवादः स इति हि सिद्धान्तः। स्या-देतत्। ऋदिति वैकल्पिकत्वेनाबभर्जदित्यपि भविष्यति। अबीभृज-दित्यनिष्टमिति चेन्न। ऋजभृजी भर्जनइति भ्वादौ पाठेन तत्र रूपद्व-

---

बभर्ज बभ्रज्जेत्यादौ चरितार्थ इति भावः। इत्यादि स्यादिति। ऋभावे संयोगा-त्परत्वेन कित्त्वे गुणाप्राप्तेरिति भावः। सम्प्रसारणस्य तु नात्र प्राप्तिः। संयोगात्प-रत्वेनाकित्त्वात्। सनः कित्त्वादिति। इक्समीपहलः परत्वाभावेनाकित्वान्नात्र स-म्प्रसारणप्राप्तिरिति भावः। कित्त्वादिति। सम्प्रसारणाप्राप्तिरुक्तयुक्त्यैवेति भावः। न च संनिपातपरिभाषयैव न दोषः। शब्दतोर्थतो वास्याकित्संनिपातलक्षण-त्वाभावात्। अत एव भ्रस्जादेशात्सम्प्रसारणं पूर्वविप्रतिषेधेनेति भाष्यं सङ्गच्छते।

यस्य दुर्वारत्वात्। तत्कथं चङ्परे णौ दोषोपन्यास इति चेत्। पाकस्यौदनादिविषयतया भर्जनस्य च तद्व्यावृत्ततया अवान्तरार्थभेदमभिप्रेत्येति गृहाण। अर्थैक्याभ्युपगमे तु प्राचीनास्त्वार एव दोषाः। न ह्रि तेपि धात्वन्तरेणापि सूद्धराः। अपिञ्चिटि तस्यापि गुणाभावात्। अनुदात्तेत्त्वेन परस्मैपदासम्भवाच्च। सन्लिङ्सिचामिडागमध्रौव्याच्च। यदि तु भ्रस्जेर्भृजिरित्युच्येत। तत्राह। भ्रस्जेर्भृजौ चैवमिति चत्वारो दोषाः दृढाः पाक्षिकः पञ्चमो ऽपीत्यर्थः। स्थानिवत्त्वादिति। अनभ्यासत्वाभावादिति भावः। द्वित्वमभिप्रेत्यापि ब्रूमः। रुग्रिग्रीको दुर्वाराः। धात्वन्तरे तेषामावश्यकत्वे ऽपि रुगादिविनिर्मुक्तं बाभर्जिता बाभर्जिष्यतीत्यादि रूपं न सिद्ध्यत्येव। तस्माद्यथान्यासमेवास्तु। अथ लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्षितम्। तर्हि भ्रस्जेरसोरिति पठित्वा अरेव विधीयताम्। तथा च न कोपि दोष इति भाव। पूर्वविप्रतिषेधेनेति। नित्यत्वादित्यपि सुवचम्। शब्दान्तरस्य प्राप्तावपि कृता-

---

इत्यपि स्यादिति। ऋत्वस्य वैकल्पिकत्वादिति भावः। चत्वारो दोषा इति। बरीभृज्यते, भृज्ज्यादित्यादौ नियतया जद्वयश्रवणार्थम्। ऋभावात्सम्प्रसारणं विप्रतिषेधेनेत्यस्यावश्यकत्वमित्यपि बोद्ध्यम्। ध्वनितञ्चेदं सर्वथा पूर्वविप्रतिषेधान्न मुच्यामहइति भाष्येण। किं च हरदत्तोक्तन्यासो ऽसङ्गतः। ऋ अन्यतरस्यामित्यत्र यणि रसोरित्यस्य हशि चेत्युक्ते रसोरन्यतरस्यामित्यस्यैवौचित्यात्। अनभ्यासत्वाभावादिति। यङ्लुकि द्वित्वे कृते साभ्यासस्यैवार्थवत्त्वेन धातुत्वाङ्गत्वयोः समुदायएव सत्त्वेन समुदायस्य भृज्जादेशे स्थानिवत्त्वेन तत्त्वाभावादिति भावः। अत एव हन्तेर्यङ्लुकि वद्ध्यादिति माधवादिभिरुदाहृतम्। अभ्युपेत्यापीति। साभ्यासत्वस्याशास्त्रीयत्वेनातिदेशाभावादिति भावः। अपिना ऽरुचिर्बोधिता तद्बीजं लक्ष्ये लक्षणस्येति न्यायेन द्वित्वप्रवृत्तिर्दुरुपपादेति। दुर्वारा इति। ऋदुपधत्वादिति भावः। ननु, अन्तरङ्गेषु रुगादिषु बहिर्भूताऽऽर्धधातुकनिमित्तभृज्भावस्य बहिरङ्गत्वेनासिद्धत्वान्नायं दोषः। किं च उत्तरखण्डस्यैवार्थवत्त्वमभ्यासस्तु साधुत्वार्थ एवेति दयतेरिति सूत्रस्थभाष्यसंमततयोत्तरखण्डस्यैवादेशो न समुदायस्य यङ्लुकि वद्ध्यादित्यपि माधवोक्तं चिन्त्यमेव। न सिच्यन्तरङ्गमिति तु नास्त्येवेत्युक्तमिति चेत्तर्हि

कृतप्रसङ्गित्वमात्रेण नित्यताया लक्ष्यानुरोधेन क्वचित्स्वीकृतत्वात् ॥

विज इट् ॥ इह वृद्धिर्यस्येति सूत्रात् मण्डूकप्लुत्या यस्यादिरित्यनुवर्त्तते। तेनेडादिः प्रत्ययो लभ्यते। न ह्यत्रैकवचनमेव तथा हि सति विजिषीयेत्यत्रैव स्यात्। ओविजी भयचलनयोरित्ययमेव गृह्यते। न तु पृथग्भावार्थं इरित्। तस्यानिट्कत्वादिति हरदत्तादयः। न च क्रादिनियमात् लिटोऽट् सम्भवत्येवेति वाच्यम्। तत्र कित्त्वेन गतार्थत्वादिति भावः। वस्तुतस्तु नेदं युक्तम्। विवेजिथेति थलीट्सम्भवात्। तत्र च पित्त्वेन कित्त्वाभावात्। न च पूर्वसूत्रे कुटादीनां प्रक्रान्तत्वात्कथञ्चित्तत्साहचर्यात्तुदादेरेव ग्रहणं न जुहोत्यादेरिति वाच्यम्। रुधादावपि ङित्त्वादुद्विजितेत्युदाहरन्निर्माधवादिभिः सह विरोधापत्तेः। तस्मादिह तुदादिरुधाद्योर्ग्रहणे जुहोत्यादेश्चाग्रहे व्याख्यानमेव शरणम्। अत्र प्राचा ञ्णिद्वर्जमिति व्याख्यातम्। तन्निष्फलत्वान्निर्मूलत्वाच्चोपेक्षितम्। न ह्यस्य व्यावर्त्त्यं सम्भवति। न वा वृत्तिकारैरञ्णिदित्यनुवर्त्तितम्। व्यच व्याजी। पर्युदासेनेति। प्रसज्य प्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः। तस्मात् स्यसिच्सीयुट्सन्तासिप्रभृतिषु नेदं प्रवर्त्तते। एतच्च हरदत्तमाधवादिग्रन्थे स्पष्टम्। यत्तु प्राचा अविचीदित्यादि सिजादीनां ङित्त्वं स्वीकृत्योदाहृतन्तदाकरविरोधादुपेक्ष्यम्। यत्तु वदन्ति। कातन्त्रे व्यचेः कुटादिषु पठितत्वात्सिद्धम्। कुटादित्वमनूद्यासि निषेधमात्रमनेन क्रियते। लाघवात्। एवञ्च विधेयभेदाभावे क्व वाक्यभेदः। तस्मान्माधवादिग्रन्थ

---

प्रागुक्ताश्चत्वार एव दोषा अत्रापीति बोद्धव्यम्। अरेवेति। लुङि बहिर्भूतपरस्मैपदपरसिजपेक्षवृद्ध्यपेक्षया ऽन्तरङ्गत्वादस्य प्रवृत्तिरित्यभाक्षीदभार्क्षीदिति रूपसिद्धिरिति भावः। स्वीकृतत्वादिति। न च ऋकारान्तर्गतरेफमादाय रमपि नित्यो वर्णग्रहणे तदेकदेशाग्रहणात्। उपदेशइत्यनुवृत्तेश्च ॥

व्याख्यानमेवेति। कुटादिसाहचर्यात् श्रूयमाणविकरणस्यैव ग्रहणमिति व्याख्यानमिति भावः। नेदं प्रवर्त्ततइति। अत एव लिट्यभ्यासस्येति सूत्रे ऽस्य वा-

एवासङ्गत इति। अत्रेदं वक्तव्यम्। कातन्त्रे कुटादिषु पाठेऽपि पाणिनीये तदभावः स्पष्ट एव। तथा च कथन्तदनुवादेन वार्त्तिकं प्रवर्त्ततामू। एवञ्चाप्राप्तं कुटादित्वं विधीयतइति हरदत्तोक्तिस्तदनुवादिनी माधवोक्तिश्च निर्बाधैव। असमर्थसमासस्तु दुरुद्धर इत्युक्तमेव। तस्माद्यथाकरमेव ग्रहीतुमुचितम्। न त्वर्वाचीनेषु पक्षपातो युक्त इति दिक्। उछि उञ्छे। उच्छी विवासे। इमौ भ्वादिगणे पठितौ। इह पाठस्तु उच्छती उच्छन्तीत्यत्राच्छीनद्योरिति नुम्विकल्पार्थः। पूर्वं पाठस्तु स्वरार्थः। तथा हि उच्छति उञ्छतीत्यादौ पिद्वचने शप्तिबादीनां पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम्। शे तु प्रत्ययस्वरेण मद्ध्योदात्तमिति। हिहल्ग्रहणस्येति। न चोपलक्षणत्वे मानाभावः। अदुपधस्य चेदश्नोतेरेवेति नियममाश्रित्य हिहल्ग्रहणं प्रत्याचक्षाणस्य भाष्यकारस्यैव तत्र मानत्वात्। लोभिता लोब्धेति। तीषसहेति वेट्। कुर शब्दे। करोतेरेवेति। सुप्रसिद्धत्वात्। यथा गोशब्दस्यानेकार्थत्वेऽप्यर्थप्रकरणादिविशेषं विना स्वर्गवज्रादयो न गृह्यन्ते। तथा कुरतेरिति भावः। मुर संवेष्टने। इगुपधलक्षणः कः। मुरो दैत्यः।

---

र्त्तिकस्य प्रथमोपस्थिततिङन्तं विहाय कृदन्ते उदाहृतं भाष्ये। वार्त्तिकं प्रवर्त्ततामिति। व्यचेः कुटादित्वं वक्तव्यं किं प्रयोजनं ङिणति सम्प्रसारणार्थमिति भाष्यसन्दर्भविरोधस्तदनुवादेन प्रवृत्ताविति बोद्ध्यम्। किं च त्वद्रीत्या ऽविधेयस्य कुटादित्वस्य वचनशतेनापि निषेद्धुमशक्यतया ऽनसीत्यं शवैयर्थ्यन्तत्प्रयुक्तङित्त्वनिषेधे तु व्यचेर्ङित्वमनसीत्येव वदेदित्यपि बोद्ध्यम्। पिद्वचने इति। तसादेरप्युपलक्षणम्। अदुपदेशशपः परत्वेन तेषामप्यनुदात्तत्वेन तत्रापि स्वरे विशेषादित्याहुः। मद्ध्योदात्तमिति। अन्यत्र विकरणेभ्य इति निषेधस्तु सार्वधातुकस्वरापेक्षया विकरणस्वरस्य बलीयस्त्वं नेत्येवंपर इति तद्विधायके भाष्ये स्पष्टमिति भावः। मानत्वादिति। न च वार्णपरिभाषया गुणे तुको ऽप्राप्तिरिति वाच्यम्। छ्वोरिति सूत्रे सतुङ्निर्देशेन तुग्विषये वार्णादाङ्गमित्यस्या अनाश्रयणात्। सुप्रसिद्धत्वादिति। बहुशो व्यवहारेण क्रियासामान्यवाचित्वेन च सुप्रसिद्धत्वादित्यर्थः। अत एव लाक्ष-

मुरारिर्विष्णुः । घुर । पचादित्वादच् । घोरः । वृङ । दन्त्योष्ठ्यादिरिति । उद्वृह रक्षः सहमूलमिन्द्रेति प्रयोगात् । इष इच्छायाम् । केचिदुदितं पठन्ति । तत्फलन्तु इड्विकल्पे क्त्वाविधौ च सानुबन्धस्यैव पाठाद्दैवादिकक्रैयादिकयोस्तन्निवृत्तिरित्याहुः । अनुदित्पाठस्तु भाष्यवार्त्तिकसंमत इति क्र्यादौ स्फुटीभविष्यति । तिल स्नेहने । तिलति । कप्रत्यये तिलः । तेलतीति गतौ अपि । चिल वसने । पचादित्वादच् । चेलम् । चेलतीति अपि । विल संवरणे । दन्त्योष्ठ्यादिरिति । आविलमिति दर्शनात् । शिल षिल उञ्छे । आद्यस्तालव्यादिः । द्वितीयो मूर्द्धन्यादिः । मिल श्लेषणे । अयं स्वरितेत्स्वपि पठिष्यते । इह पाठस्तु कर्त्तृगेपि फले परस्मैपदार्थः । लिख अक्षरविन्यासे । लेखिता । लेखिष्यतीत्यादि । कथन्तर्हि लिखितुं स्वयमेव लिखिष्यते इति । प्रमाद एवायम् । संज्ञापूर्वकत्वेनानित्यतया वा समाधेयम् । यत्तु केचित् । गाङ्कुटादिभ्य इत्यत्र कुटस्यादिः कुटादिः । कुट आदिर्येषामिति तत्पुरुषबहुव्रीह्योरेकशेषमाश्रित्य समादधुस्तन्न । लेखितेत्यादौ गुणनिषेधापत्तेः । न चेष्टापत्तिः । वृत्तिकारहरदत्तादिविरोधात् । अपाच्चतुष्पाच्छकुनिष्वालेखने इति सौत्रप्रयोगविरोधाच्चेत्यास्तान्तावत् । कथं लिखापयति । अत्राहुः । लेखनं लिखः घञर्थे कः । तमाचष्ट इति णिच् । आपुको दीर्घोच्चारणसामर्थ्यादन्यत्रापि प्रवृत्तिरिति । एतच्च भाष्यविरुद्धम् । भाष्ये आकारस्य प्रत्याख्यानात् । तस्मादित्थं समाधेयम् । आपनमापः समाप्तिः । आप्नोतेर्घञ् । लिखस्य आपो लिखापः । तङ्करोतीति । णू स्तवने । परिणूतेत्यादि भागवतम् । अत्र आर्षो दीर्घ इति श्रीधरोक्तिस्तु एतद्धात्वदर्शनप्रयुक्तत्वादुपेक्ष्येति भावः । मृङ् ।

---

णिकस्य सानुबन्धकस्य च कुरूपस्य करोतेरेव ग्रहणमिति भावः । प्रत्याख्यानादिति । यस्याकारोच्चारणं विना न सिद्धिस्तत्र तत्सामर्थ्यात्तत्कल्पनसम्भवेप्यत्र तत्कल्पने न मानमित्यपि बोद्धव्यम् । ननु मास्तु नियमत्वं विधित्वमेवास्तु । किं ङि-

ङित्त्वं स्वरार्थम्। तथा हि। मा हि मृतेत्यत्र लसार्वधातुकानुदात्तत्वे कृते धातुरुदात्तः। सिज्लोपस्य पूर्वत्रासिद्धत्वन्तु न। ङित्त्वसामर्थ्यादेवेत्यन्यत्र विस्तरः। रि पि गतौ। लघूपधगुणमाशङ्क्याह। अन्तरङ्गत्वादिति। रिधातोः शप्रत्यये सति विकरणविशिष्टस्याङ्गत्वाल्लघूपधत्वम्। एवं पिधातोरपि बोद्ध्यम्। प्रच्छ ज्ञीप्सायाम्। पृच्छा। भिदादेराकृतिगणत्वादङित्याचेयः। तत्करोतीति णिच्। ततो ण्वुल्। एवञ्च वक्तारं पृच्छकं श्रोतॄनिति प्रसिद्धपाठोपि निर्दोषः। प्रच्छकमिति पाठस्तु सुलभ एव। किरादयो वृत्ता इति। एते च भूषाकर्मकिरादिसनामिति वक्ष्यमाणे उपयोक्ष्यन्ते। ससर्जिथेति। विभाषा सृजिदृशोरिति थलि वेट्। विच्छ गतौ। तुदादिपाठसामर्थ्यात् आयप्रत्ययान्तादपि शो न तु शप्। तेन विच्छायती विच्छायन्तीति नुम्विकल्पः। केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्यैव पाक्षिकत्वं वदन्तो विच्छतीति विच्छन्तीति नुम्विकल्पमुदाजह्रुस्तेषां मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छबेव। तेन विच्छायन्तीति नित्यमेव नुम्। षिच क्षरणे। केचिदिरितं पठन्ति तत्प्रामादिकम्। फलाभावात्। दीपनायामपीति। नक्षत्रेभिः पितरो द्यामपिंशन्नित्यादौ दीप्त्यर्थावगतेः स्पष्टत्वात्तथैवाभियुक्तैर्व्याख्यातत्वाच्चेति भावः॥ इति तुदादयः॥

रुधादिभ्यः श्नम्॥ श्नमो मित्त्वादागमत्वेपि प्रत्ययसञ्ज्ञा न विरु-

---

त्वेनेत्यत आह। ङित्त्वमिति। सामर्थ्यादेवेति। तत्सामर्थ्यादेकादेशइव तदसिद्धत्वबाधनमिति भावः। आयप्रत्ययान्तादपीति। न च ण्यन्तादपि स्यात्सर्वथाप्राप्ताऽऽयप्रत्ययान्ते चारितार्थ्येनान्यत्र तत्कल्पने मानाभावात्। शीघ्रोपस्थितिकत्वेन विच्छिशब्दमुच्चार्य विहितप्रत्ययान्तस्यैव विच्छिशब्देन तुदादिभ्य इति सूत्रे ग्रहणाच्चेति भावः। तेषां मते इति। अत्रारुचिबीजन्तु अबाधेनोपपत्तौ बाधकल्पनस्यान्याय्यत्वम्॥ इति तुदादयः॥

ज्ञ्यते। तत्फलन्तु प्रत्ययादित्वेन श्नस्येत्सञ्ज्ञा। श्नकारोच्चारणन्तु श्नान्नलोप इत्यत्र विशेषणार्थम्। उच्छृदिर्। उकारः क्त्वायामिड्विकल्पार्थः। छृत्वा छर्दित्वा॥

तृणह इम्॥ हलादौ पितीति। भाष्यकारीयनिष्कर्षे तु हलीति नानुवर्त्तते। न चैवन्तृणहानीत्यादावतिव्याप्तिः। अचि नेत्यनुवर्त्तनात्॥ इति रुधादयः॥

तनु हिंसायाम्। क्षिणु च। द्वावप्येतौ दन्त्यान्तौ। णत्वन्तु लाक्षणिकन्तेन यङ्लुकि चंक्षन्तिचेक्षिन्तीत्यत्र नश्चेत्यनुस्वारः सिद्ध्यति। सम्पर्युपेभ्य इति वृत्तिकारोक्तं पाठमुपेक्ष्य भाष्यवार्त्तिकानुसारेणाह। सम्परिभ्यामिति॥ इति तनादयः॥

एवं ज्ञस्येति। आत्मनेपदे इति भावः॥

स्तम्भुस्तुम्भु॥ नकारोपधः। विष्टभ्नोतीति। स्तम्भेरिति षः॥

वेः स्कभ्नातेर्नित्यम्॥ विष्कभ्नोतीति। यत्तु प्राचोक्तं स्कभ्नातेरित्युक्तेः स्कभ्नोतेर्नेति। तदप्रामाणिकमिति भावः। तथा हि। स्कभ्नातेरित्यत्र यदि श्नाप्रत्ययविशिष्टं रूपं विवक्षितन्तर्हि विष्कम्भितमित्यादावपि न स्यात्। अथ धातुमात्रं विवक्षितन्तर्हि श्नुविशिष्टेपि तस्मिन्भवि-

---

न विरुद्ध्यतइति। प्रत्ययइत्यधिकारादिति भावः। अत एव शबादेशाः श्यनादय इति भाष्यं सङ्गच्छते। प्रत्ययत्वे ऽपि तस्मिन्नाङ्गत्वं अवयवमुद्दिश्याविधानात्। तेन भनक्तीत्यादौ न दीर्घः। इत्सञ्ज्ञेति। श्रवणार्थस्तु न तृणह इत्यादिनिर्देशात्। विशेषणार्थमिति। अन्यथा यज्ञानामित्यत्रापि तदापत्तिः। मिदचोन्त्यादिति त्वेकवाक्यतया संबद्ध्यते रुधादिभ्यो रुधादीनामन्त्यादचः परो मित् श्नम्प्रत्यय इत्यर्थः। परश्चेत्यस्य तु मित्त्वसामर्थ्याद्बाधः। शे मुचादीनामित्यादाविव यस्य विहितस्तस्यान्तावयव इति तत्र न संबद्ध्यते। योग्यत्वादिति बोद्ध्यम्। अनुवर्त्तनादिति। इदं प्रत्ययलोपे इति सूत्रे भाष्ये स्पष्टम्॥ इति रुधादयः॥

भाष्येति। संपरिभ्यां भूषणसमवाययोः करोतावित्यत उत्सार्वधातुके इति सूत्रे भाष्यादिति भावः॥ इति तनादयः॥

 

तव्यमेव सत्वेन। उदाहृतञ्च तत्रापि सत्वं माधवादिभिरिति दिक्॥

हलः श्नः॥ यत्तु प्राचो ग्रन्थं व्याचक्षाणैः सौत्रेभ्यः श्नानच् नास्तीत्युत्प्रेक्ष्य स्तभ्नीत्युदाहृतन्तद्यद्यपि प्राचो ग्रन्थस्यानुगुणं प्राचा हलः श्न इति सूत्रस्य गृह्णातावुपन्यासात्। अन्यथा प्रथमोपस्थितान् स्तम्भुप्रभृतीनुपेक्ष्य तावद्दूरगमनायोगात्। तथाप्यनाकरत्वात्तदुपेक्ष्यम्। तथा च माधवेन स्तभानेत्युदाहृतम्॥

हलः॥ अङ्गावयवात्किम्। निरुतन्दुहलम्। अन्थ। वक्तव्याविति। तन्त्रान्तरोक्तौ इहाप्याश्रयणीयावित्यर्थः। संयुक्तहलमङ्गस्थत्वाद्ग्रन्थेरादेशादित्वाच्चाप्राप्तौ वचनम्॥

ग्रहो ऽलिटि॥ एकाचः किम्। यङ्लुकि मा भूत्। न चेष्टापत्तिः। आकरग्रन्थविरोधादिति स्फुटीकरिष्यते। विहितस्येति किं ग्राहितम्। न चात्र णिलोपस्य स्थानिवद्भावः। दीर्घविधौ तन्निषेधात्। ग्र-

---

इत्यादावपीति। किं च तद्विशिष्टस्यानुकरणे धातुनिर्देशाभावेन श्तिपो ऽनापत्तेरित्यपि बोद्धव्यम्। श्नुविशिष्टेपीति। ननु वेः स्कन्भेरिति वक्तव्ये स्कभ्नातेरित्युक्तिरश्नोतेश्वेतिवदन्यविकरणधातुव्यावृत्त्यर्थेत्यरुचेराह। उदाहृतञ्चेति। एवञ्च व्याख्यानादयं विकरणनिर्देशो ऽदृष्टार्थ एवेति भावः। तथा च माधवेनेति। अत एव हलः श्न इति सूत्रे श्नाग्रहणञ्चरितार्थम्। अन्यथा स्तम्भुस्तुम्भुस्कुम्भुस्कुञ्भ्यः श्नुः श्ना क्र्यादिभ्यः। हलः शानज्झावित्येव कुर्यात् श्नेत्यत्र स्तम्भ्वाद्यनुवृत्त्या क्र्यादिभ्य इत्यत्र श्नेत्यनुवृत्त्या हल इत्यत्र क्र्यादिभ्य इत्यनुवृत्त्या प्रत्ययान्तरविधानेन सिद्धेः। मम तु तथान्यासे स्तन्भ्वादिभ्यः सौत्रेभ्यः शानज्नापत्तेर्न तथा न्यासः शक्यक्रियः। स्तम्भ्वादीनामप्यनुवृत्तौ श्नोरपि विषये तदापत्तिरिति दिक्। अत्रोभयत्रापि लक्ष्यनिर्णयो बहुदर्शिभिः कार्य इत्यलम्। अप्राप्तौ वचनमिति। भाष्यानुक्तत्वादिदमप्रमाणमिति मूले हरदत्तादय इत्यनेन सूचितम्। आकरेति। हरदत्तेत्यर्थः। भाष्ये तु नैतद्दृश्यते। स्थानिवद्भाव इति। पञ्चमीसमासेन तत्प्राप्तिः। एवञ्च ग्रहेः परत्वाभावेन विहितविशेषणाभावेपि न क्षतिरिति भावः। दीर्घविधाविति। चिण्णमुलोः कर्मणिङिति सूत्रस्थभाष्यप्रामाण्यात् त्रैपादिकदीर्घस्यापि न पदान्तसूत्रे

द्वीधीष्टेति। न ग्निर्ङ्गीति दीर्घनिषेधो नेद्द। वृत इत्यनुवृत्तेः। इति क्य्रादयः॥

अचूचुरदिति। प्रसादकृता सन्वल्लघुनीति सन्वद्भाव इत्युक्तम्। तस्य प्रकृते क उपयोग इति स एव प्रष्टव्यः। सामान्यापेक्षमिति। नन्वेवमाधृषाद्वेति व्यर्थमिति चेन्नैवम्। ज्ञापकसिद्धस्यासार्वत्रिकत्वात्। अन्यथा सञ्ज्ञापूर्वकस्य विधेरनित्यत्वादिकल्पविषयः प्रायेण व्यर्थाः स्युरिति सर्वोपप्लवः स्यात्। एवञ्चास्मिन्पक्षे आधृषीयाणामेव पाक्षिको विकल्पः। अन्येषान्तु शिष्टप्रयोगाद्व्यवस्थितिरित्यर्थः। वृत्तिकृतेति। तत्रैव न्यासकृता ऽनित्यण्यन्ताश्चुरादय इति सामान्याकारेणाभिधानाच्चेति बोद्ध्यम्। न वैयर्थ्यमिति। यद्यपि प्रथमपक्षेपि सार्थक्यमुपपादितं तथा ऽप्यस्मिन्पक्षे वैयर्थ्यशङ्कापि नेत्यर्थः। तच्चिन्त्यमित्यादि। अयं भावः। यत्रितत्रिमत्रिकुद्र्यो हि संयोगान्ताः। तेषां नकारविशिष्टपाठे ऽप्यनिदितामिति लोपो न लभ्यते। नकारस्यानुपधात्वात्। तत्कथन्तेषामिदित्त्वं णिजभावं ज्ञापयेत्। चिन्त्यादित्यादौ णिजभावपक्षे नलोपव्यावृत्त्या सार्थकता लभमान इकारो णिजभावं ज्ञापयतीत्युचितम्। न चेह तथेति स्फुटं वैषम्यम्। अत एव कविकल्पद्रुमे। यत्रितत्रिमत्रिकुद्रियो ऽनित्यणिजन्ता एवोक्ता इति। ओकारइदित्येकइति। लण्डयति। लण्डति। अस्मिन्पक्षे निष्ठायां रूपे विवदन्ते। लड्नः। अनुबन्धबलान्नेडित्येके। लण्डितः। अनुबन्धबलादिड्व्यवधानेपि नत्वमित्यन्ये। ओदित्त्वमस्ति न वेति पक्षद्वयमपि माधववोपदेवादिग्रन्थे स्थितम्। ओदित्त्वपक्षेपि निष्ठायामिडस्ति न वेति

---

इति क्यादयः॥ वरे यलोपस्वरवर्जमित्यत्र दीर्घोऽप्युपलक्ष्यतइति मते इदम्॥ इति क्याग्रहणम्।

क उपयोग इति। सन्वद्भावविषये हि दीर्घो न तु तेनेति भावः। विकल्पविषय इति। सञ्ज्ञापूर्वका इत्यर्थः। स्थितमिति। वृद्धप्रयोगं दृष्ट्वा साधुत्वनिर्णयः

मतद्वयं काव्यकामधेनौ स्थितम्। पॄ पूरणे। तद्धीति। एतच्च श्रीभद्रादीनां मतं माधवेनोपन्यस्तम्। न त्विदङ्गीदत्तमम्। धातुपाठकृता पाणिनिना विभिद्यैवोदात्तानुदात्तानां पाठात्। न हि ऋकारान्ताः सेट्का इति तेन परिभाषितं येनेत्थं तस्याशयः कल्प्येत। अत एव कविकल्पद्रुमे पारयतेर्नित्यण्यन्तत्वमुक्तम्॥

उर्ऋत्॥ इररारामिति। दीर्घोपधे उपधायाश्चेति इर् प्राप्तः। मृजेर्वृद्धिः। इतरेषामृवर्णोपधानामर् इति विवेकः। नन्विह उरित्यनुवाद्यसमर्पकेण सावर्ण्यात् ऌवर्णोऽपि गृह्यते। ऋदित्यनेन तु भाव्यमानत्वान्न ग्राह्यः। तथा च अचीकृपदिति प्रसज्येतेति चेत् मैवम्। लत्वस्यासिद्धत्वेन पूर्वमेव अरं बाधित्वा उर्ऋदित्यस्य प्रवृत्तेः। यदि परं कृपू सामर्थ्य इति ऌकारोपध एव पठ्येत तदा स्यादेवोक्तदोषः। एतेन चलीक्लृप्यते इत्यादौ रीगागमादेर्लत्वार्थं कृपो रो ल इति सूत्रमस्तु नाम। धातुस्तु ऌकारोपध एव पठ्यताम्। एवं हि प्रक्रियालाघवं लभ्यते। ऋकारैकदेशस्य ऌकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीत्युत्प्रेक्षापि परास्ता। अचीकृपदित्यत्र उक्तदोषस्य ध्रौव्यात्। एतच्च सर्वं कैयटे स्पष्टम्। स्नाययत इति। आत्वन्तु नेह भवति। नित्यं

---

कार्य इति भावः। पाठादिति। ऊदृदन्तैरिति त्वबुद्धबोधनायानुवादरूपमिति ऋकारान्तत्वस्य सेट्कत्वे ।निमित्तत्वाभाव इति भावः। नित्यण्यन्तत्वमिति। न च ऋच्छत्यृतामिति गुणप्रवृत्तये ऋतश्चेति रुगाद्यप्रवृत्तये ।क्रियमाणं दीर्घोच्चारणं न तदर्थज्ञापकमिति वाच्यम्। ऋकारान्तप्रयुक्तकार्यावशिष्टरूपाणाञ्जोहोत्यादिकमादाय सिद्धेर्ज्ञापिते ऽपि चारितार्थ्यासंभवेन ज्ञापकासंभवादिति भावः। प्रवृत्तेरिति। ततः प्रवृत्ते ऋकारे लत्वप्रवृत्त्येष्टसिद्धिरिति भावः। ऌकारोपध एवेति। कृपणः कृपेत्यादौ ऋकारश्रवणन्तव लत्वाभाववद्बाहुलकेन सिद्धमिति भावः। स्यादेवोक्तदोष इति। न च तपरसूत्रे ऽप्रत्यय इत्यस्यासंबन्धेन भाव्यमानेन ऋकारेणापि ऌकारग्रहणसत्त्वादन्तरतमपरिभाषया ऌकारस्य ऌकारेणेष्टसिद्धिः। तपरत्वं हि ऌकारस्य दीर्घऋकारस्य च स्थानित्वे सार्थकमिति ग्राहकसूत्रे परेणाणग्रहणे ऽस्य

स्मयतेरिति निर्देशात् । हेतुमण्णावेव तद्विधानात् । मुस्त मानं । पव-र्गतृतीयान्तोयमिति वोपदेवः । तथा च प्रयुज्यते मुस्तमस्त्रमिति । चुट च्छेदने । चोटयति । चुटतीति मे गतम् । व्रज मार्गं । वाजयति । मार्गयति । व्रजेत्येके । व्राजयति । के चित्तु मार्गेति न धात्वन्तरङ्कि-न्तु मार्गसंस्कारो धात्वर्थ इत्याहुः । मृग अन्वेषण इति कथादौ । मा-र्ग अन्वेषणइति युजादौ । स्वजि कृच्छ्रजीवने । स्वञ्जति । ज्ञप मिच्च । अयञ्ज्ञानइति । प्रतिपञ्ज्ञप्तिचेतनाः । प्रच्छ ज्ञीप्सायामित्यादौ तथा दर्शनात् । ज्ञापने चेति । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति ज्ञीप्समानो बोधयितुमिष्य-माण इति व्याख्यानात् । यम च परिवेषणे । परिवेषणमिहेति । चन्द्र-स्य परिवेष इत्यादौ तथा प्रसिद्धेः । न वेति । तत्र घटादित्वादेव सिद्धे-

---

तपरत्वस्य ज्ञापकतापि भाष्योक्ता युक्तेति वाच्यम् । उर्ऋदित्यनेनानन्तरस्येति न्या-येनाचीकृतदित्यादावित्त्वबाधानापत्तेः । ऋदुपधत्वे तूर्ऋदित्यत्र लृकारग्रहणे फला-भावेन दीर्घव्यावृत्त्यर्थतैव तपरत्वस्य वक्तव्येति तत्सामर्थ्याद्भाष्यसामान्यचिन्तामा-श्रित्यास्य सर्वबाधकत्वस्वीकार इत्यदोषो म्लृदादिभ्यो ऽनुकरणेभ्यो णिच् तु ना-नभिधानात् । ध्वनितञ्चेदममुं ऋकारोपधं ब्रुवता पाणिनिनेति तात्पर्यात् । स्मय-तेरिति निर्देशादिति । शपा निर्देशेन तत्प्रकृतिभूतस्मिधातोरेव ग्रहणमिति भावः । युक्त्यन्तरमाह । हेतुमण्णावेवेति । स्मयतेरिति सूत्रे हेतुभयइत्यनुवर्त्तते भयइति धात्वर्थोपलक्षणमेवञ्च प्रत्यासत्त्या हेतुव्यापारवाचकणिच्येव प्रवृत्तिरिति भावः । चन्द्रस्येति । अण्यन्तात्परिविषेर्ल्युटि वेष्टनम्भोजना च तदर्थः । भोजना च भु-ज्यनुकूलः पात्रे ऽदनीयवस्तुप्रक्षेपः । ण्यन्तात्ल्युटि वेष्टनार्थः इति बोद्धव्यम् । घ-टादित्वादेवेति । भुज्यर्थयम्धातोर्हेतुमण्णौ घटादिपठितेन ज्वरत्वरेत्यनेनानेन रूपसिद्धिः । यमो ऽपरिवेषणइति निषेधस्तु न, भोजनार्थत्वादिति भावः । हेतुम-ण्ण्यन्तस्येति । वेष्टनरूपार्थकाच्चुरादिण्यन्ताद्यमयतेर्हेतुमण्णौ सो ऽर्थ इत्यर्थः । ए-वञ्च तत्र यमयतीत्यस्यान्यथैव सिद्धेश्चुरादिण्यन्ते वेष्टनायां मित्त्वविधानस्य वैय-र्थ्यापत्तेः । यमोपरिवेषणइति निषेधस्तु अनन्तरस्येति न्यायेनामन्तत्वप्रयुक्तस्यैव । इह तु वेष्टनरूपार्थनिमित्तञ्चुरादिपठितवचनेन मित्त्वमिति भावः । युक्त्यन्तरमाह ।

रिति भावः। नापीति। हेतुमण्यन्तस्य हि सोर्थः। घटादित्वादेव सिद्धेरिति भावः॥

नान्ये मितो ऽहेतौ॥ ज्ञपादिभ्य इति। मुख्यमते पञ्चभ्यो मतान्तरे तु चपिरहिभ्यां सह सप्तभ्य इत्यर्थः। पूर्णीत्येके। पुण्येत्यन्ये इति। ईदृशेषु कोग्रग्रहः कीदृशीति चिन्त्यम्। उक्तञ्च स्वामिना।

पाठेर्थे चागमभ्रंशान्महतामपि मोहतः।

न विद्मः किञ्चिदीमोत्र किमुपादद्महे वयम्॥

चूर्ण सङ्कोचे। पुनः पाठो ऽर्थभेदकृतः। अर्च चेति। अयन्धातुर्मिदचोन्त्यात्सूत्रे कैयटेनोपन्यस्तः। प्रयुज्यते च। मर्त्तो मर्त्तमर्चयति दयेनेति। तस्मात्केषाञ्चिदिह पाठमात्रेणाप्रमाणिकोयमिति न मन्तव्यम्। मैत्रेयमतमाह। अर्दने इत्येकइति। एकइत्यस्वरसोद्भावनम्। तद्वीजन्तु अनयोरिदित्त्वादेव लुम्बति तुम्बतीति सिद्धेरर्दने ऽर्थे भूवादौ पाठो व्यर्थः स्यात्। अदर्शने त्वर्थभेदात्सोपि सार्थक इति। चुटि च्छेदने। चुण्टति। इल प्रेरणे। इलतीति तुदादौ। म्रक्ष म्लेच्छने। म्लेच्छनमपशब्दनम्। तच्च तैलादिना अभ्यञ्जनम्। म्रक्षयति। म्रक्षतीति सङ्घाते ऽपि। म्लेच्छ अव्यक्तायां वाचि। इहाव्यक्ता वागपशब्दनम्।

---

तत्र घटादित्वादेवेति। यमो ऽपरिवेषणइति मित्त्वनिषेधसूत्रे भोजनावद्वेष्टनापि गृह्यतइति मते घटादिपठितामन्तत्वेनैव सिद्धेरित्यर्थः। तत्र चेति। चकारः सिद्धेरित्यनन्तरं योज्यः। घटादिपठिते तत्र वचने तु वेष्टनं नैव गृह्यते पूर्वोत्तरसाहचर्येण हेतुमण्णावेव तत्प्रवृत्त्या फलाभावादिति बोद्धव्यम्।

तद्वीजन्त्विति। इदित्त्वस्य णिज्विकल्पाज्ञापकत्वे तु सोऽपि पाठो युक्त एवेत्यन्ये। भूवादाविति। वासदृशे भ्वादावित्यर्थः। यद्वा भ्वादौ वादौ चेत्यर्थः। आदावदादिगणस्तस्यादौ वाधातुरादिप्रभृतिभ्य इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेष इति पक्षस्यापि धातुसञ्ज्ञासूत्रे भाष्ये ध्वनितत्वादिति भावः। अपशब्दनमिति। न म्लेच्छितवै इत्यस्य नापभाषितवाइति विवरणस्य श्रुतौ दर्शनादिति भावः। यद्यपीदं रूपं श्रुतौ भौवादिकस्य तथा तस्य तदर्थकत्वनिर्णयेन तत्सादृश्यादस्यापि तदर्थकत्वनिर्णय इति बोद्धव्य-

म्लेच्छतीति भ्वादौ। गुर्द पुर्व निकतने । पूर्वनिकेतनइति पठित्वा पूर्वनिवासइति के चिद्याचक्षते। पूर्वतीति पूरणे ऽपि गतम् । जसि रक्षणे। जस्यतीति श्यनि मोक्षणे गतम्। इहैव हिंसायाञ्जासयतीति भविष्यति । तथा ताडने ऽपि । जसु हिंसायाम्। अस्य णिजनित्यः। क्त्वायामिड्विकल्पार्थादुदित्करणाल्लिङ्गात्। जासयति। गूर्दयति जसित्वा। जस्त्वा। जस्तम्। पिडि। पिण्डयति। पिण्डति। रुष रोषे। ऽपि हिंसायाम्। रोषति। श्यनि रुष्यतीति गतम्। डिप क्षेपे। सङ्घाते त्वाकुस्मीयः। डिप्यति डिपतीति श्यन्शपोर्गतम्। ष्टूप। स्तूपयति। अतुष्टुपत्। दसेत्यप्येके इति। पितेव पुत्रन्दसये वचोभिरित्यत्र भट्टभास्करेण दसये सङ्गृह्णामि। दस दासि दर्शनदंशनयोरिति चौरादिकस्य व्यत्ययेन वृद्ध्यभावः। धातूनामनेकार्थत्वादभिमतार्थलाभ इति व्याख्यातत्वादिति भावः । स्पश। स्पाशयते। अपस्पशत । अत्स्मृदृत्वरेत्यादिना ऽभ्यासस्याकार इत्यापवादः । स्पश बाधनस्पर्शनयोरिति भ्वादेर्गतम्। तर्जभर्त्सने। तर्जयते। भर्त्सयते। कथन्तर्हि "तर्जयन्निव केतुभि"रिति रघुकाव्यम्। भौवादिकस्य तर्जतेर्हेतुमण्णिचि। वस्तगन्ध। अर्दनं हिंसा। वस्तेति दन्त्योष्ठ्यादिः। कूण सङ्कोचे। दीर्घोपधोयं ह्रस्वोपधस्तु कथादौ भविष्यति। शब्दोपकरणयोः कुणतीति शे गतम्। भ्रूण। भ्रूणयते। भ्रूणो ऽर्भको गर्भश्च। यत्र पूजायाम्। अच्। यत्रः। गूर। दीर्घोपधोयम्। गूरयते। ह्रस्वोपधस्तु दिवादौ तुदादौ च । किं च चुरादिरनीदित् इतरावीदितौ । शामयतइति। आकुस्मीयत्वात्तङ्। कथन्तर्हि निशामय तदुत्पत्तिमित्येतदनेन सिद्धमिति वदन्तीति चेत्। स्वार्थण्यन्ताद्धेतुमण्णिचि इति गृहाण । न चार्थासङ्गतिः। निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजुत्पत्ते-

---

मू। अयन्दिवादाविति। वा भ्राशेत्यनेन श्यनः सत्त्वात्तत्फललाभेन दिवादावित्युक्ति-

रिति सिद्धान्तात् । लक्षयतीति तु गतम् । कुत्स । ण्यासश्रन्थेति युच् । कुत्सना । यूनस्त्र कुत्सायामिति निर्देशादङ् । कुत्सा । त्रुट् । श्यन्दिवादौ तुदादौ च । भल आभण्डने । आभण्डनं निरूपणम् । पवर्गतृतीयादिरप्ययमिति वोपदेवः । कुट्टयते इति क्षीरस्वामी । मैत्रेयादयस्तु कुटेति पठित्वा कोटयते इत्युदाहरन्ति । वञ्चु प्रलम्भने । वञ्चयते क्त्वायामिड्विकल्पार्थादुदित्करणात् णिजनित्यः । वञ्चति । वञ्चिता । उदिदयमिति केचित् तन्मते वङ्क्तेत्यपि । वञ्चित्वा । वचित्वा । वक्त्वा । वञ्चिलुञ्च्यृतस्चेति सेटः क्त्वः कित्त्वविकल्पनात्पक्षे लोपः । इडभावे तु नित्यं निष्ठायां वक्तव्यम् । वृष शक्तिबन्धने । केशवस्वाम्यादिमतमाह । प्रजननसामर्थ्यमिति । मैत्रेयमतमाह । शक्तिसम्बन्ध इति । प्रातिपदिकमिति । स्मयतेः कुशब्दपूर्वादन्येष्वपि दृश्यत इति सूत्रे ऽन्येभ्यो ऽपि वच्यमाणत्वात् । उप्रत्यये कुगतीति समासे निष्पन्नमित्यर्थः । यद्यपि कुस्मयते इत्यादि स्मिङो लडादिषु सिद्धं तथापि प्रकुस्मयतइत्यादि न स्यात् । उपसर्गस्य धातुव्यवधानायोगात् । किं च । कुस्मयाञ्चक्रइत्याम्न स्यात् । कण निमीलने । काणः स्वभावादयमेकनेत्रनिमीलनवचनः । काणयादीनामिति । ते च हेतुमणौ वच्यन्ते । चट स्फुट । चाटयति । स्फोटयति । निषेधाल्लिङ्गादिति । विशब्दनार्थादस्मादनन्तरा निष्ठा नास्तीति किं प्रतिषेधेनेति भावः । लस शिल्पयोगे । स्वामी तु शिल्पोपयोगइति पठित्वा लषेति मूर्द्धन्यान्तङ्के चित्पठन्तीत्याह । यत निकारोपस्कारयोः । स्वामी तु निकारस्थाने निराकारेति पठित्वा निराकारः परिभाव इति व्याख्यत् । क्रियानिघण्टौ च । यत्ने प्रैषे निराकारे यातयेदप्युपस्कृताविति । निर्यातं धान्यधनयोः प्रतिदाने । ऋणं निर्यातयति प्रतिददातीत्यर्थः ।

---

धातुवृत्त्यन्तरानुसारेण वा । आम्न स्यादिति । अचुकुस्मतेति च न स्यात् कुस्मयतइत्यत्र स्वरे विशेषश्च स्यादित्यपि बोद्धव्यम् । विशब्दनार्थादिति । अन्यथेत्यादिः । ण्यादे-

रकलग। राकयति। लागयति। रके शङ्कायाम्। लगे सङ्गे। इति घटादौ। अञ्चु विशेषणे। विशेषणं व्यावर्त्तनम्। वस स्नेहेत्यादि। अयं निवासे भ्वादिः क्र्यादिश्च। वस्तइत्याच्छादने। वस्यते। स्तम्भने वास उपसेवायामिति दीर्घोपधः कथादौ। कृपेश्चेति। क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा तादर्थ्यइति प्रस्तुतस्य भुवोर्थे मिश्रीकरणे अथ वा तच्छब्देन कृपिः परामृश्यते तस्य योर्थः सामर्थ्यलक्षणः तस्मिन्निति द्वेधा व्याख्यत्। स्वदिमभिव्याप्येति। क्षीरस्वामी तु आङ्पूर्वात्स्वदेः सकर्मकाण्णिजिति व्याख्यत्। एतद्वचनो नाद्रियन्ते। आकुस्मादिति। पूर्वत्राधृषादागर्वादिति परत्र चाङो ऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितत्वेनात्रापि तथैव व्याख्याया उचितत्वात्। पोषयतीति। अपश्यन्नुभनास्तु पुष्टौ गतः। घाटयतीति। अयं सङ्घाते गतः। पुनः पाठो ऽर्थभेदात्। एकदेशिमतेनात्र। लडि तड नल चेति। लण्डयति। लण्डति। ताडयति। नालयति। स्वाद इत्येके इति। अस्मिन्मते पूर्वसूत्रे ऽपि आस्वादस्सकर्मकादिति दीर्घपाठो बोद्ध्यः। दीर्घस्य त्विति। इदमेव दीर्घपाठस्य फलम्। ह्रस्वपाठे ऽप्युपधावृद्ध्या आस्वादयतीत्यादिरूपाणान्तुल्यत्वात्। सन्नन्तेपि सिस्वादयिषतीति रूपन्तुल्यमेव सः स्विदिस्वदिसहीनाञ्चेति सूत्रेणाभ्यासेणः परस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वात्॥ आस्वदीयाः समाप्ताः॥

अथाधृषीया युजादयः। आधृषाद्वा॥ योग्यतावलाण्णिजिति सम्बद्ध्यते। युजेर्णिजभावे ऽनिट्कतां स्पष्टयितुमुदाहरति। अयौक्षीदिति। षह मर्षणे। अस्येह पाठो वृत्तिकारादीनामनभिमत इति दि-

---

स्तु न विशब्दने वृत्तिः। घुषिरविशब्दनइति तत्र पाठादिति भावः। क्र्यादिश्चेति। द्रष्टव्य इति शेषः। वस्नीमहीति। अभियुक्तप्रयोगादिति भावः। इदमेवेति। षत्वाप्रवृत्तिरूपमित्यर्थः। सः स्विदीति। न च स्विदिसाहचर्येणास्य हेतुमण्णावेव प्रवृत्तिः। निरनुबन्धकपरिभाषया ऽस्यापि तत्र ग्रहादिति भावः। णिशब्देन च

वादौ षद्दषुद्दचक्रयर्थइत्यत्रावाचोमेति माधवः। एतच्च प्राचीनस्वग्रन्थविरुद्धम्। तत्र हि स्वयमेवैतद्विपरीतं प्रतिपादितमिति सहृदयैराकलनीयम्। ईर क्षेपे। ईरयति। ईरति। अदादौ ईर्त्ते इति गतौ कम्पने च गतः। लेलेति। विभाषा लीयतेरित्यात्वं न भवति। लिनातिलीयत्योर्यका निर्देश इति भाष्यकारोक्तेः। वरीतेति। वृतो वेति वा दीर्घः। वृषीष्ट। वरिषीष्ट। अवृत। अवरिष्ट। अवरीष्ट। लिङ्सिचोरात्मनेपदेष्विति वेट्। न लिङीति दीर्घनिषेधः। अवारिष्टाम्। अवारिषुः। सिचि च परस्मैपदेष्विति दीर्घनिषेधः। रिच। अनिट्कता स्रक्ष्यति। रेक्तेति। अग्निश्रदिति। क्सः। यत्तु देवेन सिचि इटि अस्रेक्षीदित्युक्तन्तदस्यानिट्त्वादयुक्तमिति प्रामाणिकाः। तर्पितेति। सेट्। अनिट्त्सु श्यना निर्देशात्। कृदी। ईदित्वान्निष्ठायां नेट्। कृशः। कृशवान्। ग्रन्थतीति। ग्रथ्नातीति सन्दर्भे क्र्यादौ गतम्। वद सन्देशवचने। ववदतुरिति। यजादेस्तु ऊदतुरिति गतम्। वचतीति। अदादौ वक्तीति गतम्। अवाक्षीदिति। अस्यतिवक्तीत्यङ् न। लुका निर्देशात्। वचिस्वपीति संप्रसारणन्तु कित्सु स्यादेव। उच्यात्। मुष तितिक्षायाम्। अयमदन्त इति वोपदेवः। तन्माधवादयो न मन्यन्ते। धृष प्रसहने। शाकटायनस्त्वनिडित्याह। तन्मते धृष्टः। मुख्यमते धृषितः। एषु पञ्च बाधन इति तालव्यान्तं मैत्रेयादयः पठन्ति। इत्याधृषीयाः॥

अथादन्ता इति। वक्ष्यमाणेषु धातुष्वन्त्यो ऽकारो विवक्षितो न तू-

---

णिमात्रग्रहणमिति बोद्धव्यम्। प्राचीनेति। दिवादिस्थेत्यर्थः। भाष्यकारोक्तेरिति। लीयतेरिति रूपासम्भवाच्चेति बोद्धव्यम्। लुका निर्देशादिति। ख्यातिसाहचर्येण तथा निर्णय इति भावः। स्यादेवेति। वचिस्वपीति सूत्रे तु स्वपिसाहचर्यलुग्विकरणपरिभाषाभ्यां व्याख्यानाद्वोभयोर्ग्रहणमिति भावः। मुख्यमते इति। निष्ठाशीङित्यत्र साहचर्येणादित एव ग्रहणमिति। न तूच्चारणार्थ इति। उच्चारणार्था-

च्चारणार्थो नापीत्सञ्ज्ञकः । अनुनासिकत्वाप्रतिज्ञानादित्यर्थः । यत्तु प्रसादकृतोक्तं धातुसूत्रमेतदिति । तन्न । धातुपाठे अनुपलब्धेः । तद्वृत्तिकारैरस्पृष्टत्वाच्च । एतेन अदन्तत्वविधानार्थमिदमिति प्रत्युक्तम् । यदि क्वचिदुपलभ्येत तथा ऽप्युक्तरीत्या अनुवादस्यैव न्याय्यत्वात् । स्तनगदी । अनेकाच्त्वेन षोपदेशत्वाभावात्षत्वं न । तिस्तनयिषति । कल गतौ । कलयति । कलते इति अपि गतम् । ततो हेतुमण्णौ कालयति । साम । सामयति । धात्वन्तरेण गतार्थत्वभ्रमं व्यावर्त्तयितुमुदाहरति । अससामदिति । पल्यूल । नास्य पल्यूलनेन वासः पल्यूलयेयुरिति तैत्तिरीयाणां संहिता । पल्यूलनं शोधनद्रव्यमिति भाष्यम् । ऊन परि । अस्मात्णौ चङि नशब्दस्य द्वित्वमिष्टन्तच्च दुर्लभम् । द्वित्वात्परत्वादल्लोपात् । न च द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्त्तव्ये अल्लोपस्य स्थानिवद्भावो निषेधो वेह लभ्यते । णिचो द्वित्वनिमित्तत्वाभावादत आह । ओः पुयण्ज्यादि । णिचो द्वित्वनिमित्तत्वाभावेपि तन्निमित्तकस्याजादेशस्य निषेधः स्थानिवत्त्वं वा लिङ्गेन साध्यते । लिङ्गञ्च ओः पुयण्जीति यथाश्रुतग्राहिणः । तेषामयमाशयः । तेन हि सूत्रेण बिभावयिषति लिलावयिषति जिजावयिषतीत्यादावभ्यासोवर्णस्येत्वं विधीयते तच्च णिच्येव पवर्गयण्जानामवर्णपराणान्तचैव सम्भवादिति । न त्वेतद्युक्तम् । पिपविषते पिपविषतीत्यत्र सूत्रस्य चरितार्थत्वात् । तथा हि पूङो यौतेश्च सनि स्मिपूङ्रञ्ज्वशामिति सनीवन्तेति च सूत्राभ्यामिटि कृते द्विर्वचनेऽचीति सूत्रप्रवृत्त्या ऽस्तोऽहाभ्यासे उकारः । तस्मात्सम्पूर्णसूत्रस्य ज्ञापकतोक्तिरसङ्गता । अत

---

नामपीत्सञ्ज्ञेति भाष्यसम्मते नापीत्सञ्ज्ञक इति अस्यैव व्याख्यानं नापीत्सञ्ज्ञक इति बोद्धव्यम् । स्वोक्तव्याख्यानफलन्तु उच्चारणार्थानामित्सञ्ज्ञत्वबोधनमेव । धात्वन्तरेति । षान्त्व सामप्रयोगे इत्यस्य स्थाने षाम सान्त्वप्रयोगे इति पठतां मतेनेदम् । पल्यूलेति । द्वावपि पवर्गीयो । शोधनद्रव्यमिति । सावणेति प्रसिद्धम् । द्वित्वात्प-

आह। वर्णप्रत्याहारेत्यादि । अबीभवत् । अमीमवत् । अरीरवत् । अलीलवत् । अजीजवत् । बिभावयिषतीत्यादिसिद्धिर्हि वर्गादिग्रहणस्य फलं वाच्यम् । तच्चाभ्यासे उवर्णस्य दुर्लभत्वात् अकारस्य सन्यत इतीत्त्वेन रूपसिद्धेश्च दुरुपपादम्। अतो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमित्यर्थः । ज्ञापनफलन्तु यत्र ओः पुयणित्यस्याप्राप्तिस्तत्र बोध्यम् । तद्यथा । चुश्रावयिषति । उडुरिवाचरति उडवति । ततो णौ सन् । उडुडावयिषति । चङि औजूडवत् । तुनावयिषति । अतूतवत् । ऊर्णुनावयिषति । और्णूनवत् । पुस्फारयिषति । अपुस्फुरदित्यादि। तदेतत्सकलमभिप्रेत्य भगवता कात्यायनेनोक्तम् । "ओः पुयणिजषु वचनं ज्ञापकं णौ स्थानिवद्भावस्ये"ति । पतञ्जलिना तु तुल्यजातीयस्य ज्ञापकमिति पवर्गादेरन्यस्मिन्नपि ह्रस्ववर्णपरएव स्थानिवत्त्वमित्यचिकीर्त्तदित्यादौ नातिव्याप्तिरिति सिद्धान्तितम् । अत्रावर्णपरत्वञ्चिं स्थित्त्वप्रवृत्तिवेलायां विवक्षितम्, किं वा परिनिष्ठिते रूपे । नाद्यः । चुश्रावयिषतीत्यादौ तदभावात् । न द्वितीयः । औननदित्यादौ तदभावादित्याशङ्क्याह । प्रक्रियायामित्यादि । क्वचिदवर्णपरत्वं विवक्षितम् । न त्वमुकत्रैवेत्यत्र बीजमस्तीति भावः । यत्तु प्राचा क्वचिदेवमाङ्करित्यादिना उवर्णादेश एव स्थानिवत्त्वान्नान्यत्रेति मतमुपन्यस्तम् । तत्र क्वचिदित्युक्त्यैव दुर्बलत्वं स्पष्टमवगम्यते । तद्बीजन्तु भाष्यादिविरोध एव । तथा हि । अस्मिन्पक्षे अचिकीर्त्तदित्यादौ स्थानिवत्त्व-

---

रत्वादिति । अन्तरङ्गत्वादित्यर्थः । उक्तार्थे ज्ञापकमिति । उरर्कृजुअञ्चुप्रभृतिभ्य आचारक्विबन्तेभ्यः सनोऽनभिधानञ्ज्ञापकपरभाष्यप्रामाण्यादिति भावः । उडुडावयिषतीति । इदं व्याख्यादर्शोक्तत्वादुदाहृतन्न त्वाचारक्विबन्ताण्णिजादिसत्त्वे दृढतरं मानमस्ति । केचित्तु चुलुम्पादिवदुडवतिराकाशगमनानुकूलव्यापारार्थको धातुः पक्षिण उडावयतीत्येवं लोकव्यवहारादिति वदन्ति । सिद्धान्तितमिति । तथा च भाष्ये उक्तम् । ओः पुयण्जिषु वचनञ्ज्ञापकं णौ स्थानिवद्भावस्य यद्येतत् ज्ञाप्यते ऽचिकीर्त्तदत्रापि प्राप्नोति तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयो

प्रसङ्ग एव नास्ति। उवर्णादेशत्वाभावात्। तथा चोत्तरभागे अवर्णाभावादिति भाष्यकारोक्तः परिहारो व्यर्थ एव स्यात्। किं च। लोपः पिबतेरिति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ युकि चङि उपधालोपे च तस्य स्थानिवत्त्वात् पाप्शब्दस्य द्विरुक्तिरिति वृत्तिग्रन्थो विरुध्येत। अपि च। पूर्वत्रासिद्धमिति सूत्रे काशिकायां वहेः क्तान्तात्णिचि चङि औजढदित्युदाहृत्य क्तिन्नन्तस्य तु औजिढदित्युक्तम्। तत्रैव न्यासकृता णौ कृतस्य टिलोपस्य स्थानिवद्भाव इति व्याख्यातन्तदुभयं विरुध्येत। किं च शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथेति वैयाघ्रपद्यवार्त्तिकमपि विरुध्येतेति दिक्। यत्तु प्राचो ग्रन्थं व्याचक्षाणैरुक्तङ्काशिकाकारमतमुदाहृत्य त्रिमुनिमतमुत्तरपश्यन्नाह केचिदेवमाहुरिति। एवं वक्ष्यमाणं केचिद्भाष्यतत्त्वविद इत्यादि। तत्सर्वं वोपदेवग्रन्थश्रद्धाजाड्यप्रवृत्तप्रसादग्रन्थमूलकमिति मूलाशुद्धेरेवोपेक्षणीयम्। तथा हि। वोपदेवेन काव्यकामधेनौ अङ्कधातोर्णिच्यल्लोपे चङि स्थानिवत्त्वात् कशब्दस्य द्वित्वे आञ्चकदिति रूपमेकीयमतत्वेनोपन्यस्य मुनित्रयविरुद्धमिति दूषितम्। द्विर्वचनेऽचीति हि पाणि-

---

यथाजातीयकाः पुयण्जयः कथञ्जातीयकाश्चैते ऽवर्णपरा इति। व्यर्थ एव स्यादिति। उवर्णादेशत्वाभावेन तत्र तदप्राप्तेरिति भावः। ननु परिहारबलादेवोवर्णादेश इत्यर्थलाभस्तथा हि ज्ञापकस्य सजातीयापेक्षत्वेन पुयण्जीनां परिनिष्ठितरूपे एवोवर्णादेशावर्णपरत्वस्य सम्भवेन तद्भाष्यतस्तदर्थलाभ इत्यरुचेराह। किं च लोप इति। भाष्यस्थावर्णेत्यस्य तथा लाक्षणिकतया व्याख्याने न मानमित्यपि बोद्धव्यम्। नन्वभ्यासात्पूर्वं सन्नियोगशिष्टन्यायेन लोपाऽप्रवृत्तेः सा ऽसङ्गतैवेत्यरुचेराह। अपि चेति। ननु पूर्ववृत्तिग्रन्थवदयं वृत्तिग्रन्थोऽप्यसङ्गतोऽस्त्वित्यत आह। किं च शुष्किकेति। इदञ्च पूर्वत्रासिद्धमित्यस्य प्रयोजनकथनपरम्। तत्राद्ये निष्ठानत्वस्यासिद्धत्वादुदीचामात इति विकल्पाभावः। द्वितीये न कोपधाया इति पुंवत्त्वनिषेधाभावः। इदञ्चिन्त्यम्। कोपधप्रतिषेधे तद्धितवुग्रहणात् तृतीये निष्ठानत्वस्यासिद्धत्वान्मतोर्मस्य वत्वाभावः। क्षामशब्दादिनन्तान्मतुप्। अ-

नेः सूत्रम् । तच्च द्विर्वचनपदावृत्त्या कात्यायनेन व्याख्यातम् । तथा तुष्टावयिषतीत्यादावव्याप्तिस्तेनैव ओः पुयणिति ज्ञापकबलेन परिहृता । पतञ्जलिना चावर्णपरएव इन्नि स्थानिवत्त्वमित्याश्रित्यातिव्याप्तिरुद्धृता । एवञ्च वदता उवर्णादेशस्य स्थानिवद्भावो ऽभिप्रेतः । किं च कात्यायनेनोक्तपूर्वविप्रतिषेधखण्डनपरभाष्यस्वरसेनाप्ययमर्थो लभ्यते । षाष्ठद्वित्वप्रकरणान्ते हि पूर्वविप्रतिषेधः पठ्यते "द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपकिकिनोरुत्वेभ्य" इति । तथा च दध्यत्रेत्यादौ सावकाशो यण् चयनश्चायको लवनं लावक इत्यादौ चायवायावः । गोदः कम्बलद इत्यादावाल्लोपः । स्नेघ्न इत्यादावुपधालोपः । कारणा हारणेत्यादौ णिलोपः । निपूर्त्त इत्यादावुत्त्वञ्चेत्येतानि न व । बिभिदतुरित्यादौ सावकाशेन द्वित्वेन पूर्वविप्रतिषेधाद्बाध्यन्ते । तेन चक्रतु, शिचाय, लुलाव, चिचयिथ, लुलविथ, पपतुः, तस्थतुः, जग्मतुः, जघ्नतुः, आटिटत्, तेरु,जंगु, रित्यादि सिद्धम् । एवञ्च द्विर्वचने ऽचीति सूत्रं नारम्भणीयमिति वार्त्तिकाशयः । भाष्यकारस्त्वाह । उक्तरीत्या चक्रतुरित्यादि सिध्यतु । चुच्चावयिषतीत्यादौ त्वन्तरङ्गत्वाद्वृद्ध्यादौ कृते अभ्यासे इत्वं श्रूयेत । न ह्यन्तरङ्गेण सह विप्रतिषेधः । अतुल्यबलत्वात् । तथा च त्वयेत्थं वचनं कर्त्तव्यं ओदौदादेशस्य चुटुतुशरादेरभ्यासस्यात उद्भवतीति । ओदौतोरादेशो यस्मिन्नङ्गे तस्य योभ्यासः चुटुतुशरादिस्तदकारस्योत्स्यादित्यर्थः । चुच्चावयिषति । उडुडावयिषति । तुतावयिषति । ऊर्णुनावयिषति । पुप्रावयिषति । पुस्फारयिषतीत्यादि । एवञ्च सूत्रमतमेव प्रबलमिति । एवं वदतो भाष्यकारस्य

---

न्ये कुहोश्चुरित्यस्य प्रवृत्तिः । इति वदतोवर्णेति । अस्याशय उक्तः । किकिनोरुत्वेभ्य इत्यार्षो विभक्त्यलुक् । वार्त्तिकाशय इति । यियविषतइत्याद्यर्थं वचनावश्यकतोभयोरपि समा । वार्त्तिकञ्च द्विर्वचने ऽचीत्यस्यानुमानिकस्य च खण्डनतात्पर्यकन्तत्र विरुद्धं स्यात् तत्रातो लोपस्याऽगणनादिति भावः । ओदौदादेशस्येत्यत्र

श्रीजढदाच्चकदित्यादावभ्यासे ऽकारो यदि सम्मतः स्यात्तर्हि तदर्थं यत्नान्तरमास्थेयमिति वार्त्तिककारं प्रति गौरवान्तरङ्कथं नापादयेत्। तस्मादल्लोपस्य स्थानिवत्त्वं भाष्यकाराणामनभिमतमिति निर्णीयते। वामनादयस्तु महाभाष्यविसंवादादुपेक्ष्या इति। एतच्च सर्वं वोपदेवग्रन्थपर्य्यालोचनया पर्य्यवस्यतीति सत्यमेव किन्तु वोपदेवस्यैवेह महान्प्रमादः। न तु वामनादीनाम्। तथा हि। यत्तावदुक्तम्। अवर्णपरएव हलि स्थानिवत्त्वं वदता ऽवर्णादेशस्यैव तदभिप्रेतमिति। तन्न। आच्चकदित्यादावपि द्विरुक्तौ प्रक्रियादशायामभ्यासोत्तरखण्डे ऽवर्णस्य सुलभत्वात्। ननु नासौ प्रयोगे समवैतीति चेत् किन्ततः। न हि प्रयोगसमवायित्वं विशेषणं भाष्ये दत्तम्। एवञ्च नुनावयिषतीत्यादौ द्वित्वप्रवृत्तिवेलायामवर्णाभावेपि पश्चाद्भाविनन्तमाश्रित्य यथा स्थानिवत्त्वादिकं प्रवर्त्तते तथेह पश्चात्तद्विरहेपि प्रक्रियादशायान्तत्त्वादिति न कोपि दोषः। एतच्च सुब्धातुवृत्तौ कीर्त्तयतेर्धातुवृत्तौ च माधवग्रन्थे स्पष्टम्। यदप्युक्तं वार्त्तिकदूषणपरभाष्यस्वरसोत्र मानमिति। तदपि न। भाष्ये हि दूषणदिङ्मात्रमुक्तम्। न तु दूषणान्तरं नास्तीति। तथा हि। बहवस्तत्र दोषाः। तद्यथा विप्रतिषेध एव तावदयुक्तः। अल्लोपादीनां नित्यत्वात्। द्वित्वस्यानित्यत्वेनातुल्यबलत्वा-

---

समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ दोषः स्यादत आह। ओदोतोरिति। इदञ्च वचनमुत्तरस्यात इत्युत्तरं पाठयन्तेनोदितिनापूर्वमिति बोद्ध्यम्। फलान्तरम्। वचनान्तरकरणरूपम्। भाष्यकाराणामिति। ज्ञापकस्य सजातीयापेक्षत्वात्सूत्रकारस्याप्यसंमतमिति बोद्ध्यम्। विशेषणं भाष्ये दत्तमिति। अपूर्वतद्दाने तु गौरवमिति भावः। ओः पुयण्जिष्वित्यत्र ओरित्युक्तिस्तु सूत्रैकदेशग्रहणान्नाधिकेति न तद्बलेन कुकल्पनाभिनिवेशः कार्य इति बोद्ध्यम्। विशेषणादाने च परिनिष्ठितरूपार्थं शास्त्रारम्भेण तत्रत्यावर्णपरत्वमिव प्रक्रियादशायां शास्त्रप्रवृत्त्या तत्रत्यस्यापि ग्रहीतुमौचित्येन वार्तिके पुस्फारयिषतीति सिद्ध्यै चुटुतुशरादित्वस्येवावर्णपरत्वस्याप्यनियतस्यैव ग्रहीतुमौचित्येन च विनिगमनाविरहेण सर्व-

त्। किं च पूर्वविप्रतिषेधे सर्वत्र वचनस्यारम्भणीयत्वादिह तु सुतरा-न्तथेति क्व लाघवम्। अपि च क्रियमाणं वचनं नित्यानिवान्तरङ्गानपि बाधेत। ततश्च निनवनीयिषति दिद्वनीयिषतीत्यादावप्यभ्यासे उ-कारः श्रूयेत। यदि तु ओदौदादेशस्येत्यादि वचनङ्कृत्वा तदेवान्तर-ङ्गाणामबाधे ज्ञापकं ब्रूषे तर्हि तदेव वचनं निनवनीयिषतीत्यादावपि प्रवर्त्तेतेति तद्दोषतादवस्थ्यम्। तद्वारणाय यत्नान्तरमास्थेयम्। एवं स्थिते औजढदित्यादावभ्यासे अकारादेशो विधेयः स्यादित्यपि वा-र्त्तिकमते दूषणान्तरमस्तु। तस्मादित्थं वार्त्तिकं स्वयमूहनीयम्। ओ-दौदादेशस्य चुटुतुशरादेरभ्यासस्योत्सनि। ततः अल्लोपवतो णिचोत्। अल्लोपवतोङ्गस्याभ्यासस्य णिचो ऽत्स्यात्। औजढत्। आच्चकत्। एवं स्थिते वामनन्यासकारादिग्रन्थाः वैयाघ्रपद्यवार्त्तिकञ्च भाष्याविरो-धेन समर्थितं भवति। सरस्वतीकण्ठाभरणग्रन्थोप्यत्रैवानुकूलः। य-दपि वोपदेवेनोक्तं वैयाघ्रपद्यवार्त्तिके औजिढदित्येव पाठः सांप्रदा-यिकः। श्रोत्रियास्तु प्रमादाज्जिस्थाने जं पठन्तीति तदप्येतेन प्रत्युक्त-

---

त्र प्रवृत्तिरित्याह। एवञ्चेति। बहव इति। निन्यतुरित्यस्य सिद्धये इयङ्पाठः कर्त्तव्यो जग्लावित्यादिसिद्धये वृद्धिपाठः कर्त्तव्य इत्येवंरूपा इत्यर्थः। अन्यानप्या-ह। तथेति। आल्लोपादीनामिति। यणो ऽपि नित्यता बोद्धव्या। आरम्भणी-यत्वादिति। इष्टानिष्टविवेकस्य लक्षणैकचक्षुष्कैर्वचनमन्तरेण ज्ञातुमशक्यत्वादिति भावः। सुतरामिति। नित्यबाधायेत्यर्थः। एकाचः प्रथमस्येत्यादिसापेक्षद्वित्वापे-क्षया यणादीनामन्तरङ्गत्वात्तद्बाधायेत्यपि बोद्धव्यम्। यत्नान्तरमिति। अभ्यासविशे-षणं सनीति पूरणीयम्। तेन निर्दिष्टपरिभाषया ऽनेकव्यवधाने न दोष इति भा-वः। किं च जोः सौत्रात् णिचि सनि लुङि च जिजावयिषति अजीजवदित्य-त्रौदौदादेशस्येत्यनेनाभ्यासे उत्वापत्तिस्तदर्थमोः पुयणित्यत्र जग्रहणं कार्यम्। न च तत्र वचने चकार एव पठनीयो न चुशब्द इति वाच्यम्। गुङ्घुङ्भ्यां णिचि चाङि सनि चाऽजूगवदित्यादौ दोषापत्तेः। किञ्चाऽभ्यासविशेषणे सनीति कृते ऽपि तुतावयिषतीत्यादौ चारितार्थ्येन तुष्टावयिषतीत्यादावनापत्तिः। षकारेणा-

म्। उक्तरीत्या सर्वसौष्ठवे श्रोत्रियाणां प्रमाद इत्यस्यैव प्रामादिकत्वात्। यदपि वोपदेवेन स्वोक्तेर्थे उपष्टम्भकतयोपन्यस्तम्, दुर्गगुप्तेन दुर्गटीकायां,त्रिलोचनदासेन कातन्त्रपञ्जिकायां, वर्द्धमानमिश्रेण कातन्त्रविस्तरे, हेमसूरिणा हैमव्याकरणे एतच्च ज्ञापकमजन्तस्यापवर्गपरस्यावर्णएव वेदितव्यमिति प्रदर्शितमिति। अभिनवशाकटायनेन शब्दानुशासने णिच्निमित्तादपि प्राग् द्विः तच्चावर्णपरइति प्रदर्शितमिति। तदेतत्सर्वत्र वामनादीनां प्रतिकूलम्। प्रक्रियादशायामवर्णपरमस्तीत्युक्तत्वात्। तस्मादाञ्चकदित्येव न्याय्यमिति स्थितम्। यत्तु अदन्तेषु ऊनधातोर्माधवीयधातुवृत्तौ नोनयतिध्वनयतीति सूत्रे काशिकापदमञ्जर्योश्च औनिनदित्यभ्यासे इकारसहितङ्क्षित्यद्यते तत्सर्वं लिपिप्रमादप्रयुक्तमेव। स्थलान्तरस्थप्रागुक्तमाधववामनग्रन्थविरुद्धत्वात्। तदेतत्सकलमभिप्रेत्याह। प्रकृते त्विति। औननदिति। नोनययतिध्वनयत्येलयत्यर्दयतिभ्य इति चङ्निषेधस्तु नेह कृतः। तत्र गुपेश्छन्दसीति पूर्वसूत्राच्छन्दसीत्यनुवृत्तेः। तस्योदाहरणन्तु "मा त्वायतो जरितुः काममूनयीः"। "मात्वाग्निर्ध्वनयीद्धूमगन्धि"रित्यादि। अत्र सिचि वृद्धिर्न। ह्म्यन्तेति सूत्रे ण्यन्ते तन्निषेधात्। यत्तु प्राचा द्वयमपि लोकइत्युपनिबद्धम्। यच्च व्याचख्युः छन्दसीति नानुवर्त्तते विभाषा धेट्श्व्योरिति विभाषाग्रहणञ्चानुवर्त्ततइति तन्न सूत्रे नञो वैयर्थ्यापत्तेः। वृत्त्यादिसर्वग्रन्थविरोधाच्च। अत एव छन्द-

---

धिकेन व्यवधानादिति बोद्ध्यम्। एवं स्थितइति। दोषपरभाष्यस्य उपलक्षणत्वात्तत्रयकत्वे इत्यर्थः। णिच इति उपलक्षणं णिङो ऽपि। तेनासस्यदिति सिद्ध्यति। श्रोत्रियाः। यथाश्रुतग्राहिणः। अजन्तस्येति। जकारान्तस्यासञ्ज्ञकयण्पवर्गपराभिन्नस्येत्यर्थः। तत्र सन्यत इत्यनेनैव सिद्धेरिति भावः। द्वयम्। चङ्तन्निषेधरूपम्। अत एवेति। वृत्त्यादिविरोधादेवेत्यर्थः। एतेन नोनयतीतिसूत्रे ऊनयत्यादीनां परस्परसाहचर्याच्चुरादीनामेव ग्रहणम्। आर्दिददिति प्रयोगस्तु

स्तीति नानुवर्त्ततइति केषाञ्चिदुत्प्रेक्षा ऽपि प्रत्युक्ता। तथाच भट्टिः। येनादिदंहैत्यपुरम्पिनाकीति। अतिस्तेनदिति। अनेकाल्त्वेनाषोपदेशत्वात्षत्वन्न। मृग। मार्गयति मार्गतोति मार्गेराधृषीयस्य। अदन्तत्वसामर्थ्यादिति। अयं भावः। कथयतिगणयतीत्यादावुपधावृद्धिनिवारणेन, चकथदित्यादावग्लोपित्वाद्दीर्घसन्वद्भावविरहेण, सारभामप्रभृतीनामुपधाह्रस्वव्यावर्त्तनेन, ग्रहमृगप्रभृतीनामुपधागुणव्यावर्त्तनेन, चादन्तत्वं सार्थकम्। गर्वादीनान्तु अदन्तत्वे प्रागुक्तफलासंभवात् णिज्विकल्पो ऽनुमीयते। युक्तञ्चैतत्। चिन्तयतेरदित्वं सामान्यापेक्षज्ञापकमिति मते इहापि अकारफलस्य स्पष्टत्वात्। विशेषापेक्षज्ञापकमिति मतेपि तत्र तत्र आकार इकार ईकार उकार ऊकारस्येत्यनुबन्धा यथाज्ञापकतया स्वीकृताः यथा च अविशब्दनइति निषेधः, तथा अदन्ततापस्तु। एवं सति मतद्वये ऽप्येकरूपफललाभात्। यत्तु वोपदेवेनोक्तमग्लोपित्वं स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्रालोपविकल्पनमिति। अत्रेदं वक्तव्यम्। विकल्पस्तावदनेकदोषदुष्टो निर्मूलश्च लोपाभावस्यैव सुवचत्वात्। वस्तुतस्तु सोपि न। अन्यच्च क्लृप्तेन णिज्विकल्पेनैव कृतार्थत्वे ऽपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात्। यत्तु अदन्तत्वसार्थकत्वाय वा लोप इति प्राचो ग्रन्थं व्याचक्षाणैरुक्तं वाचनिक एवात्र विकल्प इति तद्व्याहतं निर्मूलञ्च। यदि वाचनिकः तर्हि अदन्तत्वसार्थक्यायेति कथ-

---

म्वादेर्हेतुमण्णाविति परास्तम्। अकारफलस्येति। गर्ववान् बभूवेत्यर्थे गर्वाञ्चकारेत्यामूरूपस्येत्यर्थः। आकार इति। पक्ष,परिग्रहइत्यस्य स्थाने पक्षापरिग्रहइति पठतां मतइदम्। इकारश्चिन्त्यादेः ईकारो वृजी इत्यस्य उकारो वञ्चु इत्यस्य। तस्यैव पाठान्तरे ऊकार इति बोद्धव्यम्। ननु वाक्यशेषं समर्थयिष्यामहे सम्प्रश्नप्रार्थनेष्वित्यादिप्रयोगाल्लोपाभावस्यैव कल्पनानुचितेत्यत आह। वस्तुतः सोपि नेति। अल्लोपविकल्पोपि नेत्यर्थः। लोपबाधस्येति। पाक्षिकस्येत्यर्थः। अन्यथादादिष्व-

मन्वियात् । किं च कस्येदं वचनन्तद्वलेन वाचनिकतोच्यतइति न किञ्चिदेतत् । एवञ्च गर्वापयतइत्याद्युदाहरणमप्यसाध्वेव । अङ्कापयतीत्यादि सुतराम् । अङ्कयतेरकारस्य प्रागुक्तरीत्या आत्त्वकदित्यभ्यासे ऽवर्णश्रवणेन कृतार्थत्वात् । एवमर्थापयते इत्यपि । यत्तु आर्त्तिथपतेति प्राचोदाहृतन्तत्सुतरामशुद्धम् । आर्त्तथतेत्यत्राभ्यासे ऽकारस्य श्रवणात् । चङ्परे णावित्यस्याङ्गं लघुं प्रति वा विशेषणतेति पक्षद्वये ऽपि दीर्घो लघोरिति दीर्घस्य दुर्वारत्वाच्च । यदपि व्याचख्युः । हलादेरित्युक्तेर्न दीर्घ इति तदपि न । हलादेरित्यस्य निर्मूलताया उक्तत्वात् । नन्वङ्गं यत्र द्विरुच्यते इति माधवोक्तरीत्या नेह दीर्घ इति चेन्न । तन्मते अल्लोपस्यावश्यकत्वादिति दिक् । परत्वाद् वृद्धाविति । लोपः शब्दान्तरप्राप्त्या अनित्यः । वृद्धिरनित्येति तु स्पष्टमेव । उभयोरनित्ययोर्वृद्धौ कृतायामौकारस्यावादेशात्पूर्वमेव परत्वादाणादाङ्गस्य बलीयस्त्वाच्च औलोप इत्यर्थः । एवञ्चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्तः । न च टिलोपस्य स्थानिवद्भावेन व्यवधानं शङ्क्यम् । तथा ऽप्यङ्गस्य णिच्परत्वानपायात् । चङ्परे णौ यल्लघ्विति पक्षे कथमिति चेत् अभ्यासस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति गृहाण । अत एव मुण्डमिश्रेति सूत्रे हलिकलयोरदन्तनिपातनं भाष्यवार्त्तिका-

---

पि तेषामित्सञ्ज्ञाबाध एव स्यादिति भावः । सुतरामशुद्धमिति । पुको ऽभ्यासे ह्रस्वस्य चासङ्गतेरिति भावः । तदुपपादयति । आर्त्तथतेत्यत्रेति । आकारश्रवणादिति । तस्माद्धेतोरल्लोपबाधे मानाभावेन पुको दुर्लभत्वमिति भावः । आर्त्तथपतेति क्वाचित्को ऽपपाठः । अभ्यासे ह्रस्वासङ्गतिमाह चङ्परे इति । आवश्यकत्वादिति । तेनोनधातौ अल्लोपस्यैवाङ्गीकारादिति भावः । वृद्धाविति । परत्वादिति भावः । व्यवधानमिति । एवञ्च चङ्परणिपरलघुपरत्वासंभव इति भावः । भाष्यसम्मते पक्षे दोषोऽस्त्येवेति शङ्कते । चङ्परे इति । गृहाणेति । द्विःप्रयोगपक्षे ऽनादिष्टादचः पूर्वत्वमस्त्येवेति यदि तदा ऽभ्यासस्य कार्ये कर्त्तव्ये धात्ववयवादेशस्य तत्प्रतिबन्धकस्थानिवत्त्वं नेत्यर्थस्याभ्यासस्यासवर्णेइति सूत्रस्थासवर्ण-

योराश्रितमिति भावः । वृद्धेर्लोप इति । शब्दान्तरप्राप्तौ सत्यामपि कृताकृतप्रसङ्गित्वमात्रेणेह नित्यत्वं स्वीक्रियते । भुवो वुको नित्यत्वादित्यत्र यथेति भावः । इह भाष्यद्वयस्य परस्परविरोधे परत्वाद् वृद्धिरिति मुख्यः पक्षः । वृद्धेर्लोपो बलीयानिति तु प्रौढिवादमात्रमिति हरदत्तः । तद्विपरीतङ्कैयटः । भाष्यद्वयप्रामाण्याद् वृद्धेः पूर्वं पश्चाद्वा कामचारेण टिलोपेन रूपद्वयमपि साध्विति मतान्तरम् । मतत्रयमपीदं सुब्धातुवृत्तौ माधवेनोपनिबद्धम् । अयञ्च मतभेदो णिज्भिन्नविषयः णेर्णिचि तु णयलोपाविति पूर्वविप्रतिषेधान्निष्कर्षरीत्या अपवादत्वाद्वा प्रागेव णिलोपः । उपधाह्रस्वत्वे सन्वद्भावदीर्घयोश्च णेर्णिचीत्युपसंख्यानात् ण्याकृतिनिर्देशाद्वा अवीवददित्येव रूपमित्यवधेयम् । लडर्थस्त्विति । तेन ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययाः सिध्यन्तीति भावः । कंसवधमाचष्टे इति । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्कंसवधशब्दः कृदन्तः ततो णिच् । अप्रत्ययस्य लुक् तस्यैव या प्रकृतिः हन् इति तस्या विकारपरित्यागेन स्वेन रूपेणावस्थानन्तदेतदाह । अहन् इति । स्थितइति । हेतुमण्णिचः प्रकृतेरिति । न तु लुप्यमानस्य कृतः । तथा सति हेतुमणौ यादृशन्तस्यातिदेशो न लभ्येत इष्यते च सः । तथैव भाष्यकारेणोदाहृतत्वादिति भावः । इह द्वयमतिदिष्टङ्कारकङ्कार्यञ्च । तत्राऽऽद्विर्वचने अतिदेशद्वयेनापि सिद्धतः । असङ्कीर्णोदाहरणन्तु द्वितीयादिकम् ।

---

ग्रहणेन ज्ञापनान्न दोष इत्यवधेयम् । आश्रितमिति । एतदर्थंज्ञापनार्थमेवेति भावः । न च यथेष्टं नामधातुष्विति द्वितीयस्य द्वित्वे ऽकलल्दित्यभ्यासे ऽकारश्रवणार्थन्तच्चरितार्थम् । एकाचूत्रयसन्निधानएव यथेष्टमित्यस्य प्रवृत्तेरित्यन्यत्र निरूपितम् । रूपद्वयमपीति । लक्ष्यभेदेनेति भावः । ण्याकृतीति । ते प्राग्धातोरित्यत्र गत्याकृतिनिर्देशवदिति भावः । न तु लुप्यमानस्य कृत इति । तथा सति तत्प्रकृत्यर्थे यादृशं कारकन्तादृशं णिच्प्रकृत्यर्थे ऽपीत्यर्थः स्यात्स च दुष्टः कंसं घात-

कुत्वतत्वादिकञ्चेति विवेकः। इह कंसवधसुभद्राहरणादिनिरूढोपाख्यानएव णिजिति नाग्रहः किं तु प्रतिपादनमात्रे। तेन राजागमनमाचष्टे राजानमागमयति। यद्यपीह कृत्प्रकृतौ राजा कर्त्तास्ति तथापि गमेर्हेतुमण्णौ गतिबुद्धीतिकर्मीभूतः। तद्वच्चेहापि। राजानमित्यस्य प्रकृतिभागो यद्यप्यन्तर्वर्त्तिन्या षष्ठ्या प्रत्ययलक्षणेन पदन्तथापि नकारश्रवणं भवत्येव। रूपातिदेशबलात्। देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तृतीयैव भवति। गतिबुद्धीति नियमेन कर्मत्वापहारे कर्त्तृत्वस्यैव स्थितेरिति दिक्। कर्त्तृग्रहणस्य फलमाह। न त्विति। करिभिरिति। कर्त्तृग्रहणाभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यात्। न तु करिभिरवबध्नाति अवकरयतीत्यदौ लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वादिति भावः। सङ्ग्राम। सङ्ग्रामेति प्रातिपदिकं युद्धार्थकङ्कर्त्र्यर्थे णिचं लभते। अनुदात्तेदिति। भृशादिभ्यो भुवीति सूत्रे कैयटहरदत्ताभ्यान्तथोक्तत्वादिति भावः। एतेनास्यानुदात्तेत्त्वमपाणिनीयमिति माधवोक्तिः प्रत्युक्ता। न चैवं भाष्योक्तमुपसर्गपृथक्करणज्ञापकं भज्येतेति वाच्यम्। युद्धे यो ग्रामशब्द इत्युक्तयैव सामर्थ्यात्संपूर्वस्य लाभे तद्विशिष्टपाठो ज्ञापक इति भाष्याशयात्। नन्वेवम-

---

यतीत्यत्र षष्ठ्यापत्तेस्तदाह। तथा सतीति। अतिदेशद्वयेनापीति। प्रकृतिवत्कारकमित्येतावतापि धातावनन्तर्भूतत्वबोधनद्वारा तद्रहितणिजन्तस्य धातुत्वेन तयोः सिद्धिः कार्यातिदेशेन तयोः सिद्धिस्तु स्पष्टैवेति भावः। असङ्कीर्णेति। द्वितीयादिकङ्कारकातिदेशस्य फलं णिचो धातुप्रत्ययत्वादि कार्यातिदेशस्य फलमिति भावः। द्वितीयादिकमित्यादिशब्दार्थौ देवदत्तेन पाचयतीत्यादौ तृतीया। कुत्वतत्वादिकमित्यादिना राजानमागमयतीत्यादावलोपाभावः। प्रातिपदिकमिति। प्रातिपदिकाधिकारादिदं लब्धम्। कैयटेति। अवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या। असङ्ग्रामयत शूर इत्येवमर्थन्तन्नियमार्थं सङ्ग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गादिति भाष्यमुपादाय तेनोक्तमित्यभिमानः। सामर्थ्यादिति। केवलग्रामशब्दस्य लोके युद्धे प्रयोगाभावादिति भावः। सामर्थ्येन समस्तस्य विशिष्टस्यैवोद्दे-

प्यसमङ्ग्रामतेति न सिध्येत्। अल्लोपित्वाभावेनोपधाह्रस्वापत्तेरित्याशङ्क्याह। अकारप्रश्लेषादिति। स्तोम श्लाघायाम्। अग्निष्टोमः। अग्नेः स्तुत्स्तोमेति षत्वम्। सुखदुःखतत्क्रियायाम्। तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ निर्दिश्येते। प्रातिपदिकाद्धात्वर्थइति सिद्धे ऽनयोः पाठः सोपसर्गात्प्रत्ययार्थ इति मैत्रेयः। रूप रूपक्रियायाम्। निरूपयतीत्यनेकार्थत्वाद्विचारणेयम्। ग्रन्थान्तइति। धातुपाठस्यान्ते इत्यर्थः॥ इति चुरादयः॥

हेतुमति च॥ प्रेरणादाविति। आदिशब्दादध्येषणे तत्समर्थाचरणे च। तत्र भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेषणमाज्ञेत्यर्थः। गुर्वादेराराध्यस्य प्रवर्त्तना अध्येषणं प्रार्थनेत्यर्थः। तत्समर्थाचरणमपि बहुधा। अनुमतिरुपदेशो ऽनुग्रह इति। तत्र यस्यानुमतिं विना क्रिया न निष्पद्यते ऽसौ अनुमतिमात्रेण प्रयोजकः। यथा राजा। वैद्यादिस्तु ज्वरितः कषायं पिबेदिति उपदेशमात्रेण। यस्तु केन चिज्जिघांसितं पलायमानं निरुणद्धि सोपि हन्तुरनुग्राहकत्वेन। अमी च सर्वे विशेषा अर्थप्रकरणादिगम्याः। सर्वानुगतं प्रवर्त्तनासामान्यं णिचोर्थः। नन्वे-

---

श्यकोटौ प्रवेशात्तनाद्यन्ता इत्यत्र तदादिनियमसत्त्वेपि सङ्ग्रामेति विशिष्टस्य धातुत्वसिद्धिः। न चेदं णिजर्थमित्यनुबन्धासञ्जने मानाभावः। तत्करोतीत्येव सिद्धेः। न चास्य समो नोपसर्गत्वङ्ग्रामशब्दार्थस्य क्रियात्वाभावादिति वाच्यम्। सोपसर्गादित्यस्य सोपसर्गसमानाकारादित्यर्थेनादोषात्। मैत्रेय इति। अत्रारुचिबीजन्तु अनयोरखण्डत्वेनैतद्घटकसुदुरोरुपसर्गसमानाकारत्वे ऽपि पूर्वपदत्वाभावः। अत एव दुःखशब्दे इदुदुपधस्येति षत्वं न विसर्गान्तस्य पदत्वाभावात्। व्युत्पन्नत्वे सुधातोर्दुलधातोः खेन्से घात्वन्तस्य विसर्गो बाहुलकात् बहुलमन्यत्रापीति णिलुगिति बोद्ध्यम्। यदापि दुःपूर्वात्खनतेर्डे दुःखमिति तदा ऽपीत एव निपातनाण्णत्वाभाव इति बोद्ध्यम्। एतेनात्र षत्वमङ्गीकृत्य दुष्खेनेत्यादौ षत्वाभावः षात्पदान्तादिति निषेधादिति जिनेन्द्रादयस्तत्परास्तम्॥ इति चुरादयः॥

अनुग्राहकत्वेनेति। अचेतनो ऽप्यनुग्राहकत्वेन प्रयोजको यथा भिक्षा वासय-

वं णिचो लोडादीनाञ्च पर्यायत्वप्रसङ्गः ततश्च पृच्छतु मा भवानिति वक्तव्ये णिजपि प्रयुज्येतेति चेन्न। कर्त्तुस्तु प्रयोजको हि हेतुः प्रैषविषयो नाद्यापि कर्त्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहिता प्रयुक्तिर्णिजर्थः केवला तु लोडर्थ इति विवेकः। उक्तञ्च।

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड्विधीयते।

सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः॥

इति। किं च प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः। अनियतकर्तृका णिजर्थः। पचेति हि वक्तैव प्रेरकः। पाचयतीत्यादौ तु कर्त्तृभिन्नोऽपीति दिक्। अजीजवदिति। जु गतौ। सौत्रो धातुर्जुचङ्क्रम्येत्यत्र निर्द्दिष्टः॥

स्रवतिशृ॥ अपरे इत्यनुवर्त्तते न तु पुयण्जीति पवर्गजकारयोरसंभवात् यणः संभवेऽप्यव्यभिचारात्तदाह। अवर्णपरे धात्वक्षर इति। अक्षरशब्दो वर्णपरः। अक्षरन्न स्वरं विद्यादित्युपक्रम्य वर्णञ्चाङ्गः पूर्वं स्वत्रइति भाष्योक्तेः। मतान्तरे इति। अङ्गं यत्र द्विरुच्यते इति मते चङ्परे णौ यल्लघु इति मते चेत्यर्थः। यत्तु प्राचोक्तम्। सुब्धातोरनेकाचश्च सन्वद्भावो वेति केचिदिति। तत्रानेकाच इत्यंशे काम-

---

ति कारीषोऽग्निरध्यापयतीत्यादौ। पर्यायत्वप्रसङ्ग इति। लोडादिघटितशब्दप्रयोगरूपा प्रवर्त्तनैव प्रवर्त्तनात्वेन लोड्वाच्येति यद्यपि न पर्य्यायः प्राप्नोति तथाऽपि कैयटानुसारेणेदम्। वस्तुतः समुच्चयप्रसङ्गएवात्र पूर्वपक्षोऽत एव लोटोक्तत्वात्प्रेषणस्य णिज् नेति समाधानान्तरपरं भाष्यं सङ्गच्छते। न हि पर्यायस्य तया युक्त्या वारणमिति तत्त्वम्। एतेनेष्टसाधनत्वं लोडाद्यर्थ इत्यपास्तम्। णिजन्ते तदभावात्। कर्त्तृत्वेनेति। स्वव्यापाराविष्टत्वेनेत्यर्थः। प्रवृत्त्युपहितेति। प्रयोज्याविष्टप्रवृत्त्यनुकूलेत्यर्थः। प्रवृत्त्याविष्टप्रयोज्यविषयेति यावत्। केवला त्विति। तदनाविष्टप्रयोज्यविषयेत्यर्थः। द्रव्यमात्रस्येति। व्यापारानाविष्टस्येत्यर्थः। सक्रियस्य। व्यापाराविष्टस्य। प्रयोगः। प्रेरणा। प्रयुक्तिः प्रेरणा। वक्तैवेति। तादृशशब्दप्रयोगस्यैव प्रेरणात्वादिति भावः। वर्णपरइति। न तु चतुरस्रच्छयतावाद्यक्षरलोपश्चेत्यत्रेवाजूझलसमुदायपरो व्याख्यानादिति भावः। इति मते चेति। इदमेव भाष्यसंम-

यतावुक्तो ऽङ्गस्येति कर्मणि षष्ठी अवयवषष्ठी चेति व्याख्यानभेदो मूलमिति बोध्यम्। यत्तु व्याचख्युः। णौ यदङ्गं यल्लघु इति व्याख्याभेदोऽत्र मूलमिति। तन्न। एवं हि सति अर्थमाख्यत् आर्त्तीयपदित्यत्र विकल्पो न लभ्येत। न च मुख्यसिद्धान्तरीत्या इष्टापत्तिः। अनेकाच इति व्याख्येयग्रन्थविरोधात्। किं च सन्वद्भावेन सह दीर्घोऽपि तुल्ययोगक्षेमः। व्याख्याविकल्परूपबीजसाम्यादिती॰व व्याचख्युः। एवञ्च ऊर्णोतेरपि चङ्परे णौ दीर्घः स्यात्। न चेष्टापत्तिः। दीर्घो लघोरिति सूत्रे प्राचा हलादेरिति व्याख्यातत्वात्। अप्युद्धमपि तद्ग्रन्थं समर्थयितुं प्रवृत्तैर्व्याख्यातृभिरपि तत्र न्यायसिद्धमिदमित्युक्तत्वात्। तत्रैव चकास्त्यूर्णोत्योः समकक्षत्वमभिप्रेत्य ऊर्णोतेश्च दीर्घाभावं निश्चित्य चकास्तेर्दीर्घोदाहरणन्तु परमताभिप्रायेण कथञ्चिन्नेयमिति स्वयमेवोपसंहृतत्वाच्च। एवञ्च हलादेरपि दीर्घाभावे सिद्धे हलादेरित्यर्थसिद्धमिति परमोपक्रमविरोधेनावयवावयवः समुदायं प्रत्यवयवो नेत्यादि तदुपन्यस्तन्यायस्य चातिशिथिलत्वेन तद्ग्रन्थस्यासङ्गतता-

---

तमित्युक्तम्। व्याख्याभेद इति। माधवादिकृत इति भावः। विकल्पो न लभ्येतेति। त्वदभिमत इति शेषः। तत्र हि ते रूपद्वयमुक्तम्। वस्तुतो ऽस्य लुङ्यनभिधानमेव। अत एव भाष्योक्तापुडापुक्पक्षयोर्न फलभेद इति ध्येयम्। अस्य च न सुब्धातुत्वं णिचः प्रातिपदिकादेव विधानात्। अतो नानेकाज्उपक्रमविरोधः। मुख्यसिद्धान्तेति। चङ्परे णौ यल्लघ्विस्यर्थरूपभाष्यसिद्धान्तेत्यर्थः। अनेकाच इति। अनेकाचो वेति मूलग्रन्थेत्यर्थः। दीर्घः स्यादिति। पक्षे दीर्घः स्यादिति भावः। समकक्षत्वमिति। व्याख्याविकल्पेन सन्वद्भावचैकल्पिकत्वेनेत्यर्थः। दीर्घाभावं निश्चित्येति। अहलादित्वादिति भावः। परमतेति। भाष्यातिरिक्तमतेत्यर्थः। हलादेरपीति। अनेकाचो हलादेरित्यर्थः। परमोपक्रमेति। अजादेरेव दीर्घाभावे हि तदर्थसिद्धं स्यात्। नान्यथेति। हलादेरपि दीर्घाभावे तद्विरोधः स्पष्ट एवेति भावः। अतिशिथिलत्वेनेति। प्रत्येकातिरिक्तयत्किंचिद्वर्णसमुदायस्यावयवत्वे मानाभावादिति भावः। असङ्गततामिति। हलादेरित्यस्यार्थसिद्धत्वाभावात्। परस्प-

न्तत्रैवावोचाम। इदानीन्तु तत्रत्याचत्यतदीयग्रन्थयोरेव परस्परविरोध इति ब्रूमः। यदपि वदन्ति। सन्वल्लघुवत्यस्मिन्निति व्युत्पत्त्या सन्वद्भावस्य निमित्तं यो लघुः स चेति व्याख्यानात् लघुत्वस्यैव विकल्पो ऽतिदिश्यते। तेन लघुत्वपक्षे दीर्घसन्वद्भावौ द्वावपि स्तः। तदभावे तु द्वावपि नेति। तदपि न। निर्मूलत्वात्। न हि प्रागुक्तव्याख्याभेदेन लघुत्वविकल्पो लभ्यते। वचनन्तु महतां नास्त्येव। अथा ऽप्यर्वाचीनस्य कस्यचित् स्यात्तर्ह्यतिप्रसङ्गः। अजजागरदित्यत्रापि जाग्रद्वस्य लघुत्वापत्तेः। ननु प्राप्तविभाषेयमिति चेन्न। उभयत्र विभाषात्वस्य दुर्वारत्वात्। लाघवपुरस्कारे तु भावतात्पर्य्यकृतात्लाभेनाप्राप्तविभाषात्वस्यैवौचित्यात्। स्तान्तावत्। द्वयोरिति। ह्रस्वदीर्घयोरित्यर्थः। एतच्च प्रकृताभिप्रायम्। अवीवदद्वीणां परिवादकेनेत्यादौ तु सन्वद्भावस्यापि इत्थमेव पूर्वपक्षसिद्धान्तौ द्रष्टव्यौ। ण्याकृतीति। तथा च णावङ्गस्य चुर् इत्यस्य नास्त्यलोप इति भावः। यत्तु प्राचा रूपान्तरमुदाहृतम्। अचुचोरदिति। तद्भाष्यविरोधादुपेक्ष्यम्। औन्दिददिति। अत्र प्रसादकृत्। अजादित्वाद्दीर्घो लघोरिति नार्वाचीनमते स्वमते तु स्यादेवेति। एवञ्च वदता आटिटत्, आशिशत् इत्यादौ सर्वत्र सिद्धान्ते दीर्घो भवतीत्युक्तम्। सोयं महान्प्रमादः। चङ्परे णौ यदङ्गं उन्द् अट् इत्यादि तस्येह द्वित्वाभावात् तदीयस्य दीर्घभाजो ऽभावाच्च। चङ्परे णौ यल्लघु तत्परत्वाभावाच्च। तदिह माधवहरदत्तकैयटादिसकलमते ऽपि दीर्घस्योक्तिसंभवाभावे कथं दीर्घइष्टापत्तिः कृतेति न विद्मः।

---

रविरोध इति। ऊर्णोतेर्दीर्घस्तत्र वर्जेन वारितो ऽत्र च स्वीकृत इत्येवं विरोध इत्यर्थः। प्राप्तविभाषेयमिति। लघुत्वविकल्प इत्यस्य प्राप्तह्रस्वविकल्प इत्यर्थ इति भावः। भावतात्पर्यकृतेति। प्राप्तविभाषायामभावे तात्पर्येण तज्ज्ञाने च प्रतियोगिज्ञानस्य कारणत्वेन गौरवमिति भावः। तद्भाष्येति। उभयत्रापि णेर्णिच्युपसंख्यानस्य तत्रोक्तत्वादिति भावः। अर्वाचीनमतइति पूर्वान्वयि। तत्परत्वाभावाच्चेति। अभ्या-

स्यादेत्। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति निर्विवादम्। अन्यथा आटिटदित्यादौ णिलोपो न स्यात्। एवं स्थिते द्वितीयप्रयोगविषयीभूतश्चङ्परणिचम्प्रति तदादिग्रहणादाटिट् इत्यङ्गम्। एवञ्च चङ्परे यदङ्गन्तदीयो यो ऽभ्यासस्तस्येति पक्षे कथन्न दीर्घ इति चेत् अत्र वदन्ति। लघौ परे हि दीर्घः लघुश्चेह णिच् तल्लोपः प्रथममेव प्रवृत्तः। नित्यत्वादन्तरङ्गत्वाच्च वर्णाश्रयत्वाच्च प्रत्ययलक्षणत्वन्नास्ति। स्थानिवद्भावोपि न भवति। अभ्यासस्यादिष्टादचः पूर्वत्वात्। दीर्घविधौ तन्निषेधाच्चेति। तच्चेदं वक्तव्यम्। चङमेव लघुमाश्रित्य तर्हि दीर्घोऽस्तु। किं च णिचः स्थानिवद्भावो ऽपि सुलभः। यत्तूक्तं अभ्यासस्यादिष्टादचः पूर्वत्वादिति। तन्न। टिशब्दस्य हि द्वित्वम्। ततो णिलोपः। एतच्च द्विर्वचने ऽचीति सूत्रस्य व्याख्याद्वये पि तुल्यम्। यदप्युक्तं दीर्घविधौ निषेधादिति। तदपि न। निषेधस्याष्टमिकदीर्घविषयत्वात्। अत एव हि पूर्वत्रासिद्धीये न स्थानिवदित्याश्रित्य दीर्घग्रहणं भाष्ये प्रत्याख्यातम्। तस्माद्दीर्घस्य दुर्वारतया नेदं प्रासादखण्डनं सम्यगिति। किं तर्हि सम्यगिति चेत् उच्यते। दीर्घो लघोरित्यत्र चङ्परस्य णेः पृथगनुपादानात्तदितर एव लघुः कार्यो। तक्रकौण्डिन्यन्यायात्। यथा द्वित्वविधौ रहाभ्यामित्युपादानाद्रेफेतरस्यैव यरः कार्यित्वन्तद्वत्। यथा वा नलोपो नञ इति सूत्रे नञ्भिन्नस्यैवोत्तरपदस्य निमित्तत्वादाबाधे चेति द्वित्वे बहुव्रीहिवद्भावे ऽपि ननेत्यत्र नलोपो नेति

---

सस्येति शेषः। ततो णिलोप इति। एवञ्चाभ्यासस्यानादिष्टादचः पूर्वत्वमस्त्येवेति भावः। व्याख्याद्वये इति। रूपस्थानिवत्त्वे निषेधे चेत्यर्थः। पृथगुपादानादिति। निमित्तत्वेनोपादानादित्यर्थः। आबाधे चेति। द्वित्वे बहुव्रीहिवद्भावे ऽपीति पाठः। कर्मधारयवद्भावे ऽपीति क्वाचित्कः पाठो लेखकप्रमादात्। ननु दधिदाने ऽवश्यं प्राप्ते तक्रस्य विधानादचः परे रफएवावश्यङ्कार्यित्वे प्राप्ते निमितत्वोक्तेर्बाध उचितः। प्रकृते णिचो लघोरित्यनेनाग्रहणे को न्यायः। अत एव करोतीत्यादौ गुणः। अन्यथा तेन न्यायेनेकूभिन्नस्यैवार्धधातुकादेर्निमित्तत्वं स्यात्। नलो-

हरदत्तादिभिरुक्तन्तथैवापि। वस्तुतस्तु आटिटदित्यादौ णिज्निमित्ताङ्गसञ्ज्ञा प्रथमणिचः प्राचीनस्यैव न तु तद्विशिष्टस्य। एकस्यैव द्वि णिचो द्विः प्रयोगः। तथा चाङ्गसञ्ज्ञायान्निमित्तभूतो णिच् कथङ्कार्यिकोटौ प्रविशेत्। सञ्ज्ञा वा प्रथमोपस्थितं कथं निमित्ततया न गृह्णीयात्। अन्तरङ्गस्योपेक्षायां बीजाभावात्। न च द्वित्वात्प्रागेव प्रवृत्ता ऽङ्गसञ्ज्ञा तन्मध्यपतितत्वादाद्यणिचमप्यवगाहत इति युक्तम्। द्वितीये टकारान्तर्भावेण प्रत्ययतेति वैपरीत्यस्यापि सुवचत्वात्। ननु यथोभयत आश्रये नान्तादिवत् विरोधात्तथैवापि प्रत्ययांशे अङ्गांशे वा तन्मध्यपतितन्यायस्याप्रवृत्तिरिति चेत्। सत्यम्। तावता ऽपि त्वदुक्तदोषस्योद्धृतत्वात्। युक्तञ्चैतत्। अन्यथा प्रतीषिषतीत्यादौ द्वितीयसनं प्रति प्राचीनसनन्तस्याङ्गत्वे ऽज्झनगमामिति दीर्घः स्यात्। किं बहुना जिगीषा जिघांसेत्यादावप्यभ्यासस्य दीर्घः स्यात्। सनः सकारेण विशिष्टस्य द्वित्वे धातोर्द्वितीयभागस्य सनन्तर्भावे हलादिःशेषे एकदेशविकृतन्यायेनाभ्यासोत्तरभागस्य प्रत्ययत्वे प्राचीनस्याङ्गताशैव्यात्। एवञ्च न्यायलब्धेऽर्थे दिवो ऽविजिगीषायामित्यादिनिर्देशोपि लिङ्गं बोध्यम्। अत एवाटिटदित्यादौ लघूपधगुणोपि न। अन्यथा स्यादेव सः। न च णौ चङ्गीत्युपधाह्रस्वेन निर्वाहः। तक्रकौण्डिन्यन्यायेन दीर्घस्येव ह्रस्वस्यापि दुर्लभत्वादिति दिक्। अजादेरित्ये-

---

पो नञ इत्यत्रापि नञो निमित्तत्वं नावश्यम्प्राप्तमिति कथन्तत्रैतन्न्यायावसरः। किं च निमित्तभूतस्यापि प्रत्ययस्य भवामीत्यादावङ्गे प्रवेशो दृष्टस्तथा णिचोपि तदादिग्रहणात्कार्यिकोटौ प्रवेशो दुर्वार इत्यरुचेराह । सञ्ज्ञा चेति । उद्धृतत्वादिति । तन्मद्ध्यपतितन्यायाप्रवृत्त्येत्यर्थः । अन्यथा । अन्तरङ्गत्वेन प्रथमोपस्थितमादायैवाङ्गत्वन्न तद्द्वितीयमित्यर्थानङ्गीकारे । किं बहुनेति । तन्मद्ध्यपतितन्यायाप्रवृत्त्येत्यर्थः । न्यायलब्धेति । विरोधन्यायलब्धतन्मद्ध्यपतितन्यायाप्रवृत्तिरूपे ऽर्थे इत्यर्थः । अत एवेति । अङ्गत्वाभावादेवेत्यर्थः । तक्रकौण्डिन्यन्यायेति । अङ्गत्वम-

वेति। नन्द्रा इति सूत्रे अजादेरित्यनुवर्त्तत एवेत्यर्थः। अदिद्रपदिति। ननु लावस्थायामेवाडिति भाष्यकारोक्तपक्षे अजादित्वमस्त्येव। न्याय्यश्च प्रथममट् परत्वादन्तरङ्गत्वाच्च। सत्यम्। द्वितीयस्येत्यप्यनुवर्त्तते नित्यन्द्वितीयस्येति तदर्थः। धातुसंज्ञाप्रवृत्तिकाले इति यावत्। एतच्च तदनुवृत्तिसामर्थ्याल्लभ्यते। न चैवमजादेरित्यस्यानुवृत्तिर्मास्त्विति वाच्यम्। इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः। न चैवमपि चन्दिद्रीयिषतीत्यत्र दोषः स्यादेवेति वाच्यम्। अजादेरिति हि कर्मधारयात्पञ्चमीत्युक्तम्। इह च अच इत्येवानुवर्त्त्यमेकदेशे स्वरितत्वप्रतिज्ञानात्। अथ वादेरित्यप्यनुवर्त्ततान्तञ्च नाव-

---

ङ्गीकृत्य यथा दीर्घस्तथा ऽनेन न्यायेन वारितस्तथेत्यर्थः। परे तु अन्तरङ्गस्य प्रथमोपस्थितस्याभ्यासावयवणिच आनर्थक्यात्प्रत्ययत्वाभावेन तमादायाङ्गत्वन्दुर्लभम्। किञ्चैवं प्रतीषिषतीत्यादावित्वानापत्तिः। प्रत्यासत्त्या सन्निमित्तकाङ्गावयवाभ्यासस्यातस्तेनेत्वविधानात्। अज्झनेति दीर्घस्तु न। हनादिसाहचर्येणार्थवदजन्ताङ्गस्यैव तेन दीर्घविधानात्। द्वितीयशब्दपूर्वभागस्याङ्गत्वेप्यनर्थकत्वात्। अङ्गत्वन्तु विकरणविशिष्टे ऽनर्थकेपि दृष्टमेव। तस्मादेकाचो द्वे इति सूत्रशेषभाष्योक्तन्यायेनोत्तरणिचमादाय प्राक्तनसमुदायस्यैवाङ्गत्वमुचितान्द्विःप्रयोगत्वात् द्वितीयेपि ततो विहितत्वन्नुद्वयनपायात्। न चेवं समुदायस्यैवेति कुतः पूर्वसनमादाय धातोरप्यङ्गत्वे ऽज्झनेति दीर्घापत्तिरिति वाच्यम्। तस्यानर्थकत्वात्। आटिटादित्यादौ गुणस्तु बहिरङ्गस्य चङ्निमित्तद्वित्वस्यासिद्धत्वान्न। दीर्घो लघोरिति दीर्घस्तु न चङ्परे णौ यल्लघु इति भाष्यमते ऽप्राप्तेर्व्याख्यान्तरं त्वेतद्दोषादेवासङ्गतम्। अस्मादेव भाष्यप्रयोगाच्चङ्णिभिन्नएव लघुस्तत्र गृह्यतइति न दीर्घ इत्याहुः। लावस्थायामिति। द्विलकारकनिर्देशादिति भावः। प्रथममिति। द्वित्वादिति शेषः। द्वितीयस्येति। एकाच इति शेषः। अनुवृत्तिर्मास्त्विति। द्वितीयस्येत्यस्यावृत्त्या नित्यन्द्वितीयस्येत्यर्थलाभ इत्यभिमानः। दकारस्यापीति। रेफस्य तु निषेधे ऽप्यक्षतिरिति भावः। न चैवमपीति। धातोरादिभूतादचः परा नित्यन्द्वितीयस्यैकाचोवयवभूताः संयोगादयो न्द्रा द्विर्नेत्यर्थादिन्दिद्रीयिषतीत्यादौ न दोषः। प्रकृते च निषेधाप्रवृत्तिरूपो दोष इति भावः। पूर्ववर्त्तिमात्रपरमिति। पूर्ववर्त्यचः परा न्द्रा इत्यर्थः। अवयवपरत्वे हि

यवपरङ्क्तिन्तु पूर्ववर्त्तिमात्रपरं शब्दाधिकाराश्रयणात्। नन्वेवमुत्तरार्थतया द्वितीयग्रहणस्य सार्थकत्वे स्थिते द्वितीयस्येति न वक्तव्यं भवतीति भाष्यं विरुध्येतेति चेन्न। यत्र सूत्रे पठितन्तत्र मास्त्विति तदाशयात्। कणरणेत्यादि। अत्र प्राचो ग्रन्थं व्याचक्षाणा आहुः। अजीहिठदित्यत्र उपधाह्रस्वे एच इकि तस्य स्थानिवत्त्वाद् द्वित्वेऽभ्यासह्रस्वदीर्घचुत्वादीति, तन्न। ओः पुयणीति ज्ञापकस्य अचिकीर्त्तदित्यत्रातिव्याप्तिवारणाय विशेषविषयताया भाष्ये एव स्पष्टत्वेन स्वयमपि प्राक् तथैव वर्णितत्वेनेह स्थानिवद्भावायोगात्। विशेषस्यावर्णवदुत्तरखण्डत्वमुवर्णादेशत्वं वेत्यन्यदेतत्। एतेन स्तौतिण्योरिति सूत्रे सिषेचयिषतीत्यत्र सिचेर्हेतुमण्णौ गुणे सिचि इटि गुणायादेशयोः कृतयोर्णौ कृतस्य स्थानिवत्त्वेन सिच्शब्दस्य द्वित्वमिति वदन् न्यासकारोपि प्रत्युक्तः। अत एव उक्तन्यासबलेन ज्ञापकस्य सामान्यविषयत्वम्, अचिकीर्त्तदित्यस्य सिद्धये अनित्यताञ्च शरणीकुर्वन् सीरदेवोपि प्रत्युक्तः। अजीहिठत् सिषेचयिषतीत्यादिरूपन्तु इकारैकारविशिष्टस्य द्वित्वेपि सिध्यतीति स्पष्टमेव। एतच्च सर्वं सुध्यातौ प्रपञ्चितं माधवेनेति दिक्। अपीप्यदिति। णौ कृतस्योपधालोपस्य स्थानिवत्त्वात्प्याय्शब्दस्य द्वित्वे हलादिःशेषे ईत्वम्। इहागलोपित्वादलघुपरत्वाच्च सन्वदित्त्वदीर्घाप्राप्तेरीत्त्वं विधीयते। व्लेपयतीति। व्ली वरणे। रीङ् स्रये। क्नूयी शब्दे। क्ष्मायी विधूनने॥

---

धातोरादिभूतादच इत्यर्थः स्यादिति भावः। अत्र केचित्। चन्द्रीयतेः सनि न न्द्रा इति निषेधप्रवृत्तौ न मानम्। न च संयोगसञ्ज्ञासूत्रे भाष्ये बहूनां सन्निपाते द्वयोः संयोगसञ्ज्ञायामिन्द्रिद्रीयिषतीत्यत्र दोषमाशङ्क्य न वाज्विधेरिति समाहितम्। अचः परस्य निषेधविधिरिति तदर्थ इति तदेव भाष्यं मानमिति वाच्यम्। अजादेरिति वर्त्तते इति तद्व्याख्यानभाष्ये उक्तत्वेन तस्यामानत्वात् तस्य भाष्यस्य भङ्क्त्वा व्याख्याने न मानमित्याहुः। णौ कृतस्येति। इदं वृत्त्यनुसारेण। अभ्यासेत्वसन्नियोगशिष्टोपधालोपस्य द्वित्वोत्तरमेव प्रवृत्तेरिति दिक्॥

तिष्ठतेरित्॥ इहातिष्ठिपदिति प्राचो ग्रन्थं व्याचक्षाणाः णौ कृतस्य तिष्ठतेरित्त्वस्य स्थानिवद्भावात्स्थाय्शब्दस्य द्वित्वमित्याहुः। तदस्मदुक्तरीत्या प्रक्रियायामवर्णवदुत्तरखण्डत्वेन वस्तुतः सम्यगेव। किं तु तेषां परस्परव्याघातावहम्। परिनिष्ठितरूपे ऽवर्णपरतायास्तैरुपजीवनात्। कथमन्यथा उवर्णादेश एवेति वोपदेवमतं भाष्यमतत्वेन प्रागयूयुजन्निति सुधोभिराकलनीयम्। श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। अतास्थपत्। पुकोपवाद इति। एवञ्च पाल रक्षणइति धातुना पालयतीति रूपे सिद्धे लुगागमस्य पुग्निवृत्तिरेव फलमिति भावः। एवं वो विधूनने जुगित्यत्रापि बोध्यम्। वाजयतीति रूपस्य वज गताविति धातुना सिद्धत्वात्। विभाषा लीयतेरिति। आत्वविधायकं स्मारितम्॥

लीलोः॥ लीयतेरिति। ली, श्लेषणे क्र्यादिः। लीङ् श्लेषणे दिवादिः। उभयोरपि यका निर्देशो न तु श्यना। तथा हि सति लीङ इत्येवावक्ष्यत्। एतच्च विभाषा लीयतेरिति सूत्रे प्राचाङ्ग्रन्थे स्पष्टम्। लीलोरित्यस्य वृत्तावपि तथैवोचितम्। सूत्रे हि लीलीङोर्द्वयोरपि ग्रहणं निरनुबन्धकपरिभाषायाः प्रत्ययविषयत्वात् इति वदन्ति। प्रयोज्यकर्त्रीति। यद्यपि प्रथमणिजर्थं प्रति मनुष्यवागेव प्रयोजिका अत एवात्वं प्रवृत्तम्। तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तम्। अजीगपदिति। इह णिनिमित्तस्य णाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा नास्ति। सति हि तस्मिन्नजादेर्द्वितीयस्येति णिच

---

तथैवेति। यका निर्देश एवेत्यर्थः। इति वदन्तीति। अत्रारुचिर्दिव औत्सूत्रस्थभाष्यविरोधः। अन्ये तु निरनुबन्धकत्वात् क्र्यादेरेव लीत्यस्य ग्रहणे प्रतिपदोक्तत्वाच्च लातेरेव ग्रहणे धातुद्वयेन रूपद्वयसिद्धौ अन्यतरस्याङ्ग्रहणसामर्थ्यादत्र व्यवस्थापकन्यायाप्रवृत्तिरित्युभाभ्यामप्युभयग्रहणं लीलीङोर्लातेः कृतात्वलीयतेश्चेति हेतुमण्णावेव पूर्वोत्तरसाहचर्येणास्य प्रवृत्तेश्चौरादिकस्य न ग्रहणमित्याहुः। णिनिमित्तस्येति। विषयसप्तम्यामपि तद्धिते द्विगुनिमित्तत्वमस्तीति भावः। भाष्यारू-

एव द्वित्वं स्यात्। ततश्च न प्रक्रियायां न वा परिनिष्ठिते रूपे ऽवर्ण-वदुत्तरखण्डमस्तीति कीर्त्तयतिसाम्यात्। ज्ञपादिरिति। तेन मित्त्वा-द्ध्रस्व इति भावः। स्वादेस्तु मित्त्वं नास्तीत्युदाहरति चापयतीत्यादि। इति वार्थं इति। व्याख्यानद्वयस्यापि भाष्यारूढत्वादिति भावः। षकार-स्येति। रेफस्य नन्द्रा इत्यनेन वारणादिति भावः। सन्नन्ते प्रवर्त्तते इ-ति। यद्यपि सन्नन्तं धात्वन्तरं तथापि वचनसामर्थ्यात्तत्र प्रवृत्तिरिति भावः। तृतीयाभावेनेति। इहोपन्यासस्तु आद्यव्याख्यानमादाय प्रकृ-तोपयोगादिति भावः। इह मूलएव रूपद्वयव्युत्पादनेन प्राचो ग्रन्थोपि अर्थाद्व्याख्यातः। प्राचो ग्रन्थं व्याचक्षाणास्तु तद्ग्रन्थस्य तत्पौत्रग्रन्थस्य च प्रामादिकतां महता प्रबन्धेन प्रत्यपीपदन्। तथा च तदीयो ग्र-न्थः, क्वचित्तु ऐर्षिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते, तद्भ्रान्त-प्रक्षिप्तत्वादुपेक्ष्यम्। भ्रमे च कारणमथ वा तृतीयस्यैकाचः षकार-स्येत्यर्थ इति प्राचो व्याख्यानम्। तथा हि। यदि तृतीयवर्णस्येति व्याख्यायेत तदा ईर्ष्यिषिषतीति सनो द्वित्वन्न स्यात्। यदि तु तृतीय-स्यैकाच इति यथाश्रुतं व्याख्यायेत ततः कथमैर्षिष्यदिति षकारादे-र्द्वितीयस्यैकाचः स्यात्। न च तृतीयस्य वर्णस्येति व्याख्यातुमुचितम्। अध्याहारप्रसङ्गात्। तृतीयस्यैकाच इति ग्रन्थस्वारस्यभङ्गाच्च। तथा च कस्य तृतीयस्य केचिदाहुर्व्यञ्जनस्येति। अपरे पुनराहुस्तृतीयस्यै-काच इति वृत्तिन्यासकारहरदत्तौ व्याख्याताम्। तृतीयस्येति तृ-तीयव्यञ्जनसहितस्यैकाच इत्यर्थः। अत्र षकारस्य द्विर्वचनन्न भवति। अपरे पुनरिति। अस्मिन्पक्षे ईर्ष्यतेः सनि कृते इति व्याख्येयम्। अ-न्यथा तत्संबन्धिनस्तृतीयस्यैकाचो ऽसंभवात्। माधवोप्येवम्। तस्मा-दैर्षियदित्येकमेवात्र रूपं साधीयो न त्वैर्षिष्यदिति। ण्यन्ते तृतीय-स्यैकाचो ऽसंभवात्। न चाटि कृते तमेवापेक्ष्य षकारादिस्तृतीय ए-काजिति वाच्यम्। अन्तरङ्गत्वादाटश्चेति वृद्ध्या तद्विघातात्। अन्त-

रङ्गत्वादेव वृद्धेरसिद्धत्वमपि नास्ति। नापि स्थानिवद्भावः। वृद्धेः पूर्वस्य पूर्वस्माद्वा विधेरभावादिति युक्तमुत्पश्याम इति। इह का चिदित्यादिना युक्तमुत्पश्याम इत्यन्तेन तदीयग्रन्थेन मूलटीकयोः को दोष उपन्यस्त इति विभावनायामुक्तरूपं प्रकृतवार्तिकेन न सिध्यतीति मूले दोषः। टीकायास्तु षकारस्य तृतीयैकाच्त्वोक्तिरयुक्तेति दोष इति लभ्यते। तत्र न तावदाद्यः। प्रकृतवार्त्तिकस्य तत्राप्रवृत्तावपि अजादेर्द्वितीयस्य न न्द्रा इति सूत्राभ्यां रूपसिद्धेरप्रत्यूहत्वात्। नापि द्वितीयः। सन्नन्ताभिप्रायेण टीकाग्रन्थस्य सौष्ठवात्। सर्वञ्चैतदिह मूलएव ध्वनितम्। मात्सर्य्यमुत्सार्य गुणगृह्यैराकलनीयम्। निवृत्तेति। तथा चोक्तम्। "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इति। तेनेति। यत्तु चक्षिङो ङित्करणं अनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्यानित्यताञ्ज्ञापयतीत्युक्त्वा तेन प्रार्थयन्तीति सिद्धमिति माधवादिभिरुक्तं तदनिस्थवीयः। तस्यागर्वादात्मनेपदविधानात्। यदपि तरङ्गिण्याङ्गणकृतमात्मनेपदमनित्यमिति ज्ञापनार्थञ्चक्षिङो ङकार इति तदपि न। चक्षिङो गणकृतात्मनेपदस्यासंभाविततया मूलशैथिल्यात्। यदप्याहुः। प्रार्थनं प्रार्थः तत्कुर्वन्ति प्रार्थयन्तीति तदपि न। धातुसञ्ज्ञानिमित्ते प्रत्यये कर्त्तव्ये उपसर्गाणां पृथक्करणस्य ज्ञापयिष्यमाणतया अर्थवेदसत्यानामित्यापुक्तो दुर्वारत्वादिति दिक्॥ इति हेतुमण्ण्यन्तप्रक्रिया॥

धातोः कर्मणः॥ इच्छायामिति श्रुतत्वात्कर्मत्वं समानकर्त्तृकत्वञ्च तदपेक्षमेव गृह्यतइत्याशयेनाह। इषिकर्मण इत्यादि। णिसनोरिति। प्रागुक्तव्याख्याविकल्पादिति भावः॥

अज्झन॥ गमः सामान्येन ग्रहणात् गम्लृ गतावित्यस्मात्सञ्जिगंस-

---

ढत्वादिति। न न्द्रा इति सूत्रस्थभाष्यारूढत्वादित्यर्थः। सौष्ठवादिति। षकारस्येति एवकारइतिवत्समुदायात्पर इति भावः॥ इति ण्यन्तप्रक्रिया॥

ते इत्यत्रापि स्यादत आह। अजादेशगमेरिति। सनि च, इङश्चेति सूत्राभ्यां विहितस्येणिङोरादेशस्य इणवदिक इति इक आदेशस्य चेत्यर्थः। एतच्च सूत्रे ऽगग्रहणाल्लभ्यते। तथा हि। इह सनीत्येव वक्तव्यम्। दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणात् अजन्ताङ्गस्य दीर्घः। चिचीषति। ततः हनिगम्योः। एवञ्चाज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थमजन्ताङ्गस्य दीर्घो भवति। अजादेशगमेश्चेति॥

इट् स॥ ऋदन्तादिति। चिकीर्षतीत्यादौ तु अज्झनगमामिति दीर्घे कृते नेदं प्रवर्त्तते उपदेशाधिकारात् लाक्षणिकत्वाद्वा ऽत एवोदाहरति। दुध्वूर्षतीति। ध्वृ, कौटिल्ये। अज्झनेति दीर्घे उदोष्ठ्यपूर्वस्येत्युत्वं रपरत्वं हलि चेति दीर्घः। यत्तु प्राचा ऋतश्च संयोगादेरित्यत्र लिङ्सिचोरिति प्रकृते ऽपि इट् सनि वेत्यतो मण्डूकप्लुत्या सनीत्यप्यनुवर्त्त्यं दिध्वरिषतीति रूपान्तरमुदाहृतम्। तन्न। सनीत्यस्यानुवृत्तेरनाकरत्वात्। आत्मनेपदेष्वित्यनुवृत्तेः परस्मैपदान्तोदाहरणस्योक्तिसंभवाभावाच्च॥

स्मिपूङ्॥ स्मिपूङोर्ङकारोच्चारणं पूञो व्यावृत्त्यर्थन्तेन तस्य पुपूषतीत्येव। सनि ग्रहेतीण्निषेधात्। अत्राञ्जेरशेश्च ऊदित्त्वाद्विकल्पे प्राप्ते ऋस्मिङोस्तु अनिट्त्वादप्राप्ते वचनम्। सिस्मयिषत इति। स्तौतिण्योरिति नियमान्न षः। शैषिकादित्यादि भाष्यम्। शेषे भवः

प्रवृत्तिभेदेनेति। आवृत्त्येत्यर्थः। अजन्तस्येति। अत्रार्थे प्रत्याहारबहुवचनयोः प्रमाणत्वं बोद्ध्यम्॥

लाक्षणिकत्वाद्वेति। वर्णग्रहणे ऽपि तत्प्रवृत्तेरोत्सूत्रस्थभाष्यसम्मतत्वात्तत्रा ऽप्रवृत्तिज्ञापकस्यानित्यत्वे एव तात्पर्यमिति भावः। सन्निपातपरिभाषाविरोधान्नेत्यपि बोद्धव्यम्। ऋतश्च संयोगादेरित्यत्रेति। इड्विधायके सूत्रइत्यर्थः। भाष्यमिति। सन्विधायकसूत्रे इति शेषः। शेषे। शेषाधिकारे॥

॥ इति सन्नन्तप्रक्रिया॥

ग्रैषिकः। अध्यात्मादित्वाट्ठञ्। मतुबर्थे भवो मतुबर्थीयः। गहादित्वाच्छः। मतुबर्थो ऽस्यास्तीति मतुबर्थिकः। अत इनि ठनाविति ठन्॥

॥ इति सन्नन्तप्रक्रिया॥

यस्य हलः॥ सङ्घातग्रहणमिति। तेनाहर्यौदमव्यीदित्यादौ नातिप्रसङ्गः। किं च अर्थवद्ग्रहणपरिभाषया पुत्रकाम्येत्यत्र नातिप्रसङ्ग इति भावः। यकारपरस्येति। एतेनार्य्यमाख्यत् आरर्यत् इति प्राचामुदाहरणं व्याख्यातम्। भाष्योदाहरणस्य सामान्यापेक्षज्ञापकत्वात्॥

नित्यङ्कौ॥ नित्यशब्दो ऽवधारणार्थ इत्याह। कौटिल्यएवेति। तक्रकौण्डिन्यन्यायस्यानित्यता ऽनेन ज्ञाप्यते। तेन पूजितो यः सुरासुरैरित्यादौ भूते क्तः सिद्ध्यति। अन्यथा मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तेन बाध्येत। ततश्च कर्त्तरि तृतीया न स्यात्। क्तस्य च वर्त्तमानइति षष्ठ्या बाधात्॥

जपजभदह॥ पस, गतौ सौत्रः। दन्त्यान्तोयमिति स्पश, बाधनस्पर्शनयोरिति धातौ माधवः। सञ्चेस्क्रीयतइति। अत्र प्राचो ग्रन्थे पठ्यते सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण इति। तन्न। परत्वाद्यङि कृते ततो द्वित्वे ऽभ्यासव्यवायेपीत्यभ्यासाङ्गस्यासंयोगादित्वमदन्तत्वञ्च नास्तीति गुणप्राप्तेरभावात्। न च संकृइत्यस्यामेवावस्था-

---

किञ्चेति। अन्यच्चेत्यर्थः। अनित्यतानेनेति। अन्यथा गत्यर्थेभ्यः कौटिल्ये विशेषविहितेन यङा क्रियासमभिव्याहारार्थयङस्तक्रकौण्डिन्यन्यायेन बाधे सिद्धे नित्यग्रहणं व्यर्थं स्यादिति भावः। इदमत्रत्यकैयटानुरोधेन। परे तु क्रियासमभिव्याहारादेर्यङ्द्योत्यतया तद्वृत्तेर्धातोरित्यर्थेनानुवाद्यत्वान्न विधेयत्वन्तक्रकौण्डिन्यन्यायश्च विधेयविषयो ऽचरितार्थविषयश्चेति स्पष्टं मिदचोन्त्यसूत्रे भाष्ये। नाप्यत्रा-ऽचारितार्थ्यम्। क्रियासमभिव्याहाराविवक्षायां चारितार्थ्यात्। नित्यग्रहणन्त्वनभिधानमाश्रित्य भाष्ये प्रत्याख्यातमित्याहुः॥

यान्द्वित्वात्परत्वात्सुटि कृते रीङ्प्रवृत्तेः प्राक् गुणप्राप्तिः शङ्कनीया। अडभ्यासव्यवायेऽपीत्यस्यारम्भेणाडभ्यासयोः कृतयोरेव सुट् न प्रागिति निर्णयात्। अत एव सञ्चस्करतुरित्यत्र संयोगादित्वाभावाद्गुणो न सिद्ध्यतीति संयोगोपधग्रहणं कर्त्तव्यमित्युपसंख्यायते। न च भाष्यकृता पूर्वन्धातुरुपसर्गेणेति दर्शने सुटोऽन्तरङ्गत्वोक्तेः ससुट्कस्यैव द्वित्वाभ्युपगमात् गुणप्राप्तिरिति वाच्यम्। तन्मते सुटो बहिरङ्गत्वादिति परिहारविरोधादित्यास्तान्तावत्॥

सिचो यङि॥ अभ्याससकारस्योपसर्गात्सुनोतीति ततः परस्य लुस्थादिष्वभ्यासेन चेति प्राप्तं षत्वं निषिध्यते॥

न कवतेर्यङि॥ कोरित्येवं वाच्ये शपा निर्देशस्य फलमाह। कोनिकुवत्योस्त्विति। कु,शब्दइत्यदादेः कुङ्,शब्दे इति तुदादेश्च निवृत्तिः

---

परत्वादिति। द्वित्वादित्यादिः। पूर्वं धातुः साधानेनेति भाष्यमते इदम्। पूर्वन्धातुरुपसर्गेणेति पक्षे शङ्कते। न चेति। द्वित्वादिति। द्वित्वनिमित्तयङ इत्यर्थः। परत्वादिति। उत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः। सुटि कृते इति। ततो यङीति शेषः। रीङ्प्रवृत्तेः प्रागिति। अपवादत्वादिति भावः। द्वित्वाच्च परत्वादिति बोद्धव्यम्। गुणेति। यङि चेत्यनेनेति भावः। कृतयोरेव सुडिति। गुणनिमित्तोपसर्गयोगइत्यर्थः। एवञ्च पूर्वन्धातुः साधनेनेति पक्ष एवेति पूर्वं यङि द्वित्वे रीङि सुट्प्राप्त्या दोष इति भावः। अत्रैवार्थे ज्ञापकान्तरमाह। अत एवेति। संयोगादित्वाभावादिति। पश्चात्सुटि अङ्गस्य संयोगादित्वाभावादित्यर्थः। भाष्यकृतेति। तेन ह्यडभ्यासव्यवायेऽपीति प्रत्याख्यायते। अत्र पक्षे स्वमते गुणाभावस्तु यङि चेत्यत्रापि नित्यग्रहणानुवृत्त्या बोद्धव्यः। भाष्योक्तनिषेधवचनादेव वा। प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणात्सञ्चस्करतुरित्यादौ गुणसिद्धिः सस्वरतुरितिवदिति बोद्धव्यम्। निषिध्यते इति। यद्यप्युपसर्गात्सुनोतीत्यादिनिषेधबाधकन्तथापि येन नाप्राप्तिन्यायेन सात्पदाद्योरिति निषेधस्यैव बाधकमयन्तु निषेधः सर्वबाधको व्याख्यानात् एतदर्थमेवोपसर्गादित्यनन्तरं निषेधप्रकरणं कृतम्। आदेशप्रत्यययोरित्येतन्मात्रबाधकत्वे हि तत्प्रागेव कुर्यादिति भावः। शपा निर्देशस्येति। यङ्लुङ्निवृत्तिस्तु न फलं यङः परत्वाभावात्। न च यङन्तादपि भाष्यमते यङोऽवयवलोपाङ्गीकारात्तन्मते तस्य

फलमिति भावः। यद्यपि कोरित्युक्तेऽपि तौदादिकस्य प्रसङ्गो नास्ति दीर्घान्तत्वात् तथापि कौतिव्यावृत्त्यर्थं क्रियमाणः श्तपा निर्देशः कुवतिमपि व्यावर्त्तयतीत्यत्र तात्पर्यम्। न च लुग्विकरणपरिभाषया निर्वाहः। निरनुबन्धकपरिभाषाया अपि जागरूकत्वेन उभयत्र हणशैव्यात्। वस्तुतस्तु कुङ इत्येव सुवचम्। हन्तेर्हिंसायामित्यादि। यद्यपि क्नीभावेऽपि कृते कुत्वेन जेघ्नीयते इति सिध्यति तथापि प्रक्रियालाघवाय घ्नीत्युक्तम्। अत्र च दिग्यादेशेनेव घ्नीभावेन द्वित्वं न बाध्यते विषयभेदात्। यङन्तावयवस्य हि द्वितीयाऽवधिकस्य द्वित्वं प्रकृतिमात्रस्य घ्नीति। वेवीयते इति। हन्न इति अकृत्सार्वेति वा दीर्घः॥

चायः की॥ दीर्घोच्चारणं यङ्लुगर्थम्। अत एव न लुमतेति निषेधोऽपि तत्र न प्रवर्त्तते। चेकीतः॥

ई घ्रा॥ दीर्घोच्चारणं प्राग्वत्। यत्तु वदन्ति प्रक्रियालाघवार्थमिति, तन्न। चायः कीत्यत्रापि तथात्वापत्तेः। ननु माधवग्रन्थवलेन वैषम्यं स्वीकुर्म इति चेन्न। युक्तिविरोधे तस्यापि त्याज्यत्वात्। जाघ्रीयत इति। परत्वादन्तरङ्गत्वाच्च यङादेशे कृते द्वित्वम्॥

॥ इति यङन्तप्रक्रिया॥

---

व्यावृत्त्यर्थः सः। श्तिपा निर्देशेन सिद्धेर्यङ्लुग्व्यावर्त्तकेनेतरव्यावृत्तावपि बाधकाभावाच्च। निरनुबन्धकेति। सा प्रत्ययविधिविषयेति तु भूवादिसूत्रस्थभाष्यविरुद्धत्वादसङ्गतमितिभावः। कुङ इत्येवेति। न च पर्यायेषु लाघवगौरवाभावः। कवतेरित्यस्यानुबन्धरहितधातुमात्रार्थत्वेन पर्यायत्वाभावादिति दिक्। कुत्वेनेति। अभ्यासाच्चेति कुत्वेनेत्यर्थः। ननु हिन्योरिकारोच्चारणेनोत्वबाधवत् हकारोच्चारणसामर्थ्यात् ह्नीभावे कुत्वं न स्यादिति चेन्न। शास्त्रबाधकल्पनापेक्षया हकारोच्चारणं कुत्वप्रवृत्त्यर्थमित्यस्यैव कल्पयितुं युक्तत्वात्। तत्र तु येननाप्राप्तिन्यायेन हिन्योरपवादत्वेनेकारोच्चारणस्य तद्बाधकत्वमेव युक्तम्। विषयभेदादिति। अपवादत्वेन बाधे विषयैक्यापेक्षणादिति भावः। एकवचने गुणसत्त्वेन विशेषाभावादाह। चेकीत इति। प्राग्वदिति। नन्वस्य च्वावित्युत्तरार्थं तदावश्यकमतो न लुमतेति निषेधबाधे

यङो ॥ अचीति न प्रत्याहारो गृह्यते किं तु प्रत्ययः । यङः साह-चर्यात्तदाह । अच्प्रत्यय इति । चकाराद्बहुलमित्यनुकृष्यते । ये तु च्छन्दसीत्यनुकर्षयन्ति तैरपि भाषायां यङ्लुक् क्वचित्स्वीकर्त्तव्य एव । श्नुधातुभ्रुवोर्य्वोरियङुवङाविति सूत्रे श्नुग्रहणं प्रत्याचक्षाणेन वार्त्तिककृता तदनभ्युपगमेऽपि श्नुग्रहणज्ञापकमाश्रित्य भाष्यकारैस्तदभ्युपगमात् । यथोत्तरं मुनीनां प्रामाण्यात् । बोभूतु इति निपातनस्यापि ज्ञापकत्वाच्च । एतच्च मूलएव स्फुटीभविष्यति । अनैमित्तिकोयमिति । बहुलग्रहणेन क्रियमाण इत्यर्थः । अचप्रत्यये विधीयमानस्तु तन्निमित्तक इति स्पष्टमेव । तेन लोलुवः पोपुव इत्यादौ न धातुलोप इति गुणनिषेधः सिध्यति । यङन्तत्वादिति । सन्यङोरिति षष्ठी व्याख्यानादिति भावः । प्राचा तु तत्र सप्तमीं व्याख्याय इष्टानङ्गकार्य्यत्वान्नलुमतेति द्वित्वानिषेध इत्युक्तम् । तद् व्याहतम् । यत्तु तत्पौत्रेण व्याख्यातमङ्गाधिकारे विहितत्वादित्यर्थ इति । तन्न । न लुमतेति सूत्रेऽङ्गाधिकारो न गृह्यते किं त्वाङ्गमनाङ्गं वा प्रत्यये परे

---

न मानं न च तत्रापि च्वाविति दीर्घेणेष्टसिद्धिः । ईत्वस्य येन नाप्राप्तिन्यायेन दीर्घापवादत्वात् दीर्घान्तेपि पर्जन्यवल्लक्षणप्रवृत्त्या दीर्घप्राप्तेरिति चेन्न । इष्टापत्तेः । तत् ध्वनयन्नाह । तस्यापीति । दीर्घोच्चारणं प्राग्वदिति वदतोपीत्यर्थः । नन्वसंभवत्परविरोधाभावात्परत्वगसङ्गतमत आह । अन्तरङ्गत्वाच्चेति । यि क्ङितीति विषयसप्तमीत्यन्तरङ्गत्वमिति भावः ॥

॥ इति यङन्तप्रक्रिया ॥

ज्ञापकमाश्रित्येति । तच्च पूर्वमुपपादितम् । ज्ञापकत्वाच्चेति । दाधर्त्तीतिसूत्रे हि तन्निपातनं भूधातोश्छन्दसि लोट्येव गुणाभावो नान्यत्रेत्येतदर्थमिति स्पष्टं भाष्ये । तत्र सङ्कोचे मानाभावेन यङ्लुकि छन्दसि लङादाविव लोट्यपि गुणो बोद्धव्यते । न च क्वान्यत्र मा भूत् बोभवीतीति लेटि भाष्ये उदाहरणाच्छन्दोविषयक एव नियमः स्यादिति वाच्यम् । तस्योपलक्षणत्वादिति दिक् । गुणनिषेधः सिध्यतीति । धात्वंशलोपनिमित्तत्वादार्द्धधातुकस्येति भावः । तद्व्याहतमिति । सप्तम्यन्त-

पूर्वस्य विधीयमानं सर्वमिति भाष्यादौ निर्णीतत्वात्। अन्यथा राजपुरुषादौ नलोपाद्यसिद्धिप्रसङ्गादिति दिक्। नन्वेकाच इति विधीयमानं द्वित्वं श्तिपा शपेत्यादिना निषिद्धमेवेति चेन्न। गुणो यङ्लुको रुग्रिकौ च लुकीत्याद्यभ्यासकार्यविधिभिर्द्वित्वानिषेधस्य ज्ञापनात्। धातुत्वादिति। क्विबन्तेष्विव प्रत्ययोत्पत्तेः प्राक् प्रवृत्ताया धातुसञ्ज्ञाया निरपवादत्वेनावस्थितत्वात्कार्यकालपक्षे ऽपि भूवादिसूत्रप्रवृत्तेश्चेति भाव। यत्तु व्याचख्युः प्रत्ययलक्षणेन धातुत्वमिति। तदन्याय्यम्। उपदेशेन सिद्धे दुर्बलस्थानिवद्भावे ऽस्यानादर्त्तव्यत्वात्। यच्च हीति। यस्त्वेतदर्थप्रतिपादकं माधवग्रन्थं व्याचक्षाणैरुक्तम्। तदेतदाकरविरुद्धम्। यत्तु दाधर्त्तिसूत्रे भाष्यम्। तेतिक्ते इति किन्निपात्यते तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमात्मनेपदम्। अनुदात्तङित आत्मनेपदमिति नियमार्थन्तर्हि भविष्यति। अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्रेति। क्व मा भूत्। बेभिदीति इति। तथा च वामनोपि तेतिक्ते इति तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। यङो ङित्त्वात्प्रत्ययलक्षणेन यङ्लुगन्तस्यात्मनेपदमन्यत्र न भवतीत्येतदेव ज्ञापकमिति। उपपादितञ्च कैयटहरदत्ताभ्याम्। यद्यप्यनुदात्तङित इति त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तम्, तथापि लोलूयतइत्यादौ यङन्तादात्मनेपदन्तत्प्रत्ययस्य ङित्त्वादिति प्रत्ययलक्षणं भवत्येव। न चैवङ्गोद्वितमित्यवादयोपि स्युरिति शङ्क्यम्। वर्णमात्रवृत्तिरूपाश्रयस्यैव द्वितीयप्रत्ययग्रहणेन

---

प्रत्यये परतः पूर्वकार्यत्वेनानङ्गकार्यत्वोक्तिर्विरुद्धेति भावः। नलोपाद्यसिद्धीति। आङ्गस्यैव निषेधे यचि भमित्यस्यानङ्गत्वान्निषेधाभावे भत्वेन नलोपो न स्यादिति भावः। द्वित्वानिषेधस्येति। तत्परिभाषाभावस्यैव ज्ञापकमित्यन्ये। प्राक् प्रवृत्ताया इति। यङन्तइति शेषः। निरपवादत्वेनेति। एकदेशविकृतन्यायेनावस्थितत्वादिति भावः। यथोद्देशे इदम्। भूवादिसूत्रे चर्करीतमित्यस्यादादौ पाठेन यङ्

व्यावर्त्तितत्वात्। यदुच्यते वर्णाश्रये नास्ति प्रत्ययलक्षणमिति। ङि-त्त्वं तु समुदायवृत्ति न वर्णमात्रवृत्तीति न व्यावर्त्यतइति। इह यदि-त्यादिना न व्यावर्त्त्यतइत्यन्तेन सन्दर्भेण माधवं प्रति किं दूषणमभि-धित्सितम्। आकरविरोधो युक्तिविरोधो वा। नाद्यः। प्रत्ययलोपइति सूत्रं हि विध्यर्थं नियमार्थञ्चेति पक्षद्वयमाकरे ऽपन्यस्तम्। आद्ये यत्र वर्णस्य विशेषणतया आश्रयणन्तत्सिद्धिः फलम्। यथा ऽतृणेडि-त्यत्र इमागमस्य। द्वितीये तु सुदृषदित्यत्र सौर्मनसौ अग्नौमोपसौ इ-त्यसन्तत्वप्रयुक्तस्वरस्य स्थानिवत्सूत्रबलेन प्रापितस्य निवृत्तिः फलम्। तत्राद्यः पक्षो ऽभ्युच्चयवादमात्रन्द्वितीयस्तु मुख्य इति भाष्यकैयटप-दमञ्जर्यादिषु स्थितम्। एवं स्थिते दाधर्त्तिसूत्रस्थं भवदुपन्यस्तं भाष्यं प्रथमपक्षाभिप्रायेण। अत एव हि नियमार्थन्तर्हि भविष्यतीति वदता भाष्यकारेण तत्रानास्था ध्वनिता। अन्यथा तर्ही ति भविष्यति इति च न ब्रूयात्। एतेन तदनुसारिणो वृत्तिकैयटहरदत्तादिग्रन्था अपि व्या-ख्याताः। माधवस्तु द्वितीयपक्षाभिप्रायेण प्रवृत्तः। तथा च मुख्यपक्ष-पातिनि माधवग्रन्थे ऽभ्युच्चयपक्षबलेनाकारविरोधोद्भावनं कथमौ-

---

लुङन्तस्य भ्वादित्वादिति भावः। वर्णमात्रवृत्तिरूपेति। प्राधान्येन तद्वृत्तिरूपात्रच्छि-न्नाश्रयमित्यर्थः। विध्यर्थमिति। यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधौ विद्ध्य-र्थः। यथा ऽतृणेडित्यादौ हलादौ पिति सार्वधातुके विधीयमानइमीति भावः। नियमार्थमिति। यत्र प्रत्ययस्यासाधारणं रूपमाश्रीयते तदेव कार्यं प्रत्ययलोपे न तु प्रत्ययाप्रत्ययसाधारणमित्येवं नियमार्थमित्यर्थः। असन्तत्वेति। असन्तत्वं हि प्रत्यया-प्रत्ययसाधारणम्। अभ्युच्चयवादमात्रमिति। तृणह इति सूत्रे ऽचि नेत्यनुवर्त्य तृणहानि इत्यादिव्यावृत्तौ हलीत्यननुवृत्त्या ऽतृणेडित्यादिसिद्ध्या तत्र फलाभावादिति भावः। प्रथमपक्षेति। वार्त्तिकसंमतविधिपक्षेत्यर्थः। अनास्थेति। पूर्वपक्षानुसारेण दुर्बलसमा-धानत्वादिति भावः। वस्तुतो वार्त्तिकानुसार्येकदेशिनः शङ्कायान्तदनुसार्येकदेशिन एव तत्समाधानं न सिद्धान्तिन इत्यदोषः। आत्मनेपदमित्येव सिद्धान्त्युक्तिरिति बोद्धव्यम्। न च यत्र प्रत्ययस्य विशेष्यत्वन्तत्रैवेति नियमोस्तु एवञ्चेदं भाष्यं मु-

चितौं लभेन। नापि युक्तिविरोधः। संभावितानां विरोधानामाकर-एवोद्धृतत्वात्। भवद्भिरिह विभाव्य तदनुपन्यासाच्चेति दिक्। यद्यपि वदन्ति। अदादिषु चर्करीतं परस्मैपदीति परस्मैपदग्रहणं भाष्यकारोक्तनियमसिद्धपरस्मैपदानुवादः। अदादित्वमात्रन्तु विधीयतइति। अत्रेदं वक्तव्यम्। परस्मैपदीति पाठ एव तावत्प्रायेण नास्ति नियमसिद्धमित्यप्यसङ्गतम्। अप्राप्तेरेवोक्तत्वात्। एवञ्चानुवादोपि नास्त्येव। अदादित्वविधानं व्यर्थम्। न हि अदादीनामपि अदादित्वं विधीयते। तत्र पाठमात्रेण तन्निर्वाहात्। तदेतत्सकलं ध्वनयति। चर्करीतञ्चेत्यदादौ पाठाच्छपो लुगिति॥

यङो वा॥ अत्र व्याचख्युः। यङन्ताद्धलादिपित्सार्वधातुकन्न संभवतीति यङ्शब्देन यङ्लुगन्तो लक्ष्यतइति। तद् व्यर्थं प्रत्ययलक्षणेन यङन्तत्वानपायात्। कथमन्यथा यङ्लुकि सन्यङोरिति द्वित्वं प्रवर्त्तते। न हि तत्रापि यङ्लुक् लक्ष्यते। श्रूयमाणे यङि द्वित्वाभावप्रसङ्गात्। न च काकेभ्यो दधीत्यत्रेवाजहल्लक्षणा। तत्र दध्युपघातकत्वस्येवेहोभयसाधारणस्य लक्ष्यतावच्छेदकस्याभावात्। युगपद् वृत्तिद्वयस्य चायोगात्। लक्षणायां बीजाभावाच्च। प्राचा तद्व्याख्यातृभिर्वा तत्र लक्षणानुक्तेश्च। तदेतद् ध्वनयन्नाह। यङन्तात्परस्येति।

---

त्यपक्षाभिप्रायकमेवेति वाच्यम्। राजेत्यादौ पदत्वानापत्तेः। आकरे एवोद्धृतत्वादिति। तदुद्धारप्रकारश्च अचि नेत्याद्यनुवृत्तिरूप उक्तः। वस्तुतस्तिजेरनुदात्तत्वात्तेतिक्ते इत्यत्रानुदात्तेत्त्वात्सिद्धमिति शङ्कार्थः। श्तिपा शपेति निषेधस्तु नास्त्येवेति नियमेन वारणमिति भाष्यार्थः। ननु परस्मैपदीति पाठाभावे ऽपि चर्करीतमित्यस्य परस्मैपदिसमभिव्याहारेण पाठात् यङ्लुगन्तस्य परस्मैपदित्वं बोद्धयते एवेत्यत आह। नियमसिद्धेति। तन्निर्वाहात्। अदादित्वनिर्वाहात्। अदादौ पाठादिति। एवं श्यनाद्यप्रवृत्तिरित्यपि बोद्धयम्॥

अजहल्लक्षणेति। यङ्यङ्लुक्साधारणधर्मेणेत्यर्थः। बीजाभावाच्चेति। शक्या-

छन्दसि निपातनादिति । भूसुवोरिति निषेधश्छन्दस्येवेति नियम्य-तइत्यर्थः । द्विःप्रयोग इति । तथा च प्रकृतिग्रहणे यङ्लुगन्तग्रहणं न्यायसिद्धमिति भावः । यत्तु माधवेनोक्तं भाषायां गुणप्रवृत्तिं ज्ञापयितुं क्रियमाणं बोभूत्विति निपातनं ज्ञापकमस्याः परिभाषाया इति । तन्न । असत्यामुक्तपरिभाषायां बोभूत्वित्यत्र भूसुवोरित्यस्याप्राप्त्या गुणनिषेधार्थतया निपातनस्य चरितार्थत्वात् । यत्तु प्राचोक्तन्धातुग्रहणोक्तं यङ्लुकि वेति केचिदिति नैतत्त्रिमुनिमतं, नापि न्यायसिद्धमित्युपेक्षितम् । संयोगात्परस्य लिटो वा कित्त्वम् । रुदुसुनुधातूनां लिटं विनेड् वा । भृस्तृमृञ्च्यस्त्यशूभ्यः परस्य तादेरार्द्धधातुकस्येड् वेत्यादीनामपि प्राचा तत्र तत्रोपन्यस्तानामर्वाचीनमतानामेषैव गतिः । किं बहुना काशकृत्स्नादिमतानामपि मुनित्रयविरोधे इदानीमग्रहणमेव । दृश्यन्ते हि नियतकालाः स्मृतयः । यथा कलौ पाराशरी स्मृतिरिति । एतच्च शताच्च ठन्यतावशतइति सूत्रे कैयटहरदत्तादिग्रन्थे स्पष्टम् । मुनित्रयमध्येपि यथोत्तरं प्रामाण्यमाश्रित्य भाष्यानुरोधेनैव व्यवस्थेति तत्त्वम् । एतच्च भर्तृहरिकैयटहरदत्तादिसकलसंमतम् । अतोर्वाचीनं यत्किञ्चिद्वचनं पुरस्कृत्यानेकरूपोत्प्रेक्षया मनो न खेदनीयमिति दिक् । अबोभूवीदिति । यत्तु वदन्ति, भा-

---

र्थान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा तद्बीजम् । छन्दस्येवेति । लोकेपीत्यपि बोद्धव्यम् । न्यायसिद्धमिति । ननु तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वं न समुदायस्यान्यथेच्छया पच्पचितिं द्विः प्रयोगेपि विशिष्टस्य धातुत्वापत्तावपचत्यचदित्यादेरपि साधुत्वापत्तिर्युक्तेस्तुल्यत्वात् । अत एव दयतेरिति सूत्रे द्वित्वे कृते परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्यार्द्धधातुकइति विषयसप्तम्या परिहृतम् । अन्यथा त्वदुक्तरीत्या समुदायस्यैवादेशापत्तिरेकाज्द्विर्वचनन्यायेनेति तदसङ्गतिः स्पष्टैवेति चेन्न । उत्तरखण्डमादायैव यथायोगन्तत्तत्कार्यप्रवृत्तेः भूसुवोरित्यत्र तदन्ताङ्गस्येत्यर्थाद्वा प्राप्तिरयमेव मूलार्थः । एवञ्च हन्तेर्यङ्लुगन्ताल्लिङि वध्यादिति रूपमिति माधवोक्तमसङ्गतामित्यन्यत्र विस्तरः ॥

ष्यमते श्वोः सुपीत्यत श्वोरित्यनुवृत्तेरनित्यो वुक् पराभ्यङ्गाणवृद्धिभ्यां बाध्यते तेनाबोभवीदिति । तच्चिन्त्यम् । भाष्यकृता श्वोरित्यनुवृत्तेरनुक्तत्वात् । वुको नित्यत्वमाश्रित्य इन्धिभवतिभ्यामिति सूत्रस्य प्रत्याख्यातत्वाच्च । यदपि प्रसादकृतोक्तं लुङि भूसुवोरिति न गुणः । ज्ञापकन्तु चतुर्ष्वेव लकारेषु न लुङि । तेनानित्यो वुगेवेति श्रबोभूवीत् । ईडभावे ऽबोभूदिति । प्राचो मूलमप्यत्रानुगुणम् । किं तु सर्वमिदं निर्मूलत्वादप्रमाणम् । अभ्यस्ताश्रय इति नियमस्तु सिचः परत्वमाश्रित्य यो जुस्प्राप्तः तन्मात्रपर इति माधवग्रन्थे स्थितमिति भावः । यत्तु माधवेनोक्तं विदेर्हि लिङ्येवानन्तरो झिः संभवतीति तत्रैव जुस् तत्साहचर्यादभ्यस्तादपि लङ्येव न लुङि । ननु सिच्साहचर्याल्लुङ्येव किं न स्यादिति चेन्न । परसाहचर्यस्य बलीयस्त्वात् । तथाचाबोभुवन्नित्येव रूपमिति । अत्रेदं वक्तव्यम् । नेह साहचर्यं नियामकम् । द्वित्रिश्चतुरिति सूत्रे कृत्वोर्थग्रहणे साहचर्यं क्वचिन्नाश्रीयत इति ज्ञापितत्वात् । अत एव भगवता भाष्यकारेणाचः परस्मिन्निति सूत्रे पञ्चमीसमासप्रयोजनतया ऽपीपचन्नित्युदाहृतम् । तस्मादिह जुसेवोचितः । अथापि स मास्त्वित्याग्रहस्तर्हि आत इति नियमस्य लाघवात्सामान्यापेक्षत्वमाश्रित्य जुस् वार्यताम् । अदभ्यस्तादिति तु दुर्वारम् । तथा च

---

अनुवृत्तेरनुक्तत्वादिति । असिद्धवदत्रेति सूत्रे पूर्वपक्षिणोक्तत्वे ऽपि सिद्धान्तिना ऽनुक्तत्वादिति भावः । चतुर्ष्विति । लट्लङ्विधिलिङ्लोट्स्वित्यर्थः । निर्मूलत्वादिति । न च भाष्ये क्वान्यत्र मा भूत् बोभवतीति लेट एवोदाहरणदानं मूलम् । तदा लेट्येव ज्ञापकफलं स्यान्न चतुर्षु । उपलक्षणत्वेपि न चतुर्ष्वित्यस्य लाभ इति भावः । सिचः परत्वमाश्रित्येति । अत एव तुल्यजातीयस्य नियमः कश्च तुल्यजातीयो यो द्वाभ्यामनन्तर आतः सिचश्चेति आत इति सूत्रे भाष्ये उक्तम् । तत्र सिचः परस्य झेर्जुस् तर्हि आदन्तादेवेति नियमे तस्य सिज्निमित्तकस्यैव स्वरसतो लाभादिति भावः । इत्युदाहृतमिति । त्वद्रीत्या जुसः प्राप्तेरेवाभावेन तत्प्रयोजनतयोपन्यासो ऽसङ्गतः स्यादिति भावः । उचित इति । भाष्यसंमतत्वा-

पक्षभेदेनाबोभूवुरबोभुवदिति रूपद्वयमस्तु नामाबोभूवन् इति तु दुरुपपादम्। अन्तादेशस्य दुर्लभत्वादिति दिक्। जुसि चेति गुणमाशङ्क्याह नित्यत्वादिति। मोमुदीति। नाभ्यस्तस्याचीति निषेधाल्लघूपधगुणो न। मोमोदितेति। न चात्र न धातुलोपइति गुणनिषेधः शङ्क्यः यङ्लुको ऽनैमित्तिकत्वात्। यत्तु प्राचा यङ्लुगन्तप्रकरणे न धातुलोपइति सूत्रं व्याख्याय बेभिदिता मरीमृजितेत्युदाहृतं तदेतदसंबद्धमिति स्पष्टमेव। यत्तु परिष्कुर्वन्ति। किमिह प्रकरणविरोधमात्रं किं वा प्रकृतसूत्रोदाहरणत्वानुपपत्तिः। नाद्यः। महाप्रकरणं हि यङ एव तच्च न विरुध्यते ऽवान्तरप्रकरणन्तु यद्यपि लुकस्तथापि लुग्लोपयोः फलवैलक्षण्यं स्फुटीकर्तुं प्रासङ्गिकत्वेन यङन्तोदाहरणे बाधकाभावात्। नापि द्वितीयः। भाष्यकारप्रभृतिभिर्हरदत्ताद्यर्वाचीनपर्यन्तैः सर्वैरेव यस्य हल इति लोपस्यावयवलोपत्वं स्वीकृत्य पृथग्लोपस्य स्वीकारेपि प्रकृतग्रन्थकारेण समुदायलोपस्यैव स्वीकारात्। यस्येति सङ्घातग्रहणमिति वदतो वामनस्याप्यत्रानुकूलत्वात्। यद्यपि यकाराकारसमुदायान्तर्गतस्यैव यकारस्य लोपो न त्वहर्यीदित्यादौ केवलस्यापीत्येतावन्मात्रभिप्रायकतया वामनवाक्यं सर्वैरेव व्याख्यातन्तथापि क्लिष्टत्वान्निष्फलत्वात् प्रमाणाभावाच्च व्याख्यातृवचनमुपेक्ष्यमवश्यं च समुदायलोप एवायं विज्ञेयः। अवयवलोपत्वे हि यङ्लुको ऽवयवलोपत्वं वदन्तं भाष्यकारं प्रति ये दोषा

---

दिति भावः। प्रौढ्याह। अयापीति। सः। पञ्चमीसमासः। अस्तु नामेति। वक्रोक्त्येदं सूचितं सुबन्तोक्तरीत्या पञ्चमीसमासस्यावश्यकत्वमात इत्यस्य सामान्यापेक्षनियमस्वारस्यप्रत्यासत्योर्भङ्गस्तस्माज्जुसुविशिष्टमेव साध्विति। अन्तादेशस्येति। तत्प्रवृत्तिवेलायामेवाभ्यस्तत्वेन जुसा ऽता वा बाधादिति भावः। तदसम्बद्धमिति। यङ्लुको ऽनैमित्तिकत्वेन गुणवृद्ध्योरुचितत्वादिति भावः। समुदायलोप एवेति। एवञ्च बेभिदितेत्यत्राज्झलादेशत्वेन स्थानिवत्त्वाभावादार्द्धधातुकनिमि-

हरदत्तेनोक्तास्ते इहापि प्रसज्येरन्। तथा हि। गमेर्यङ्लुगन्तादचि जङ्गम इत्यत्र गमहनेत्युपधालोपो यथा आपादितः। एवं यङन्तात् ण्वुलि जङ्गमक इत्यत्रापि स्यात्। यथात्रानङीति प्रतिषेधः। दरीदृशक इत्यत्र ऋदृशो ऽङीति गुणः स्यात्। देद्यक इत्यत्र दीङो युडचीति युक् स्यात्। अथ यद्यत्राङ्गवृत्ते पुनर्वृत्तौ संज्ञापूर्वको विधिरनित्य इत्यादिकुशकाशावलम्बनेनोपधालोपादि पराक्रियेत ततो यङ्लुगन्तादपि जङ्गम इत्यादौ दोषोद्धारः सुकर एवायुष्मतामिति। भाष्यकारोक्तरीत्या यङ्लुकोप्यवयवलोपत्वे सिद्धे गतन्न धातुलोपइति सूत्रेण तस्मात्सूत्रं स्थापयितुं प्रवृत्तैः लुकीव लोपेपि समुदायनिवृत्तिरेव एष्टव्या। एवञ्च अवयवलादेशस्य स्थानिवत्त्वायोगात् युक्तमेवोदाहरणम्। एतेन न धातुलोप इत्यत्रेक इत्यनुवृत्तेः पापचक इति कृदन्तप्रकरणस्थोपि ग्रन्थो व्याख्यातः। तस्मात् बेभिदिता मरीमृजितेति पापाचक इति च यङन्तोदाहरणानि वदतो ग्रन्थकारस्य ग्रन्थान्तरविरोधो न दोषाय। उक्तयुक्तीर्वामनवाक्यं चोपष्टभ्य हरदत्तादिग्रन्थोपमर्दार्थमेव प्रवृत्तत्वादिति। अत्रेदं वक्तव्यम्। यस्येति सङ्घातग्रहणमिति वामनवाक्यमात्रं पुरस्कुर्वद्भिस्तत्समानाकाराणि भाष्यवार्तिकाक्षराणि किमित्युपेक्ष्यन्ते। ननु समनन्तरमेव भाष्यादावादेः परस्येति सञ्चारितत्वादिति चेत्तर्हि वामनेनापि तथैव सञ्चारिमित कथन्न पर्यालोच्यते। एवञ्च व्याख्यातृवचनं प्रमाणाभावादुपेक्ष्यमित्ययुक्तम्। व्याख्येयग्रन्थशेषस्यैव तत्र प्रमाणत्वात्। यदप्युक्तं जङ्गम इत्यत्रेव जङ्गमक इत्यत्रापि उपधालोपः स्यादिति। तदपि न। त्वयापि पापाचक इत्यत्रेव वृद्धेर्दुर्वारत्वात्। कुशकाशाव-

---

त्त्वाच्च न धात्वित्युदाहरणता यङन्तस्य नानुपपन्नेति भावः। इहापीति। यस्य हल इत्यस्यनेन यङ्लोपविषयेपि इत्यर्थः। दरीदृशक इत्यत्रेति। यङन्तात् ण्वुलीत्यादिः। लुकीवेति। वृत्तिमतेनायं दृष्टान्तः। पापाचक इति। यङन्तात् ण्वुलि हि

लम्बनेन वृद्धिनिवारणस्य लोपनिवारणेपि तौल्यात् । यत्तु देद्यक इत्यत्र युट् स्यादित्युक्तन्तदतिस्थवीयः । हलः परत्वाभावेन यस्य हल इत्यस्याप्राप्त्या देदीयक इति रूपस्य सर्वसंमततया देद्यक इत्यस्य खपुष्पायमाणत्वात् । किं च समुदायलोपे उक्तिसंभव एव नास्ति । यस्येति सङ्घातग्रहणे ऽपि हल इति पञ्चमीनिर्देशादादेः परस्येत्यस्य दुर्वारत्वात् । यत्तु अतो लोप इत्यतो ऽत इत्यनुवर्त्त्य अकारान्तस्य यस्येति व्याख्याय अत इति विशेषणसामर्थ्यादादेः परस्येति न प्रवर्त्ततइति कल्पयन्ति । तन्न । गौरवात् फलाभावात् प्रत्युतानिष्टप्रसङ्गाच्च । अल्लोपस्य स्थानिवत्त्वेन हि वृद्ध्यभावात्पापचक इति रूपं भाष्यसंमतम् । तच्च त्वत्पक्षे दुरुपपादम् । यत्तु वदन्ति । त्यजेदेकङ्कुलस्यार्थइति न्यायेन भूयसामुपधालोपयुडादीनामनुग्रहाय एकोयमुपधावृद्धिः सोढव्येत्याशयेन कृदन्ते पापाचक इत्यस्योदाहृतत्वान्न दोष इति । तन्न । उपधालोपादिसमाधानस्य समनन्तरमेवोक्ततया त्यजेदेकमिति न्यायस्येहाप्रवृत्तेः प्रत्युत उपधावृद्धिरेव भाष्यविरुद्धेति तत्रेष्टापत्तिं कुर्वन्नेव व्याख्यातृभिरपि त्यक्तुमर्हः । अपन्यानन्तु गच्छन्तं सोदरोपि विमुञ्चतीति न्यायात् । ऐर्षिष्यदित्यादौ न्यायेप्युदाहरणे प्रमादिकतां वदद्भिः सकलग्रन्थविरुद्धेर्थे सुतरान्तथा वक्तुं शक्यत्वाच्च । तस्मात्प्राचो ग्रन्थे बेभिदिता मरीमृजितेति रूपस्य शुद्धत्वेपि न धातुलोपसूत्रोदाहरणत्वासङ्गतिः । पापाचक इति रूपस्य यङ्लुगन्तात् एवुलि सुसाधत्वे ऽपि न धातुलोपइत्यत्रैक इत्यनुवृत्तेरिति वाक्यशेषासङ्गतिरिति दूषणं दुरुद्धरमिति स्थितम् । ननु भाष्यमते यस्येति योगं विभज्य अत इत्यनुवर्त्य पृथगल्लोपं विधा-

---

कृदन्ते तेन तदुदाहृतम् । लोपनिवारणे ऽपि तौल्यादिति । अनेन तद्रीत्या तद्ग्रन्थस्याशुद्धत्वमात्रमुच्यते न तु पापाचक इत्यत्र वृद्धिः सिद्धान्ते इति बोद्ध्यम् । भाष्यसंमतमिति । अनेन निष्फलत्वादिति तदुक्तहेतुर्निराकृतः । ऐर्षिष्यदित्यादा-

य यङ्लुको ऽप्यवयवत्त्वोपलक्षीकारात् पापाचक इत्यत्र कथं रूपासुद्धिर्नास्तीति चेत् शृणु । पृथगल्लोपो ऽच्येव अनैमित्तिकस्तु लुक् अन्तरङ्गत्वात्समुदायमेवापहरति। यथा कृष्णो नोनाव वृषभ इत्यत्रात एव हि तत्र णलि वृद्धिः। एतच्च भाष्यकैयटयोः स्पष्टम्। एतेन भाष्यमते बेभिदितेत्यादि माधवोदाहृतश्चिन्त्यतामावदेदिति । यथा तु भाष्यन्तथा पापाचक इत्येव भवतीति च यङ्लुगन्तशिरोमण्यादौ यदुक्तस्तत्सर्वं रभसकृतमेवेति प्रतीमः। यदि तु प्राचो ग्रन्थः कथञ्चिद्योजनीय एवेत्याग्रहस्तर्हीत्थं योज्यताम्। अल्लोपस्य स्थानिवत्त्वेन बेभिदितेत्यादौ गुणवृद्ध्यभावे सिद्धे ऽपि उपायस्योपायान्तरादूषकत्वादिति न्यायेन निषेधसूत्रमप्युदाहरति । यथा यङ्लुको ऽनैमित्तिकत्वादेव पापाचक इत्यत्र न धातुलोप इति निषेधस्याप्रसक्तावपि निषेधाप्रवृत्तौ बीजान्तरमाह । इक इत्यनुवृत्तेरिति। तदेतद्भाष्यतत्त्वज्ञैः परिभावनीयमित्यलम्बहुना । वनीवच्चीतीति। नित्यङ्कौटिल्य इति यङ्। नीग्वञ्चित्यभ्यासस्य नीगागमः। यङो लुका लुप्तत्वान्न

---

विति । अनेन प्राचामतिप्रमादन्दर्शयति । पृथगल्लोपो ऽच्येवेति । योगविभागस्येष्टसिद्ध्यर्थतया गुणवृद्धिप्राप्तियोग्यविषये ऽच्प्रत्यये एवेत्यर्थः । अत एव सनीस्रंस इति भाष्ये उदाहृतम् । अन्यथा तत्र नलोपः स्यात् । मरीमृज इत्यादौ विकल्पस्तु व्यवस्थितविभाषाश्रयणान्न । यद्वेष्ट एव । तदर्थं सूत्रारम्भे ऽप्येषा कल्पना ऽऽवश्यकीति भाष्याशयः। दरीदृश इत्यत्राङ्गो लाक्षणिकत्वादङ्निमित्तो गुणो न । देद्यक इत्यादौ युट् तु न । अनुबन्धनिर्देशात् स्यसिच्सूत्राद्वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणाद्वा । जरीगृह्यतेः सास्मर्यतेश्चाचि सम्प्रसारणगुणौ सूत्रमते ऽपि न लुमतेति निषेधानित्यत्वेन साध्यौ यङ्लुगन्तात् ण्वुलादौ यथायथं गुणवृद्धी भवत एव । जङ्गम्यतेर्यङन्तात् ण्वुलि उपधालोपो भवत्येव । अनङ्गीति निषेधस्तु न लाक्षणिकत्वात् । यङ्लुगन्तात् ण्वुलि तु न लोपः। वृद्धिस्तु भवत्येव । मरीमृज्यतेर्ण्वुलि वृद्धिविकल्पो भवत्येव । दरीदृशक इत्यत्राङ्गगुणो न भवतो लाक्षणिकत्वादिति भावः । नीगागम इति । न च नीग्वञ्चित्यत्रानुबन्धनिर्देशेन

तदाश्रितो नलोपः । वनीवक्ष इति । तसो ङित्त्वादनिदितामिति नलोपः । सामान्यापेक्षेति । तथा च प्रयुज्यते । "राजा वृत्रञ्जङ्घ्नन्-त्प्रागपागुदक् पवमानस्य जङ्घ्नत" इत्यादि । यत्तु व्याचख्युः धातुनि-र्देशार्थोऽयं श्तिप् न यङ्लुङ्निवृत्त्यर्थः । तन्निवृत्त्यर्थस्यैव तदर्थत्त्वादि-ति । तदुपेक्ष्यम् । साङ्ख्याविशिष्टहेतुमात्रोपन्यासस्याकिंचित्कर-त्वात् । चञ्चूर्त्तीति । चरफलोश्चेति नुक् । हलि चेति दीर्घः । अचञ्चू-रित्यत्र तु र्वोरुपधाया इति दीर्घः । यत्तु यङ्लुगन्तशिरोमण्यादौ चञ्चूर्तीत्यत्र इडभावे र्वोरुपधाया दीर्घ इति सूत्रमुपन्यस्तन्तद्भ्रमसा-दिति बोध्यम् । चङ्गत इति । यत्तु प्रचा चङ्गन्त इत्युदाहृतम् । यच्च व्याचख्युः । धातुग्रहणोक्तं यङ्लुकि वेत्यात्वाभावे ऽनुदात्तोपदेशत्वा-भावान्न नलोपः । अनुनासिकस्य क्विझलोरिति दीर्घोपि न भवति । जनसनखनां जानावात्वेन तस्य बाधितत्वात् । यद्वा ऽपवादे निषिद्धे उत्सर्गो न प्रवर्त्तते । सुजाते अश्वसूनृते इतिवत् । एवञ्च संसन्त इत्या-त्वाभावे ऽनुनासिकलोपो ऽपि न भवति । यद्वा । क्विप्साहचर्याज्झल्-त्वादिरपि कृदेव गृह्यते ऽतस्तिङि न दीर्घः । अत एव ग्रन्थकृता अदन्तएव दीर्घसूत्रमुपन्यस्तम् । एतच्च भाष्यकैयटयोः स्पष्टमिति । अत्रेदं वक्तव्यम् । धातुग्रहणोक्तविकल्प एव तावन्निर्मूलः । अभ्युपेत्यापि ब्रूमः । दीर्घो दुर्वारः यत्तूक्तमात्वेन बाधितत्वादिति आत्वाभावपक्षस्य प्रक्रान्तत्वान्न ह्यप्रवर्तमानमप्यात्वं स्वबाध्यं बा-

---

यङ्लुकि नीग्दुर्लभ इति वाच्यम् । अत्रापि यङ्लुकोरित्यनुवृत्तिसामर्थ्येन प्रवृत्तेः । अत एव यङो ऽचि चेति सूत्रे सनीसूंस इति भाष्यप्रयोगः सङ्गच्छते । तदर्थ-त्वादिति । यङ्लुङ्निवृत्त्यर्थत्वादित्यर्थः । तद्भ्रमादिति । पदान्ते एव तत्प्रवृत्तेरि-ति भावः । जातावात्वेनेति । खनूजातौ क्व चित् प्रवृत्तेनात्वेन खनूजातीये सर्वत्र दीर्घस्य बाध इति भावः । अपवादे । आत्वे । उत्सर्गः । अनुनासिकदीर्घो नलोपश्च । संसन्त इति । षणु, दाने तनोत्यादिः । विकल्पः । धातुग्रहणोक्तं यङ्लुकि वेत्येवंरू-

धते। उत्सर्गस्य निर्विषयत्वापत्तेः । स्वजातीये क्व चित्प्रवृत्तं सत्स-र्वत्र बाधतइति चेत्। नात्र न्यायो वचनं वास्ति। यदप्युक्तं यङ्येत्यादि तदपि न यङ्लुकि तन्निषेधस्यैवाप्रसिद्धत्वात्। ननु धातुग्रहणोक्तं वेति प्राप्तविभाषा सा च निषेधे पर्यवस्यतीति चेत् । भवेदेवम्। य-द्ययं वाचनिको ऽर्थः स्यात्। द्विःप्रयोगपक्षे स्थाने द्विर्वचनपक्षे च भा-व्यमिति रूपान्तरत्वान्न भाव्यमिति च मतभेदेन फलितोयं विकल्प इति स्वयमेव प्राग्व्याख्यातं शिरोमणौ च प्रपञ्चितन्तत्कुतस्त्यो निषेधः। तत्रापि रूपान्तरत्वान्नेत्यसङ्गतमेव। द्विर्वचने उक्तपक्षद्वयभिन्नप्रका-रासम्भवात् । तत्र च कार्यप्रवृत्तेर्दुर्वारत्वादित्यन्यदेतत्। तथा ऽपि विकल्प एवाप्युद्धः। निषेधे पर्यवसानन्तु दूरापास्तमेव । तदप्यभ्यु-पेत्य ब्रूमः। अपवादे निषिद्धे तु उत्सर्गस्य प्रवृत्तिरेव न्याय्या। अन्यथा नादिचीति पूर्वसवर्णे निषिद्धे वृद्धिरपि न प्रवर्त्तेतेति रामावित्यादि न सिध्येत्। तथा च बहु व्याकुलीस्यात्। सुजाते अश्वसूनृते इत्यादौ तु प्रमिते लक्ष्ये तन्निर्वाहार्थमगत्या क्व चिदुत्सर्गोपि न प्रवर्त्ततइत्याश्रि-तम्। न च चङ्क्रन्त इति लक्ष्यं क्व चित्प्रमितमस्ति न वा धातुवृत्त्यादिषु स्वीकृतं शिथिलमूलानपि पक्षानुपष्टभ्य रूपोत्प्रेक्षायान्तु दीर्घविशि-ष्टमेव रूपं न्याय्यम्। एतेन संसन्त इत्यात्वाभावे ऽनुनासिकलोपोपि नेति यदुक्तन्तदपि प्रत्युक्तं प्रतिज्ञामात्रेणार्थासिद्धेः। तनोत्यादीना-मिति गणनिर्दिष्टतया ऽनुनासिकलोपप्राप्तेरभावाच्च। यदपि क्विप्सा-

---

पः। तन्निषेधस्येति। आत्वनिषेधस्येत्यर्थः। द्विःप्रयोगपक्षे भाव्यं स्थाने द्विर्वचने च रूपान्तरत्वान्न भाव्यमित्यन्वयः। तत्र च कार्यप्रवृत्तेरिति। स्थाने द्विर्वचनेपि स्था-निवद्भावेनेति भावः। तथा चेति। पक्षद्वये ऽपि कार्यप्राप्तेरित्यर्थः। क्व चिदुत्सर्गो-पीति। भ्रष्टावसरन्यायादिति भावः। वस्तुतस्तु नान्तःपादमिति पाठे पदान्तादे-ङो यद्यत्प्राप्नोति तन्नेति व्याख्यानेन भाष्यकारैस्तत्साधितमिति बोद्धव्यम्। गण-निर्दिष्टतयेति। तेन तस्य निषेधस्याङ्गीकारादिति भावः। माधवादिभिरिति। अत

हचर्यादित्यादि तदपि न । नहि तत्र कृदेव क्विब् गृह्यते । सङ्कोचे बीजाभावात् । अपि तु सर्वप्रातिपदिकेभ्य इति क्विबपि । तथा च राजानति चर्माणतीत्यादि माधवादिभिरुदाहृतम् । स्वयमपि नामधातौ तथैव वक्ष्यते । प्राचा ऽपि च्छ्वोः शूडिति सूत्रं यङ्लुगन्ते तिङ्ष्वपि सञ्चारितम् । तथा च क्विपः कृत्त्वं पुरस्कृत्य तत्साहचर्याज्झलादीनामपि कृतामेव ग्रहणे स्वपरग्रन्थाः सर्व एव सिकताकूपवद्विशीर्येरन् । यदपि भाष्यकैयटयोः स्पष्टमित्युक्तं तदपि कुत्र किमुक्तमिति भाष्यतत्त्वज्ञाः कृतबुद्धय एव विदाङ्कुर्वन्तु । एतेन जनेर्जञ्जन्त इत्याद्यपि प्राचामुदाहरणं प्रत्युक्तम् । जाहेतीत्यादि हाङ्हाकौस्तुभ्यानि रूपाणि । स्यादेतत् । हाकोऽभ्यासे दीर्घो दुर्लभः । अक्कित इति निषेधात् । ननु यद्यक्कित इति धातुविशेषणं तदा वनीवञ्चीत्यादौ धातोरक्कित्त्वाद्दीर्घः स्यात् । ततो ऽभ्यासविशेषणम् । एवञ्च दीर्घस्य कुतो दौर्लभ्यमिति चेन्न । धातोः क्कित्त्वे ऽभ्यासस्यापि क्कित्त्वात् द्विःप्रयोगो द्विर्वचनमिति स्थितेः । न चेष्टापत्तिः । वृत्तिन्यासपदमञ्जरीधातुवृत्तिषु सर्वत्र जाहेतीत्यादौ दीर्घस्य स्वीकृतत्वात् । अत्रेदं तत्त्वम् । द्वित्वाभावे केवलयस्यार्थवत्त्वेपि द्वित्वे सति समुदाय एवार्थवानिति तावद् ग्रन्थकाराणां व्यवहारो निर्विवादः । अत एव बिभर्त्तिपिपर्त्तीत्यादौ भृञामित् अर्त्तिपिपर्त्त्योश्चेतीत्वं नानर्थकेऽल्लोन्त्यवि-

---

एवाचारक्विपि ककारोच्चारणं चरितार्थमिति बोद्धव्यम् । यदि तु चक्षञ्जे इत्यादौ दीर्घवारणाय कृदेव झलादिर्गृह्यते क्विनपि कृदेव । आचारक्विपो हलन्तेभ्यो ऽभावात् । तत्र ककारोच्चारणन्तस्य शास्त्रे प्रसिद्धत्वमात्रेण च्छ्वोरित्यत्र तु शब्दाधिकारः साहचर्यानाश्रयणञ्च । हलन्तेभ्यस्तत्सत्त्वेपि तत्साहचर्यात्तिङ्भिन्नो झलादिकृङ्कित् गृह्यते इत्युच्यते, तदा विकल्पस्य निर्मूलत्वमेव प्राचां मते मुख्यन्दूषणमिति दिक् ॥ ग्रन्थकाराणामिति । हरदत्तादीनामित्यर्थः । अत एवेति । अभ्यासस्यानर्थकत्वादेवेत्यर्थः । ननु दयतेरिति सूत्रस्थभाष्यादुत्तरखण्डस्यैवार्थवत्त्वं लभ्यते न समुदायस्येति दृष्टान्तासङ्गतिः । अङ्गत्वन्तु अभ्यासस्यापि द्विःप्रयोगत्वेन तद्रूपत्वात्ततो वि-

धिरिति निषेधात् सर्वस्य स्यादित्याशङ्क्य अनभ्यासविकारे इति-वाक्यशेषेण समर्थयन्ते । एवञ्चार्थवत्त्वमिव कित्त्वमपि समुदायस्यैव न तु प्रत्ययवयवमतो न दोषः । अथवा अकित इति बहुव्रीहिः । न विद्यते किद्यस्मिन्निति । यत्तु प्राचा जहात्यभ्यासस्य न दीर्घ इति मतमुपन्यस्तन्तदाकरविरोधादुपेक्ष्यम् । पञ्चापीति । यत्तु प्राचा जाहित इति ह्रस्वेकारमुदाहृतन्तत्प्रामादिकमिति भावः । लुका लुप्तइति । यत्तु प्राचा स्वपिस्यमीत्युत्वमुदाहृतम् । यच्च परिष्कुर्वन्ति संप्रसारणन्तदाश्रितञ्च कार्यं बलवदिति यङ्लुकः प्रागेव संप्रसारणमिति । तदुपेक्ष्यम् । उक्तपरिभाषाया भाष्ये प्रत्याख्यातत्वात् । सत्यां हि तस्यां हलादिःशेषात्प्राक् संप्रसारणतयैव सिद्धेरुभयेषाङ्ग्रहणं व्यर्थं स्यात् । किं च अकृतव्यूहपरिभाषाविरोधादपि संप्रासरणन्दुर्लभम् । अत एव हरदत्तमाधवादिभिः सर्वैः सास्वपीति सास्वप्तीत्याद्युदाहृतमिति भावः । तातर्त्तीति । यत्तु प्रयुञ्जते चोद्यं नावतरीतर्त्तीत्यादि तत्प्रामादिकमेव । उतृदिर् हिंसानादरयोरिति धातोरुक्तरूपसंभवे ऽपि अर्थासामञ्जस्यात् । तरतेश्च दीर्घान्तत्वेन रीको दुर्लभत्वादिति बोध्यम् । गृह्णातेस्त्विति । यत्तु प्राचा गृह्णातेर्यङ्निमित्तं संप्रसारणमाश्रित्य जागृहीतीत्याद्युदाहृतं तन्नेति भावः ।

---

धानेन तदादिग्रहणात्समुदायस्यैवेति स्पष्टमेकाचो द्वे इत्यत्र भाष्ये । किञ्चाभ्यासमात्रादर्थाप्रतीत्यानर्थकत्वमस्तु तत्र कित्त्वङ्कुतो नेत्यत आह । अथवेति । बहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवद्भावानाश्रयणमिति भावः । अत एवाकिद्ग्रहणस्य अभ्यासविकारेषु परस्परं बाधकत्वाभावज्ञापकत्वं भाष्योक्तं सङ्गच्छते । तदाकरेति । वृत्त्यादिग्रन्थेत्यर्थः । प्रामादिकमिति । माधवादिरीत्येति भावः । उत्वम् । सम्प्रसारणम् । व्यर्थं स्यादिति । तद्धि पुनर्विधानद्वारा हलादिःशेषबाधनार्थमिति भाष्ये स्पष्टमिति भावः । अकृतव्यूहेति । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधतइति परिभाषाविरोधादित्यपि बोद्ध्यम् । अर्थासामञ्जस्यादिति । धातूनामनेकार्थत्वन्तु वृद्धप्रयोगानुरोधेन न तु यस्य कस्य चित्प्रयोगानुरोधेनेति भावः । तन्ने-

जाग्रहितेति । नन्वत्र इटो दीर्घेण भाव्यमत आह ग्रह इत्यादि। तत्रेति। तथा च एकाचो द्वे इति सूत्रे हरदत्तेनोक्तम् । एकाच उपदेशे इत्यतो दीर्घविधावेकाज्ग्रहणमनुवर्त्ततइति। माधवस्त्विति। तस्यायमाशयः। ग्रहो ऽलिटीति सूत्रे यङ्लोपे चोक्तमिति वार्तिकम्। तदीयभाष्यकैयटादिपर्यालोचनया ग्रहेर्यङन्तात् तजादेरिटो दीर्घाभावे युक्तिद्वयं लभ्यते। पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भाव इति ग्रहेरिति विहितविशेषणाश्रयणमिति च। तत्राद्यः पक्षो भाष्यवार्त्तिकरीत्या नपदान्तेति सूत्रे दीर्घग्रहणस्य प्रत्याख्यानात्। द्वितीयस्तु सूत्ररीत्येति विवेकः। एवञ्चयङ्लुकि दीर्घो भवत्येवेति स्पष्टं लभ्यते। यङ्लुको ऽनैमित्तिकतया अज्भक्तादेशतया च स्थानिवद्भावायोगात् द्वित्वस्य द्विःप्रयोगरूपतया ग्रहेर्विहितत्वानपायाच्चेति । तद्भाष्यादिविरुद्धमिति। तथा हि। एकाचो द्वे प्रथमस्येति सूत्रे ग्रहेरङ्गादिति भाष्यमुपादाय कैयट आह। तचो हि जरीगृहित्यङ्गन्न तु ग्रहिः। विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति। यद्यपि तत्र यङन्तं प्र-

---

तीति । लुका लुप्ते प्रत्ययलक्षणाभावादिति भावः । ग्रहेरङ्गादितीति । इदञ्च यङन्ते ग्रहो ऽलिटीति दीर्घमाशङ्क्य तत्समाधानत्वेन भाष्ये उक्तम् । एकदेशविकृतन्यायेनापि तृचो जरीगृहित्यङ्गं न तु ग्रहिरिति तदाशय इति कैयटः। नन्वेकमेव द्विरुच्यते इत्येकस्माद्यः प्रत्ययः सोपरस्मादपीति द्वे अङ्गे एवञ्चोत्तरस्याप्यङ्गत्वादल्लोपादौ कृते एकदेशविकृतन्यायेनोत्तरगृहित्यप्यङ्गमेवेति ततः परत्वाद्दीर्घः स्यादिति चेन्न । पूर्वभागेपि ग्रहित्वेन तदादिग्रहणात्समुदाये वाक्यपरिसमाप्तिन्यायेन समुदायस्यैवाङ्गत्वमिति भाष्ये एव समाधानात् । ननु द्विःप्रयोगत्वाज्जरीगृहिर्ग्रहिरेवैकदेशविकृतन्यायेन चाङ्गत्वमिति दोषः स्यादित्याशङ्क्य कैयटेनोक्तं विशेषणसामर्थ्याद्धीति । अङ्गस्येत्यस्याङ्गनिमित्तार्द्धधातुकस्येत्येवं प्रकारेण षष्ठ्यन्ततया व्याख्यानसम्भवे ऽपि ग्रहेरत्र विषये ऽङ्गत्वाव्यभिचारे ऽपि पञ्चम्यन्ततया विपरिणमय्य ग्रहविशेषणसामर्थ्यादित्यर्थस्तस्य । यथाश्रुतरूपञ्च सूत्रे श्रूयमाणं ग्रहिति । एवञ्च सूत्रश्रुतानुपूर्वीकग्रहेरङ्गात्परस्येटो दीर्घ इति सूत्रार्थं इति

क्रम्येदमुक्तं तथापि युक्तिसाम्याद्यङ्लुगन्ते ऽपि न दीर्घ इति लभ्यते । एकाज्ग्रहणमनुवर्त्तयन् हरदत्तोप्यत्रानुकूलः । नह्यत्र पक्षे यङ्लुकि दीर्घस्योक्तिसंभवो ऽप्यस्ति । ग्रहोलिटीति सूत्रस्थग्रन्थास्तूपायस्योपायान्तरादूषकत्वादिति न्यायेन यङन्तांशे उपायान्तरपरतया नेयाः । अत एव तत्र कैयट आह । अन्यत्रास्य दोषस्य सम्यगुद्धृतत्वादिति । एवं हि वदंस्तत्रत्यपरिहारस्याव्यापकतामेकाच्सूत्रोक्तस्यावश्याद‍र्त्तव्यताञ्चाभिप्रैति । न च यथाश्रुतरूपपक्षे गृहीतमित्याद्यसिद्धिः । अङ्गसञ्ज्ञाप्रवृत्तिवेलायां यथाश्रुतस्यैव सत्त्वाद्ग्राहितादौ तु नैवम् । एकाच इति समाधानन्तु णिजिभिन्नविषयकमेव । तदित्थम् ॥

यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटः ।
द्विधा त्रिधा चतुर्द्धा च दीर्घप्राप्तिः समाहिता ॥

---

तदाशयः । यङ्लुगन्ते ऽपीति । तत्रापि सूत्रश्रुतरूपाभावादिति भावः । सूत्रस्थग्रन्थास्त्विति । स्थानिवद्भावविहितविशेषणपराः । अन्यत्रेति । एकाचो द्वे इत्यत्रेत्यर्थः । अस्य दोषस्य । यङन्तादिटो दीर्घप्राप्तिरूपस्य । तत्रत्येति । दीर्घविधिस्थेत्यर्थः । एकाच्सूत्रोक्तस्य । यथाश्रुतरूपाश्रयणरूपस्य । इत्याद्यसिद्धिरिति । अङ्गसञ्ज्ञानिरपेक्षत्वेनान्तरङ्गत्वात्पूर्वं सम्प्रसारणमिति भावः । यथाश्रुतस्यैव । ग्रहिरूपस्यैव । द्विधेति । यङ्लुगन्ते ग्रहिरूपत्वस्यैकाच्त्वस्य चाभावेन । त्रिधेति । स्थानिवत्त्वं, विहितविशेषणं यथाश्रुतरूपाश्रयणञ्च । चतुर्द्धेति । यथाश्रुतरूपाश्रयणमेकाच इत्यनुवृत्तिः स्थानिवत्त्वं विहितविशेषणञ्चेति । परे तु द्विःप्रयोगन्यायेन प्रत्येकन्तत्त्वे ऽपि समुदायस्य तत्त्वाभावाज्जरीगृहौ ग्रहित्वाभावाद् ग्रहित्यस्य चोक्तरीत्या ऽङ्गत्वाभावात्तत्र दीर्घाप्राप्त्या किमर्थं यथाश्रुतरूपाश्रयणं कैयटस्य । किं च तथा सति कार्यकालपक्षे उक्तयुक्त्या संप्रसारणोत्तरमिट्प्रवृत्तिकाले एवाङ्गत्वप्रवृत्त्या गृहीतमित्यादौ तत्काले ऽपि यथाश्रुतरूपाभावः । अङ्गत्वनिमित्तप्रत्ययोत्पत्तिकाले इति तु नाक्षरमर्यादालभ्यम् । किं च प्रत्यासत्त्या ऽङ्गत्वनिमित्तयोग्यप्रत्ययोत्पत्तिकाले इत्यर्थापत्तावुपदेशे एवाडाटाविति पक्षे अग्रहीष्टामित्या-

यत्तु शिरोमणौ यङ्लुगन्तस्य क्रमुयोऽत्वण्ड्वोलिटि दीर्घस्तु न भवति । ग्रहेर्विहितस्यार्द्धधातुकस्येट इति विहितविशेषणाश्रयणात्। इदं यङन्तादिहितन्न तु ग्रहेरिति । तदतिरभसादित्यवधेयम् । यङ्लुको ऽनैमित्तिकत्वात्। भाष्ये ध्वनितमिति । तथा हि । अत्र क्ङितीत्यनुवर्त्तते न वेति उपक्रम्य दोषानुद्भाव्य परिहृत्य चोक्तमेतावानेव विशेषः । अनुवर्त्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यमिति। अननुवर्त्तमाने तु छः शत्वे कृते शान्तत्वादेव षत्वे सिद्धे व्रश्चेति सूत्रे छग्रहणन्न कर्त्तव्यमिति भावः । एवं हि वदता ऊठ्भाविन्यो यङ्लुक् नास्तीत्यभिसंहितम् । अन्यथा दिवेर्यङ्लुकि देदेति देदेषीत्यादै ऊठो भावाभावाभ्यां महान्विशेषः स्यात् । ततश्च एतावानेवेत्येवकारो विरुध्येत । यत्तु वदन्ति । भाष्यकारेण यङ्लुक् छान्दस इति स्वसिद्धान्तदृष्ट्या किलोक्तम् । भाषायामपीति पक्षे तु दिवेरपि यङ्लुगुदाहृ-

---

तासिद्धिः । तस्माद्विहितविशेषणत्वएवैतद्भाष्यतात्पर्यम् । अत एव ग्रहोलिटीति सूत्रे यङ्लोपे चोक्तमिति प्रतीकमुपादाय ग्रहेर्विहितस्येत्येवंविहितविशेषणाद्यङ्लोपे दीर्घाभावः । भाष्यकृता एकाचो द्वे इति सूत्ररूपे अन्यत्रास्य दीर्घस्य सम्यक्परिहाराभिधानादरेण तद्वार्त्तिकन्तदन्तद्विर्वचनादिति विवृतमिति व्याख्यातं कैयटे । अनेन हि ग्रन्थेनैकाच इति सूत्रस्थं भाष्यं विहितविशेषणतात्पर्यकमिति स्पष्टमेवोक्तम् । तेन यङ्लुगन्तेपि न दीर्घः । अङ्गत्वन्यायेन समुदायस्यैव प्रत्ययग्रहणे यस्मादिति न्यायेन यङन्तत्वाज्जरीगृहित्यस्यैव धातुत्वन्न तु तस्य ग्रहित्वमिति प्रत्ययस्य ग्रहेर्विहितत्वाभावात् चर्करीतञ्चेत्यदादौ पाठाद्धातुत्वमपि विशिष्टस्यैव । विशिष्टस्य तु न ग्रहित्वादीति दयतेरिति सूत्रे भाष्ये स्पष्टमित्याहुः । तदतिरभसादिति । यङ्लुको ऽनैमित्तिकतया ऽन्तरङ्गत्वेन पूर्वं प्रवृत्तेरिति भावः । इदं माधवरीत्येति बोद्धव्यम् । षत्वे सिद्धे इति । प्रष्टेत्यादौ । न च प्राडित्यत्र सोर्लोपे षत्वार्थं छग्रहणमावश्यकम् । क्विन्निमित्तशादेशस्य दुर्वारत्वात् विचो ऽसार्वत्रिकत्वाच्चेति भावः । एवकार इति । यद्यपि संप्रति भाष्यपुस्तकेषु एवकारो न दृश्यते तथापि बहुषु दृश्यतएवेति बोद्धव्यम् । विरुध्येतेति । न च वृक्षवृभ्यामित्यादावूठ्भावाभावाभ्यां विशेषो ऽस्त्येव णिलोपादेः स्थानिवत्त्वं तु न, न पदान्तेति निषेधादिति वाच्यम् ।

रणं सम्यगेवेति। तन्न। भाष्यकृता ऋग्ग्रहणाद्भाषायामपि क्वचिदिति स्वीकुर्वता सह मतभेदस्यैवाभावात्। क्वाचित्कत्वञ्च ज्ञापकसिद्धत्वाद्दृग्ग्रहणाद्वेत्यन्यदेतत्। उभयथाऽपि ऊठ्भाविषु तदभाव एव न्याय्यः। उक्तयुक्तेः। तस्मात्प्राचो ग्रन्थः प्रामादिक एवेति स्थितम्। नेह निषेध इति। सूत्रस्योदाहरणन्तु लोलुवः पोपुव इत्यादि बोध्यम्। न चाल्लोपस्य स्थानिवत्त्वादेव गुणो न भविष्यतीति वाच्यम्। उवङ आदिष्टादचः पूर्वत्वेन लघूपधगुणे कर्त्तव्ये स्थानिवत्त्वाभावात्। अत्र पदमञ्जरीकारमतखण्डनप्रपञ्चः शब्दकौस्तुभाद्बोध्यः॥

॥ इति यङ्लुगन्तप्रक्रिया ॥

सुप आ॥ कर्मण इच्छायाञ्चेत्यनुवर्त्तते। सन्निधानाच्चेच्छा प्रत्येव कर्मत्वन्तदाह। इषिकर्मण इति। आत्मशब्दः परव्यावृत्तिपरः स्वशब्दपर्यायः। स क इत्याकाङ्क्षायामिच्छया सन्निधापितत्वादेषितैव गृह्यते तदाह। एषितृसंबन्धिन इति। सुबन्ते चोक्तं विशेषणद्वयं स्वार्थद्वारकं बोध्यम्॥

---

भ्यामादौ तस्याप्यनभिधानादिति भावः। परे तु एतद्भाष्यं पदकर्त्तव्यत्वाकर्त्तव्यत्वरूपविशेषमात्रपरन्तदपि कुङ्दिग्रहणानुवृत्तौ ज्ञापकप्रदर्शनाय। न च वुभ्यामित्यादावूठः स्थाने आन्तर्यतो दीर्घवारणाय कृतं दिव उदिति तपरत्वमनुवृत्तावपि ज्ञापकं भाष्ये उक्तमिति तयोः समफलता सूचितेति वाच्यम्। भाव्यमानस्य सवर्णाग्राहकत्वेन तस्य ज्ञापकस्य शिथिलत्वात्। इदमेव ध्वनयता भगवता तदग्रे कुङ्दिग्रहणानुवृत्तिपक्षे गुरुतरेपि संभावितदोषान् परिहृत्योपरतन्तेन चानुवृत्तिपक्षस्यैवादरः सूचितः। एवञ्च प्रागुक्तलक्ष्याणामभावकल्पने न मानम्। लोपो व्योरिति सूत्रस्थवलोपप्रत्याख्यानपरभाष्यं तु वान्तेभ्यो यङ्लुगभावे मानं बोध्यमित्याहुः। स्थानिवत्त्वादेवेति। यस्य हल इत्यत्र यस्येति योगं विभज्यात इत्यनुवर्त्य लुग्बाधकमतो लोपं कृत्वाऽवशिष्टस्य लुगिति भाष्योक्तरीत्येति भावः। भाष्योक्तिप्रत्याख्याने त्वङ्गकार्ये पुनर्नाङ्गकार्यमिति गुणाभाव इत्यन्यत्र विस्तरः॥

॥ इति यङ्लुगन्तप्रक्रिया ॥

नः क्ये ॥ क्यचि क्यङीति। अत्र प्राचा क्यषुपात्तः। तद्भाष्यविरुद्धम्। छलन्तेभ्यः क्यष् नास्तीति भाष्यसिद्धान्तात्। दीर्घश्चेति। तथा च च्छ्वोः चेति सूत्रे वृत्तावुक्तन्धातोरित्येव। दिवमिच्छति दिव्यतीति। यत्तु प्रासादकृतोक्तन्दिवेः क्विबन्तस्य धातुत्वमस्त्येवेति। तन्न। क्विबन्तत्वे च्छि ऊठ् स्यात्। विचि तु उपधागुणो वलोपश्च स्यात्॥

क्यस्य वि॥ क्यच्क्यङोरिति। अत्रापि प्राचा क्यषुपात्तो, भाष्यविरोधादिहोपेक्षितः। मान्तप्रकृतिकादिति। मान्तादित्युक्तौ तु पुत्रमिच्छतीत्यादावपि न स्यात्। पुत्रौ पुत्रान्वेत्यादावेव स्यात्।

अशनायो॥ यस्तदानीमेव भोक्तुमशनमिच्छति यश्च पातुमुदकं यश्च सत्येव धने भूयो धनन्तत्रोदाहरणानि। यस्तु कालान्तरोपभोगार्थमशनमिच्छति, यश्च स्नातुमुदकं, यश्च दरिद्रः सन् धनमिच्छति तत्र प्रत्युदाहरणानि। बुभुक्षादयस्त्विह प्रयोगोपाधयः। अन्ये त्वाहुः। अशनायतीत्यादिष्वविवक्षितप्रकृत्यर्थं बुभुक्षादिकमेवार्थः। तथा च निघण्टुः। उदन्या तु पिपासा तृडिति। भारविश्च। किमु धनन्धनायितुमिति। अश्वस्यति बडवेति। मैथुनार्थमश्वमिच्छतीत्यर्थः। एतेन वृषस्यति गौरिति व्याख्यातम्। अन्ये तु अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थ इत्याहुः। तथा च मनुष्यविषयेऽपि प्रयुज्यते। इति रामो वृषस्यन्तीमिति। निघण्टुरपि। वृषस्यन्ती तु कामुकीति। लालसायामिति। उत्कटेच्छायामित्यर्थः॥

कर्त्तुः क्य॥ सेति लुप्तषष्ठीकङ्कर्तृविशेषणम्। चकारस्त्वन्वाचये इति

———

विचि त्विति। क्विबिवाचरतीत्यर्थेन प्रसादस्थक्विपूपदस्य विच्परत्वे त्वित्यर्थः॥

तत्रोदाहरणानीति। बुभुक्षापिपासागर्द्धशब्दैस्तथैव बोधादिति भावः। प्रयोगोपाधय इति। समुदायेनाशनविषयभोजनेच्छा उदकविषयपानेच्छा धनवतो धनेच्छा च गम्यतइत्यर्थः। उत्कटेच्छायामिति। अतिशयेनाभ्यवजिहीर्षायामित्यर्थः। तेनैश्वर्याद्यर्थं लवणाद्युपादाने लवणीयतीत्येवेति कैयटः॥

ध्वनयति। सान्तस्य त्विति। विद्वस्यतइति। यत्तु विद्वस्यमानः शास्त्रेऽधिकारीति वाचस्पतिग्रन्थव्याख्यावसरे लोहितादिडाज्भ्यः क्यषिति क्वचित्तरावुक्तान्तल्लोहितादेराकृतिगणत्वमिति वृत्तिमतमनुसृत्य बोध्यम्। वस्तुतस्तु क्यङेवायं न तु क्यष्। लोहितादिसूत्रे नायं हलन्तादिधीयतइति भाष्योक्तेरित्यवधेयम्। सपत्नीवेति। त्रितयसाधारणं विग्रहवाक्यम्। सपत्नायतइति। शत्रुपर्यायात्सपत्नशब्दात् शार्ङ्गरवादिङीनन्तात्क्यङ्। सपतीयतइति। समानस्वामिकाभिधायिनो भाषितपुंस्कस्य नित्यं सपत्न्यादिष्विति नादेशे नान्तत्वात् ङीप्। ततः क्यङ्। सपत्नीयतइति। विवाहजन्यसंस्कारविशेषनिमित्तकेन पतिशब्देन समासे सति नित्यस्त्रीत्वान्न पुंवत्। युवायतइति। अत्र केचित्। ङ्याप्सूत्रभाष्ये युवतितरेत्युदाहरणाद्यौवनं जातिः। एवञ्च जातेश्चेति निषेध इहोचित इति तन्न। वयसो ऽनित्यत्वेनाजातित्वात्। कथमन्यथा ऽचः परस्मिन्निति सूत्रे युवजानिरिति भाष्यं सङ्गच्छेत। युवतितरेति तु तसिलादिष्विति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न पुंवदिति कैयटे स्पष्टम्। पट्वीमृदूयतइति। पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत्। क्यङीति तूचितमिति। उत्तरवार्त्तिकेन क्विब्मात्रस्य सुलभत्वादिति भावः। यत्तु प्राचा आचारे गल्भक्लीबेति निरुपसर्गमेव वार्त्तिकं पठित्वा गल्भते इति केवलात्तदुदाहृतः, व्याख्यातृभिश्च तथैव व्याख्यातम्। तत्सर्वं प्रामादिकमाकरविरोधादिति भावः। अतो गुणइति। अन्तरङ्गत्वादतो लोपं बाधित्वेति भावः।

---

क्यङेवेति। क्रियाकर्त्रादिस्वरूपविभागश्चेत्यनन्तरन्तत्पाठे ऽपि कारकांशे क्रियाया नित्यसापेक्षत्वान्न सापेक्षत्वन्दोष इति भावः। भाष्योक्तेरिति। अभूततद्भावप्रतीतिर्विद्वदाभास इत्यस्य विवक्षितत्वाच्चेत्यपि बोद्धव्यम्। नित्यं सपत्न्यादिष्विति। विभाषा सपूर्वस्येत्यस्य परत्वादनेन बाध इति भावः। अत्रत्यन्तत्त्वं भस्याढइत्यत्रोक्तम्। कैयटे स्पष्टमिति। अत्रारुचिबीजं भाष्ये वयो वाचकानाञ्जातिकार्यवैकल्पिकतायाः स्पष्टमुक्तत्वेनाभ-

न च वार्णादाङ्गं बलवदिति परिभाषया ऽतो लोपः स्यादिति वाच्यम्। व्याश्रयत्वात्। तस्याः समानाश्रयएव प्रवृत्तिस्वीकारात् च। न च परत्वान्नित्यत्वाच्चात आदेरित्यनेनैव प्रथमं भाव्यमिति वाच्यम्। तस्य बहिरङ्गत्वेनासिद्धत्वात्। न चापवादत्वादत आदेरित्यनेन भाव्यमिति वाच्यम्। अपवादोपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यतएवेत्युक्तत्वात्। आनर्द्धेत्यादौ च तस्य चरितार्थत्वात्। अत आदेरिति दीर्घ इति पररूपस्याद्यग्रहणेन ग्रहणात् प्राप्तमतो लोपं परत्वाद्बाधित्वेति भावः। देवतीति माधव इति। अपदान्तत्वाद्दिव ऊन्न। अन्नेति। पुगन्तेति गुणं बाधित्वा ऽन्तरङ्गत्वाद्यण्। न च तस्मिन्कर्त्तव्ये बहिरङ्गस्योठो ऽसिद्धत्वम्। नाजानन्तर्ये इति निषेधात्। न च वार्णादाङ्गमिति गुणस्य बलीयस्त्वम्। समानाश्रये हि तत्। न तु व्याश्रये ऽपि। एतच्च स्विवेरौणादिके नप्रत्यये स्योनशब्दं साधयद्भिः सर्वैः

---

यमपि न्यायेनैव साध्वितिति। आकरविरोधादिति। भाष्ये सोपसर्गपाठादिति भावः। अतो लोपमिति। अत आदेरिति दीर्घञ्चेत्यपि बोद्धव्यम्। व्याश्रयत्वादिति। व्याश्रयेपि तत्प्रवृत्तौ तु अनित्यत्वात्तदप्रवृत्तिर्माधवाद्यनुरोधादिति बोध्यम्। चरितार्थत्वादिति। तत्र हि युगपद्धलादिःशेषात्पूर्वमेव च परत्वादत आदेरिति दीर्घः। न हि तदा पररूपप्राप्तिरभ्यासविकारे बाध्यबाधकभावो नास्तीत्यस्य युगपत्प्रवृत्त्या न्याय्यक्रमेण वा समावेशे तात्पर्यं पररूपापवादत्वस्यैव तदभावे प्राप्तिमात्रेणेति भावः। आनर्द्धेत्यत्र प्रथमत्वप्रयुक्तमेव द्वित्वमन्तरङ्गत्वादविशेषाच्च नन्द्रा इति चानन्तरस्येति न्यायेनाजादेरित्यस्यैव बाधकम्। तस्य च नात्र प्राप्तिः। एकाच्द्वयसत्त्वे एव तत्प्राप्तेः। आदिभूतादचः परस्य द्वितीयैकाच इति तदर्थात्। एतेन नन्द्रा इति निषेधेन आनर्द्धेत्यत्राकारमात्रस्य द्वित्वे आनृजे इत्यादौ चरितार्थमत आदेरित्येतद्बाधित्वा ऽन्तरङ्गत्वेनातो गुणइत्यस्यापत्त्या तत्र कथञ्चारितार्थ्यमित्यपास्तम्। परत्वाद्बाधित्वेति। ण्यल्लोपावियङिति पूर्वविप्रतिषेधवार्त्तिके ऽकृत्सार्वेति दीर्घस्यैव ग्रहणन्तस्यैव भाष्ये तद्व्याख्यावसरे ऽवकाशप्रदर्शनात्। इयङादिसाहचर्येणाभ्यासानिमित्तदीर्घस्यैव तत्र ग्रहणाच्चेत्याशयः। न तु व्याश्रयेपीति। तत्रापि तत्प्रवृत्तौ

स्पष्टमेवोक्तमिति भावः। प्राचोदाहृतमनुवदति। यश्विति। अना-कारमेवेति। हरदत्तमाधवादिमहाग्रन्थविरोधादिति भावः। विस्तरः शब्दकौस्तुभे बोध्यः। क्व द्विवेत्यादि भाष्यकारीयं प्रत्युदाहरणम्। तद् व्याचष्टे ये रात्रवित्यादिना। प्रातिपदिकमिति। न तु धातुः। तथा सति वक्ष्यमाणप्रक्षाणामनुपपत्तेरिति भावः। अनुबन्ध इति। अतो गुण-इति पररूपेणेति भावः। अन्यथा णौ चङीति ह्रस्वापत्तेः। पूर्वपदमिति। तच्चास्य समासएव संभवति। तेनान्दोलयित्वा प्रेङ्खोलयित्वेत्यादौ आप्रत्यादीनां न पृथक्करणमिति भावः। स्यादेतत्। उक्तरीत्या ऽवधीरयतीत्यादावप्यवशब्दपृथक्करणं न स्यात्। तथा च वोपदेवेन अकाराद्यकारान्तप्रकरणे ऽवधीरत्कावज्ञायामिति पठितं पृथक्करणे हि धकारादिप्रकरणे एवापठिष्यत्। अत एवाडागमं वकार-द्वित्वञ्च कृत्वा चङ्युदाहृतम्। आववधीरदिति। एवं स्थिते "अव-धीर्य धैर्यपरिरम्भे"ति माघस्य। "इतीव धारामवधीर्य मण्डली-क्रियाश्रिया ऽमण्डि तुरङ्गमैर्मही"ति श्रीहर्षस्य एवमन्येषामपि ल्यबन्तप्रयोगाणाङ्का गतिरिति चेत्। अत्र केचित्। वोपदेवग्रन्थ-प्रामाण्यादुक्तप्रयोगाः प्रामादिका एवेत्याहुः। वस्तुतस्तु नायन्धातु-गणे पठितः किन्तु बहुलमेतन्निदर्शनमिति बाहुलकादूहितः। जहस्य धीरेत्यस्यापि संभवति मुनित्रयविरोधाभावात्। तथाचोक्तं प्रयोगा अपि निर्बाधा एव। वोपदेवप्रामाण्यादवधीरयित्वेत्यप्यस्ति चेदस्तु। न तु तद्बलेनेतरस्य प्रामादिकत्वं सुवचमिति दिक्। पृथक्करणस्य फलं पूर्वत्रापि दर्शयति। एवञ्चेति। उस्योमाङ्क्ष्विति। उस्यपदा-

---

तु तदानिस्त्वेन निर्वाहो बोद्धव्यः। हरदत्तेति। अनेन कैयटो ऽन्यथेति सूचितम्। पररूपेणेति। अत एवादन्तप्रकरणे पाठः सङ्गच्छते। न पृथक्करणमिति। धात्ववयवत्वेन पूर्वपदत्वादिति भावः। बहुलमेतन्निदर्शनमित्युक्त्या तेषा-न्धातुत्वम्। धीरेत्यस्यापीति। अवधीरेत्यप्यर्थः। एवञ्च धातुद्वयेन प्रयोगद्वयमपि

न्तादोमाङोस्येति प्राप्तस्य निषेधः । औसीयदिति । न चानर्थकत्वादेवायमुस् न ग्रहीष्यतइति वाच्यम् । भिन्द्युरित्यादावपि तथात्वात् । क्व तर्हिं स्यादिति चेत् । अयुः अवु रित्यादाविति गृहाण । एवञ्चायमेव निषेधोऽर्थवद्ग्रहणपरिभाषाया इहाप्रवृत्तिं ज्ञापयतीति स्थितम् । चशब्देनेति । तथा च चशब्दं प्रयुञ्जानः सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वे ऽनुकूल इति भावः । तस्येति । आदिशब्दस्येत्यर्थः । तस्यापीति । क्यषः ककारस्येत्यर्थः । एवञ्च नः क्ये क्यस्य विभाषेति सूत्रद्वये क्यषोपि ग्रहणं वदन्तः सुतरामुपेक्ष्या इति भावः । लोहनीयतीति । क्यङि तु तङेव स्यात् पुंवद्भावश्चेति भावः ॥

कष्टाय क्र ॥ क्रमणमुत्साहः । वृत्तिसर्गतायनेष्विति सूत्रे हि सर्ग उत्साह इत्याकरे स्थितम् । प्रयुज्यते च । "येनेन्द्रलोकावजयाय ह-ष्ट" इति तदेतदाह । उत्साहे ऽर्थइति । क्रमतइति । वृत्तिसर्गेत्यादिना तङ् । कष्टं कृच्छ्रम् । कृच्छ्रगहनयोः कष इति कृच्छ्रे इडभावः । तेन च तत्साधनं पापं कर्म लक्ष्यते । मुख्ये ऽर्थे उत्साहासम्भवात् । तदेतदाह । पापङ्कर्तुमिति ॥

कर्मणो ॥ रोमन्थकर्मण इति पञ्चमी रोमन्थतपोभ्यामित्यनेन-

---

साम्बिति भावः । अयमेव निषेध इति । उस्यपदान्तादिति सूत्रस्थमपदान्तादिति चेत्यपि बोद्ध्यम् । अर्थवद्ग्रहणपरिभाषाया इति । प्रतिपदोक्तपरिभाषायाः प्रत्ययाप्रत्यययोरिति परिभाषायाश्चेत्यपि बोद्ध्यम् । चशब्दम् । विनिगमनाविरहेण सर्वबाधकत्वबोधकम् । सुतरामुपेक्ष्या इति । हलन्तात्क्यषो ऽभावेन फलाभावादिति भावः । क्याच्छन्दसीत्यत्र विशेषणार्थमपि ककारो न । तुरण्युरित्यादिसिद्ध्यर्थं याच्छन्दसीत्येव सिद्धेः । एवं षोप्यस्य व्यर्थः । वा क्यष इति वा यादित्येव पाठ्यं पाठ्यासम्भ्यादिभ्य आचारक्विबन्तेभ्यस्तु नैतत्प्रवृत्तिः । नामधातुष्वेषामप्रवृत्तेस्तेभ्य आचारक्विपो ऽनभिधानाच्च । सर्वञ्चेदं भाष्ये स्पष्टम् । पुंवद्भावश्चेति । क्यङ्मानिनोश्चेत्यनेन । एतेन क्यश्चेत्यस्तु चात् क्यङ् एवञ्च वा क्यष इति मास्तित्यपास्तम् ॥

सामानाधिकरण्यात्। प्रत्येकं सम्बन्धादेकवचनम्। वर्त्तीति ण्यन्ता-द्वृतेर्ण्यासश्रन्थो युजिति युचि प्राप्ते ऽत एव निपातनात् क्तिन्। च-रतेः सम्पदादित्वाद्भावे क्विप्। तदेतदाह रोमन्थतपोभ्यामित्यादिना॥

सुखादिभ्यः॥ कर्त्तृ इति पृथक्पदं लुप्तषष्ठीकम्। वेदना ज्ञानम्। कर्त्तृत्वन्तदपेक्षमेव तदेतदाह। वेदनाकर्त्तुरेवेति। विस्मापयतइत्य-न्यइति। यथा च मायामृगं प्रक्रम्य भट्टिराह। "ततस्त्रिचीयमाणो ऽसा" विति॥

पुच्छभाण्ड॥ करणे इत्यनुवृत्तेः क्रियाविशेषे ऽर्थे। तमेव विशेषन्द-र्शयति। पुच्छादित्यादिना। वृद्धौ सत्यां पूर्वं वेति। अत्र पक्षभेदे य-दक्तण्यन्तचुरादिशेषएवोक्तम्। भाष्यस्थेति। वृत्तिकारैर्हि प्रकृत्यैकाजि-ति सूत्रे प्रेष्ठादय उदाहृताः। ते चाभात्सूत्रेणैव सिद्धाः। तत्प्रत्याख्या-नपक्षे ऽपि प्रेष्ठादावकारोच्चारणसामर्थ्यादेव लोपो न भविष्यति। एवं श्रेष्ठज्येष्ठयोरपि। स्रजिष्ठ इत्यत्र तु लोपापवादस्य विन्मतोर्लुक-स्तस्मिन् लक्ष्ये प्रवृत्तत्वान्न भविष्यति। एषैव ह्यनेकाच्सु गतिः। तथा

---

तङ्गिति॥ कष्टायतइत्युक्तौ गमनार्थप्रतीतावप्युत्साहप्रतीतेरिति भावः। नन्वेवं कर्मण इत्येकवचनन्दुर्लभमत आह। प्रत्येकं सम्बन्धादिति। कल्पितेनैकवचना-न्तेन रोमन्थशब्देन तपःशब्देन च सम्बन्धादित्यर्थः। सौत्रद्विवचनस्थाने एकव-चनमित्यन्ये॥

सिद्धा इति॥ न च प्रादीनामप्रसिद्धत्वेन तन्निबन्धनटिलोपाप्रवृत्तावपि प्रकृति-लक्षणटिलोपापत्तिः। आदेशेन निरवकाशत्वात्प्रवृत्तेन विन्मतोर्लुका तत्प्रवृत्तौ तस्मिंश्च प्राप्तटिलोप इवात्रापि उभयसम्बन्धी टिलोपो बाद्ध्यतइत्यदोषादिति बोद्ध्यम्। एवं प्रेष्ठश्रेष्ठज्येष्ठादावपि बोद्ध्यम्। असिद्धत्वाद्युगपद्भावनन्त्वसम्भवे बाधकत्वमिति वा-र्त्तिकमतेनेति बोद्ध्यम्। अकारोच्चारणसामर्थ्यादिति। यदि त्वपप्रदिस्यादावभ्यासे ऽकारश्रवणेन तस्य चारितार्थ्यमुच्यते तदोक्तरीत्यैव तत्प्रत्याख्यानपक्षे न दोषः। एवं श्रेष्ठेति। इदं भाष्ये स्पष्टम्। अशश्रदिस्यादौ यथा न चारितार्थ्यन्तथोक्तधातौ निरूपितम्। चुरादौ रेफाद्युच्चारणसामर्थ्यादपि तदभावो बोद्ध्यः। टिलोपापवा-

इष्टेमेयस्त्वनेकाचो ऽप्यवशिष्टस्य नेष्यते ।
टिलोपो भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि ॥
लुको ऽपवादभूतस्य तस्मिंस्तत्र्छे प्रवर्त्तनात् ।
करिष्ठादाविदन्तुल्यन्तृलोपस्य प्रवर्त्तनात् ॥

कैयटमाधवादिग्रन्थास्त्वेतदनुकूला इति शब्दकौस्तुभे प्रपञ्चितमिति भावः । अङ्गवृत्तपरिभाषया वृद्धिमकृत्वा त्वदयति मदयति इति केचिदिच्छन्ति । युष्मयतीति । यद्यपि युवावौ द्विवचनइत्यर्थग्रहणात्तथापि इह युवावौ न स्तो विभक्तित्वाभावात् । प्रातिपदिकादेव चि णिजिति बहवः । सुबन्तादिति हरदत्तपक्षे ऽपि विभक्तेर्लुको ऽपहारात् । नच प्रागेवादेशो ऽस्त्विति वाच्यम् । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधतइति न्यायात् । अथ ण्यन्तात्क्विपि कश्चिद्विशेष उच्यते । त्वां मां वा ऽऽचष्टइत्याख्येयैक्ये । त्वाप् । माप् । त्वाद् । माद् । त्वद् । मद् । इति प्रागुक्तमतद्भेदेन त्रिधा प्रातिपदिकानि । युवामावाम् । युष्मा-

---

दस्य । न भविष्यतीति । न च विनन्ते प्राप्तटिलोपस्य बाधे ऽपि तत्प्रकृतौ प्राप्तस्य बाधे मानाभावः । सत्यपि सम्भवे बाधनं भवतीति न्यायेन टिलोपद्वयस्यापि बाधादिति भावः । नान्ते तु नस्तद्धितइति भवत्येव । येन नाप्राप्तिन्यायेन लुका टेरित्यस्यैव बाधात् । मतौ लुक्प्राप्त्यवस्थायान्तस्याप्रवृत्तेश्च । पुंवत्त्वविषये टिलोपो भवत्येव । पुंवत्त्वस्य टिलोपेन येन नाप्राप्त्यभावात् । भस्याढइत्यस्य प्रत्ययोत्पत्तेः पूर्वमेव प्रवृत्त्या तादृशस्यैवातिदेशेन तत्काले टिलोपाप्रवृत्तेः । लुको ऽपवादभूतस्येति । समानाधिकरणम् । करिष्ठे कर्त्तृशब्दादिष्ठन् । तुरिष्ठेमेयःस्वितितृलोपः । प्रातिपदिकादेवेति । अन्यथा सुप इत्येव वदेत् । तत्करोतीति वार्त्तिके तदिति कर्मपदन्तेन द्वितीयान्तात्प्रत्यय इति हरदत्तः । अरुचिबीजन्तूक्तमेव । अथेति । एतदारभ्य सर्वं सुब्धातुवृत्तिस्थमाधवानुरोधेन । वस्तुतः सावेकाच इति सूत्रभाष्ये तन्मदोः प्रतिषेधो वक्तव्यस्त्वया मया न वक्तव्यः सप्तमीबहुवचने सौ यदेकाजूरूपन्ततः परत्वाभावादिति भाष्यप्रामाण्येनेकत्वे ण्यन्तात्क्वेरनभिधानस्यावश्यकत्वादिदञ्चिन्त्यम् । अन्यथा त्वासु मासु इति सावेकाजूरूपात्परा त्वाभ्यामित्यादौ तृतीयादिरस्तीति तदर्थनिषेध-

नस्मान्वाचष्ट इत्याख्येयस्यानेकत्वे त्वमयोरभावाद्युष्म् अस्म् इति मान्ते प्रातिपदिके। इत्थं प्रातिपदिकात्स्वादयः। ततो यथायथं ङेप्रथमयोरम्, शसो न, भ्यसो भ्यम्, पञ्चम्या अत्, एकवचनस्य च, युष्मदस्मद्भ्यां ङसो ऽश्, साम आकमिति सूत्रसप्तकेन सुपामादेशाः स्युरेव। प्रकृतिभागस्य तु यथायथमात्वयत्वे स्त एव। शेषे लोपस्तु आत्वयत्वनिमित्तेतरविभक्ताविति व्याख्याने भवत्येव। मान्ताच्छेषस्य लोप इति व्याख्याने त्वाख्येयैक्ये मुख्यपक्षे भवत्येव। टिलोपाभावेन मान्तात्परत्वानपायात्। टिलोपं स्वीकृत्य पुका पकारान्तत्वमिति मते तु न। आख्येयस्यानेकत्वे ऽपि न। तत्र हि शेषे लोपेनापहार्यम्मान्तात्परत्वाविष्ठवदित्यतिदिष्टेन टिलोपेनैवापहृतञ्चिञ्च॥

त्वाहौ यूयवयौ तुभ्यमह्यौ तवममामपि।
मपर्यन्तस्य विरहादाख्येयैक्ये भवन्ति न॥
आख्येयस्य त्वनेकत्वे भवन्ति न भवन्ति च॥

तथा हि मान्तस्येत्येव सिद्धे परिग्रहणसामर्थ्यान्मान्तत्वावस्थायां

---

स्यावश्यकत्वेन प्रत्याख्यानासङ्गतिः। अभिव्यक्तेति न्यायस्तु पदोद्देश्यककार्यविषय इत्यसकृदावेदितम्। मुख्यपक्षे इति। त्वादयतिमादयत्योः क्विपीत्यर्थः। मान्तात्परत्वानपायादिति। मान्तात्परत्वेन दृष्टस्याच्छब्दस्यानपायादित्यर्थः। त्वमहमित्यादौ लोपाय मान्ताच्छेषत्वेन दृष्टस्य लोप इति व्याख्याया अत्रावश्यकत्वादिति भावः। इतिमते तु नेति। मान्तशेषत्वेन दृष्टस्य तत्राभावादिति भावः। परिग्रहणसामर्थ्यादिति। परिग्रहणं यत्र मान्तापेक्षया परिशिष्टमस्ति तत्रैवादेशार्थम्। कटिपर्यन्तं वस्त्रमित्युक्ते ऽग्रे ऽपि किञ्चिदस्तीति नियमेन प्रतीतेः। अत एव भाष्ये ऽवधिद्योतनार्थं परिग्रहणं कर्त्तव्यं मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः क्व च मान्ते युष्मानाचष्टे इति णिचि युष्मयतेश्चाप्रसङ्गे इत्युक्तम्। अवधिद्योतनार्थंमिमस्यान्तशब्दे उत्तरावधिवाचकताद्योतनार्थमित्यर्थः। पर्यन्तशब्दस्य लोके तथैव प्रयोगात् लोके ऽग्रे किञ्चित्सत्त्वएव देशकालयोरवधित्वव्यवहारात्। परिग्रहणाभावे तु यतः पूर्वोऽस्ति परश्च नास्ति सो ऽन्त्य इति भाष्योक्तेर्मान्तपदस्य मु-

नेत्येकं मतम्। परिग्रहणाभावे मान्तस्यैव स्यात्। सति तु तस्मिन् मान्ते ततोऽधिके च भवन्तीति मतान्तरम्। उभयमपीदमाकरे स्थितम्। तच्चाख्येयद्वित्वे सुजसङ्केङस्तु परत्वात्त्वाह्वादिप्रवृत्तावपि वचनान्तरेषु विभक्तिपरत्वाद्युवावौ एकस्मिन्मते स्त एव। मतान्तरे तु न त्वाह्वादयो नापि युवावाविति विवेकः। अथ रूपाणि। आख्येयैक्ये पदान्तयोः। सौ। त्वाम्। माम्। वृद्धिर्नेति मते। त्वम्। मम्। टिलोपपक्षे द्वयोरप्येवम्। पान्तयोस्तु। पक्षे त्वापम्। मापम्। पक्षा-

---

ख्यार्थत्वलाभाय क्वौ लुप्तमित्यस्य प्रवृत्त्या तत्रैवादेशाः स्युरिति भावः। अत्र केचित्। अत्र पक्षे त्वामाचष्टे इति विग्रहेऽपि त्वमादिभ्यः पूर्वं नित्यत्वाट्टिलोपः। टिलोपे तदप्राप्त्या त्वमादीनामनित्यत्वात्। एवञ्च तत्रापि युष्मयतीत्येव। किञ्चात्रापि युष्मयतीत्येव। किञ्चात्र पक्षे विभक्त्यादेशा अपि न भवन्ति पूर्वस्मात्परस्य विधिसत्त्वेन णिलोपस्य स्थानिवत्त्वात्। क्वौ लुप्तमित्यस्याश्रयणे तु न दृढतरं मानमित्याहुः। तन्न। टिलोपस्यापि त्वमादिषु कृतेषु अन्तरङ्गत्वात्पररूपे प्रकृत्यैकाजित्यस्य प्राप्त्याऽनित्यत्वात्। न च वार्णादाङ्गमिति पररूपं बाधित्वा टिलोपस्यैव प्राप्तिः स नित्यः। तस्मान्नित्यत्वात्। अत एव त्वादयो हलन्ता इति पक्षेण न फलभेदः। यस्य च लक्षणान्तरेण निमित्तं विहन्यते तस्याप्यनित्यत्वाङ्गीकारात्। अत एव भाष्ये युष्मानाचष्टइति णिचो विग्रहप्रदर्शनन्न कृतन्द्विवचनान्तविग्रहाप्रदर्शनवत्तदप्रदर्शनमिति तन्नार्थसाधकमित्यन्ये। परिग्रहणाभावे इति। सामानाधिकरण्यान्वयस्यौचित्यात् मान्त एव स्यादिति भावः। सति तु तस्मिन्निति। तत्सामर्थ्याद् युष्मदस्मदोरवयवौ यौ मपर्यन्ताविति व्याख्यानादमान्ते सिद्धं व्यपदेशिवद्भावेन मान्ते च सिद्धम्। अत एव त्वाहादावकारोच्चारणञ्चरितार्थम्। अभिव्यक्तपदार्था ये इति न्यायस्तु पदकार्यविषय इति भावः। अत्र न भवतीति मतं युक्तम्। अन्त्ये परिग्रहणेन मणिमन्त्रादिन्यायेन सामानाधिकरण्यान्वयबाधः कर्त्तव्यः स्यात्। आद्ये त्वसम्भवात्तद्बाधः। किञ्चान्त्ये ऽवधिद्योतनार्थमिति भाष्यासामञ्जस्यं मपर्यन्तस्येति चाद्ये तद्गुणसंविज्ञानबहुव्रीहिः। त्वाहौ सावित्यत्राकारोच्चारणन्तु श्वेतवहोक्थशासितिवन्नार्थसाधकमिति बोद्ध्यम्। एकं मतमित्यस्य मुख्यं मतमित्यर्थः। एकस्मिन्मतइति। भवन्तीत्याद्यमतइत्यर्थः। मतान्तरे त्विति। न भवन्तीति मुख्यमतइत्यर्थः। नापि युवावाविति। नाप्यमादयः सुपामादे-

न्तरे त्वाम्, मामित्येव। इत्थं सङ्कलनया त्रीणि। औङि। त्वाम्। माम्। जसि। साविव त्रीणि। अम्औटोः। त्वाम्। माम्। शसि त्वान् मान्। आङि त्वाया माया। अवृद्धौ तु त्वया मया। त्वाभ्यां माभ्यां त्वाभिः। माभिः। ङयि। अम् शेषे लोपः। वृद्धिपक्षे आतो धातोरित्यालोपः। त्वम्। मम्। पक्षे त्वापम्। मापम्। त्वाभ्याम्। माभ्यां भ्यसि रूपत्रयम्। तथा हि। अभ्यमादेशपक्षे शेषे लोपे अतो लोपे च त्वभ्यम्। मभ्यम्। इदञ्च वृद्ध्यवृद्ध्योस्तुल्यम्। अभ्यमि त्वापभ्यं मापभ्यमिति विशेषः। त्वत् मत्। त्वापत्। मापत्। त्वाभ्याम्। माभ्याम्। त्वत्। मत्। त्वापत्। मापत्। त्वापम्। मापम्। त्वायोः मायोः। अवृद्धौ त्वयोः मयोः। त्वाकं माकम्। त्वापाकं मापाकम्। त्वायि मायि। त्वयि मयि। त्वायोः मायोः। त्वयोः मयोः। त्वासु। मासु। एवञ्च

आख्येयैक्येऽत्र सुजसोस्तुर्थ्यां भ्यसि च त्रयम्।
टौस्ङिदाम्भ्यस्तु रूपे द्वे अन्यत्रैकमिति स्थितम्॥

आख्येये द्वित्वे तु सौ त्वम्। अहम्। प्रकृत्यादेशाभावे। युषम्। असम्। शेषे लोपस्याप्यभावे युष्मम्। अस्मम्। इति। अस्य मुख्यं मतमित्यर्थः। एकस्मिन्मतइति। भवन्तीत्याद्यमतइत्यर्थः। मतान्तरे त्विति। न भवन्तीति। मुख्यमतइत्यर्थः। तावपि युवावाविति। नाप्य-

---

शा इति बोद्धव्यम्। त्वां मामिति। शेषे लोप इत्यन्तलोपे इदम्। तदाह। टिलोपेति। यत्तु कैयटेन त्वादं मादन्त्वदं मदमिति चेत्युक्तम्। तन्न। शेषेलोपप्रवृत्तौ बाधकाभावादिति भावः। पक्षे। मपर्यन्ताच्छेषस्य लोप इति पक्षे। पक्षान्तरे अन्त्यलोपपक्षे। त्रीणीति। प्रकारचतुष्टये ऽपीत्यर्थः। साविवेति। सावुक्तानीवेत्यर्थः। अमौटोरिति। द्वितीयायाञ्चेत्यात्वात्। पक्षे इति। मपर्यन्ताच्छेषस्य लोप इति पक्षे इत्यर्थः। अन्त्यलोपे तु त्वं ममित्येव। तुल्यमिति। अवृद्धावन्त्यलोपे ऽतो गुणइति पररूपमिति भावः। विशेष इति। भ्यमि त्वन्त्यलोपे त्वाभ्यं माभ्य-

माद्यः सुपामादेशा इति बोध्यम्। इत्यन्त्रीणि। युवाम्। आवां युषाम्। अस्माम्। जसि। यूयम्। वयम्। युषम्। अस्मम्। युष्मम्। अस्मम्। अमौटोः। युवाम्। आवाम्। युषाम्। अस्माम्। युवान्। आवान्। युषान्। अस्मान्। युव्या। आव्या। युष्या। अस्मा युवाभ्याम्। आवाभ्याम्। युषाभ्याम्। अस्माभ्याम्। युवाभिः। आवाभिः। युषाभिः। अस्माभिः। तुभ्यम्। मह्यम्। युष्मम्। अस्मम्। युवाभ्याम्। आवाभ्याम्। युषाभ्याम्। अस्माभ्याम्। युवभ्यम्। आवभ्यम्। युष्मभ्यम्। अस्मभ्यम्। भ्यमादेशपक्षे तु अन्त्यलोपपक्षे युड्भ्यम्। मपर्यन्ताच्छेषलोपपक्षे युष्मभ्यम्। अत्र संयोगान्तलोपो न। भाष्ये झल इत्यनुवर्त्तनात्। अननुवृत्तिपक्षे तु। युड्भ्यम्। अस्मदस्तु स्कोरिति सलोपे। अभ्यम्। शेषे लोपे तु। ओभ्यम्। युवत्। आवत्। युषत्। अस्मत्। युष्मत्। अस्मत्। युवाभ्याम्। आवाभ्याम्। युषाभ्याम्। अस्माभ्याम्। भ्यसि ङसिवत् त्रीणि। तव। मम। युष। अस्म। युष्म। अस्म। युव्योः। आव्योः। युष्योः अस्योः युवाकम्। आवाकम्। युषाकम्। अस्माकम्। युष्माकम्। अस्माकम्। युव्यि। आव्यि। युष्मि। अस्मि। युव्योः। आव्योः। युष्योः अस्योः। युवासु। आवासु। युषासु। अस्मासु। एवञ्च॥

चतुर्थ्यां भ्यमि चत्वारि व्याख्याते द्वे तथान्यतः।

---

मित्येव। शेषस्य लोपस्त्वत्र नेत्युक्तम्। ङिदाम्भ्यंस्सु इति। ङिद्वचनेषु आमि भ्यसि चेत्यर्थः। युषमस्ममिति पाठः। अन्त्यलोपः। शेषे लोपस्याप्यभावे इति। टिलोपपक्षे इत्यर्थः। युवामावामिति। आत्वात्परत्वाद्युवावोः कृतयोः पुनः प्रसङ्गविज्ञानादात्वमिति भावः। भ्यमादेशपक्षइति। अत्र भ्यमभ्यमोः फले विशेषेण भ्यसो भ्यमिति सूत्रस्थभाष्यविरोधापत्त्या भ्यसि तेषामनभिधानमुचितम्। रूपलेखस्तु माधवानुरोधात्। युष्मभ्यमिति। शेषे लोपस्य टिलोपत्वे इदम्। अन्त्यलोपत्वे तु युड्भ्यमित्येव। ङसिवदिति। ङसाविवेत्यर्थः। भ्यसि चत्वारीति। इदं स्वलिखितरूपापे-

सुजसङेङसुङसिभ्यस्सु श्रामि च त्रीणि निश्चिनु ॥

अथाख्येयबहुत्वे रूपाणि । त्वम् । अहम् । युषम् । असम् युष्मम् । अस्मम् । युषाम् । असाम् । युषान् । असान् । युष्या । अस्या । युषाभ्याम् । असाभ्याम् । युषाभिः । असाभिः । तुभ्यम् । मह्यम् । युषम् । असम् । युष्मम् । अस्मम् । युषाभ्याम् । असाभ्याम् । युष्मभ्यम् । अस्मभ्यम् । युषम्भ्यम् । युङ्भ्यम् । अंभ्यम् । ओभ्यम् । युषत् । असत् । युष्मत् । अस्मत् । युषाभ्याम् । असाभ्याम् । युष्मभ्यम् । अस्मभ्यम् । युषत् । असत् । युष्मत् । अस्मत् । तव । मम । युष । अस । युष्म । अस्म । युष्योः अस्योः । युषाकम् । असाकम् । युष्माकम् । अस्माकम् । युष्यि । अस्यि । युष्योः । अस्योः । युषासु । असासु । एवम् ॥

ङसिभ्यसाम्सु द्वे रूपे चतुर्थीभ्यसि तु त्रयम् ।

सुजसङेङस्सु च तथाख्येयभूम्न्येकमन्यतः ॥

इह सर्वत्र प्रकृत्यादेशयत्वात्वशेषेलोपेषु कर्त्तव्येषु णिलोपो न स्थानिवत् । क्वौ लुप्तत्वादिति दिक् । अत्रेदमवधेयम् । कृतः कर्त्तर्य ऽसञ्ज्ञायामिति विशेष्यनिघ्नतोक्तेरिह त्रिलिङ्गता । तत्र स्त्रीत्वे टाप्प्राप्तः । स च यद्यप्यलिङ्गत्वाट्टिलोपादेति केवल उक्तया रीत्या समाधातुं न शक्यते । तथापि सन्निपातपरिभाषया समाधेयः । क्लीबत्वे तु सु-

---

क्षया । अभ्यमि शेषे लोपस्यान्त्यलोपत्वे युषभ्यमसभ्यमिति रूपमादाय पञ्चेति तत्त्वम् । युषामसामिति । अत्र युवावौ न तद्विधायकसूत्रे द्विवचनपदघटकद्विशब्देन सूत्रे गृह्यमाणयुष्मदाद्युपस्थितसंबोद्ध्योच्चारयित्रोरेव ग्रहणेन तद्रूपार्थद्वयवाचकयोरेव तदादेशादिति भावः । कैयटस्तु अनयोरपि स्थानिवद्भावेन गृह्यमाणरूपतयाख्यानकर्तृद्वयवाचकयोरप्यादेशं मत्वा युवामावामित्याद्याह युङ्भ्यमिति । युष्मभ्यमित्यप्युक्तरीत्या बोद्ध्यम् । भ्यसि तु त्रयमिति । इदं युष्मदि स्वलिखितरूपापेक्षया बोद्ध्यम् । क्वौ लुप्तेति । अस्यात्राश्रयणे प्रमाणन्तु मान्ते ऽधिके च प्रवृत्तिरित्येवं कैयटेन मतान्तरतया कृतं भाष्यव्याख्यानमेवेति दिक् । सन्निपातेति ।

जसोरसर्वनामस्थानत्वेन भत्वादातो धातोरित्यालोपे त्वं ममित्येव रूपम्। अवृद्धिवादिनां सम्बोधने एङ्ह्रस्वादिति हल्माचलोपे हे त्व। हे म। प्रकृतमनुसरामः। भत्वादिति। इष्ठवदित्यतिदेशेन भसञ्ज्ञायां सत्यां श्वयुवेति सूत्रेण संप्रसारणम्। न चातद्धितइति पर्युदासात् कथमिदमिति वाच्यम्। णेस्तद्धितत्वाभावात्। न चातिदेशेन तद्धितत्वम्। इष्ठनीव कार्यं ह्यतिदिश्यते। न च तद्धिते संप्रसारणं नेति निषेधो ऽस्ति य इहातिदिश्येत। पर्युदासो ह्ययम्। तथा च तद्धिते न विधिर्न प्रतिषेधः। नन्वेवमपि दविष्ठ इत्यादौ इष्ठनि ओर्गुणः पूर्वस्य दृष्ट इति इहाप्यतिदिश्येतेति चेन्नैवम्। तस्मिन्कर्त्तव्ये संप्रसारणटिलोपयोराभीयत्वेनासिद्धत्वात्। टेरित्यस्यैवेति। तच्चेह प्रकृतिभावेन निवृत्तमिति भावः। उदीचयतीति। उपसर्गस्य पृथक्करणादच्छब्दास्येच् इति टिलोपो न। उद ई्दितीत्वम्। उदैचिचदिति। णिलोपस्य द्विर्वचने ऽचीति स्थानिवत्त्वात् चिशब्दस्य द्वित्वम्। प्रत्यचिचदिति। अच इत्यल्लोपः। चिशब्दात्पूर्वमटि यणादेशः। तिरायतीति। इह

———

विभक्तावन्त्यलोपे ऽदन्ततायां मध्ये टापि तद्विघातः स्पष्ट एवेति भावः। हे त्व हे मेति। अदन्ता आदेशा इति पक्षे इदम्। हलन्ता आदेशा इति पक्षे त्विदञ्चिन्त्यम्। संप्रसारणमिति। न च तत्र नकारग्रहणं कर्त्तव्यमिति वार्त्तिकात्कथमिह सम्प्रसारणम्। टिलोपस्याभीयत्वेनासिद्धत्वात्। अन इत्यपकर्षपक्षे लोपस्य स्थानिवद्भावेनान्त्वम् बोद्ध्यम्। अनन्तत्वन्त्वार्थसमाजग्रस्तं श्वन्शब्दत्वन्तु सर्वे सर्वपदादेशा इति न्यायेन। इष्ठे इति। इष्ठनि यद् दृष्टन्तदतिदिश्यते टिलोपादीति भावः। ब्रह्मिष्ठ इत्यादौ दृष्टत्वमात्रेण टिलोपातिदेशो भवत्येवेति तात्पर्यम्। श्वन्शब्दादिष्ठनो ऽभावेन तत्र सम्प्रसारणाभावेन तदतिदेशो ऽशक्य इति बोद्ध्यम्। तद्धिते न विधिर्न प्रतिषेध इति। शाब्दः प्रतिषेध इत्यर्थः। आर्थस्य सत्त्वेपि तदतिदेशे मानाभाव इति भावः। तत्र शङ्कते। नन्वेवमिति। असिद्धत्वादिति। परत्वेनाचो ञ्णितीति वृद्ध्या बाधाच्चेत्यपि बोद्ध्यम्। टिलोपो नेति। प्रकृतिभावादिति भावः। इति ईत्वमिति। अतिदेशेन भत्वात्। अच्शब्दस्य श्रूयमाणत्वाच्चेति भावः।

तिरसः पृथक्करणं नास्ति। अनुपसर्गत्वात्। अतः प्रकृत्यैकाजिति न प्रवर्त्तते तदाह। अन्त्येरिति। देवद्र्यञ्चमिति। नन्विदाख्यानात् कृत-मदाचष्टे इति कारकस्य पृथक्करणादिकं स्यात्। ततश्च देवानञ्चय-तीति प्रसज्येत। एवमग्रेऽपि अमुमञ्चयतीति। न च कृत्प्रकृतेरादेशे स-त्येव तत्प्रवृत्तिः। प्रकृतिप्रत्ययापत्तिसन्नियोगशिष्टत्वादिति वाच्यम्। ब-लिं बन्धयतीत्यत्राव्याप्तेः। नापि पुराणप्रसिद्धाख्यानएव तदिति वाच्यम्। राजानमागमयतीत्यत्राव्याप्तेरिति चेन्मैवम्। श्रूयमाणे कृति तत्प्रवृ-त्तेः। इह च क्विनो लुप्तत्वात्। एतच्च कृल्लुक्सन्नियोगशिष्टत्वाल्लभ्यते। किं च महाजनप्रवादविषयीभूतार्थविषयकमेव तत्। आख्यानग्रहण-सामर्थ्यात्। तादृशानामेव भाष्यादावुदाहृतत्वाच्च। आमुमुञ्चायदि-ति। पूर्वत्रासिद्धीयमद्विर्वचने इति मुशब्दस्यासिद्धत्वं न। स्वयतीति। अ-व्ययानां भमात्रे टिलोपः। प्रकृत्यैकाजिति प्रकृतिभावस्तु टेरित्यस्यैव बाधकः। येन नाप्राप्तिन्यायात् आनन्तर्याच्च। असस्वदिति। णौ कृ-तत्वेन टिलोपस्य स्थानिवत्त्वात्स्वशब्दस्य द्वित्वमिति मतेनेदम्। वस्तुत-स्तु अजादेशः स्थानिवत् अयन्तु अज्झलादेशः। अतो ऽत्र णिच्सहि-तस्यैव द्वित्वन्तदाह। असिस्वदिति। भावयतीति। इष्ठस्य यिट् चेति सू-त्रेणेष्ठनि विहितत्वाद्बहोर्भूभावः। ननु यिडागमो ऽपि तर्हि णेरस्त्वि-ति चेत् मैवम्। इष्ठवदिति हि सप्तम्यन्ताद्वतिः। णाविद्युपमेये सप्तमी-दर्शनात्। तेनेष्ठनि परे पूर्वस्य यत्कार्यन्तदतिदिश्यते। न त्विष्ठनोपि। किं च प्रातिपदिकस्येत्युक्त्यापीत्थं लभ्यते। टेरिति सूत्रे कैयटेन भाव-यतीति स्वमतेनोदाहृत्य बहयतीत्येकीयमतत्वेनोपन्यस्तम्। हरदत्ता-दयस्तु तदेव प्रवक्तमिति मन्यन्ते। सन्नियोगशिष्टपरिभाषया यिडभावे

---

इदमीत्वमाटः पूर्वमन्तरङ्गत्वादिति बोद्ध्यम्। अमुमञ्चयतीति। प्रसज्येतेत्यनु-कर्षः। बलिं बन्धयतीति। इदं हेतुमति चेत्यत्र स्पष्टं भाष्ये। मुशब्दस्येति। तदासिद्धत्वे हि दशब्दस्य द्विः प्रयोगः प्राप्नोति इष्यते तु मुशब्दस्येति भावः।

भूभावस्याप्यभावादिति। वस्तुतस्तु इष्ठवदिति कार्यातिदेशः प्राधान्या-त्। एवञ्चेष्ठनि दृष्टं भूभावं स एवेह विधत्ते। तथा च सन्नियोगशिष्टत्वाभावः स्पष्ट एव। तदेतद् ध्वनयति। वक्ष्यतीत्यन्यइति। श्रीमतीमिति। एतेन "स सञ्चरिष्णुर्भुवनान्तरेषु यां यदृच्छया ऽशिश्रियदाश्रयः श्रिया" मिति माघश्लोके ऽशिश्रयदिति प्रचुरः पाठो ऽपि व्याख्यातः। श्रीमतीमकरोदित्यर्थात्। पयसयतीति। अत्रेदमवधेयम्। विन्मतोर्लुकि सन्वदित्त्वादिकन्न। अग्लोपित्वात् अगनग्लोपेपि नेति सिद्धान्तस्य भाष्यारूढत्वात्। तेन स्रग्विणमाख्यत् असस्रजत्। पयस्विनीम्। अपपयसत्। गोमन्तम्। अजुगवत्। स्रजं पय इत्यादिविग्रहे तु असिस्रजत्। अपीपयत्। अजूगवदित्यादि। एवञ्च प्राचा लुब्धातोः सन्वद्भावो वेति व्यवस्थाग्रन्थं यदुक्तन्तन्निर्मूलत्वादुपेक्ष्यम्। स्थवयतीति। अत्र गुणस्याचो ञ्णितीति वृद्धिः प्राप्ता अङ्गवृत्तपरिभाषया प्रातिपदिकाद्धात्वर्थे

---

विहितत्वादिति। भूभावस्येति शेषः। स्पष्ट एवेति। न चेष्ठरूपनिमित्तवैकल्यमात्रप्रयुक्तटिलोपाद्युपदेशाप्रवृत्तावतिदेशस्य चारितार्थ्येन सन्नियोगशिष्टन्यायेनापि बोधिताप्राप्तौ तद्व्यापारे मानाभाव इति वाच्यम्। तत्रापि प्रवृत्तौ बाधकाभावात्। उपदेशाप्राप्तावतिदेश इत्येव नियमः। न त्वेकनिमित्तवैकल्यप्रयुक्ताप्राप्तावेवेति मानाभावादिति दिक्। तदेतदिति। वक्ष्यतीत्यस्याश्चिग्रस्तत्वमित्यर्थः। इत्यर्थादिति। नाग्लोपीति निषेधस्तु नञ्घटितानित्यत्वान्नेत्यभिमानः। सदृशलाक्षणिकश्रीशब्दात् णिचि श्रीसदृशीं शोभावत्त्वेनाकरोदित्यर्थं इत्यन्ये। असस्रजदिति। नन्विदमयुक्तं णौ चङीति सूत्रे नाग्लोपीति प्रत्याहारग्रहणस्य वृद्धेर्लोपो बलीयानित्यर्थे ज्ञापकत्वं वदतो भाष्यकृतः प्रामाण्यादिकारोकारोपधाणेरभावस्य कैयटाद्युक्तत्वात्। न चेकारोकारान्ते लोपस्य स्थानिवत्त्वादेव ह्रस्वाप्राप्तौ अग्ग्रहणवैयर्थ्याद्भाष्यं प्रौढिवाद इति वाच्यम्। चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधादिति चेन्न। स्रग्विन्शब्दाण्णिचि विन्लोपेऽङ्गवृत्तेति वृद्ध्यभावेन नाग्लोपीत्यस्य प्रवृत्तौ फलाभावेन ज्ञापकस्य सुस्थत्वात्। इतो णेरभावे हि लुग्विधायके विन्ग्रहणं व्यर्थमेव स्यात् विन्विषये मतोः सत्त्वेन तल्लुकैव स्रजिष्ठ इत्यादिसिद्धेः। विन्नन्तात्तु नेष्ठनादिरजादी गुणवचनादेवेत्युक्तेः। अत्रान्तरङ्गत्वात्पूर्वञ्जातस्य भत्वस्य णिलो-

इति वाङ्गृग्रहणाद्वा नेति सिद्धान्तः। एवन्दवयति यवयतीत्यत्रापि। ज्यापयतीति वृद्धस्य चेति ज्यः। स च प्रियस्थिरेति वर्षादेशेन सह विकल्प्यते तदाह। वर्षयतीति। उरुमिति। अत्र वरादेशे वृद्धिर्नेति सुब्धातुवृत्तौ माधवः। ऊर्णोतेर्धातुवृत्तौ तु स एव वृद्धिमुदाजहार। वाङ्गृकादिह वृद्धिविकल्प इति तदाशयं ध्वनयन्नुदाहरति। वरयति वारयतीति॥ इति नामधातुप्रक्रिया॥

कण्ड्वादि॥ धातोरित्यनुवर्त्तते। वेति निवृत्तन्तदाह। धातुभ्यो नित्यमिति। द्विधा इति। यदि हि प्रातिपदिकान्येव स्युः तर्हि यकः कित्त्वं व्यर्थं स्यात्। तद्धि गुणनिषेधार्थम्। यदि तु धातव एव स्युः तर्हि कांश्चिद्दीर्घान्नात्र पठेत्। अकृत्सार्वेति सिद्धत्वात्। द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकम्। कण्डूरसूरित्यादिष्ट हीतप्रयोगसिद्ध्या दीर्घपाठो ऽपि सार्थकः। उक्तञ्च भाष्ये॥

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमन्दीर्घं मन्ये धातुर्विभाषितः॥

इति। यत्तु प्राचोक्तम्। कण्ड्वादिभ्यो यक् स्यात्कृञर्थे इति। यच्च कण्डूं करोति कण्डूयतीति। यच्च नामधातुत्वाद्यथेष्टन्द्वित्वे प्राप्ते कण्ड्वादेस्तृतीयस्येति नियम्यतइति तदेतत्सर्वमाकरविरुद्धम्। अनेकदोषग्रस्तञ्च। तथा हि। कृञर्थे इत्युक्त्या करणे इत्यस्यानुवृत्तिर्लभ्यते। तच्च व्यर्थं प्रत्युतानर्थकारि णिजन्तेष्विव प्रकृतिप्रत्ययाभ्यां व्यापा-

---

पे ऽप्यनिवृत्तेर्न कुत्वमिति दिक्। गोमन्तमजुगावदिति पाठः। अचो ञ्णितीति वृद्धेर्दुर्वारत्वात् प्रापयतीति भाष्योदाहरणे तद्दर्शनात् स्रजयतिन्यायेन वृद्ध्यभावे तु ह्रस्वपाठो ऽपि सूपपादः। असिस्रजदित्युत्तरमपपयदिति पाठः। पयस्-शब्दात् णिच्यन्त्यलोपित्वात्। सिद्धान्त इति। दवयतीति टेरिति सूत्रे भाष्ये उदाहरणात्। अत एवादेशोत्तरमुपधावृद्धिरपि नेति भावः। वारयतीति। वरयतीत्युचितन्दवयतीतिवत्॥ इति नामधातुप्रक्रिया॥

सार्थक इति। नैतेभ्यः क्विप् दृश्यतइति भाष्येण यगन्तेभ्यः क्विन्नभावात् यङ-

रद्वयप्रतीत्यापत्तेः। कण्डूं करोतीति विग्रहो ऽप्यप्रयुक्तः। न च प्रातिपदिकान्येव कण्ड्वादयः। तेभ्यस्तु करणे यगिति तस्याशय उचितः। धातवः प्रातिपदिकानि चेति कण्ड्वादयो द्विविधा इत्यस्य प्राचाप्युक्तत्वात्। अत एव नामधातुत्वादित्याद्यप्ययुक्तमेव। धात्वधिकाराद्धातुभ्य एव यगिति सिद्धान्तात्। धातोर्लङादौ कण्डवतीत्याद्यनिष्टप्रसङ्गाच्च। सुखदुःखादिप्रातिपदिकेभ्यो यकि अल्लोपासम्भवेन सुख्यतीत्याद्यसिद्धिप्रसङ्गाच्च। यत्तु परिष्कुर्वन्ति इत्यङ्किल ग्रन्थाशयः। कण्ड्वादीनि प्रातिपदिकान्येव यक्च वैकल्पिकः। अत एवोक्तङ्कृञर्थे इति विगृहीतञ्च कण्डूङ्करोतीति न हि धातुभ्यो यकि प्रातिपदिकेभ्यो वा नित्ये यकि अयं विग्रहः सम्भवति। एवञ्च नामधातुत्वादित्यादि सम्यगेव। कथन्तर्हि द्वैविध्यमुक्तमिति चेत्। इत्थं यगन्ताः सन्तो धातवः। केवलास्तु प्रातिपदिकानीति। यद्वा यगन्तधात्ववयवेषु तेषु धातुशब्दो गौणः। प्रत्ययसद्सद्भावाभ्यामवस्थाभेदाच्च द्वैविध्यम्। न चैवं सुखयतीत्यादौ अतो लोपो न स्यादिति वाच्यम्। यकः कित्त्वेनावश्यकत्वाल्लाघवाच्चार्द्धधातुकत्वस्यैव ज्ञापनात्। अत एव द्विधा इत्येवोक्तं न तु धातुभ्यो यगिति। अत्रेदं वक्तव्यम्। प्रातिपदिकाद्विधानं करणइत्यस्यानुवर्त्तनञ्च न तावत्सूत्रानुगुणम्। त्वदुक्तपक्षे हि यङ्विधेः प्रागेव यकं विदध्यात्। धातोरित्यस्यानपेक्षितत्वात्। यथान्यासपाठस्तु धातोरित्यस्य सम्बन्धमेव द्रढयति। हेतुमति गुपूधूपेति पूर्वोत्तरसूत्रयोर्धातुग्रहणसम्बन्धस्य निर्विवादतया तत्सन्दंशपठिते कण्ड्वादिसूत्रे तदपेक्षायां बीजाभावात्। आर्द्धधातुकसञ्ज्ञारूपफलस्य यङादौ निर्णीतस्य यक्यपि स्पष्टत्वाच्च। एतेनावश्यकत्वाल्लाघवाच्चार्द्धधातुकत्वमेव यकः कित्त्वेन ज्ञाप्यतइति प्रत्युक्तम्। अप्रकृतस्यार्द्धधातुकत्वस्य का-

---

न्तेभ्यः क्विपेदं सिद्धमिति न शङ्क्यमित्यर्थः। कृञर्थे इति। करणइत्यनुवर्त्तते इति

लपने प्रकृतधात्वधिकारत्यागे च विपरीतगौरवस्योद्भटत्वात्। यङा-दीनामिव यको ऽप्यार्धधातुकसञ्ज्ञाया अनायाससिद्धत्वाच्च। नापीदं भाष्यानुगुणम्। धातुप्रकरणादित्यादिभाष्येण सह विरोधस्य स्पष्टत्वात्। नापि व्याख्येयग्रन्थानुगुणम्। द्वैविध्यग्रन्थस्य हृदयशून्यत्वापत्तेः। यत्तु व्याख्यातं यगन्ताः सन्तो धातव इत्यादि तदपि न। यगन्ताः कण्ड्वादय इत्यस्य व्याहतत्वात्। न हि यगागमो येन तद्विशिष्टः कण्ड्वादिः स्यात्। कण्ड्वादय इत्यस्य यग्विशिष्टसमुदायो ऽर्थ इति चेत्। तर्हि नासौ प्रातिपदिकमिति स्पष्टमेव। किं च सकलप्रातिपदिकादीनाङ्क्यजादिप्रकृतितया कण्ड्वादितुल्यद्वैविध्यसत्त्वात् किमेषामेव विशिष्य तत्कथनेन। तस्माद्यथाक्रमेव गुणगृह्यैर्ग्रहीतुमुचितमिति दिक्। असु। के चिन्मनसउपतापे इति पठन्ति। तच्चापि मनस इत्यर्थनिर्देशान्तर्गतमेव। एवं पूर्वभावे इति पूर्वशब्दोपि। पूर्वभावः पूर्वत्वम्। केचित्तु मनसपूर्व इति धातू मत्वा मनस्यति पूर्व्यतीत्युदाजह्रुः तच्च मतन्धातुचन्द्रोदये समर्थितं शब्दकौस्तुभे दूषितन्तत एवावधार्यम्॥ इति कण्ड्वादयः॥

प्रथमस्येत्युपलक्षणम्॥ आजादेस्तु द्वितीयस्येत्यपि बोध्यम्। यथेष्टमिति तु नेह प्राप्तं नामधातुत्वस्य निराकृतत्वात्। अत एव मूले कण्डादयो नामधातुषु नोक्ताः। किं तु तान्समाप्य पृथगेवोक्ताः। प्राचस्तु तन्मध्ये पाठो दृष्ट एव। अचः परस्मैवेति। हेतुमण्णिच्प्रकरणे

---

तद्भावः। कर्म्यर्थाविवक्षायां कुण्डूमित्यावपीति तत्तात्पर्यम्। न च प्रातिपदिकान्येवेति। तानि च फलांशमात्रार्थकानीति भावः। अल्लोपासम्भवेनेति। आर्द्धधातुकत्वाभावादिति भावः। दिगिति। दिगर्थस्तु यथेष्टं नामाधातुष्विसेव सिद्धे कण्ड्वादेस्तृतीयस्येत्यस्य नियामकत्वापत्तौ गौरवम्। मम तु विध्यर्थत्वं स्पष्टमेव। नामशब्दस्य सुबन्तपरत्वे तु तदप्राप्त्या मूलविरोधः। किं च कण्डूरित्यादौ सत्त्वभूतार्थाभिधानात् यक्समभिव्याहारे चासत्त्वभूतार्थाभिधायित्वादर्थभेदेन शब्दभेदाच्च द्वैविध्ये एव पर्यव-

व्युत्पादितमेतत्। षत्वन्नास्तीति। आदेशो यः सकारस्तस्य हि षत्वमुक्तमयन्त्वादेशस्यावयवो न त्वादेश इति भावः॥ इति प्रत्ययमाला॥

कर्त्तरि कर्म॥ परस्परकरणमपि कर्मव्यतिहारः। संप्रहरन्ते राजानः। कर्त्तृग्रहणमुत्तरार्थम्। व्यतिसे इति। यच्चपरत्वाभावान्नषः। व्यतिसइतिसात्पदाद्योरिति षत्वनिषेधः। एकदेशविकृतन्यायेन प्रत्ययमात्रस्य पदत्वात्॥

न गतिहिंस॥ एभ्यः कर्मव्यतिहारे आत्मनेपदं न। हरतेरिति। अर्थग्रहणसामर्थ्याद्धि ये शब्दान्तरनिरपेक्षा एव गतिहिंसयोर्वर्त्तन्ते त इह गृह्यन्ते। हरतिस्तूपसर्गवशाद्धिंसायां वर्त्तत इति च तस्यायं प्रतिषेध इति वार्त्तिकं नारम्भणीयमित्याहुः। कथन्तर्हि "ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जया"विति। अत्राहुः। योत्स्यमानाविति विवक्षितं न तु कर्मव्यतिहारः। वहेस्तु नायं निषेधः। अगत्यर्थत्वात्। प्रापणं हि वहेरर्थः। गतिप्रतीतिस्त्वाक्षेपात्॥

इतरेत॥ लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरादितरादिशब्दाः व्यत्युपसर्गौ च कर्मव्यतिहारद्योतनाय समुच्चीयेत तथात्म-

---

सानम्। दूषितमिति। वृत्तावर्थनिर्देशरहितगणपाठे ऽसुलेटूलोटूलेला इत्येव पाठात् तद् दूषितमिति भावः॥ इति कण्ड्वादयः प्रत्ययमाला च॥

परस्परकरणमपीति। अपिना ऽन्यकर्मणा ऽन्येन करणसङ्ग्रहः। उत्तरार्थमिति। भावकर्मणोः सामान्यसूत्रेणैव सिद्ध्या सामर्थ्यादेवास्य कर्त्तरि प्रवृत्तिः सिद्धेति भावः। षत्वनिषेध इति। प्रत्ययसकारत्वादुपसर्गप्रादुर्भ्यामिति षत्वमपि नेति बोद्ध्यम्। एकदेशेति। व्यपदेशिवद्भावेन पदत्वमपि सुलभम्॥

अर्थग्रहणसामर्थ्यादिति। गतिहिंसयोरित्येव तत्र वर्त्तमानेभ्यो धातुभ्य इत्यर्थेनेष्टसिद्धेरिति भावः। वहेस्त्विति। नियोप्युपलक्षणम्। अजाग्रामादिसंयोगानुकूलदेवदत्तादिनिष्ठो व्यापारो वह्याद्यर्थः। गतिस्तु ग्रामादिसंयोगानुकूलकर्त्तृनिष्ठो व्यापार इत्यगत्यर्थत्वमिति भावः। आक्षेपादिति। तद्व्यापारमात्रेणाजाव्यापारं विना ऽजाग्रामसंयोगासंभवादिति भावः॥

नेपदमपि समुच्चीयेतेति निषेधोयमारभ्यते । "संपर्दिनिमयेनोभौ दधतुर्भुवनद्वय"मित्यत्र तु करणविनिमये सत्यपि क्रियाविनिमयस्याविवक्षितत्वान्न तङ् ॥

नेर्विशः ॥ कथं न्यविशतेति । अटा व्यवधानात् । न च स्वाङ्गमव्यवधायकमिति वाच्यम् । अङ्गभक्तस्याटो विकरणान्तं प्रत्यवयवत्वेऽपि धातुं प्रत्यवयवत्वात् । सत्यम् । लावस्थायामडिति भाष्यमते तावन्न कश्चिद् दोषः । मतान्तरे तूपसर्गनियमे ऽड्व्यवायउपसंख्यानमिति वार्त्तिकमस्तीति दिक् । अर्थवद्ग्रहणपरिभाषया लक्षणप्रतिपदोक्तपरिभाषया वा नेरुपसर्गस्य ग्रहणम् । तेनेह न । मधूनि विशन्ति भ्रमराः कथन्तर्हि इत्युक्ता मैथिली भर्तुरङ्के निविशती भयादिति । अङ्कानि विशतीमिति पठनीयमित्याहुः ॥ यत्तु दुर्घटवृत्तावुक्तं पदसंस्कारपक्षाश्रयणाददोष इति । तन्न । पदान्तरसमभिव्याहारे नियमप्रवृत्तेर्दुर्वारत्वात् । अन्यथा युष्मदस्मत्सामानाधिकरण्येऽपि त्वदुक्तरीत्या प्रथमपुरुषापत्तेः । वा लिप्सायामित्यादेर्वैयर्थ्यापत्तेश्चेति दिक् ॥

आङो दः ॥ कथन्तर्हि व्यादत्ते विहगपतिर्मुखं स्वकीयमिति । कर्त्रभिप्राये भविष्यति । एतेन मुखं व्यादाय स्वपितीत्यत्र सुप्त्वा व्यादत्तइति व्यत्यासेन प्रयोग इति प्रेत्यभावपरीक्षायां वाचस्पतिप्रयोगोऽपि व्याख्यातः । आङो ङिदिशिष्टस्य ग्रहणान्नेह । भिक्षामाददाति । अत्र स्मृतावाकार इति हरदत्तः । एतेन प्रतीकमाददतीति विवरणग्रन्थो व्याख्यातः । श्रिचेर्जिज्ञासायाम् । श्रिच्छ विद्योपादाने इत्य-

---

न कश्चिद्दोष इति । यद्यपि स्यादयो ऽपि लावस्थायान्तयापि परत्वादडेव अतो ऽङ्गसञ्ज्ञापेक्षत्ववत्स्यादेर्धातुसञ्ज्ञापेक्षत्वे समत्वात् । कृताकृतप्रसङ्गित्वमात्रेण शब्दान्तरस्य प्राप्तिवत् शब्दान्तरात्प्राप्त्या च नित्यता अनित्यता चोभयोः समा । वार्तिकमस्तीति । नेरिति षष्ठी परिव्यवेभ्य इत्यादावपि षष्ठ्यर्थे पञ्चमीत्यपि भाष्ये स्पष्टम् । इत्यादेरिति । आदिना विभाषा ऽकर्मकादित्यादि । तद्वैयर्थ्येन च

स्यं नेह ग्रहणम्। अनुदात्तत्वादेव सिद्धत्वात्। किं तु ग्रके: सन्नन्तस्य सनिमीमेतीस्। तदेतदाह। धनुर्विषयइत्यादिना। नियमार्थमिति। न चैवं नाथतेरनुदात्तेत्त्वं व्यर्थमिति वाच्यम्। तस्य नाथतइति युजर्थत्वात्। मातुरनुहरतीति। सादृश्यमात्रमिह विवक्षितम्। न तु प्रकारताच्छील्यम्। शप उपालम्भे। कथन्तर्हि "नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किं चिदपि स्मरामी"ति। अत्राहुः। स्वाशयं प्रकाशयामीत्येव तावदिह विवक्षितं न तु शपथ इति॥

प्रकाशन॥ स्थेयो विवादपदनिर्णेता। तिष्ठन्तेऽस्मिन्निति व्युत्पत्तेः। बाहुलकादधिकरणे ऽचो यत्॥

उदो ऽनू॥ उत्पूर्वात्तिष्ठतेरनूर्ध्वे परिस्पन्दे वर्त्तमानादित्यर्थः। इह परिस्पन्दस्यानूर्ध्वत्वं नामोपरिदेशसंयोगफलकत्वाभावः। यद्यप्युदोनूर्ध्वइत्युक्ते ऽपि क्रियावाचकत्वं लभ्यतएव तथापि परिस्पन्दतालाभार्थं कर्मपदम्। तदेतदाह। ईहायामेवेति॥

समो गम्यृ॥ वृत्तिकारस्तु समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यइति पठित्वा दृशेरुपसंख्यानमाह। तत्र वार्त्तिकानुपूर्वीभङ्गे केषाञ्चिदेव सूत्रे प्रक्षेपे दृशेरेव बहिष्कारे बीजभावात् मुनित्रयानुसारिणान्तदुपेक्षैवोचितेति भावः। ग्रामं सङ्गच्छतीति। कथन्तर्हि "तच्चैकं समगच्छतेति। आर्षत्वात्। यद्वा चतुर्वर्णादित्वात्स्वार्थे ष्यञ्। एकं समपद्यतेत्यर्थः। वेत्तेरिति। परस्मैपदिभ्यां साहचर्यादिति भावः। विन्दतिर्हि स्वरितेत्। सत्ताविचारणार्थयोस्त्वनुदात्तेत्त्वादेव सिद्धम्। अङ्गविधौ

---

पदान्तरसम्बन्धनिमित्तकार्ये पदसंस्कारपक्षानाश्रयणञ्ज्ञाप्यतइति भावः॥

अत्र स्मृताविति। स्मरणपूर्वमाददातीत्यर्थः। सिद्धत्वादिति। न च नियमार्थम्। विधित्वौचित्यात्। सादृश्यमात्रमिति। एतच्च तद्धितार्थेत्यत्र भाष्ये स्पष्टम्। न तु शपथ इति। एतद्वृत्त्यनुरोधेन। भाष्ये शप उपलम्भनइति पाठात्। उपलम्भनं प्रकाशनमिति कैयटाच्च। साहचर्यादिति। व्याख्यानसहकृतादिति भावः। ताद-

त्विति। लुप्तविकरणेन प्रासिना साहचर्यादिति भावः। गन्ध अर्दने। अर्द हिंसायामिति चुरादौ पाठादिति भावः। सहसा वर्त्तते साहसिकः। ओजः सहोम्भसा वर्त्ततइति ठक्। तस्य कर्म साहसिक्यम्। ष्यञ्। तदेतदाह। तेषु सहसेति। न चैवं परदारानिति कर्मणोऽनन्वयः शङ्क्यः। साहसिक्यस्य प्रयोगोपाधित्वात्। धात्वर्थस्तु वशीकरणम्। एधोदकस्येति। एधाश्च उदकञ्च एषां समाहारः। यद्वा। एधांसि च दकञ्चेति विग्रहः। उदकपर्यायो दकशब्दोऽप्यस्ति। तथा च हलायुधः॥

आपस्तोयं घनरसपयःपुष्करं मेघपुष्पम्
कं पानीयं सलिलमुदकं वारि वाः शम्बरं च॥
अर्णः पाथः कुशजलवनश्चारमम्भोम्बुनीरं
प्रोक्तं प्राज्ञैर्भुवनममृतञ्जीवनीयं दकञ्च॥

इति॥ अभिभवे चेति। ये त्वभिभवे छन्दसीति पठन्ति तेषामपि छन्दसीति प्रायोवाद इति हरदत्तः। माणवकमुपनयतइति। विनिन्युरेनङ्गुरवो गुरुप्रियमित्यत्र तु आचार्यकरणस्याविवक्षितत्वान्न तङ्। हर्म्यतलादिति। भाष्ये तु हर्म्यतलमिति प्रचुरपाठः। तत्रोद्गमपूर्विकायां व्याप्तौ क्रमिर्द्रष्टव्यः। कथन्तर्हि नभस्तमाक्रामति चन्द्रमाः क्रमादिति। व्याप्तिमात्रमिह क्रमेरर्थो न तूद्गमनम्। अतो न तङ्॥

प्रोपाभ्याम्॥ उपक्रमतइति। उपपराभ्यामिति तु नेह प्रवर्त्तते। वृत्त्याद्यर्थाभावात्। अप्राप्तविभाषेति। न च वृत्त्यादिसूत्रं सोपसर्गे

---

शेन हि लुग्विकरणपरिभाषा बाद्ध्यते। अत एव भाष्ये संवित्तइत्युदाहृतम्। किं च वेत्तेर्विभाषेति रुड्विधानेन वेत्तेरात्मनेपदमावश्यकन्तत्र हि निर्देशादेव लुग्विकरणग्रहणमिति भावः। अनन्वयः शङ्क्य इति। सहसा प्रवृत्तिरेव प्रकृतते इत्यस्यार्थस्तत्र च सप्तम्युचितेति भावः। सहसेत्यस्य बलात्कारेणाविचारेण वेत्यर्थः। क्रमिर्द्रष्टव्य इति। उद्गममात्रे ऽकर्मकत्वमिति भावः॥

चरितार्थमियन्तूभयत्र विभाषास्त्विति वाच्यम्। उपपराभ्यामिति नियमस्योक्तत्वात्। अनुवदते कठः कलापस्येति। अनुः सादृश्ये। तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी॥

समस्तृतीया॥ संपूर्वाच्चरतेस्तृतीयान्तेन युक्तादित्यर्थः॥

दाण॥ भाष्ये त्विदं सूत्रं प्रत्याख्यातम्। तथा हि। यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते स्वयञ्च तस्यै ददाति तत्रायं प्रयोग इष्यते तत्र च सहयुक्ते तृतीया। कर्मव्यतिहारे तङ्। दानपूर्वके भोगे दाण्धातुर्बोध्य इति। एतेन कर्मव्यतिहारोदाहरणेषु व्यतिशब्दप्रयोग आवश्यक इति भ्राम्यन्तः प्रत्युक्ताः। सम इति षष्ठीति। दास्या संयच्छतइत्युदाहृत्य शिष्टव्यवहारे तु ब्राह्मणीभ्यः संप्रयच्छतइति प्रत्युदाहरन् भाष्यकार इह व्याख्याने प्रमाणम्॥

उपा॥ स्वकरणं स्वीकार इति। यत्तु वृत्तिकृतोक्तं पाणिग्रहणमेवेष्यते। तेनेह न। परभार्यामुपयच्छति। दासीत्वेन स्वीकरोतीत्यर्थ इति। तद्भाष्यविरुद्धं तत्र स्वीकारमात्रे आत्मनेपदस्योक्तत्वात् इति भावः। तथा च भट्टिः प्रायुङ्क्त। उपायंस्त महास्त्राणीति॥

समः॥ समो गम्यृच्छिभ्यामित्यतो विच्छिद्य पाठः सकर्मकादपि विधानार्थ इति ध्वनयन्नुदाहरति। संह्णुते शस्त्रमिति॥

भुजो भक्षणइति वक्तव्ये अनवन इति वचनमर्थान्तरेपि तङर्थमिति ध्वनयन्नुदाहरति। बुभुजे पृथिवीपाल इति। इहेति। उपभोगइत्युपलक्षणम् आत्मसाक्षात्करणस्यापि। इह च रुधादेरेव ग्रहणम्। अनवनइति प्रतिषेधात्। संयोगो विप्रयोगश्चेत्युपक्रम्य विशेषस्मृतिहेतव इत्यभियुक्तोक्त्या ऽनुभववत्त्वेन च संसर्गवद्विप्रयोगस्यापि विशे-

---

तत्रायमिति। अशिष्टव्यवहारे परस्परकरणरूपे कर्मव्यतिहारे चेत्यर्थः। तत्र स्वीकारमात्रे इति। अत एव इह कस्मान्न भवति स्वशाटकान्तमुपयच्छतीति भाष्यं सङ्गच्छते॥

षावधारणोपायत्वात्। तेन भुजकौटिल्यइत्यस्य तुदादेः परस्मैपदमेव विभुजति पाणिम् ॥

णेरणौ ॥ इह स्यादित्यन्तेन णेरिति व्याख्यातम् । अणौ यत्कर्म णौ चेदिति भिन्नं वाक्यम् । कर्मशब्दः क्रियापरः कर्त्तरि कर्मव्यतिहारइतिवत्। तदेतद्व्याचष्टे ऽणौ या क्रिया सैव चेदिति। कर्त्रेति व्याख्यान्तरम्। अणावित्यादि चेच्छब्दान्तमिहानुवर्त्तते कर्मशब्दस्य कारकविशेषपरः शब्दाधिकाराश्रयणात्तदेतद् व्याचष्टे ऽणौ यदित्यादिना। अनाध्यानइत्यंशं व्याचष्टे न त्विति। इह प्रसज्य प्रतिषेधो नातीव दुष्यतीति व्याख्यातः। न तु तत्राभिनिवेष्टव्यम्। पर्युदासस्य न्याय्यत्वात्। लक्ष्यविसंवादाभावाच्च पूर्वविप्रतिषेधेनेति। अत्र च प्रमाणं दर्शयते राजेति भाष्योदाहरणम्। अणावकर्मकादिति प्राप्नोति। निवृत्तप्रेषणत्वेनाकर्मकत्वादिति भावः। नन्वेतत्सूत्रं कर्मवत्कर्मणेत्य-

---

णेरणौ। क्रियापर इति। उत्तरवाक्येनाणौ कर्मणः कर्तृत्वविधानादिति भावः। ननु कर्मपदस्य क्रियापरत्वे कर्मवत्कर्मणेत्यस्याग्रे णेरणावनाध्याने इत्येव सूत्रणीयं स्यादणौ कर्मस्थक्रियया तुल्यक्रिय एव कर्त्ता ण्यन्ते कर्मवदिति सूत्रार्थ इति चेन्न। चिण्वदिटो ऽप्यापत्तेः। सैव चेदिति। सामर्थ्यादेवकारलाभः। अध्यारोपितप्रेषणद्वितीयकक्ष्यायामधिकप्रवेशे ऽपि तत्सत्ताया अक्षत्या वाक्यस्यैव वैयर्थ्यापत्तेः। अनुवर्तते इति। यद्यप्येकयोगेनानुवृत्तिरिति इको गुणेत्यत्र भाष्ये उक्तं तथा ऽप्यत्र वाक्यभेदसत्त्वात्स्वरितत्वसामर्थ्यादाकाङ्क्षावशाच्च सम्बन्ध इति भावः। भाष्योदाहरणमिति। न चायं भाष्यप्रयोगः क्रियाफलस्य परगामित्वे एवञ्च कर्तृगामिनि क्रियाफले परत्वादणावकर्मकेत्यस्य प्रवृत्तौ न किं चिद्बाधकमिति वाच्यम्। तदर्थमावश्यकस्य परगामिन्यपि परत्वात्प्रवृत्तेर्दुर्वारत्वात्। न हि कर्त्रभिप्राये इति तत्रानुवर्तते फलाभावादिति भावः। न चाणावकर्मकादित्यत्रोद्देश्यतावच्छेदकावच्छेदेनान्वयस्य व्युत्पत्तिसिद्धतया ऽण्यन्तावस्थात्वावच्छेदेनाकर्मकत्वप्रतीतेरत्र तदप्राप्तिः। राजानं पश्यतीत्यस्यापि तदण्यन्तावस्थात्वादिति वाच्यम्। सामानाधिकरण्येनान्वयभ्रमवारणाय तदङ्गीकारादित्यभिमानः। विभाषोपपदेनेत्यस्य विषये ऽस्यैव प्रवृत्तौ दृढतरमानसत्त्वे तद्विषये वाचनिक एव स

नेनैव गतार्थमित्याशङ्क्याह कर्त्तृस्थेत्यादि। अपरिस्पन्दनसाधनसाध्यो भावः। सपरिस्पन्दसाधनसाध्या क्रिया। तत्र कर्मस्थभावेषु कर्मस्थक्रियेषु च कर्मवदित्यतिदेशः प्रवर्त्तते न त्वन्यत्रेति सिद्धान्तयिष्यत इति भावः। तत्र कर्तृस्थभावकमुदाहरति। पश्यन्तीत्यादि। ज्ञानविशेषविषयत्वापत्त्युपसर्जनविषयत्वापादनवचनो दृशिः। सकर्मकाणामंशद्वयाभिधायिताया आवश्यकत्वात्। धातूपात्तव्यापाराश्रयः कर्त्ता व्यापारव्यधिकरणधातूपात्तफलशालि कर्मेति सिद्धान्तात्। तद्वेतदाह। चाक्षुषेत्यादि। प्रेरणेति। सौकर्यविवक्षयेति भावः। पश्यति भव इति। कर्त्तरि लट्। उक्तञ्च॥

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम्।
निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वे ऽवतिष्ठते॥

इति॥ कर्मवदित्यतिदेशस्याप्रवृत्तेः कर्मकर्त्तरि यथायथं शबादयस्तेन प्रत्ययेन कर्त्रा रूपन्तुल्यम्। तत इति विषयत्वापत्तिमात्रवृत्तेर्दृशेरित्यर्थम्। तुल्ययोर्थ इति। विषमयोः प्रेषणप्रतीतेः समयोश्च तत्त्यागादिति भावः। तत्र तृतीयेति। आद्यद्वितीययोस्तु ण्यन्तत्वाभावादुक्तिसंभव एव नास्तीति भावः। क्रियासाम्ये ऽपीति। प्रथमकक्ष्यया सहेत्यर्थः।

---

इति बोद्धव्यम्। अन्यत्र भावक्रिययोः पर्यायत्वदर्शनादाह। अपरिस्पन्देति। विषयत्वापादनं विषयत्वापत्त्यनुकूलो व्यापारः। अंशद्वयेति। फलव्यापाररूपेत्यर्थः। न च चतुर्थकक्ष्यायां फलमात्रवाचकत्वेनाणौ क्रियेत्यंशाभावेनोदाहरणत्वानुपपत्तिः। धात्वर्थस्यैव तत्र क्रियाशब्देन ग्रहणात्। यद्वा तत्रापि तत्समानाधिकरणव्यापारप्रतीतिरस्ति अंशद्वयेत्यस्य व्यधिकरणांशद्वयेत्यर्थः। निवृत्तप्रेषणम्। त्यक्तप्रेषणधात्वर्थफलाश्रयम्। स्वक्रियावयवे। स्वनिष्ठकर्मतानियामकधातुवाच्यैकदेशे फलरूपे तत्समानाधिकरणव्यापाररूपे वा अधीयतया स्थितमित्यर्थः। निवर्तमाने इति। प्रकृतधात्वर्थव्यापारव्यधिकरणफलाश्रयत्वाभावादिति भावः। अवतिष्ठते इति। प्रधानभूतधात्वर्थाश्रयत्वादिति भावः। विषयत्वापत्तिमात्रेति। तत्समानाधिकरणव्यापारवाचकादित्यर्थः। न्यूनाधिकभावेति। विनिगमनाविरहादेवकारेणोभयोरपि व्यव-

द्वितीयामादायेति। अणौ या क्रिया सैव चेदित्यस्य न्यूनाधिकभावव्यवच्छेदपरत्वे इदं बीजम्। अधिकव्यवच्छेदमात्रपरत्वे तु प्रथमामप्यादाय तत्संभवात्। कर्तृस्थक्रियमुदाहरति। एवमित्यादिना। इत्थं निवृत्तप्रेषणप्रक्रियां व्युत्पाद्य अध्यारोपितप्रेषणक्रियायामाह। यदेति। हेतुत्वारोपादिति। अत्रापि सौकर्यविवक्षैव बीजम्। प्रेषणांशत्यागेन प्रेषणान्तरारोपेणापि सौकर्यप्रतीतेरनुभवसिद्धत्वादिति भावः। अर्थः प्राग्वदिति। उदाहरणीभूतयोश्चरमकक्ष्ययोः पक्षद्वये ऽपि प्रेषणांशभानाभावादिति भावः। आधिक्यादिति। अस्मिन्पक्षे णौ चेत्सा क्रियेत्यनेनाधिक्यमात्रं व्यवच्छिद्यते न तु न्यूनत्वमपि। अन्यथा तृतीयकक्ष्यायामपि न स्यात्। प्रकृत्युपात्तप्रेषणांशत्यागेन न्यूनताध्रौव्यादिति भावः। णेरिति किम्। आरोहन्तीति निवृत्तप्रेषणान्मा भूत्। न च णौ चेदिति वाक्यशेषे श्रुतत्वात् णेरेव भविष्यतीति वाच्यम्। अणावित्यस्यापि श्रुतत्वात्। किं च उत्तरार्थमवश्यं णेरिति वाच्यमेव तदिहैव स्पष्टार्थमुक्तम्। अणौ यदित्यादि चेत्यन्तङ्किम्। अध्यारोपितप्रेषणपक्षे द्वितीयकक्ष्यायां मा भूत्। अणौ यत्कर्म णौ चेत्स कर्त्तेति किम्। निवृत्तप्रेषणपक्षे तृतीयकक्ष्यायां मा भूत्॥

वाक्यार्थत्रितयं सूत्रे द्वौ च पक्षावुदाहृतौ।
कक्ष्यास्तत्रस्तिस्रश्च पक्षयोर्या उदाहृताः॥

---

च्छेद इति भावः। एवकारस्यान्ययोगव्यवच्छेदपरत्वादाह। अधिकेति। एवञ्चाण्यन्तावस्था वाक्यद्वये ऽपि प्रत्यासत्त्यैकैव प्राप्नोति वादिनां मतेपि न दोषः। न्यूनत्वमात्रव्यवच्छेदस्तु नोक्तः। असम्भवात्। अध्यारोपितप्रेषणद्वितीयकक्ष्यायां सूत्रस्य दुर्वारत्वेन व्यवच्छेदकवाक्यवैयर्थ्यापत्तेश्च। कर्मत्वावस्थायां कर्मनिष्ठफलव्यापारयोरुभयोरपि धातुवाच्यत्वेनाकर्मकाणामंशद्वयाभिधायकत्वे ऽपि नाधिक्यमात्रं व्यवच्छिद्यते इति एतदेव न्याय्यमित्युक्तम्। न च णावित्यस्यश्रुतत्वे ऽपि यथा वाराणसीस्थो वरो मथुरायामस्ति चेद्विवाहो भवतीत्युक्ते विवाहा-

प्रथमस्य तृतीये च तृतीयेन निवारिता।
द्वितीयस्य द्वितीया तु द्वितीयेनेति सङ्ग्रहः॥

यत्तु माघकाव्ये करेणुरारोहयते निषादिनमिति। तत् णिचस्येति सिद्धम्। न तु प्रकृतसूत्रस्य विषयः। अध्यारोपितप्रेषणद्वितीयकक्ष्यारूपत्वात्। एतेन स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुतामिति व्याख्यातम्। बन्धुता तं पश्यति स तां दर्शयते। यद्वा। बन्धुताङ्कृताधिपत्यामिव लोकः पश्यति स तु दर्शयति उभयथाऽपि णिचस्येत्येव तङ् नतु प्रकृतसूत्रेणेति दिक्। अत्रेदमवधेयम्। कर्मशब्दोऽत्र क्रियापर इति काव्याकरग्रन्थे यद्यपि नोक्तं तथापि न्याय्यत्वात् मुनित्रयानुगुण्याद्बाधकाभावाच्चेह तथोक्तम्॥

प्राचो ग्रन्थास्तु सर्वेऽपि प्रायेण शिथिला इह।
इति ज्ञात्वा कृतङ्किं चित् स्वातन्त्र्यङ्क्षम्यतां बुधैः॥

तथा हि। इह सूत्रे अणौ यत्कर्म णौ चेत्तदेव कर्मेति कर्मान्तरनिवृत्तिः क्रियते न त्वणौ कर्मणो णौ कर्तृत्वं प्रतिपाद्यते स कर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात्। एकैकस्याङ्क्रियायां कर्तृत्वकर्मत्वासंभवात्। न चैवं दर्शयते भृत्यान् राजेति भाष्यविरोधः भृत्यरूपस्य कर्मणः सत्त्वादिति वाच्यम्। अणौ ये कर्तृकर्मणी तद्भिन्नकर्मव्युदासे तात्पर्यात्। अत्र चोक्तभाष्यस्यैव प्रमाणत्वात्। एवञ्च स्मरयत्येनं वनगुल्मः स्वयमेवेति कोकिलस्य कर्मत्वेपि प्रत्युदाहरणं युज्यतइति तावत्कैयटेनोक्तम्। तच्चेत्थं व्याख्यातृभिः परिष्कृतम्। कर्त्तरीत्यनुवृत्तं

---

धिकरणत्वं मथुराया एव प्रतीयते न तु श्रुताया अपि वाराणस्यास्तथा अणौ या क्रिया सा णौ चेत् क्रिया तत्र यत्कर्म तच्चेण्णौ कर्ता इत्युक्ते ण्यन्ताधिकरणत्वमेवात्मनेपदस्य प्रतीयते न त्वण्यन्ताधिकरणत्वमत आह। किं चेति। णौ कर्मत्वं प्रतिपाद्यते इति। अणौ द्विकर्मकाणामेव उदाहरणत्वसम्भव इति भावः। कर्तृत्वप्रतिपादनादिति। अणौ यत्कर्म स कर्तेति वाक्ये उद्देश्यतावच्छेदकावच्छेदेन

प्रथमया विपरिणस्यते यच्च यच्च यदिति नपुंसकमनपुंसकेनेत्येकशेषः तेनाणौ कर्मकर्त्रोः कर्मत्वेप्यदोषः । एवञ्च करेणुरारोह्यते निषादिनमिति माघप्रयोगोऽप्युपपद्यतइति । अत्रेदं वक्तव्यम् । एवं वर्णयता कैयटादीनां प्रकृतसूत्रस्थभाष्यवार्त्तिकग्रन्थाः सर्वएव विरुद्ध्यन्ते । आरोह्यमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्रातिव्याप्तिशङ्कायां मनुष्यानिति कर्मणः सत्त्वान्नातिव्याप्तिरिति हि प्रथमप्रघट्टके स्थितम् । कर्मकर्तृत्वात्सिद्धमिति शङ्कायां यक्चिणोर्निवृत्त्यर्थं नियममितिद्वितीयप्रघट्टके । कर्त्तृस्थभावकार्थमिदं सूत्रमिति तु तृतीये प्रघट्टके । तत्राद्यो विरुद्धः । मनुष्याणामणौ कर्त्तृत्वात् । द्वितीयो ऽपि विरुद्धः । त्वदुक्तरीत्या कर्मवद्भावस्यैवाभावात् । कर्मवद्-

---

विधेयान्वयस्यौत्सर्गिकत्वेन कर्मत्वावच्छेदे कर्त्तृत्वविधानेन कर्मसत्ताप्रतिपादनस्य कर्त्तुं शक्यत्वेन कर्मान्तरनिवृत्तिपरत्वस्य वक्तुमशक्यत्वादिति भावः । अणौ कर्त्तृत्वादिति । कर्त्तृकर्मेतरकर्माभावस्यैव भवता विवक्षितत्वादिति भावः । ननु स्थलरूपमत्राधिकं कर्म । तस्य मूलभूताण्यन्तावस्था मनुष्या आरोहयमाणं हस्तिनं आरोहयन्तीत्येव सौकर्यातिशयप्रतिपादनाय प्रेरणावृद्धिवत् तत्प्रतिपादनायैव फलांशवृद्ध्या द्विकर्मकत्वकरणात् । एवञ्चोर्ध्वदेशः तत्स्थं वस्तु तदुभयसंयोगानुकूलो व्यापारो धात्वर्थः । स्थलशब्देन गजपृष्ठस्थं काष्ठमयमुपवेशनस्थानमुच्यते । आरोहन्ति हस्तिनं हस्तिपका इति त्वारोहयमाण इत्यस्यैव मूलभूता आरोहयमाण इत्यन्तं सूत्रोदाहरणप्रदर्शनम् । दृष्टान्तार्थं हस्तीति मद्ध्यमणिन्यायेनोभयान्वयि यथा तत्रानेनात्मनेपदञ्जायते तथात्रापि स्यादिति प्रथमप्रघट्टकाशय इति चेन्न । मनुष्याः स्थलमारोहन्तीति तन्मूलण्यन्तावस्थाप्रदर्शनपरतद्व्याख्यानग्रन्थविरोधात् । इत एव वा ऽस्वरसादाह । द्वितीयो ऽपीति । एवञ्च सकर्मकस्थले कर्मवद्भावाप्राप्त्या तेन सिद्धमिति मद्ध्यमविरोधः स्पष्ट एव । ननु अद्ध्यारोपितप्रेषणतृतीयकक्ष्यायां कर्त्तुः समानधातौ कर्मस्थक्रियया तुल्यक्रियत्वाभावेन कर्मवद्भावाप्रवृत्त्या कर्मकर्त्तृत्वात्सिद्धमित्यसङ्गतं कर्मवत्कर्मणेत्यत्र प्रत्यासत्त्या यत्र धातौ यस्य कर्त्तुः कर्मवद्भावस्तस्मिन् धातौ कर्मस्थक्रियया तुल्यक्रियत्वग्रहणादिति चेन्न । निवृत्तप्रेषणपक्षमादाय तत्प्रवृत्तिसम्भवात् । हस्ती न्यग्भवतीत्यर्थे बुद्धे कश्चि-

कर्मकाणामिति हि वार्त्तिकम्। अत एव न तृतीयोपि। किं चोद्देश्यविस्मृतिरेवेत्थं सत्यापततीति महानयं महतामपि प्रमादः। कर्मान्तरनिवृत्तिपरस्य वाक्यस्य निष्फलत्वमेव स्यात्। उदाहरणदौर्लभ्यात्। न ह्यणौ ये कर्तृकर्मणी तद्भिन्नं कर्म णौ सम्भवति यदनेन व्यावर्त्येत। यदपि जयादित्येनोक्तम्। यत्सग्रहणमनन्यकर्मार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानिति णिच्त्वेनैक्यं गृहीत्वा शानच्प्रकृत्यन्तर्गतस्य णेरभावे कर्मणो हस्तिन एव तिङ्प्रकृतिभूते ण्यन्तार्थे कर्तृत्वादिति तस्याशयः। तदपि न। प्रत्यासत्त्यैव गतार्थत्वात्। तथा हि द्वाविह णिचौ। तत्राद्ये कृतमेवात्मनेपदम् आरोहयमाण इति। द्वितीये तु अणौ कर्मणः स्थलस्य णौ कर्तृत्वाभावात्प्राप्तिरेव नास्ति। यदपि हरदत्तेनोदाहृतमारोहन्ति हस्तिनं हस्तिपकाः तानारोहयति हस्तीति, तदपि न। एतद्धि अध्यारोपितप्रेषणपक्षस्य द्वितीयकक्ष्यायां रूपम्। तत्र च समानक्रियत्वमेव नास्ति। णिचा व्यापारान्तरोपादानात्। ततः किमिति चेत्स्वग्रन्थविरोध इत्यवधेहि। णौचेद्ग्रहणं समानक्रियार्थमिति हि जयादि-

---

हस्तिनं न्यग्भावयतीत्यस्याण्यर्थस्य नियततया भावेन तदर्थबोधकशब्दमात्रोपस्थितावयमेव ग्राह्योऽयं नेत्यत्र विनिगमनाविरहात्। न हि पक्षद्वयमूलकः प्रयोगोऽन्यतरपक्षमादायैवोपपाद्य इत्यत्र मानमस्तीत्याशय इत्यन्यत्र विस्तरः। अत एव नेति। कर्मवद्भावाप्राप्तेरेव तृतीयोऽपि प्रघट्टकस्तव नाविरुद्ध इत्यर्थः। किं चेति। मनुष्याः स्थलमारोहन्तीति तन्मूलाण्यन्तावस्थाप्रदर्शनपरतद्व्याख्यातृग्रन्थरीत्येदम्। यत्सग्रहणमिति। अणौ यत्कर्म स चेण्णौ कर्ता इत्यर्थे उक्तरीत्या नियामकत्वेन तल्लाभः। कर्म व्याप्ये क्रियायाञ्च पुन्नपुंसकयोर्मतमिति हृद्रकोशात् कर्मशब्दः पुंस्यपि। ननु स्थलमारोहन्ति मनुष्या इत्यण्यन्तावस्थायां कर्मणः स्थलस्य णौ कर्तृत्वाभावात् कथमत्र प्राप्तिरित्यत आह। णिच्त्वेनेति। प्राप्तिरेव नास्तीति। नियतोपस्थिततयोदाहरणभूतण्यन्तमूलस्यैवाण्यन्तस्याणावित्यनेन ग्रहीतुमुचितत्वमिति भावः। किं च णिच्त्वेनैक्यङ्गृहीत्वाऽन्यत्र णौ कर्मणोऽणौ कर्तृत्वप्रतिपा-

त्यग्रन्थः। णिच्प्रकृत्युपात्तक्रियायामेव यथा स्यात् प्रयोजकाभावल-क्षणे ऽपि क्रियाभेदे मा भूदित्येतदर्थं णौ। चेदित्यत्र अणौ। यदित्यनुवर्त्यं अणौ यत्प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमिति व्याख्येयमिति हरदत्तग्रन्थः। तथा च तेनैव गतार्थत्वाद्यत्ग्रहणमनन्यकर्मार्थमिति जयादित्यग्रन्थस्य तद्व्याख्यातृग्रन्थानाञ्च निर्विषयता स्पष्टैव। यदपि जयादित्येनोक्तम्। कर्त्तेति किम्। आरोहन्ति हस्तिनं हस्तिपकाः। तानारोहयति महामात्रमिति। तदप्येतेन प्रत्युक्तम्। यत्त्वत्र हरदत्तेन कर्मान्तरसद्भावादेव न भविष्यतीत्यादि विचारितं तद् वृथैव। उक्तरीत्योदाहरणस्योक्तिसम्भवाभावादिति दिक्। यत्तु प्राचा अणौ यत्कर्म स एव ण्यन्तस्य कर्त्ता चेत्येकवाक्यतयैव व्याख्यातम्। तन्न। अध्यारोपितप्रेषणे द्वितीयकक्षायामतिव्याप्तेः। यद्यपि प्रसादकृता अणौ यत्कर्मेत्यादिखण्डान् पृथक् कृत्वा जयादित्यकैयटाद्यक्षरानुसारेणैव मूलग्रन्थो भङ्क्त्वा नीतस्तथापि मूलाप्रवृत्त्या सर्वाप्रवृत्तिर्दुर्निवारैव। यदपि प्रसादग्रन्थोपमर्द्देन प्राचो ग्रन्थं व्याचक्षाणा आकर्णौचेद्ग्रहणं समानक्रियार्थमिति वाक्यार्थो भाष्यकारेण नाश्रितः। प्रयोजनाभावात्। तथा हि ण्यन्तादात्मनेपदं भवति। अणौ यत्कर्म णौ चेत्स कर्त्तेत्युक्ते प्रत्यासत्त्या एतद्गम्यते। येन णिचा ण्यन्तादात्मनेपदं विधित्सितन्तेनैव णिचा अण्यन्ते तत्प्रकृतिभूते धातौ

---

दनादणौ कर्मातिरिक्तकर्मसत्त्वापि सर्वत्र वक्तुं शक्यत्वेऽऽरोहयमाण इत्यत्रात्मनेपदाप्रसक्तिरित्यपि बोद्धव्यम्। निर्विषयता स्पष्टैवेति। यत्सग्रहणमनन्यकर्मार्थमित्यनेनैव हरदत्तोक्ते वृत्त्युक्ते च आत्मनेपदवारणे सिद्धे समानक्रियत्वबोधकवाक्यवैयर्थ्यापत्तिः। न च तत्र क्रियाशब्दो धातुपरस्तेन धातुभेदे प्रवृत्तिर्नेति वाच्यम्। कर्मवत्कर्मणेत्यस्येवास्यापि धातुभेदे प्रत्यासत्त्यैव वारणसम्भवात्। धात्वन्तरघटितकक्ष्यायास्तन्मूलत्वाभावाच्चेत्यपि बोद्धव्यम्। उक्तरीत्येति। समानक्रियत्वाभावादिति भावः। द्वितीयकक्ष्यायामतिव्याप्तेरिति। मद्व्याख्यानरीत्या प्रथमप्रघट्टकस्थभाष्योदाहरणे ऽव्यतिव्याप्तेरित्यपि बोद्धव्यम्। भङ्क्त्वेति। कर्मान्तरानिवृत्तिपरतया ऽपि व्याख्यानद-

यत्कर्म स एव चेत्कर्त्ता तस्मिन्नेव एयन्त इति। ततश्च यथा आरोहन्ति हस्तिनं हस्तिपकाः आरोह्यमाणो हस्ती तानारोहयति सूत्रेणेत्यत्र धातुभेदेन भवति, एवं प्रयोज्यप्रयोजकभावभेदेपि न भविष्यति। अत एव तृतीयवाक्यार्थो भाष्यानाहतत्वेनाचार्यैरप्युपेक्षितः। स एव एयन्तस्य कर्त्ता चेदिति एकवाक्यत्वस्यैव प्रतीतेः स्वारसिकत्वात्। एवञ्चाध्याहारव्यवहितान्वयकल्पनाभ्यां वाक्यार्थद्वयोपह्नयोपवर्णनं प्राचोक्तमनादेयम्। अनर्थकानेकक्लिष्टकल्पनापत्तेः। न चात्र पक्षे णौचेद्ग्रहणं व्यर्थम्। असति हि तस्मिन्नणौ यत्कर्म स कर्त्तेत्युक्तेरेकवाक्यतयैव सम्बन्धः स्यात्। ततश्च कर्मान्तरनिवृत्तिर्न कृता स्यात्। अतः कर्मान्तरनिवर्त्तकवाक्यभेदापादकं णौचेद्ग्रहणमवश्यं कर्त्तव्यमिति। अत्रेदं वक्तव्यम्। भाष्यकारेण नाश्रित इत्यसिद्धम्। भाष्यस्थानां कर्मशब्दानाङ्क्रियापरत्वम्। कर्त्ता चेदिति वाक्ये तु कारकपरत्वमित्याश्रित्यैव भाष्यव्याख्याया उचितत्वात्। अन्यथा सूत्रसमाप्तिपर्यन्तं सकलस्य भाष्यग्रन्थस्यासम्भवदुक्तिकत्वापत्तेः। यदप्युक्तं प्रयोजनाभावादित्यादि न भविष्यतीत्यन्तम्। तदतिरभसात्। अध्यारोपितप्रेषणे अणौ हि हस्ती कर्म तत्रैव णौ स एव कर्त्तेति स्पष्टम्। ततश्च कथं प्रत्यासत्त्या तद्वारणम्, कुत्रत्यश्च प्रयोज्यप्रयोजकभावे भेदः। ननु णिजर्थाधिक्यं ब्रूम इति चेत्। किं ततः। न ह्येतावता ऽणौ कर्त्तुर्णौ कर्मत्वङ्गतम्। दृष्टान्तश्चातिविषमः। रुहिरोहिप्रकृतिकयोर्णिचोस्तत्र भिन्नत्वात्। यदपि एकवाक्यत्वप्रतीतेः स्वारसिकत्वादित्युक्त्वा कर्मान्तरनिवर्त्तकवाक्यभेदापादकं णौचेद्ग्रहण-

---

त्यर्थः। एवं प्रयोज्येति। तेनाध्यारोपितप्रेषणपक्षतृतीयकक्ष्यायां न दोष इति तद्ग्रन्थे स्पष्टम्। द्वितीयवाक्यार्थ इति। सामानक्रियत्वघटित इत्यर्थः। अद्ध्याहारः। प्रतिपाद्यं वस्तु इत्यादेः। व्यवहितान्वयः। अणौ यदित्यस्य व्यवहितस्य णौ चेदित्यन्यत्रान्वयः। अन्यथेति। तदुपपादितं प्राक्। कुत्रत्यश्चेति। अध्यारोपित-

मित्युक्तम्। तदपि परस्परव्याहतमिति स्पष्टमेव। अगत्या तत्स्वीकृतमिति चेन्न। तस्य निष्फलताया उक्तत्वात्। कैयटाद्यनुरोधेनैवं ब्रूम इति चेत्। प्रसादकारोऽपि तर्हि जयादित्यन्यासकारहरदत्ताद्यनुरोधेन मूलग्रन्थमभाङ्क्षीदिति किं तेनापराद्धम्। तस्मात्कैयटप्रभृति अर्वाचीनपर्यन्तं सर्वेषां ग्रन्था इह शिथिला एवेति स्थितम्। निष्कर्षस्तु मुनित्रयाविरोधेन कृत एव। स्यादेतत्। कर्मकर्त्तरि मूलोदाहरणानि। कर्मवद्भावस्तु कर्त्तृस्थभावक्रियत्वान्नेति सिद्धान्तशरीरं भाष्यवृत्त्यादिनिष्कर्षे स्थितम्। एवञ्च उदाहरणप्रत्युदाहरणयोरकर्मत्वस्याऽऽवश्यकतया भाष्यवृत्त्यादिषु कर्मप्रयोगोऽनुपपन्नः। दृश्यते च स दर्शयते भृत्यान् राजेति भाष्ये। स्मरत्येनं वनगुल्मः स्वयमेवेति भाष्यवृत्त्योः, तस्य का गतिरिति चेत्। अत्राहुः। अविवक्षितमिह कर्मेति। तेषामयं भावः। गभीरायां नद्यां घोष इत्यत्र गभीरनदीपदार्थयोरभेदबोधानन्तरं तीरलक्षणायामपि प्राथमिकबोधमादाय गभीरपदसार्थक्यवदिहाप्यध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्यन्विते ततो णिजर्थस्येव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय सार्थक्यं स्वज्ञाप्यसम्बन्धो लक्षणेत्यभ्युपगमात्। ज्ञाप्यस्य चेह विशिष्टवाक्यार्थरूपत्वात्। एषैव चार्थवादे प्राशस्त्यलक्ष-

---

प्रेषणपक्ष एव तैस्तथोक्तेरिति भावः। परस्परव्याहतमिति। एतदेवात्र दूषणं सारम्। निष्फलताया इति। स्थलमारोहयतीत्यादेः समानक्रियत्वाभावेनैव वारणात्। निष्कर्ष इति। मन्नीत्येत्यादिः। प्राथमिकबोधमादायेति। लक्षणातात्पर्यग्राहकतयेत्यपि बोद्धव्यम्। सार्थक्येति। प्रयोगसार्थक्येत्यर्थः। णिचः कर्मपदस्य चेति। णिजन्तस्य ज्ञानविषयो भवतीत्यर्थे लक्षणाया णिजनपगमायावश्यकत्वात्। एवं णिजुत्पत्तये दर्शनानुकूलभृत्यनिष्ठव्यापारविषया प्रेरणेति बोधस्यात्मनेपदायावश्यकत्वेन तदभिप्रायेणैनमित्यस्य प्रयोग इति भावः। स्वज्ञाप्येति। वाक्यज्ञाप्यवाक्यार्थसम्बन्धेत्यर्थः। भृत्यकर्मिका राजकर्तृका दर्शनविषया प्रेरणेत्यर्थकस्य वा-

णायाङ्गतिः। स एव सिद्धानां व्याख्योपायः। स्वायत्ते तु शब्दप्रयोग कर्मविनिर्मुक्तमेव प्रयोक्तुमुचितमिति दिक्॥

भृत्यादीनां परित्यागाच्छुद्धाभेदपरिग्रहात्।
कर्मवाक्यस्य तादर्थ्याश्रयणान्निस्तरेत्सुधीः॥

सर्वञ्चेदं मूलएव ध्वनितम्। प्रकृतमनुसरामः। स्मरति वनगुल्ममिति। अत्र णिचि स्मरयत्येनमिति भाष्यवृत्त्योः प्रयुक्तम्। तच्च प्राथमिकबोधाभिप्रायेणेत्युक्तमेव तदप्यध्यारोपितप्रेषणपक्षएव। पक्षान्तरे कोकिलस्य कर्मत्वासम्भवात्। यद्यपि गतिबुद्धीति सूत्रे ज्ञानसामान्यार्थकानामेव ग्रहणात्स्मरतेश्च विशेषवाचित्वादणौ कर्त्तुः कोकिलस्य तत्रापि कर्मत्वन्दुर्लभम्। तथाप्येतद्भाष्यबलादेव गतिबुद्ध्यादिसूत्रे स्मरतेरपि परिग्रहो बोध्यः।

मिथ्योप॥ पदं मिथ्येति। इह करोतिरुच्चारणार्थत्वादकर्मकः ण्यन्तस्तूच्चारणवृत्तिः सकर्मकः।

स्वरितञितः॥ ऋत्विज इति। दक्षिणादिकन्तु न यागफलम्। उक्तं हि हरिणा॥

यस्यार्थस्य प्रसिद्ध्यर्थं प्रारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनमिति॥

---

क्यस्य स्वार्थसम्बद्धे राजकर्तृकन्दर्शनविषयीभवनमित्यर्थे लक्षणेति भावः। भृत्यादीनाम्। दर्शयते भृत्यान् राजेत्यादिलक्ष्यस्थकर्मरूपाणाम्। शुद्धाभेदेति। द्वितीयलक्ष्यया सहात्यन्तमर्थभेदाङ्गीकारादित्यर्थः। कर्मवाक्यस्य। उदाहरणभूतकर्मघटितवाक्यस्य। तादर्थ्याश्रयणात्। प्रथमबोधार्थत्वाश्रयणात्। इह विशेषेति। उत्कण्ठापूर्वकस्मरणरूपविशेषेत्यर्थः। उच्चारणवृत्तिरिति। असकृदुच्चारणवृत्तिरित्यर्थः। अत्रात्मनेपदन्तात्पर्यग्राहकम्। अत एव नित्यवीप्सयोरिति द्वित्वं न। स्मरतेरिति। मित्सञ्ज्ञकस्येति शेषः। तेनाभितः स्मारयति देवदत्तेनेत्येव। न यागफलमिति। श्रुत्या लोकतो वा यदुद्देशेन यागपाकादिप्रवृत्तिर्बोध्यते तत्फलमिति

पचा पाकः। केचित्तु प्रयोजकव्यापारवृत्तिभ्यो धातुभ्यस्तद्द्योतकमात्मनेपदमनेन विधीयते। कुरुते कारयतीत्यर्थः। कारयते इत्यत्र तु प्रयोजकव्यापारद्वयमर्थः। णिजन्तासिचि यथा। कर्त्रभिप्रायइति सूत्रांशोपि कर्तृपदस्य हेतुकर्तृपरत्वादुक्तार्थतात्पर्यक एवेत्याहुः। उक्तञ्च हरिणा॥

क्रियाप्रवृत्ताव्याख्याता कैश्चित्स्वार्थपरार्थता।
असती वा सती वापि विवक्षितनिबन्धना॥
केषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्प्यते।
आत्मनेपदमन्येषान्तदर्था प्रकृतिर्यथा॥
क्रीणीष्व पचते धत्ते चिनोति चिनुते ऽपि च।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थो ऽभिधीयते॥ इति॥

असती वेत्यनेन कमलवनोद्घाटनं कुर्वते ये इत्यादयः प्रयोगाः समर्थिताः। तत्रापि स्वार्थताविवक्षायाः सम्भवात्। ण्यर्थस्य वाचकं द्योतकं वा आत्मनेपदमिति मतद्वयं सङ्ग्रहीतुङ्केषां चिदिति श्लोकः। चिनोति चिनुतइति। सङ्गृह्णाति सङ्ग्राहयति चेति क्रमेणार्थः॥

णिचश्च॥ अत्र कश्चित्। लक्षयतेः स्वरितेत्करणात् ज्ञापकात् चुरादिणिजन्तादिदमात्ममेपदं नेति मन्यते। आह च। स्वरितेत्त्वाद् ग्राहिः क्र्यादौ लक्षिस्चैकस्चुरादिष्विति। तन्नेति बहवः। चन्द्रो हि णिजभावपक्षे स्वरितेत्त्वं चरितार्थमित्याह। मैत्रेयादयस्तु स्वरितेत्त्वमनाकरमित्याहुः। तदेतत्सर्वं हरदत्तोपि सञ्जग्राह॥

एष विधिर्न चुरादिणिजन्तात्स्यादिति कश्चन निश्चिनुते स्म।
आप्तवचो ऽत्र न किं चन दृष्टं लक्षयतेः स्वरितेत्त्वमनार्षमिति॥

---

भावः। प्रसिद्ध्यर्थम्। प्राप्त्यर्थम्। हेतुकर्तृपरत्वादिति अभिप्रायः। प्रेरणाक्रियारूपफलगते प्रयोजककर्तृप्रेरणाविषयत्वे द्योत्ये आत्मनेपदमिति सूत्रार्थ इति भावः। इत्याहुरिति। अत्राहचिरीजन्तु भाष्यानुक्तत्वम्। किञ्चान्तर्भावितण्यर्थतयैव तद्रुप-

समुदाङ्‌॥ आङ्पूर्वकस्य वचनं सकर्मकार्थम्। अकर्मके त्वाङो यमहन इत्येव सिद्धम्॥

अनुप॥ अकर्मकाच्चेत्येव सिद्धे वचनमिदं सकर्मकार्थमिति ध्वनयन्नुदाहरति। गाञ्जानीतइति॥ इत्यात्मनेपदम्॥

परेर्मृषः॥ यैाजादिकस्येति। स हि स्वरितेत्। शाकटायनमते त्वनुदात्तेत्। उभयथाऽपि न्याय्यमेवेह ग्रहणम्॥

उपाच्च॥ सकर्मकविषयमिदमुत्तरसूत्रानुरोधात्। अत एवाह यज्ञदत्तमिति॥

बुधयुध॥ इह प्रुद्रुस्रूणां यदा न चलनार्थत्वन्तदर्थङ्ग्रहणम्। चलने तु उत्तरसूत्रेण सिद्धम्॥

निगरण॥ निगरणं भक्षणम्। अदेः प्रतिषेध इति। एतच्च गतिबुद्धीति सूत्रे भाष्ये उक्तम्। वृत्तिकृता ह्रस्वस्थले योजितम्। अथ कथम्

"न पीयतां नाम चकोरजिह्वया

कथञ्चिदेतन्मुखचन्द्रचन्द्रिका।

इमाङ्किमाचामयसे न चक्षुषी

चिरञ्चकोरस्य भवन्मुखस्पृशी॥

इति श्रीहर्षः॥ आङ्पूर्वाच्चमेरनेन परस्मैपदैाचित्यात्। सत्यम्।

---

पत्तौ प्रयोजकव्यापारे आत्मनेपदविधाने मानाभावः। परस्मैपदेपि पञ्चभिर्हलैः कर्षतीत्यादौ तत्प्रतीतये ऽन्तर्भावितण्यर्थताया आवश्यकत्वादिति।

॥ इत्यात्मनेपदम् ॥

न्याय्यमेवेति। आधृषीयत्वेन पक्षे णिजभावादिति भावः। न चलनार्थत्वमिति। किन्तु स्पन्दनार्थत्वमिति भावः। स्पन्दनत्वञ्च द्रवद्रव्यजन्यतावच्छेदकञ्चलनत्वव्याप्यञ्जातिविशेषरूपमिति चलनार्थत्वमिति बोद्ध्यम्।

अथ कथमिति। निगरणशब्देन भक्षणमिव नपादमीति सूत्रेण ग्रहणात्पानमपि गृह्यते। यद्यपि द्रवद्रव्यस्य गलादधः करणं पानं तथापि द्रवद्रव्यस्योपलक्षणत्वेन

आचामयेति लोडन्तं छित्त्वा किन्नाचामयेरिति व्याख्येयम्। अस्य श्री ई। लक्ष्मीः तया सह वर्त्तमाना सेः। ततः सम्बोधने से, सलक्ष्मीके हे दमयन्ति इत्यर्थः॥

अणावक॥ अणौ किम्। आरोहयमाणं प्रयुङ्क्ते आरोहयते। णेरणाविति सूत्रे उदाहरणत्वेन योऽकर्मको निर्णीतस्तस्माद् द्वितीये णौ मा भूत्। स हि णावकर्मकः। न्यग्भवतीत्यर्थे पर्यवसानस्योक्तत्वात्। केचित्तु स्वार्थण्यन्ताद्धेतुमण्णावित्यस्य प्रत्युदाहरणमाहुः। तद्भाष्यादिविरुद्धम्। तथा हि। बुधादिसूत्रादिह णेरित्यनुवर्त्तते। बुधादिभ्यश्च हेतुमण्णिरेव सम्भवतीति तदन्तादेवायं विधिः। अणाविति निषेधोऽपि प्रत्यासत्तेस्तथैव न्याय्यः। तेन चुरादिण्यन्ताद्धेतुमण्णौ परस्मैपदं भवत्येवेति भाष्यादौ स्थितम्। अत एव चेतयमानं प्रयुङ्क्ते चेतयतइति केषां चित्प्रत्युदाहरणं वृत्तिकृता दूषितम्। तत्र चितसञ्चेतने इति चुरादिष्वाकुस्मीये धातुर्बोध्यः। यत्तु न्यासकारहरदत्ताभ्यां व्याख्यातच्चितीसञ्ज्ञाने चुरादिरकर्मक इति तदनिरभसात्। एतेन रूपयते हरिरिति प्राचः प्रत्युदाहरणं प्रत्युक्तम्। रूप रूपकरणे चुरादिः। रूपाख्यस्य कर्मणो धात्वर्थेऽन्तर्भावादकर्मकः। ततो हेतुमण्णिचि वृत्तिकारदूषितेन चेतयतइत्यनेन समानयोगक्षेमत्वात्। वस्तुतस्तु उभयमपि समर्थयितुं शक्यम्। तथा हि। स्वार्थण्यन्तादेकस्मिन्नेव हेतुमण्णौ चेतयति रूपयतीत्यास्तां नाम। तस्यापि निवृत्तप्रेषणतया अ-

---

धात्वर्थत्वाभावान्निगरणार्थत्वमस्त्येवेति भावः। वस्तुतः पानं नाम पिपासानिवृत्त्यनुकूलो व्यापारः। भक्षणं क्षुन्निवर्त्तको व्यापारः। सर्वेषामिन्द्रियाणाञ्च बुभुक्षापिपासेत्यैतरेयोपनिषदि स्पष्टम्। सम्बोधने सेरिति। पञ्चमीसमासस्यानित्यतया एङ्ह्रस्वादिति सम्बुद्धिलोप इति भावः।

अणौ किमिति। न च तदभावे विशेषणद्वयविशिष्टात् ण्यन्तादित्यर्थे मूलोक्तोदाहरणे परस्मैपदानुपपत्तिः। बुधादिसूत्रसाहचर्येण तत्प्रकृतिकण्यन्तादित्यर्थे-

कर्मकतामाश्रित्य द्वितीये हेतुमणौ तु प्रत्युदाहरणत्वङ्केन वार्यते। युक्तञ्चैतत्। रूपयन्तं प्रयोजयतीति विगृह्णता प्राचा युजिणिजभ्यां प्रकृतिद्वयं वदता हेतुमण्णिद्वयस्य विवक्षितत्वात्। हेतुमण्णैक्ये हि प्रयुङ्क्ते इति शुद्धेन युजिनैव व्यग्रहीष्यत् न तु णिजन्तेनेति दिक्। यत्तु प्रसादकृतोक्तं णिग्रहणे णिजातेराश्रयणात् भेदस्याविवक्षयेदमिति, तत्तु भाष्यादिविरोधादुपेक्ष्यमेव। धापयेते इति। प्रत्यवसानार्थत्वात् शिशुमित्यस्य कर्मत्वम्। समीची इति प्रथमाद्विवचनम्। वा छन्दसीति पूर्वसवर्णदीर्घः ॥ इति पदव्यवस्था ॥

भावो भावनेति। उत्पत्त्यर्थाद्भवतेर्णिजन्तात् एरजिति भावः। एरजण्यन्तानामिति त्वनार्षम। कल्प्यादिभ्यः प्रतिषेधमात्रं हि भाष्ये स्थितम्। कल्पो मन्त्रोर्थ इति चय एवोदाहृतास्तेत्यवधेयम्। भवतेरुत्पत्त्यर्थत्वं ण्यन्तस्य भवतेः शुद्धेन करोतिना तुल्यार्थत्वञ्च दर्शयति। उत्पादना क्रियेति। धातुत्वेनेति। तच्च जातिः। वृद्धिसूत्रे आदैच्शब्दस्य जातिशब्दत्वादिति वदता कैयटेन तथा ध्वनितत्वात् हेलाराजीयादौ स्पष्टन्तथाभिधानाच्चेति भावः।

धातुवाच्येति ॥ एतेन भावना तिङ्प्रत्ययवाच्येति मीमांसकमतन्न ग्राह्यमिति ध्वनयति। तथा हि। भोक्तव्यमित्यादौ तिङन्तं विनापि भावना प्रतीयते कारकापेक्षा च दृश्यते। अस्ति च करोतिसामाना-

---

नादोष इति प्रश्नः। तदतिरभसादिति। तस्य भ्वादौ पाठादिति भावः। निवृत्तप्रेषणतयेति। निवृत्तधात्वर्थव्यधिकरणप्रेषणतयेत्यर्थः। समानाधिकरणप्रेरणया च णिचः साधुत्वमिति केचित्। भेदस्येति। चुरादिणिच्हेतुमण्ण्योरित्यर्थः। तत्तु भाष्येति। तत्र हि चुरादिण्यन्ताद्धेतुमण्णौ परस्मैपदमुक्तम्।

॥ इति पदव्यवस्था ॥

एरजिति। तत एव युचि भावनेति बोद्धव्यम्। तथा ध्वनितत्वादिति। सञ्ज्ञाशब्दानाञ्जातिशब्दत्वस्य ध्वनितत्वादिति भावः। भावना प्रतीयतइति। न च विद्ध्यर्थप्रवर्त्तनया साक्षिप्यतइति वाच्यम्। विध्यभावेऽपि तत्प्रतीतेः। न हि

धिकरण्यम् । किङ्कर्त्तव्यम् । भोक्तव्यम् । किङ्कृतवान्भुक्तवान् । किं च । भावयति घटमितिवत्परमते भवति घटमित्यपि स्यात् । तुल्यार्थत्वात् । दृष्टान्ते हि कर्त्तुः कुम्भकारस्य व्यापारं णिजाचष्टे दार्ष्टान्तिके त्वाख्यातप्रत्ययः । ननु प्रयोजकव्यापारो णिजर्थः कर्त्तृव्यापारस्त्वाख्यातार्थ इति वैषम्यमिति चेत् । कारकचक्रप्रयोक्तुः कर्त्तृत्वे घटस्यातथात्वात् । यदि तु धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यत इति भर्तृहरिप्रतिपादितरीत्या प्राधान्येन धातूपात्तव्यापारत्वरूपं कर्तृत्वन्तवापि सम्मतं कस्तर्हीदानीमाख्यातार्थः । व्यापारस्य धातुनैवाभिहितत्वात् । अपि च । धातोः सकर्मकाकर्मकत्वविभाग उच्छिद्येत । अकर्मकाच्चेत्यादिसूत्राणि च विरुध्येरन् । ननु सिद्धान्तेपि क्रियायाः कर्मापेक्षानियमात्कथमकर्मकतेति चेत् । फलव्यापारयोः सामानाधिकरण्यवैयधिकरण्याभ्यां सकर्मकाकर्मकविभागाभ्युपगमात् । किं च । ज्योतिष्टोमयाजीत्यादौ करणे यज इति णिनिरस्मत्पक्षएव सङ्गच्छते ।

---

तव्यादयो विधावेवेति नियमः । पक्तेत्यादौ विधिसम्भावनाया अप्यभावाच्च । ननु मास्तु तत्र तत्प्रतीतिरत आह । कारकेति । हेत्वन्तरमाह । अस्ति चेति । तदुपपादयति किङ्कर्तव्यमित्यादिना । पक्तेत्यादेः पाकङ्कृतवत्यादिविवरणाच्चेत्यपि बोद्धव्यम् । न च तत्र कर्तृकर्मभ्यान्तदाक्षेपः । पक्तेत्यत्र तदप्रतीतिर्दुर्वारत्वात् । किं चाक्षिप्तायां पदार्थान्तरानन्वयापत्तिः । अन्यथा धूमोयं ज्वलतीत्यपि योग्यं स्यात् । किं च तद्वदेवाक्षेपेण पचतीत्यादावपि तत्प्रतीतिसिद्धावनन्यलभ्यस्य शब्दार्थतया तिङान्तत्र शक्त्यनापत्तेः । न च तत्रापि प्रत्ययवाच्या भावना । काष्ठः पाक इत्यापत्तेः । कर्त्तृव्यापारस्त्विति । शब्दशक्तिस्वाभाव्याद्धात्वर्थसमानाधिकरणभावनैव तत्राख्यातार्थः । अन्तर्भावितण्यर्थता तु न सर्वत्रेति न तदापत्तिरिति भावः । ननु तिङ्योगे तिङर्थभावनाश्रयत्वमेव तन्मते कर्त्तृत्वन्तदर्थभावनाव्यधिकरणफलवाचकत्वञ्चधातूनां सकर्मकत्वन्तत्समानाधिकरणार्थवाचकत्वञ्चाकर्मकत्वम् । भावना च व्यापारसामान्यम्न कृतिरिति रथो गच्छतीत्यादौ न दोष इत्यरुचेराह । किं च ज्योतिष्टोमेति । अस्मत्पक्षएवेति । परमते तु तदसङ्गतिः । प्र-

धातुत्वेन धातूपात्तां भावनां प्रति यजित्वेन तदुपात्तस्यांशान्तरस्य करणत्वात् पचादयो हि धातुत्वेन भावनामाहुः। तच्चांशान्तरं भावनां प्रति प्रायेण भाव्यतया सङ्गच्छते। ज्योतिष्टोमयाजीत्यादौ तु करणतया। ज्योतिष्टोमाख्येन यागेन स्वर्गं भावितवानित्यर्थप्रतीतेः। स्पष्टञ्चेदं णिनिविधौ हरदत्तग्रन्थे। एतेन ह्यर्थः पचिरिति भाष्यं व्याख्यातम्। भट्टिश्चाह॥

विभज्य सेनां परमार्थकर्मा
सेनापतींश्चापि पुरन्दरोथ।
नियोजयामास स शत्रुसैन्ये
करोतिरर्थेष्विव सर्वधातूनिति॥

ननु क्रियाया धात्वर्थत्वे पचतीत्यादौ एककर्त्तृका वर्त्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात्। प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्तत्वादिति चेन्न। प्रत्ययार्थः प्रधानमिति ह्युत्सर्गः। स चेह त्यज्यते। क्रियाप्रधानमाख्यातमिति स्मरणात्। पाचिकेत्यादौ स्त्रीत्वस्य विशेषणत्वाभ्युपगमाच्च। प्रत्युत तवैव पचतीत्यादावनुपपत्तिः। पचन्तं पश्येत्यादौ शतृशानचोः कर्तृप्राधान्यस्य सर्वसम्मततया तिङ्ष्वपि तथात्वापत्तेः। शत्रादीनान्तिङाञ्च लादेशत्वस्याविशिष्टत्वाच्च। आदेशानाञ्च स्थानिस्मारकत्वे स्थान्यर्थाभिधायित्वे वार्थैक्यध्रौव्यात्। अत एव हि युष्मदि समानाधिकरणे मध्यमः। अस्मद्युत्तम इत्यादि पुरुषव्यवस्था सङ्गच्छते। अभिहिते कर्त्तरि प्रथमेत्यादि च। न च समानाधिकरणइत्यनेन स्वाभिधेयसंख्या-

---

त्यासत्त्या समर्थः पदविधिरिति परिभाषणेन च यज्यर्थनिरूपितकरणे उपपदे त-
न्निरूपितकर्तरि वाच्ये णिनिरिति तदर्थः। स च तन्मतेऽसङ्गत इति स्पष्टमेव।
तदुपात्तांशान्तरस्य। यज्युपात्तयागरूपस्य। भाव्यतयेति। पचतीत्यादावित्यर्थः।
करणतयेति। शब्दशक्तिस्वभावादिति भावः। स्त्रीत्वस्येति। यदि तत्र टावादी-

न्वयित्वमभिहितशब्देन चाभिहितसंख्याकत्वं विवक्षितमिति वाच्यम्। सूत्राननुगुणत्वात्। कृत्तद्धितसमासैः संख्याया अनभिधानात्तदभिहितेपि तृतीयाप्रसङ्गाच्च। न च कृत्यनभिधानमेव कर्त्तुरनभिधानमिति वाच्यम्। भावार्थकलकारेपि कर्त्तरि प्रथमापत्तेरिति दिक्। सामानाधिकरण्याभावादिति। भावाभिधायिनो हि लकारस्य क्वापि न सामानाधिकरण्यं कर्माभिधायिनस्तु तत्सम्भवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते। तिङ्वाच्येति। कृद्वाच्यायास्तु सत्त्वरूपत्वमिष्टमेव। तथा च भाष्यम्। "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति। द्रव्यधर्मान् लिङ्गसंख्याकारकादीन्गृह्णातीत्यर्थः। अत एव पाकं पाकेनेत्यादौ यथायथन्द्वितीयादयः। न चैवमोदनस्य पाक इति कर्मणि षष्ठ्यनन्विता स्यादिति वाच्यम्। घञादावपि प्रकृतिभागस्यासत्त्वापन्नक्रियाभिधायित्वाभ्युपगमात्। उक्तञ्च हरिणा॥

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥

---

नां द्योतकतया विशेषणत्वन्तर्हि प्रकृतेपि तथा वक्तुं शक्यम्। कृतीति। भावेनेत्यर्थः। दिगिति। तदर्थस्तु भावलकारे कर्त्रादिकारकान्वयानापत्तिः तत्रापि तस्या वाच्यत्वे तदन्वयिनि संख्यान्वयाङ्गीकारेण द्विवचनाद्यापत्तेः। किं च समानकर्त्तृकयोः पूर्वकाले इति सूत्रासङ्गतिः समानकर्त्तृकक्रिययोः पूर्वकालवृत्तिक्रियायां वर्त्तमानाद्धातोः क्त्वेति तदर्थादिति। न सामानाधिकरण्यमिति। असत्त्वभूतक्रियायाः सत्त्वार्थकयुष्मदादिसामानाधिकरण्यासम्भव इति भावः। भाष्यमिति। यकृत्सूत्रे इति आदिः। द्रव्यधर्मानिति। एवञ्च घटादिपदप्रतिपाद्यघटादिद्रव्यमिव लिङ्गादिहेतुना घञन्तादिप्रतिपाद्ये सत्त्वमनुमीयतइति भावः। इदमप्यव्ययकृदतिरिक्तविषयम्। कृत्येषु नपुंसकेतरलिङ्गयोगाभावेनासत्त्वव्यवहारः केषाञ्चिदिति बोद्ध्यम्। अनन्विता स्यादिति। कारकाणामसत्त्वभूतक्रियान्वयित्वनियमादिति भावः। घञादौ। घञाद्यन्ते। आख्यातशब्दे तिङन्ते क्रियाप्रधाने वा। भागाभ्याम्। प्रकृतिप्रत्ययाभ्याम्। साध्यम्। क्रिया धात्वर्थः। साधनं कारकं प्रत्ययार्थः। स घञादिष्विति। सिद्धत्वसाध्यत्वोभय-

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः॥ इति॥

यत्तु "अमृतरसप्रस्यन्दमाध्वीकभू"रिति कुसुमाञ्जलिश्लोकेऽमृतस्य रसे रस्यमानममृतमिति यावदिति व्याख्याय तत्रोपष्टम्भकत्वेन कृदभिहितो भावो द्रव्यवत्प्रकाशत इति वर्द्धमानेनोपन्यस्तं प्राचो ग्रन्थं व्याचक्षाणैस्तानुमोदितन्तत्सर्वमतिरभसात्। तथा हि। रस इति न भावे कृत्। रस्यमान इति विवरणेन सह विरोधात्। यत्तु द्रव्यवदित्यस्य द्रव्यविशेष्यिकां प्रतीतिञ्जनयतीत्यर्थवर्णनन्तदपि निर्मूलमनुशासनविरुद्धञ्चेति दिक्। एकवचनमेवेति। प्रायोवादोऽयम्। भाष्ये उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्त इत्यत्र बहुवचनस्य स्वीकारात्। उष्ट्राणां हि आसिकाः स्वरूपत एव विलक्षणाः हतास्च नानाप्रकारं शेरते उत्ताना अवतानाः विकीर्णकेशाः तिसृषतसृष्ट तत्तस्य यादृशानि हतानां शयनानि तादृशानि देवदत्तादिभिः क्रियन्त इत्यर्थः। अत्र सादृश्याद्यवगमादाख्यातवाच्यस्यापि भावस्य भेदावगमाद्बहुवचनम्। आसिकाः शायिका इति च द्वितीयाबहुवचनम्। क्रियाविशेषणत्वेन कर्मत्वात्। न चैवं क्लीबत्वमेकवचनञ्च स्यादिति वाच्यम्। स्त्रियाङ्क्तिन्नित्यधिकारात्स्त्रीत्वावधारणेन सामान्ये नपुंसकमित्यस्याप्रवृत्तेः। बहुत्वावधारणेन एकवचनाप्रवृत्तेश्च। न चैवं स-

---

विशिष्टो धात्वर्थो घञन्तवाच्यः सिद्धत्वरूपो धर्मश्च घञ्द्योत्यस्तदाह। साध्यत्वेनेत्यादि। सत्त्वभावस्त्विति। तथा च कर्त्तरि कृदिति सूत्रे भाष्ये इदं सूत्रं भावव्यावृत्त्यर्थम्। न च भावे घञिति नियमादन्ये कृतो भावइति वाच्यम्। अन्यः स भावो बाह्यः प्रकृत्यर्थात्। एतदभावे हि इमे आभ्यन्तरे स्युरित्युक्तम्। पाकेन कृतमित्यादिव्यवहाराच्च स्त्रियामित्यादिना भावविशेषणाच्च। वर्द्धमानेनेति। द्रव्यवदित्यस्य द्रव्यविशेष्यिकां प्रतीतिञ्जनयतीति तदर्थ इति तदाशयः तदाह। यत्त्वित्यादिना। दिगिति। तदर्थस्तु रसशब्दस्य द्रव्यपरत्वे कर्मधारये तस्य पूर्वनिपातापत्तिः। रथन्तरादिवद्रसशब्दस्य रूढत्वाच्च। किं च सर्वत्र भावएवमेवापपातापत्तिः।

मत्वोक्तिर्विरुद्धेति वाच्यम् । लिङ्गक्रियानाधारकारकयोगाभावमात्रे तात्पर्यमित्युक्तत्वात् ॥

स्यसिच्सी ॥ यद्यप्यजादयो द्वन्द्वेन निर्दिष्टास्तथा ऽप्युपदेश इत्यच एव विशेषणन्न हनादीनामव्यभिचारात्तदाह । उपदेशे यो ऽजिति । अत्र प्राचा उपदेशे ऽजन्तेभ्यो हनादेश्च परेषां स्यादीनामिड्वा स्यात् । स इट् चिण्वच्चेति व्याख्यातम् । तन्न । सूत्रे हि स्यादयः सप्तम्या निर्दिष्टाः । अजादयश्च षष्ठ्या । चिण्वद्भावश्च प्रधानशिष्टः । इट् तु चकारेण तत्सन्नियोगशिष्टः । चिण्वदिति च सप्तम्यन्ताद्वतिः । स्यसिच्सीयुट्तासिष्विति प्रतियोगिनि सप्तमीनिर्देशात् । न चैतस्य सर्वस्य भङ्गेन विपरीतव्याख्याने बीजमस्ति । चशब्दस्य व्यवहितान्वयो निर्मूलः । स्यादेतत् । सूत्रस्वरसानुरोधे ऽङ्गस्यैवेट् स्यात् । अडादिवत् । अत इड्विधिवाक्ये स्यादीनामिति विभक्तिविपरिणाम आवश्यक इति चेत् । सत्यम् । पूर्ववाक्ये चरितार्थस्य उत्तरत्र विपरिणामो न्याय्य एव । तत्र तु यथाश्रुतविभक्तेरचरितार्थत्वात् अनुचितो विपरिणामः । तथा हि । हरिः सेव्यः तद्भक्ताश्चेति प्रयोगे उत्तरवाक्ये सेव्या इति विपरिणामं दृष्ट्वा न हरिः सेव्या इत्यपि प्रयोक्तुमुचितम् । यदप्याहुः । विभक्तिव्यत्ययस्यापि बहुलं दर्शनादिति । तदपि भक्तिवादमात्रमिति स्पष्टमेव । किं च । प्राचो व्याख्याने चिण्वदिति तृतीयान्ताद्वतिः । तत्र यथा पूर्वस्य कार्यं वृद्ध्यादिकमतिदिश्यते । एवं स्वस्य स्वस्मात्परस्य च कार्यमतिदिश्येत । ततश्च चिणि वेडप्युदात्तः स्यात् । चिणः पर-

---

त्तौ कर्मणि प्रत्ययविधानेनोपपत्तौ भावप्रत्ययविधानवैयर्थ्यञ्चेति । भेदावगमादिति । उपमानानां बहुत्वेनोपमेये तिङर्थेऽपि बहुत्वारोपेण प्रत्ययः । अन्यथोपमाने बहुत्वोपादानवैयर्थ्यं स्यादिति भावः । लिङ्गेति । लिङ्गाभावमादाय भिन्नतिङन्तार्थे कर्तृकर्मातिरिक्तकारकत्वाभावमादाय चासत्त्वमिति भावः । व्यवहितान्वय इति । स इट् चिण्वच्चेत्येवंरूप इत्यर्थः । पूर्ववाक्ये इति । उत्तरवाक्ये चेत्यपि बोद्ध-

स्येव इटः परस्यापि लुक् प्रवर्त्तेत। ननु बाधितो ऽसाविट आगमत्वेन प्रत्ययावयवतया प्रत्ययत्वाभावादिति चेन्न। कृते ऽप्यागमे ऽवच्छिन्नस्य त्वया प्रत्ययत्वाभ्युपगमात् झो ऽन्त इति सूत्रे प्राचो ग्रन्थं व्याचक्षाणैस्तथैव निर्णीतत्वात्। किञ्च वृद्ध्यादिकार्यस्य प्रत्यये परे विहितस्य इटि परे कथं निर्वाह इत्याशङ्क्य चिणि दृष्टस्य सर्वस्यैवातिदेशे प्रत्ययत्वस्याप्यतिदेशान्न दोष इति तावत्प्राचो ग्रन्थं व्याचक्षाणा एवाहुः। तत्कथमुक्तस्यापि प्रत्ययत्वन्न लभ्येत। यत्तु वदन्ति। चिणो लुकि चिण्वदिटो ऽसिद्धत्वादिति। तदपि न। न हि चिण्वदित्यतिदेशं प्रति इडसिद्धः। अतिदेशस्य निर्विषयत्वापत्तेः। तथा च लुकोपि वृद्ध्यादिसमकक्षत्वेनातिदेशो दुर्वार एवेत्यलमतिचोदेन। ननु यदि चिणि दृष्टमात्रस्यातिदेशस्तर्हि हनिणिङादेशा अपि स्युः। घानिष्यते। आयिष्यते। अध्यायिष्यते इति। मैवम्। अङ्गाधिकारबलेनाङ्गस्यैवातिदेशात्। न चैते आङ्गाः। तदेतदाह। अङ्गकार्यमिति। सीयुट इति। तथा च सीयुट्शब्देन तद्विशिष्टं लक्ष्यतइति भावः। आर्द्धधातुकइत्यनेन व्यावर्त्यस्तु विधिलिङ्। न च तत्र वधादित्वं नास्तीति

---

ष्यम्। तत्राद्योदाहरणं हरिः सेव्यस्तद्भक्ताश्चेति। अन्त्यस्य तु कर्तृकर्मणी गुणश्चानिर्दिष्ट इत्यर्थवत्सूत्रस्थभाष्यप्रयोगः। अचरितार्थत्वादिति। सर्वथा ऽचरितार्थत्वादित्यर्थः। इत्यपि प्रयोक्तुमुचितमिति। स्वायत्ते शब्दप्रयोगे इति भावः। इडप्युदात्तः स्यादिति। एवञ्चेडन्तस्याङ्गत्वाभावात्ततः परस्य प्रत्ययत्वाभावाच्च लुको ऽप्राप्तिरिति भावः। प्रत्ययत्वाभ्युपगमादिति। एवञ्च तदादिग्रहणेनाङ्गत्वमपि सुलभमिति भावः। उक्तस्यापीति। इट इव इटः परस्यापि चिणि दृष्टप्रत्ययत्वमिव चिणः परे ऽपि दृष्टप्रत्ययत्वस्यातिदेशसम्भवादिति भावः। निर्विषयत्वापत्तेरिति। चिण्वदित्यस्य कार्यातिदेशतया ऽनेनातिदिश्यमानकार्याणामाभीयत्वेन तत्रेटो ऽसिद्धत्वे ऽतिदेशस्य निर्विषयतापत्तिरिति भावः। आङ्गा इति। अङ्गाधिकारस्था इत्यर्थः। सीयुण्मात्रस्यार्द्धधातुकत्वासंभवादाह। तथा चेति। विधिलिङिति। प्रस्नुवीतेत्यत्र हि कर्मकर्त्तरि न दुहेति यक्निषेधः। प्रकृते च हनादिसाहचर्येणाजम्।

वाच्यम् । तस्येहानपेक्षणात् । यदाहुः । नित्यश्चायं वलनिमित्तो विघातीति । अस्यार्थः । भाविष्यतइत्यादौ भू स्य इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव भवति । सत्यामपि शब्दान्तरप्राप्तौ कृताकृतप्रसङ्गित्वमात्रेण भुवो वुक इव नित्यत्वाद्वलादित्वनिरपेक्षो ह्यसौ परस्त्वनित्यः अस्मिन्कृते वलादित्वविघातात् । एवञ्च नित्यत्वात्सेड्भ्यो ऽप्ययमेवेड् भवति । एतेन उपदेश इति किम् । भाविष्यते । अत्र गुणावादेशयोः कृतयोर्न स्यादिति प्रसादग्रन्थः प्रत्युक्तः । चिण्वदिटो विषये वलनिमित्तस्याप्रवृत्तेरेवादेशस्यासम्भवात् । गुणमात्रे प्रवृत्ते ऽप्यजन्तत्वानपायात् । उपदेशग्रहणफलन्तु सूत्र एव स्फुटीभविष्यति । चिण्वदिट इति । ननु ण्यन्तस्य धातोरुपदेशाभावात्कथमिह चिण्वदिट् । न च णेरुपदेशादुपदेशे यो ऽच् तदन्तत्वमस्त्येवेति वाच्यम् । आरिता स्मारितेत्यादौ परत्वान्नित्यत्वाच्च रपरे गुणे कृते चिण्वदिडभावापत्तेः । न हि रान्तस्योपदेशे यो ऽच् तदन्तत्वमस्तीति चेन्नैवम् । उपदेशे यो ऽजिति व्याख्याने ऽप्युपदेशग्रहणसामर्थ्यादेव आरितेत्यादौ प्रवृत्तिस्वीकारात् । अस्तु वा उपदेशे य-

---

न्तधातुरूपाङ्गस्यैव ग्रहणम् । एतेन यका व्यवधानवदस्य प्रवृत्तौ कथं विधिलिङो व्यावर्त्यत्वमित्यपास्तम् । वलादित्वं नास्तीति । लिङः सलोप इति सलोपादिति भावः । निरपेक्षो ह्यसाविति । अतो नित्यो ऽसाविति भावः । परः । साप्तमिकः । अनित्य इति । तत्सापेक्षत्वादिति भावः । एवञ्च ऋद्धनोरित्यादेरपि तत्सापेक्षत्वादनित्यत्वं बोद्धव्यम् । तदन्तत्वमस्त्येवेति । अङ्गस्य धातोर्वेति शेषः । न च ण्यल्लोपाविति पूर्वविप्रतिषेधेन गुणं बाधित्वा णिलोपप्रवृत्त्या ऽल्विधौ स्थानिवत्त्वाभावेनोपदेशे यो ऽच् तदन्तत्वन्दुरुपपादमिति वाच्यम् । गुणात्परत्वादार्द्धधातुकस्येडिस्यस्य प्राप्त्या तन्नित्यत्वेन बाधित्वा चिण्वदिट एव प्रवृत्तेर्न दोष इति भावः । न हि रान्तस्येति । भूनीप्रभृतीनामपि गुणउपदेशे यो ऽच् तदन्तत्वाभावाच्चेयापि बोद्धव्यम् । उपदेशग्रहणसामर्थ्यादिति । तत्सामर्थ्यादादेशद्वारापि तदन्तत्वं विवक्षितमिति भावः । यदजन्तन्तस्येति । तदन्ताङ्गस्येत्यर्थः । उपदेशग्रहणसाम-

दजन्तन्तस्येति व्याख्यानम्। अङ्गस्येति व्यधिकरणषष्ठी। अङ्गावयव-स्याजन्तस्येति। कारिष्यतइत्यादौ च व्यपदेशिवद्भावः। सर्वथा ऽपि णिजन्ते चिण्वद्भावो ऽस्त्येव तदाहुः॥

चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं
दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चासिद्धस्तेन मे लुप्यते णि-
र्नित्यश्चायं वलनिमित्तो विघाती। इति॥

यत्तु ण्यन्तत्वेनाजन्तत्वमश्चिण्वदिडिति प्राचो ग्रन्थं व्याचचाणैरु-क्तम्। ण्यन्तस्यास्त्वन्तरम्। तदुपदेशावस्थायां भवत्ययमजन्त इति। तन्न्यायविरुद्धं स्वोक्तिविरुद्धञ्च। उपदेशो हि साक्षादुच्चारणं न च ण्यन्तस्य तदस्ति। किं च धात्वादेः षः स इत्यत्र सुब्धातोः प्रतिषे-धमुक्त्वा उपदेशग्रहणबलेन तत्प्रत्याख्यानमाकरे स्थितम्। स्वयमपि तत्र तथैवोक्तम्। तदिदानीं विरुध्येतेति दिक्॥

आतो युक्॥ चिण्कृतोः किम्। चैडिः। बालाकिः। बाकादित्वा-

---

र्थ्याच्छब्दरूपं विशेष्यमादाय वा तदन्तविधिः। तेन चाङ्गस्य विशेषणात्पुनस्त-दन्तविधिरिति भावः। प्रकारान्तरमाह। व्यधिकरणेति। एवमन्वयो ऽपि तत्साम-र्थ्यादेव बोद्ध्यः। व्यपदेशिवद्भाव इति। तेन णिचो ऽजन्तत्वमिति भावः। यद्वा अण्यन्ते ऽङ्गमेवाङ्गावयवस्तेन न्यायेनेति भावः। कारितेत्यत्र तदन्ताङ्गत्वं व्यपदेशिवद्भावेन आरितेत्यत्रोभयमपि व्यपदेशिवद्भावेन स्मारितेत्यत्रोभयमपि मुख्य-मेव तदन्ताङ्गस्येति व्याख्याने इति बोद्ध्यम्। चिण्वद्वृद्धिरिति। चिण्वद्भावप्रयो-जनं वृद्धिरित्यर्थः। वृद्धिरन्त्यवृद्धिरुपधावृद्धिश्च। दीर्घश्चोक्त इति। शामिता शमिते-त्यादौ। अत्र दीर्घे चिण्वत्त्वनासिद्धमाभीयासिद्धत्वस्यानित्यत्वात्। इट् चेति। सं च प्रयोजनमित्यर्थः। दशाघाती चिण्वत्सन्नियोगशिष्टप्रवृत्तिरेव चिण्वत्त्वप्रयोजन-मित्यर्थः। चादिट् च इत्यत्रोपस्थितत्वादिडेव गृह्यते। एवं च णिलोपमात्रे ऽय-मसिद्धो नान्यत्र। अत एव तत्सूत्रप्रत्याख्याने चेन णिलोपः साधितो भाष्ये इति बोद्ध्यम्॥

दिङ्। ददौ। अदायिषातामिति। स्थाघ्वोरिच्चेत्येतद्बाधित्वा परत्वा-च्चिण्वदिटि कृते ऽज्झनादित्वात्पुनर्नेत्याङ्ः। सत्यपि तस्मिन्नेह का चित्क्षतिः। अनिगन्तस्यपाया वृद्ध्या रूपनिष्पत्तेः। आशीर्लिङीति। न तु लुङि तत्रोभयोरपि वैकल्पिकतया येननाप्राप्तिन्यायाभावादिति भावः। विशेषविहितत्वादिति। लिङीति हि पदद्वयसाधारणम्। सीयुट् त्वा-त्मनेपद एवेति विशेष इति भावः। एतेन स्यसिच्सूत्रे प्रतिपदविधेर्बली-यस्त्वाच्चिण्वद्भाव इति कैयटग्रन्थो व्याख्यातः। यत्तु तत्र नारायणेनो-क्तम्। अत्र यद्यपि वधादेशो ऽपि प्रतिपदविधिस्तथापि विप्रतिषेधाच्चि-ण्वद्भाव इत्याशय इति। यच्च तत्परिष्कारार्थं प्राचो ग्रन्थं व्याचक्षाणै-रुक्तम्। यद्यपि परादप्यन्तरङ्गं बलीयस्तथापि परशब्दस्येष्टवाचित्वा-च्चिण्वद्भावेन व्यवस्थेति तस्याप्याशय इति। तदेतत्सर्वं कैयटग्रन्थार्थाप-र्यालोचनमूलकमिति सूत्रएव ध्वनितम्। पक्षे वधिषीष्टेति। इह प्राचा पक्षे वधादेश इत्युक्तन्तत्सम्यगेव। यत्तु तत्र तत्पौत्रेणोक्तं वधादेश इति परमतम्। स्वमते तु वधादेशो ऽत्र न भवत्येव। तथा चोक्तं महाभाष्ये। चिण्वद्भावे कृते पुनः प्रसङ्गाद्वधभावः कस्मान्न भवति। सकृद्गतौ विप्र-तिषेधे यद्बाधितन्तद्बाधितमेवेति कृत्वा हनिणिङादेशप्रतिषेधश्चेति। तदेतद्भाष्यार्थानवबोधविजृम्भितम्। लिङीति परसप्तमीं स्यसिच्सू-त्रे आर्द्धधातुक इत्यस्यासंबन्धञ्च प्रौढिवादेन स्वीकृत्य प्रवृत्तं वधभा-

---

चौडिरिति। न चाचामादेरित्यनुवृत्त्या निस्तारः। दरिद्रायके दोषापत्तेः। ददाविति। औत्वन्तूत्तमे णित्त्वाभावपक्षे चरितार्थमिति भावः। अज्झलादि-त्वादिति। इको झलित्यतस्तदनुवृत्तेरिति भावः। अनुवृत्तावप्याह। सत्यपीति। विशेष इति भाव इति। वाक्यार्थबोधकाले बाधकाभावेन हन्तेरपि सीयुटा सम्बन्धेन तस्य निरवकाशत्वाल्लक्ष्यसंस्कारवेलोपस्थितवधबाधः। सीयुट् तु तद-विषये चरितार्थ इति भावः। व्याख्यात इति। निरवकाशत्त्वरूपस्य बाधबीज-स्याभावादिति भावः। ग्रन्थार्थेति। निरवकाशत्वरूपेत्यर्थः। परसप्तमीमिति। विषयसप्तम्यामन्तरङ्गत्वेन विप्रतिषेधायोग इति भावः। इत्यस्यासम्बन्धं चेति। तत्स-

वात्सीयुटि चिण्वद्भावो विप्रतिषेधेनेति वार्त्तिकं व्याचक्षाणेन भाष्यकृता चिण्वद्भावपक्षे खलु वधादेशाभाव उक्तः। न तु चिण्वद्भावविरहे ऽपि। तत्कथं स्वसिद्धसूत्रारूढमपि विकल्पं विस्मृत्याशुद्धमपि मूलं शुद्धीक्रियते। यदपि हनिणिङादेशेत्याद्युक्तम्। तदपि न। अनाङ्गस्यात्यतिदेशे प्राप्ते वार्त्तिककृता घानिष्यते इत्यादौ तदुक्तेः। भाष्यकृता अङ्गाधिकारबलेन तत्समाधानाच्च। न च लिङि लुङि च साक्षादुद्दिष्टस्य वधेरतिदेशापेक्षास्ति। उदाहृतस्तत्र वधादेशो भाष्यकारप्रभृतिमाधवान्तैस्सर्वैरेवेति दिक्। अहसातामिति। चिण्वदिटो ऽभावे हनः सिजिति कित्त्वादनुदात्तोपदेशेत्यनुनासिकलोपः। चतुर्भिरधिकं शतमिति। यत्तु ध्वे सलोपो वा सस्य दइति के चिदिति पुनर्द्वित्वमिति चाप्रामाणिकद्वयं सञ्चार्य लोपविकल्पादिप्रपञ्चेनेह अष्टत्रिंशद्रूपाणि भवन्तीति वदन्ति। तत्रोक्तिसंभवं न पश्यामः। पुनर्द्वित्वे रूपानन्त्यस्य दुर्वारत्वात्। अष्टत्रिंशत्संख्याया एव पुरस्कारे मूलाभावाच्चेत्यास्तान्तावत्। अवष्टभ्येति। तदपि पूर्वत्रासिद्धमिति सूत्रसिद्धार्थकथनमित्युक्तन्न विस्मर्त्तव्यम्। अस्मिन्निष्कृष्टपक्षे चिण्णमुलोरिति सूत्रे दीर्घग्रहणं कर्तव्यमेव। तथा हि। हेडृ अनादरे घटादिः। एच इक्। ह्विडयति। अत्र चिण्णमुलोः कृतयोर्ह्रस्वविकल्पमते अहिडि। अहेडीति स्यात्। दीर्घे तु अहीडि। अहीडीति भवति। एतच्च चिण्णमुलोरिति सूत्रे कैयटग्रन्थे च स्पष्टम्। दीर्घो नास्तीति। यङो ऽल्लोपस्य स्थानिवत्त्वेन णिच्परत्वाभावादुपधावृद्धेरप्रवृत्तेरिति भावः॥

———

म्बन्धे हि सीयुट्यात्मनेपदस्य विशेषविहितत्वाच्चिण्वत्त्वस्यापवादत्वेनायुक्तो विप्रतिषेध इति भावः। रूपानन्त्यस्येति। एतत्सुद्ध्युपास्य इत्यत्रोपपादितम्। अष्टात्रिंशत्संख्या सर्वथा दुरुपपादैवेत्याह। अष्टत्रिंशदिति। घटादिरिति। घटादावनूदित इत्यर्थः। कैयटग्रन्थे इति। अत्रारुचिवीजन्तु ऊकालोच् कर्मणिङिति सूत्रे भाष्यप्रामाण्येन घटादावस्य पाठो ऽसांप्रदायिक इत्यन्यत्र निरूपितम्। यङो ऽल्लोपस्येति।

नोदात्तो ॥ कथन्तर्हि "इरेयंदक्रामि पदैककेन ख"मिति श्रीह-र्षः। प्रमाद एवायम्। यदि समाधेयमेवेत्याग्रहस्तर्हि निवृत्तप्रेषणात्प्रा-कृतेऽर्थे णिचि ततस्विपत्नोऽच्यः। कथमुद्यम उपरम इति। सञ्ज्ञापूर्वक-विधेरनित्यत्वात्। तथा च निर्दिश्यते। अड उद्यमेन, यम उपरमे इति। अथ ये द्विकर्मकास्तेषु कृत्यक्तखलर्थाः किं मुख्ये कर्मणि उत गौणे किं वोभयोरिति सन्देहे व्यवस्थामाह। द्विकर्मकाणान्त्विति ॥

॥ इति भावकर्मप्रक्रिया ॥

प्रायस्सकर्मका अपीति॥ फलावच्छिन्नव्यापारपरत्वे हि देवदत्तादिनि-ष्ठव्यापारव्यधिकरणविक्लित्तिद्विधाभवनन्यग्भवनादिफलाश्रयाणामोद-नादीनां कर्मत्वमुचितम्। कर्त्तुरीप्सिततमत्वात्। व्यापारांशपरित्यागे-न फलांशमात्रपरत्वे तु पचिभिदिरुधामपि राध्यति द्विधा भवति न्य-ग्भवतीत्यादिविवरणविषयीभूतानां राध्यत्यादिवदेवाकर्मकता। न ह्य-स्यामवस्थायामोदनादेः कर्मत्वं संभवति किं तु कर्त्तृत्वमेव स्वतन्त्रः कर्त्तेति लक्षणात्। एतच्च णेरणाविति सूत्रएव प्रपञ्चितम्। स्यादेतत्। द्विकर्मकाणामेकस्य कर्मणः प्राधान्यविवक्षायामपि अपरेण सकर्म-कत्वमस्त्येव। "स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मे-दिनीत्यादौ यथेति चेत्। सत्यम्। एककर्मकाणामेवाकर्मकताया उच्य-मानत्वान्न दोषः। तदेतद् ध्वनयति। प्रायेणेति। अकर्मकत्वमुपपाद्यत-स्य फलमाह। तेभ्यो भावइति। भावे चाकर्मकेभ्य इत्युक्तेरिति भावः॥

कर्मवत्॥ कर्मशब्देन कर्मस्था क्रिया लक्ष्यते तदाह। कर्मस्थयेति।

---

यङ्लुकि दीर्घो भवत्येव। न हि यङ्यङ्लुकोरर्थे स्वरे वा विशेष इति भाष्ययोर्न विरोध इति भावः॥

सञ्ज्ञापूर्वकेति। घञर्थे के साधुरित्यन्ये॥

॥ इति भावकर्मप्रक्रिया ॥

फलांशेति। व्यापारसमानाधिकरणफलांशेत्यर्थः। किं तु कर्तृत्वमेवेति। कर्तृ-त्वाप्राप्तेः परत्वाच्चेति भावः॥

लकारवाच्य इति। लकारेणोपस्थापित इत्यर्थः। द्विलकारादिति। अयं भावः। व्यत्ययो बहुलमिलिङ्ग्याशिष्यङिति संहितया पाठे परसवर्णविधिलब्धलकारोपरि लद्वयं न व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषोस्तीति भाष्योक्तेः। यद्वा लुप्तनिर्दिष्टो लकारः। लोपस्तु संयोगान्तस्येति पक्षान्तरे तु हलो यमामिति। तच्च लग्रहणमिहानुवृत्तं षष्ठ्या विपरिणम्यते तेनाभिमतार्थलाभ इति। करणाधिकरणाभ्यामिति। नन्विह करणत्वाद्यवस्थायां वस्तुतः सन्नपि असिस्थाल्योर्व्यापारो धातुना नोपात्त इति चेत्किन्ततः। न ह्येतस्मिन्सूत्रे सादृश्यप्रतियोगिभूता क्रिया धातूपात्तत्वेन विशेषिता। एवञ्चासति कर्मणेत्यस्मिन्स्यादेवातिप्रसङ्ग इति भावः। अधिगच्छतीत्यादि। श्लोकस्योत्तरार्द्धन्तु यत्कृपावशतस्तस्मै नमोस्तु गुरवे सदेति बोध्यम्। स्यादेतत्। पच्यादीनाङ्ग्रह्यादीनाञ्च फलाभिधायित्वे फलस्य च कर्मनिष्ठत्वे तुल्ये कथं कर्मवद्भावप्रवृत्त्यप्रवृत्तिव्यवस्था। तत्राह। यत्र कर्मणेति। उक्तञ्च हरिणा॥

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता। इति॥

अन्येषान्धातूनां शब्दैः क्रियाव्यवस्था। शब्देन कर्त्तृव्यापारस्यैव प्राधान्येनावगमात्कर्त्तृस्थतेत्यर्थः। उद्देश्यताऽपि क्वचित्कर्मस्थांशस्य क्वचित्तु व्यापारांशस्येति सापि नियामिका। तथा हि। दर्शनारोहणाभ्यां

---

कर्मस्था क्रियेति। क्रियायाः कर्मणा साधनेन तुल्यत्वासम्भवादिति भावः। लकारेणेति। लस्थानिकादेशेनेत्यर्थः। लद्वयाश्रवणादाह। न व्यञ्जनपरस्येति। पक्षान्तरेण। यणः प्रतिषेधो वाच्य इति वार्त्तिकादिपक्षेणेत्यर्थः। तदुपस्थाप्यत्वम्। तत्स्थानिकादेशोपस्थाप्यत्वम्। कर्त्रेति पदलाभोपायमाह। कर्त्तरीति। कर्त्तृस्थतेत्यर्थ इति। यथा दर्शनारोहणाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात्कर्त्तृस्थतेति भावः। अन्येषामित्यस्यान्येषां मतइत्यर्थमभिप्रेत्याह। उद्देश्यतापीति।

विषये न्यग्भूते च विशेषानुपलम्भात्कर्त्तृस्थता। उद्देश्यानुरोधाच्च अ-
हं पश्येयमिति ह्युद्देशो न तु हस्तिनो न्यग्भावो भवत्विति। उपरिगम-
नरूप एव व्यापारविशेषो रुहेरर्थो न त्वयं विषयो भवत्विति एवमहमु-
परि गच्छेयमित्युद्देशो न तु न्यग्भावनमात्रम्। भूमिष्ठे वृक्षस्य शाखां ह-
स्ताभ्यामवनमयत्यपि देवदत्ते आरोहतीत्यप्रयोगात्। अत एव हि य-
द्धितुपरं छन्दसीत्यत्र भाष्यम्। रुहिर्गत्यर्थ इति। अत एव चाणौ कर्त्तु-
र्णौ कर्मत्वम्। पचिच्छिद्योस्तु विक्लित्तिद्विधाभवनरूपो विशेषः कर्मणि
दृष्टस्तदुद्देशेनैव च कारकव्यापार इति महद्वैषम्यम्। एवञ्चारुह्यते ह-
स्तीति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्या इति कैयटः।
हरदत्तादयोऽप्येवम्। नन्वेवमिहैव सूत्रे सकर्मकाणां प्रतिषेधो ऽन्यो-
न्यमाश्लिष्यत इति भाष्यवार्त्तिकग्रन्थः संयोगरूपफलस्य कर्मस्थत्वा-
त्प्राप्तिरिति कैयटादिग्रन्थश्च विरुध्यते। रुहिगमिभ्यां सह श्लिषेर्वैष-
म्यस्य दुरुपपादत्वात्संयोगाख्यफलस्य सर्वत्र तुल्यत्वादिति चेत्सत्यम्।
उदाहरणदिङ्मात्रन्तत् न तु स्थितोदाहरणमिति तत्त्वम्। स्यादेतत्।
ज्ञानेच्छयोरिव यत्नस्यापि कर्त्तृस्थत्वात्तद्वाचिनः करोतेरपि कर्त्ता न
कर्मवत् स्यादित्याशङ्क्य करोतेर्यत्नार्थत्वमेव नास्तीत्याह। करोतिरि-
ति। एतच्च भूवादिसूत्रे भाष्ये स्पष्टम्। नैतदित्युपलक्षणम्। सकर्मकतैव
तावन्न स्याद्यततइतिवदिति बोध्यम्। एतेनेति। ज्ञानस्य कर्त्तृस्थत्वव्यु-
त्पादनेनेत्यर्थः। अनुव्यवस्यमानइति खण्डनकारप्रयोगः। सकर्मकाणा-
मिति। एतेन सृजस्यात्मानमात्मनेति व्याख्यातम्। तथाहि। आत्मा-
नमात्मना वेत्सीत्यस्य कर्त्तृस्थभावकत्वे ऽपि सृजसीत्यंशे प्रकृत वार्तिके-

---

यत्र धातौ यन्निष्ठांश उद्देश्यः स तत्स्थक्रिय इत्यर्थः। उपरिगमनेति। आङ्पूर्वस्य
रुहेर्गत्यर्थत्वादिति भावः। दिङ्मात्रमिति। अजा ग्रामं नयतीत्येवोदाहरणमित्य-
भिमानः। यततइतिवदिति। न च यत्र कर्माकाङ्क्षा स सकर्मक इति युक्तम्।
शब्दस्वभावकल्पनापेक्षया ऽर्थकल्पनस्य युक्तत्वात्। किं च गच्छतीत्यादीनामकर्म-

नैव निर्वाहः। सृजेः कर्मस्थफलकत्वात्। अन्योन्यमिति। स्यादेतत्। यद्य-पीह संयोगानुकूलक्रिया कर्मत्वकर्तृत्वोपयोगिनी उभयनिष्ठा च तथाऽपि व्यक्तिभेदोऽस्त्येव। अत एवान्यनिष्ठां प्रत्यन्यस्य कर्मत्वम्। अन्यथा उभयोरपि कर्तृत्वमेव स्यान्न तु कर्मत्वम्। इमौ गङ्गां स्पृशत इत्यत्र यथा। एवं स्थिते कर्मत्वोपयोगिनी या क्रिया तया तुल्यक्रियस्य तदीयकर्तुर्विधीयमानः कर्मवद्भाव इह न प्राप्नोत्येव। एवं सृजस्यात्मानमात्मनेत्यत्रापि। तत्किं वार्त्तिकारम्भेणेत्याशङ्क्योदाहरणान्तरमाह। अजेति। नयतेर्द्विकर्मकतया अजारूपस्य कर्मणः कर्तृत्वेन विवक्षायामपि ग्रामरूपेण कर्मणा सकर्मत्वान्नातिदेश इति भावः। स्यादेतत्। कर्मवत्कर्मणेति सूत्रमेव मास्तु न तरां वार्त्तिकम्। प्रयोगास्तु सर्वेऽपि प्रकारान्तरेणैव व्याख्यास्यन्ते। तद्यथा। एकस्यापि वस्तुनोऽवस्थाविशेषादिविशिष्टत्वाविशिष्टत्वाभ्यामौपाधिकभेदमाश्रित्य कर्मत्वं कर्तृत्वञ्च औपदेशिकमेव सिद्धान्तेऽपि क्वचित्स्वीक्रियते। आत्मानमात्मना वेत्ति सृजस्यात्मानमात्मनेति। एवं पच्यते ओदन इत्यत्रापि मुख्ये कर्मण्येव प्रत्ययोऽस्तु मास्तु च निवृत्तप्रेषणता। स्वयमित्यस्यात्मने-

---

कतापत्तिः। तत्र हि क्लेशेवाकाङ्क्षा न तु कमिति अनुभवसिद्धमिति दिक्। यद्यपीहेति। तत्र संयोगः कर्मत्वोपयोगी इतरांशः कर्तृत्वोपयोगीति बोद्धव्यम्। कर्तृत्वमेव स्यादिति। परत्वादित्यादिः। भेदे त्वन्यनिष्ठां प्रत्यन्यस्य कर्मत्वमुपपन्नमिति भावः। एवं स्थिते। संयोगस्य कर्मत्वोपयोगित्वे तदनुकूलव्यापारस्य च कर्तृत्वोपयोगित्वे स्थिते। तदीयकर्तुः। कर्मस्थक्रियायाः। कर्तुः। इह। कर्तृस्थक्रियाकर्त्तरि। अवस्थाविशेषेति। पच्यमानत्वावस्थातत्प्रागवस्थादिरूपेत्यर्थः। न प्राप्नोत्येवेति। स्पृशतेर्गमिवत् कर्तृस्थक्रियत्वादप्राप्तिरित्यपि बोद्धव्यम्। एवं सृजसीति। उक्तरीत्या दोषाभावादिति भावः। किं चात्रोत्पत्तिरूपफलाश्रयत्वतज्जनकक्रियाश्रयत्वयोर्युगपदेकत्र विरुद्धतयोपाधिभेदेन भेदस्यावश्यवाच्यतया मुख्ये कर्त्तर्येवात्र प्रत्ययो न तु कर्मकर्त्तरीत्यपि बोद्धव्यम्। नयतेरिति। अजानिष्ठांशस्योद्देश्यत्वात्कर्मस्थक्रियार्थमिति भावः। सृजस्यात्मानमिति। स्थूलोपाधिविशिष्टस्य

त्यर्थात्। एवञ्च स्थाली पचतीत्यत्राधिकरणइव कृत्स्न एव धात्वर्थः कर्मण्यपि लभ्यतइत्यपरमनुकूलम्। कथन्तर्हि पच्यते ओदनेनेति भावे लकार इति चेत्। मा भूद्भावे कर्मण्येव प्रत्ययो ऽस्तु कर्म चात्मैव। न चैवं भेत्तव्यं कुसूलेन भिन्नमीषद्भेदमिति भावे कृत्यादयो न स्युः। कर्मणि चेदात्मेति विशेष्यानुरोधेन पुंस्त्वं स्यादिति वाच्यम्। सामान्ये नपुंसकसंभवात्। स्वं रूपमित्यस्य विशेष्यसंभवाच्च। आत्मेति विवक्षायान्तु पुल्लिङ्गताया उक्तविवक्षया सूत्रपक्षे ऽपि दुर्वारत्वाच्च। अत्रोच्यते। कर्मवत्सूत्रं प्रत्याचक्षाणेन न दुहस्नुनमामिति प्रतिषेध आरभ्यो न वा। आद्ये शुद्धं कर्मैवास्य विषयः स्यात्। ततो दुह्यते गौर्गोपालेनेत्यादि न सिध्येत् दुग्धे गोपालेनेत्यादि च स्यात्। द्वितीये तु नमते दण्ड इत्यादि न स्यात्। कर्मणि यक्प्रसङ्गात्। कर्त्तरि तङो दुर्लभत्वात्। किं चाचः कर्मकर्त्तरीति चिण्विकल्पो निर्विषय एव स्यात्। कर्मवदित्यतिदेशस्य विषयीभूतः कर्त्ता हि कर्मकर्त्ता। न चासौ तवास्ति। लब्धीत्वा ऽऽत्मनात्मा ऽज्ञायीत्यत्रापि चिण्विकल्पापत्तेश्च। ननु निवृत्तप्रेषणतामाश्रित्य भूतपूर्वे कर्मणि सांप्रतिके कर्त्तरि चिण्विकल्पं ब्रूम इति चेत्। तर्हि यथायथं शबादयः स्युः यक् च न स्यादिति कर्मवत्सूत्रमवश्यारभ्यमेवेति दिक्॥

सृजिय॥ श्यनो निवृत्त्वं ञ्नित्यादिर्नित्यमिति स्वरार्थम्। यकि तु लसार्वधातुकानुदात्तत्वे कृते यक उदात्तत्वं श्रूयेत। यत्तु प्राचा श्रद्धावत्कर्तृकात्सृजेर्यक्चिणौ कर्त्तरीति केचिदित्युक्तं तत्र यगित्यशुद्धम्। आत्मनेपदानुक्तेश्च न्यूनतेति दिक्। भूषाकर्मेति। यत्तु प्राचा कृगॄश्रिञ्भूषार्थेभ्यः सन्नन्ताच्च यक्चिणौ नेत्युक्तन्तत्र कृगॄइति न्यूनम्। किरादीनां सर्वेषाङ्ग्राह्यत्वात्। एतच्चाद्रियते आद्रत इत्युदाहरणा-

---

कर्मत्वं सूक्ष्मोपाधिकस्य कर्तृत्वमत्रेत्यर्थः। कृत्स्नः। विक्लेदनान्तः। उक्तविवक्षया औपाधिकभेदनिबन्धनया॥

भ्यां सूत्रे ध्वनितम् । यदपि चिण्वदिडपि नेति केचिदित्युक्तं तत्र केचिदित्यंशो ऽनुचितः । उक्तार्थस्य भाष्यवार्त्तिकारूढत्वात् । प्रास्नाविष्टेति । चिण्वदिट् । यत्तु प्राचा न दुघेति चिण्वदिटो ऽपि निषेधं मन्वानेनोक्तं न निषेध इति केचिदिति । तन्न । चिण्वदिति हि चिणीव कार्यमतिदिश्यते । न च चिणेनेत्युक्त्या सो ऽतिदेशो निषेद्धुं शक्यते येन चिण्वदिटो निषेधः स्यात् । एवं निषेधाभावस्य न्याय्यत्वे सर्वसम्मतत्वे च केचिदित्युक्तेरनुचितत्वात् । यत्तु वदन्ति । चिणिनिषेधस्य चिणि परे विहितत्वाभावात्तस्मिन्कर्त्तव्ये नास्त्यतिदेश इति । तदतिरभसात् । अतिदेशो न निषिध्यत इति वक्तव्ये निषेधो नातिदिश्यत इत्युक्तेरनुचितत्वात् । अचीकरतेति । चिणि प्रतिषिद्धे णिश्रीति चङ् । यत्तु प्राचा कर्मकर्त्तरि चङ् नेत्युक्त्वा ऽकारयिष्टेत्युदाहृतं तन्निर्मूलत्वादुपेक्ष्यम् । यत्तु परिष्कुर्वन्ति । चङ्विधौ कर्त्तरीति न कर्त्तव्यं सामान्येन चङ् विधीयताम् । तस्य भावकर्मणोः परत्वाच्चिण्बाधको भविष्यति । किं च । चिण्ते पद इत्यतः चिणीति वर्त्तमाने पुनश्चिण्ग्रहणं बाधकबाधनार्थम् । तथा च कर्तृचिण्ग्रहणसामर्थ्यात् चिणैवात्र भाव्यं न तु चङेत्यादि । तदत्यन्तरभसात् । चिणिनिषेधस्यैव प्रक्रान्तत्वेन चिणैवात्र भाव्यमित्युक्तेर्व्याहतत्वात् । किं च । कर्त्तरीति मास्त्वित्यसङ्गतमेव । कर्मणि तच्छब्दभिन्नेष्वतिप्रसक्तेः । न हि तत्रापि चिणस्ति यश्चङं बाधेत । एवञ्च कर्तृचिण्ग्रहणयोः सामर्थ्योपवर्णनमपि कथमुक्तिसम्भवं लभतामित्यास्तान्तावत् । चिण्वदिटो निषेध इति प्राचो भ्रमं खण्डयति । स्यादेवेति । यत्तु परिष्कुर्वन्ति । स्यसिच्सूत्रे चिण्वदिति तृतीयान्ताद्वतेर्विज्ञानाच्चिणिनिषेधो ऽपि

येन चिण्वदिट इति । दुहस्नुनमान्तङानाविस्रेव सिद्धे यक्चिणाविस्रस्य वैयर्थ्यापत्तेश्चेत्यपि बोध्यम् । ध्वनितञ्चेदमार्द्धधातुके इति सूत्रे षाष्ठ भाष्ये । तत्रत्यकैयटस्य तु प्रमादः । तस्मिन् कर्त्तव्ये इति । निषेधे कर्तव्यइत्यर्थः । कर्तृचिण्ग्रहणयो-

चिणः कार्यमित्यतिदिश्यत इति। तन्न। सप्तम्यन्तादेव वतिरिति त-त्रैव वर्णितत्वात्। आत्मनेपदविधौ यो ऽकर्मकस्तमुदाहरति। वि-कुर्वते सैन्धवा इति॥

कुषि॥ न दुहेति सूत्रान्नेत्यनुवर्त्तते तदाह। न यगिति। किन्त्विति। तस्मिन्नेव विषये इति भावः। अनुवृत्तेः फलमाह। यगविषये त्विति। प्रसक्तिपूर्वको हि निषेधः। यत्र तु यको न प्रसक्तिस्तत्र न निषेधः। नापि श्यन्। नापि तत्सन्नियोगशिष्टं परस्मैपदमित्यर्थः। तेन लिङा-शीर्लिङोः स्यादीनाञ्च विषये नेदं सूत्रं प्रवर्त्तत इति फलितम्। श्यन्य-कोर्नुमि विशेषः। कुष्यन्ती जङ्घा। नित्यं नुम्। स्वरे विशेषो ऽप्युक्त ए-व। अत्रेदमवधेयम्। कर्मकर्त्तरि वृत्तिकारादिभिः प्रायेण स्वयमेवेति प्रयुज्यते तदविवक्षितम्। आत्मना करणेनेति वा व्याख्येयम्। न तु कर्त्रेति। तथा सति कर्मण्येव लः स्यात्। स्पष्टञ्चेदं कैयटादौ॥

॥ इति कर्मकर्त्तृप्रक्रिया॥

अभिज्ञा॥ अभिज्ञा स्मृतिः सा उच्यते बोध्यते ऽनेनेति विग्रहः। तदाह। स्मृतिबोधिनीति। स्मरसीत्यत्र वाक्यार्थः कर्म। पश्य मृगो धा-वतीतिवत्। कृष्णेति क्रियाया विशेषणम्। गोकुलाधिकरणकास्मत्क-र्त्तृकभूतानद्यतनवासकर्मकं कृष्णसम्बोध्यकं स्मरणमिति फलितोऽर्थः। वासो लक्षणमिति। प्रसिद्धत्वात्। चारणं लक्ष्यमिति। सहसा बुद्ध्य-

---

रिति। मिलितयोरित्यर्थः। चिण्ग्रहणसामर्थ्यन्तु सूपपादमेवेति बोद्ध्यम्। तत्रैव वर्णितत्वादिति। चिण्निषेधस्य चिणः कार्यत्वेनातिदेशे ऽपि चिण्वदिटो ऽभावः कथमिति चिन्त्यमित्यपि बोद्ध्यमिति कश्चित्॥

नेतीति। न यगितीत्यनुवर्त्तत इति तस्मिन्नेव विषये इति। तेन कतीह कुष्णानाः पादा इत्यत्र ताच्छीलिके चानशि श्यनेव लवाच्यस्यैव कर्त्तुः कर्मवद्भावेन यको वि-षयत्वाभावादिति भावः। कैयटेति। णेरणावितिसूत्रस्थेत्यादिः॥ इति कर्मकर्तृप्रक्रिया॥

वाक्यार्थ इति। गोकुले वत्स्याम इति वाक्यार्थो वासक्रियेत्यर्थः। क्रियाया वि-

नारीद्वात्परिचाय्यमित्यर्थः । अत्यन्तापह्नवइति । अपह्नवो ऽपलापः । नाहमित्यादि । कलिङ्गा नाम जुगुप्सितो देशः । तत्र प्रविश्य त्वया चिरं स्थितमिति कश्चिदुक्तः सन्नाह । नाहङ्कलिङ्गाञ्जगामेति । न केवलमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतङ्गमनमपि इत्यत्यन्तापह्नवः । यदा तु गमनमेवाभियुक्तस्तदेवापलपति न तदत्यन्तापह्नव इति लङेव भवति । प्रष्टव्यः प्रश्न इति । कर्मणि नङ् । आसन्नेति । पञ्चवर्षाभ्यन्तरमासन्नकालम्, पञ्चवर्षातीतन्तु विप्रकृष्टकालमिति वर्णयन्ति ॥

ननौ ॥ पृष्टस्य प्रतिवचनमिति विग्रहः ।

यावत्पुरानिपातयोर्लट् ॥ लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थं निपातग्रहणम् । भुवस्त्वेत्यत्र महाव्याहृतिग्रहणमप्येवमेव । तत्रान्यतरत् शक्यमकर्त्तुम् ॥

विभाषा ॥ ननु कर्हिशब्दो ऽयमनद्यतनविषयः । अनद्यतने र्हिलन्यतरस्यामिति किमो र्हिलव्युत्पादनात् ततश्च तद्योगे लुटैव भाव्यं न तु लृटा । तत्कथमुदाह्रियते कर्हि भोक्ष्यतइति । अत्राहुः । भविष्यत्सामान्ये भोक्ष्यतइति व्युत्पाद्य कर्हिशब्देन सम्बध्यतइति । भोक्तेति । ननु भविष्यत्सामान्ये यो लड् विहितः सो ऽनद्यतने लुटा बाध्येत । तत्कथं विकल्पोदाहृतिः । अत्राहुः । अनद्यतने लुडित्यत्रायं यो-

---

शेषणमिति । सम्बोधनविभक्त्यन्तत्वादिति भावः । परिचाय्यमिति । ज्ञाप्यमित्यर्थः । चायधातो रूपमिदम् । कलिङ्गा नागेति । बहुवचनान्तपाठः । वर्णयन्तीति । हरदत्तादय इति शेषः ॥

तत्कथमिति । न च वासरूपन्यायेन सोपि । सारूप्यात् अनुबन्धकृतवैरूप्यस्याग्रहणात् । आदेशकृतसारूप्यमादाय वासरूपाप्रवृत्तेश्च । अत एव हशश्वतोर्लङ् चेति लिट्समावेशार्थश्चकारः सार्थक इति भावः । भविष्यत्सामान्ये इति । इदं भविष्यति गम्यादय इति सूत्रे भाष्ये स्पष्टम् । बाहुलकात् श्वःपदयोगे लृडिति कृत्यल्युट इति सूत्रे भाष्ये स्पष्टम् । उत्तरमपि योगत्रयमिति । अपिना लिङ् चोर्ध्वमौहूर्त्ति-

गो ऽनुवर्त्तते तेन लुङ्विषये ऽपि पत्ते लट्। एवमुत्तरमपि योगत्रय-न्तत्रानुवर्तते तेन तत्तद्विषये ऽपि लुट् पाक्षिक एव न तु बाधकः ॥

लिप्स्य ॥ पूर्वेण सिद्धे सत्याकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति योन्नमिति ॥

वर्तमा ॥ येनोपाधिनेति। तथा हि। पूङ्यजोः शानन् विहितः स ताभ्यामेव न तु धात्वन्तरात्। तच्छीलादिविशिष्टे कर्तरि अलंपूर्वात्कृञ इष्णुजुक्तः सोपि तस्मिन्नुपाधौ। सत्येवेत्यादि। कदा आगतोसीति। भूतकालेन प्रश्नवाक्यमुदाहरणे भूतकालाभिव्यक्तये। एवं कदा गमिष्यसीत्यत्राप्यूह्यम्। उदाहरणयोरयमेष इति पदाभ्यामागमनाविनाभूतं यद्रूपं प्रस्वेदपरिकरबन्धादियुक्तन्तत्प्रतिनिर्दिश्यते। इदानीमागमनमिति ध्वनयितुन्तेन कदेति प्रश्नं प्रत्यार्थिकमुत्तरं सङ्गच्छते। सामीप्यञ्च द्योतितं भवति। आरोपेणोपपत्तिमाश्रित्य प्रत्याख्यातमिदमाकरे ॥

क्षिप्रव ॥ वचनग्रहणं स्वरूपस्यैव ग्रहणं मा भूदित्येवमर्थम्। तदाह। चिप्रपर्यायइति।

भूते च ॥ अस्योदाहरणानि। उताप्योरित्यतः प्रभृति बोध्यानि। ततः प्राचीनेषूत्तरसूत्रेण विकल्पोक्तेः ॥

किङ्किला ॥ अस्तिभवतीति। त्वत्कर्तृकं शूद्रीगमनमस्तीत्यर्थः ॥

———

कइति चतुर्थस्यापि ग्रहणम्। न च तद्विषये ऽनद्यतनत्वासम्भवः। आगामिन्या रात्रेः पूर्वार्द्धस्य चरममुहूर्तादुपरितनकालस्य तत्त्वसम्भवात्। अत एव तत्सूत्रोदाहरणे आगन्ता वेति वक्ष्यतीति बोद्ध्यम् ॥

पूर्वेणेति। लिप्स्यमानसिद्धौ लिप्सायाा अपि सम्भवादिति भावः ॥

आर्थिकमुत्तरमिति। एतेन कदेति प्रश्ने इदानीमित्युचितम्। किं च गमनस्य भूतत्वादयमेष इत्यप्ययुक्तमित्यपास्तम्। प्रत्याख्यातमाकरे इति। भूतत्वप्रकारकबोधे त्वनभिधानमिति तदाशयः ॥

जातुयदोः ॥ अनवक्लृप्त्यमर्षयोरिति लिङ्लृटोः सिद्धौ वचनमिदं लृटो बाधनार्थन्तद्बाद्द । लृटो ऽपवाद इति ॥

सम्भावनेऽलम् ॥ सम्भावनमिति प्रथमया सप्तम्यन्तं विपरिणम्यते । अलमिति च सप्तम्येति सम्बन्धः । एतच्च गौरवं सिद्धस्य गतिश्चिन्तनीयेति न्यायेनाश्रीयते । अलमिति सम्भावने सिद्धाप्रयोगश्चेदिति सूत्रयितुमुचितम् । अलमिति चेत्किम् । प्रायेण गमिष्यति । हन्तीति पलायतइति । हननं हेतुः । पलायनं हेतुमत् । लक्षणहेत्वोरिति शत्रादेशस्तु न भवति । "देवत्रातो गलो ग्राह इतियोगे च सद्विधि"रिति व्यवस्थितविभाषास्तु पाठात् ॥

इच्छार्थे ॥ ननु कामप्रवेदनइत्युपसंख्यायते एवञ्च कामप्रवेदनेकच्चितीति सूत्रं मास्तु । अनेनैव सिद्धेरिति चेन्मैवम् । यत्रार्थप्रकरणादिनापि कामप्रवेदनङ्गम्यते तदर्थं तदारम्भात् । तर्हि तेनैव सिद्धत्वात्प्रकृतसूत्रं मास्त्विति चेन्न । तेन लिङि सिद्धे ऽपि लोडर्थमस्यारम्भात् । लोटा च लिङो बाधा मा भूदिति लिङ्प्युक्तस्तर्हि लोट् चेत्येवोच्यतामिति चेन्न । लिङो ऽनुकर्षे तत्संबद्धस्य विभाषाग्रहणस्याप्यनुकर्षप्रसङ्गादिति दिक् ॥

लिङ् च ॥ समानकर्तृकेषु तुमुन्सूत्रितः स यथेच्छार्थेषु लिङ्लोटाविति प्राप्तं लोटं बाधते एवं लिङमपि बाधेत । न च वासरूपविधिः ।

---

वचनमिदमिति । लिङ्विधायकमित्यर्थः । बाधनमत्र निवृत्तिः ॥

प्रथमयेति । आवर्त्येत्यादिः । देवत्रात इति । इदं शाच्छोरिति सूत्रे भाष्ये स्पष्टम् ॥

सूत्रं मास्त्विति । अकच्चितीत्यत्रैव कार्यम् । यद्वा इष्टप्रश्नार्थककच्चिद्योगे इच्छार्थोपपदासम्भव एवेति न तस्योपयोगः । कच्चिज्जीवतीत्युक्ते जीवनं प्रष्टुरिष्टमिति प्रतीयते न त्वस्येच्छार्थत्वमिति भावः । इत्येवोच्यतामिति । चेन लिङ् भविष्यतीति भावः । अनुकर्षप्रसङ्गादिति । तस्याभावे ह्यस्य सूत्रस्य प्रत्यासत्त्या यत्र शब्देन कामप्रवेदनावगतिस्तत्रैव प्रवृत्तिः स्यादिति भावः ॥

बाधतइति । परत्वादिति भावः । तुमुन् तु भावे ऽकामप्रवेदने चरितार्थ इति

क्त्व्युट्तुमुन्खलर्थेषु तदभावादिति लिङ् विधीयते ॥

धातुसम्बन्धे ॥ इह धात्वोः सम्बन्धो ऽनुपपन्नः । स्वार्थस्मारणेनोपक्षीणत्वात् । पदार्थसंसर्गः कारकविशिष्टक्रिया वाक्यार्थ इत्यभ्युपगमात् । शाब्दबोधे शब्दो ऽपि भासत इत्यभ्युपगमेपि शब्दस्य स्वार्थं प्रत्येव प्रकारत्वन्न तु शब्दान्तरं प्रति । अथोच्येत । यथा सन्निधौ कर्मत्वं समानकर्तृकत्वञ्च धातोरर्थद्वारकं विशेषणमाश्रितम् । यथा च क्वच्निधौ सुबन्तस्य कर्मत्वन्तथेहापि धात्वोरर्थद्वारकः संबन्ध इति । तदपि न । तथा हि सति परस्परसम्बद्धार्थबोधकानेकधातुप्रयोगे प्रत्यया इति फलितं स्यात् । ततश्च गोमानासीद्भविता वेति न सिध्येत् । न ह्यत्र वर्त्तमानकाले ऽस्तिः प्रयुज्यते न वा प्रयुज्यमानस्य सम्बन्धो ऽस्ति । तस्माद्धातुशब्देन तदर्थो लक्ष्यत इत्यभिप्रेत्याह । धात्वर्थानामिति । विषयबहुत्वापेक्षं बहुवचनम् । एकैकविषयापेक्षायान्तु धात्वर्थयोरिति बोध्यम् । स्यादेतत् । तत्तद्विधिवाक्यैरेव स्वविषये प्रत्ययाः सिद्धास्तत् किमनेन । यदि तु यत्राप्राप्तास्तत्राप्येतत्सूत्रेण प्राप्येरन् तर्हि उपपदोपाधिप्रकृतिप्र-

---

बोद्धव्यम् । बाधेतेति । अतः पुनर्लिङ्विधानम् । अत्रापि सूत्रे समानेत्याद्यनुवर्त्तते इति बोद्धव्यम् । तदभावादिति । परत्वविषये वासरूपन्यायाभावाच्च लोटो ऽप्याप्तिश्चेत्यपि बोद्धव्यम् । तुमुन्पदमनुवर्त्य तुमुन्विषये ऽस्य लिङो विधानादयं भाव एव । तेनेच्छन् करोतीत्यत्रायं लिङ् दुर्वार इत्यपास्तम् । ध्वनितञ्चेदमिच्छार्थेष्विति सूत्रे भाष्ये ॥

उपक्षीणत्वादिति । एवञ्च शब्दानुपस्थित्या तयोर्वाक्यार्थमर्यादया सम्बन्धबोधानुपपत्तिरिति भावः । तदाह । पदार्थसंसर्ग इति । न तु शब्दयोः संसर्गो वाक्यार्थ इति भावः । शब्दो ऽपि भासत इति । शब्दस्य स्वविशेषणकोपस्थितिः कार्यमिति भावः । न तु शब्दान्तरमिति । एवञ्च तयोर्वाक्यार्थविधया सम्बन्धो दुरुपपादः । उत्तरवर्त्तित्वादि चानियतमिति भावः । सम्बन्धो ऽस्तीति । अर्थद्वारकः सम्बन्धो न संभवतीत्यर्थः । विद्यमाने एव देवदत्ते तद्गवीनामतीतत्वस्यानागतत्वस्य वा प्रतीतये ऽयं प्रयोगः । गोधर्मस्य सम्बन्धिन्यारोपादासीद्भवितेत्यतीतानागतव्यपदे-

त्ययार्थानां सङ्करे सति सर्वोपप्लवः स्यादित्याशङ्क्याह। यत्र काले इति। अयं भावः। कालमात्रमनेन बाध्यते न त्वन्यदपि। अल्पबाधेनोपपत्तौ बहुबाधस्यान्याय्यत्वात्। अन्यदेव तर्हि किं चिदेकं बाध्यतामिति चेन्न। किं तदिति विनिगमकाभावात्। कालांशे ऽपि किं विनिगमकमिति चेत्प्रायदर्शनमिति गृहाण। वर्त्तमानसामीप्यइत्यारभ्य हि कालान्यत्वप्रतिपादनमेव प्रायेण दृश्यतइति भावः। स्यादेतत्। "वनानि पश्यन्ययौ।" "निवेदयिष्यतो मनो न विव्यथे" इत्यादिमहाकविप्रयोगेषु दर्शननिवेदनादीनामतीतानामपि लट्लृडादिभिः सम्बन्धो दृश्यते। स च कालबाधे ऽपि समर्थनीय इत्येतदर्थमिदं सूत्रम्। तत्र ययौ विव्यथे इति लिडर्थस्यैव बाधः किन्न स्यात्तत्राह। तिङन्तवाच्येति। प्रधानानुरोधेन गुणस्य नयनं न तु विपरीतमिति भावः। ये तु प्रथमान्तविशेष्यकं बोधं स्वेच्छामात्रेणास्थाय क्रियाप्रधानमाख्यातमिति भाष्यवार्त्तिकनिरुक्तादिमहर्षिवचांस्युपेचन्ते तेषामयमपि दोषः प्रसज्येत। उक्तास्त्वन्ये ऽपि कारकप्रकरणे। स्यादेतत्॥

व्यवहारस्य विषये ऽध्याहृते लक्षिते ऽपि वा।

भूतभाविप्रत्ययार्थाः सम्बध्यन्तां यथायथम्॥

तथा हि। अग्निष्टोमयाजीति भूतएव णिनिः। जनितेत्येतत्समभिव्याहारे तु इत्थं व्यवहरिष्यमाण इत्यध्याहारो ऽस्तु लक्षणा वा। एवङ्गोमानासीदित्यत्रापि। ईदृशव्यवहारविषय आसीदित्यर्थः। अवश्यञ्चैतदभ्युपगन्तव्यम्। अन्यथा हि भाविकृत्यमासीदित्यत्र सूत्ररीत्या भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद्युगपत्प्रयोगो न

---

शस्तत्फलञ्च तन्निष्ठदरिद्रत्वप्रकाशनम्। न च तदस्यास्तीत्यत्र संख्यावद्वर्त्तमानकालो ऽविवक्षित इति वाच्यम्। भाष्यादिविरोधापत्तेः। दण्डिनमानयेत्युक्ते ऽतीतदण्डस्याप्यानयनापत्तेश्च। तस्मात्स प्रयोग एतत्सूत्रप्रवृत्तिं विना दुर्लभ इति भावः। अतीततदर्थप्रतिपादकानान्धातूनामिस्पष्टञ्चेदं भाष्ये। अतीतानामपीति।

स्यात्। तस्माद्यदेतावन्तं कालं भावितया व्यवहृतन्तदिदानीमासीदिति तत्रार्थः। एवं सर्वसामञ्जस्ये किं सूत्रेणेति चेन्नैवम्। अध्याहारलक्षणाप्रयुक्तक्लेशं विनैव च प्रायशो निर्वाहार्थं सूत्रारम्भात्। न हि क्व चिदध्याहारादिकमगत्यापततीति सर्वत्र तत्स्वीकर्त्तुमुचितमिति दिक्॥

क्रियासमभिहारे॥ अत्र लोट इति यदि षष्ठ्यन्तं न तदादेशास्तिङो लभ्येरन्। वा च तध्वमोरिति वाक्यशेषात्। तत्र हि तिङ्विशेषः स्थानित्वेनोपादीयते। तच्च पूर्वत्र लोट्शब्दस्य तिङ्परत्वे सत्येव सङ्गच्छते। अन्यथा सामान्यविहितानान्तिङां हिस्वाभ्यां बाधे सति तध्वमोरिति वाक्यशेषो निर्विषयः स्यात। तथा सति तिङन्तत्वात्पदत्वं लभ्यतइति गुणो ऽप्यस्ति तथाऽपि बहवो ऽत्र दोषाः। तथा हि। तिप्सिप्मिपां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वान्ङित्त्वाभावात्लुनीहीतीत्वन्न स्यात्। ब्रूहीति ब्रुव ईट् स्यात्। तृण्ढीति तृणह इम् न स्यात्। किं च। सर्वेषां तिङान्द्वावपि हिस्वौ पर्यायेण स्याताम्। न तु पदव्यवस्थया। अपि च लोट्शब्दे तिङ्लक्षणाप्यन्याय्या। असञ्जातविरोधितया उपक्रमस्य प्राबल्यात्। वाक्यशेषस्य विषयसप्तम्या सूपपादत्वाच्च। तस्माल्लकारस्यैवादेशौ हिस्वौ न तु तिङामिति सिद्धान्तः। तदाह। तस्य चेत्यादिना। नन्वेवन्द्वयोरपि लः परस्मैपदमिति परस्मैपदसञ्ज्ञा स्यात्। ततश्च परस्मैपदिभ्य एव कर्त्तर्येव द्वावपि स्याताम् अत आह। तौ चेति। अयं भावः। लोटो हिस्वावित्यत्र पूर्ववाक्या-

---

र्थः। अयमपि दोषः। उक्तव्यवस्थाया असिद्धिरूपः। किं सूत्रेणेति। स्पष्टञ्चेदं सूत्रप्रत्याख्यानं भाष्ये। तत्र पक्षे वसन् ददर्शेत्यादौ दर्शनकालिकं वासस्य वर्त्तमानत्वं बुद्धिस्थीकृत्य प्रत्ययः। तत्फलञ्च दर्शने तत्समानकालत्वप्रत्ययः शतृस्थले क्रिययोः समानकालिकत्वप्रतीतेरेवमेव ननु चोत्पततैव वचनलोपं चोदिताः स्म इति सरूपसूत्रस्थभाष्यप्रयोगोपपत्तिरिति बोद्धव्यम्॥

लोडित्यनुवर्त्तते तच्च हिस्वावित्यस्य विशेषणम्। न च हिस्वौ लोटौ भवत इति सामर्थ्यात्तद्धर्माणावित्यर्थः सम्पद्यते। तत्रापि मुख्यलोट्-सम्बन्धिनो धर्मस्यातिदेशो व्यर्थः स्थानिवत्सूत्रेणैव लाभात्। अतः स्थानिवद्भावलब्धलोड्व्यपदेशौ तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इ-त्यतिदिश्यत इति सिद्धमिष्टम्। हिस्वविधानेनेति। यदि हि पुरुषवच-नसञ्ज्ञे अपि स्यातां तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्वाभ्यां भाव्यन्तच्च व्यर्थो विधिरिति भावः॥

समुच्चये ऽन्यतरस्याम्॥ प्रागुक्तमिति। लोट्। तस्य च प्रसिद्धहि-स्वसदृशौ तध्वमोर्विषये वा इत्यर्थः॥

यथाविध्यनु॥ इह पूर्वस्मिन्निति स्पष्टार्थम्। समुच्चये विशेषस्य वक्ष्यमाणत्वात्। यद्यपि संख्याकारकपुरुषकालविशेषाणां हिस्वा-न्तादप्रतीतेस्तदभिव्यक्तिक्षमस्य न्यायत एवानुप्रयोगो लभ्यते। तथा ऽपि यथाविध्यर्थं वचनम्। तेन याहियाहीति यातीत्येवानुप्रयुज्यते न गच्छतीति न करोतीति वा। द्वे वाच्ये इति। वार्त्तिकमिदन्द्वित्व-प्रक्रियायां व्याख्यातम्। यत्तु वदन्ति। अस्य वक्तव्यस्य भाष्ये ऽना-श्रितत्वादिति। तदसत्। इतिशब्दस्त्विति। न च तेनैव व्यवधाना-द्यातीत्यस्यानुप्रयोगत्वं कथमिति वाच्यम्। अनुशब्दस्येहानुवादित्व-मात्रपरत्वात् व्यवहितविपरीतप्रयोगयोरिष्टापत्तेः। एतच्च कैयटहर-दत्तग्रन्थयोः स्फुटम्। एतच्च भाष्यकारीयोदाहरणसूत्रप्रत्याख्याना-

---

व्यर्थो विधिरिति। क्रियासमभिहारे द्वित्वमात्रं विधीयतामिति भावः। न्यायत एवेति। धातुसम्बन्धाधिकाराच्चेत्यपि बोद्ध्यम्। यथाविध्यर्थं वचनमिति। यथाविध्येवेति नियमार्थं वचनमित्यर्थः। पूर्वस्मिन्नेवेति नियमस्तु न। अन्यत्र त-स्या ऽप्राप्त्या नियमवैयर्थ्यापत्तेः। तदसत्वादिति। द्वित्वप्रकरणे भाष्ये पाठात्प्रकृत-सूत्रे ऽपि क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे भवत इति वक्तव्यमि-ति पाठात्। अत एवेदन्द्वित्वं लोडन्तविषयमेवेति भावः। अनुवादित्वेति। पश्चा-

भ्यां निर्णीयते। भ्रममूलकमेवेति। एतेन सक्तून्पिबेत्याद्युदाहृत्य यदुक्तं प्राचा लोडभावपक्षे लडादि पुनः पुनः पिबति पुनः पुनः खादतीत्यभ्यवहरतीत्यादीति। तदपि भ्रममूलकमेवेति ध्वनितम्। तथा हि। पुनः पुनरित्यधिकावापः। पूर्वत्रापि तद्विवक्षायां द्वित्वाद्यापत्तेः। किं च लोडभावं प्रक्रम्य अभ्यवहरतीत्यनुप्रयोगस्य हिस्वान्तयोर्विहितस्योपन्यसनङ्कथं सङ्गच्छताङ्कथं वोपयुज्यताम्। कालकारकसंख्यानां लोटैवाभिव्यक्तत्वादिति दिक्। भ्रम एवेति। पुरुषांशे वचनांशे चेति भावः। एवञ्च पुरीमवस्कन्देत्यादौ तिङन्तत्वं यथायथं परस्मैपदात्मनेपदान्तत्वञ्च सिद्धान्ते स्थितम्। पुरुषवचनसञ्ज्ञे तु न स्त एवेति सर्वेष्टसिद्धिः॥ इति लकारार्थप्रक्रिया॥ इतिश्रीमद्भट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुदीव्याख्यायां प्रौढमनोरमायान्तिङन्तं समाप्तम्॥

श्रीगणेशाय नमः॥

धातोः॥ यद्यपि धातोरेकाचो हलादेरिति सूत्राद्धातोरित्यनुवर्त्ततएव तथा पि आर्द्धधातुकसञ्ज्ञाया आश्रितशब्दव्यापारत्वलाभाय पुनर्धातुग्रहणम्। अन्यथा लूभ्यां पूभ्यामित्यादौ इड्गुणौ स्याताम्। धातोर्विहितत्वेन भ्यामादेरार्द्धधातुकत्वात्। सिद्धान्ते तु धातोरित्येवमविधानान्नेति दिक्। एवुलः प्रागिति। अर्हे कृत्यतृचश्चेति सूत्रे कृत्या

---

त्कथनमात्रेऽर्थः। न लव्यवहितगर्भ इति भावः। सूत्रप्रत्याख्यानेति। यथाविधीति सूत्रप्रत्याख्यानेत्यर्थः। पूर्वत्रा ऽपीति। सक्तून् पिबेत्याद्युदाहरणे ऽपीत्यर्थः। द्वित्वादिति। द्वित्वङ्क्रियासमभिहारे इत्यनेन। आदिना पुनः पुनः शब्दप्रयोग इति बोद्ध्यम्॥

॥ इति लकारार्थप्रक्रिया॥

इति भट्टोजिदीक्षितपौत्रदीक्षितहरिविरचिते लघुशब्दरत्ने तिङन्तं समाप्तम्॥

श्रीसरस्वत्यै नमः॥ इत्यनुवर्त्ततएवेति। शबादीनां सार्वधातुकत्वाद्यर्थमिति

इत्येव वक्तव्ये तृज्ग्रहणं योगापेक्षज्ञापकम् । एवुल्तृचावित्येतस्मा-द्योगात्प्रागेव कृत्या इत्यधिकारस्येति भावः । वृत्तिकारस्तु सूत्रे प्राग् एवुल इति प्रचिक्षेप । केलिमर इति । कृत्या इति बहुवचनेनेदं सूच्यते । ककारो गुणवृद्धिनिषेधार्थः । रेफः स्वरार्थः ॥

कृत्यचः ॥ उपसर्गादित्यनुवर्त्तते । रषाभ्यामिति च । तच्च तात्स्थ्यात्ताच्छब्द्यमित्याह । उपसर्गस्थादिति । यकेति । न चाड्व्यवाये ऽपीति भविष्यतीति वाच्यम् । रषाभ्यां परस्य नस्येत्यंशे निर्दिष्टग्रहणप्रापितस्याव्यवधानस्य व्यवाये ऽपीति योगविभागेन बाधे सति आदग्नेनेत्यादावतिप्रसङ्गे प्राप्ते अट्कुप्वाङ्नुम्भिरित्यंशो नियमार्थः । आङिति पदव्यवायेपीति निषेधं बाधितुमिति स्थितम् । इह तु एयन्तकृतोरव्यवधानस्यापेक्षा कथमङ्ग्रहणेन वार्येतेति भावः ॥

हलश्चेजुपधात् ॥ इजुपधस्य हलन्तत्वाव्यभिचारात् हल इत्यनेन तदादित्वं लच्यते इत्याह । हलादेरिति ॥

इजादेः सनुमः ॥ इह हल इत्यनुवृत्तं तदन्तपरं न तु तदादिपरं इजादेर्हलादित्वासम्भवात्तदाह । हलन्तादिति । विहित इति । यदि तु विहितविशेषणं न व्याख्यायेत तर्हि नियमार्थता न लभ्येत । णिज्लोपे कृते हलन्तात् परत्वेन णेर्विभाषेति विकल्पं बाधितुं विधेः सम्भवादिति भावः । नुम्ग्रहणमिति । तेनास्य प्रेन्वनमित्यादौ विध्यर्थता ऽस्त्विति न शङ्क्यमिति भावः ॥

---

भावः । विहितत्वेनेति । भविष्यति इत्यादौ तिबादेः सार्वधातुकत्वाय विहितविशेषणं तदिति भावः । तेन लसार्वधातुकानुदात्तत्वसिद्धिः । इति दिगिति । शमित्यतोऽरिति सूत्रात्तदनुवृत्त्या सिद्धे स्पष्टार्थ एवायमिति दिगर्थः । कृत्या इत्यधिकारस्येति । अत एव ण्वुल्तृचोस्तव्यदादिषु पाठो नाकारि स्पष्टञ्चेदं भाष्ये ॥

बाधे सतीति । येननाप्राप्तिन्यायेनेति भावः । भाष्ये ण्यन्तात्परो यः कृदित्यंशो ऽप्यड्व्यवाये इत्यस्य सम्बन्धमाश्रित्य यका व्यवधाने समाहितम् ॥

तदादित्वमिति । तद्घानित्यर्थः । गुरुभूतक्लेशसाध्यनियमार्थत्वे च लक्ष्यानुसारिभा-

वा नित्य ॥ कृतिपरइति। तिङन्तोदाहरणन्तु प्राचः प्रामादिकमित्यवोचाम। ण्यन्तभादीनामिति। ण्यन्तस्य प्रकृत्यन्तरत्वादप्राप्ते वचनम्। यत्तु वदन्ति। हेरचङीति पर्युदासेन प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति ज्ञापनादेतत्सिद्धमिति। तद्भसत्। ज्ञापनन्तु कुत्वमात्रविषयकमिति भाष्यादौ सिद्धान्तितत्वात् ॥

अचो यत् ॥ शक्यमकर्त्तुमिति। यत्तु वदन्ति। अजन्तभूतपूर्वादपि यथा स्यादित्येतदर्थमज्ग्रहणान्तेन दित्सयन्धित्स्यम्, इत्यत्र यति कृते यतो ऽनाव इत्याद्युदात्तत्वं सिध्यतीति। तदापाततः। आर्द्धधातुके विवक्षिते यद्यतो लोपः स्यात्तदा हीदं सम्भवेत्। लोपस्त्वार्द्धधातुके परएवोचितः। अन्यथा परनिमित्तत्वाभावेन स्थानिवत्त्वाभावे पणयतीत्यादौ उपधावृद्धिप्रसङ्गादिति भावः। तकिशसीति। शसु हिंसायाम्। यत्तु केचिच्छंसिं सानुस्वारं पठन्ति। तन्न। ईडवन्दवृशंसदुहां ण्यत इति सूत्रविरोधात्। नानुबन्धेति। अनुबन्धानामनेकान्तत्वात्। एकान्तत्वपक्षे ऽपि ददातिदधात्योर्विभाषेति विभाषाग्रहणाल्लिङ्गादिति भावः। आनम्यो गौरिति। समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरः। तत्र ण्यति तित्स्वरो ऽवतिष्ठते यति तु यतो ऽनाव

---

व्यमेव मानम् ॥

कुत्वमात्रेति। अत एव कार्यान्तराणि प्राकृतानि ण्यन्ते न भवन्ति भूतपूर्वादपीति। आर्द्धधातुके विवक्षिते ऽकारलोप इति भावः। स्पष्टञ्चेदं भाष्ये। इति भाव इति। यद्यपि प्रत्ययः परश्चेति शास्त्रादार्धधातुकस्य परत्वेनैव विवक्षितपरबुद्धिनिमित्तत्वेन परनिमित्तमस्त्येव स्पष्टञ्चेदन्द्रिगोर्लुगनपत्यइत्यत्राकरे तथापि आर्धधातुके इत्यादेः परसप्तमीत्वे इदं मूलमिति तत्त्वम्। दरिद्रातेरातो लोपे दरिद्र्य इत्यत्र यण्ण्यतोर्न विशेषः। यदन्तस्य द्व्यच्कत्वाभावात् ॥

ददातिदधात्योरिति। अनेन हि णे प्राप्ते शो विधीयते अनुबन्धानेकान्तत्वे तु नेदं सिध्यति। णशादीनां वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने एवेत्सञ्ज्ञाप्रवृत्त्योपदेशकालोत्तरकालमेव प्रवृत्तेरुपदेशे तत्सन्निधानकृतासारूप्यस्य दुर्वारत्वात् ॥

इत्याद्युदात्तः प्रसज्येत ॥

उपात्प्रशंसायाम् ॥ प्रशंसेह गम्यमानतया विशेषणम् । धात्वर्थस्तु प्राप्तिरेव तेन यस्य यस्माद्वा प्राप्तिः प्रशंसाहेतुः तद्विहोदाहरणम् । विपरीतन्तु प्रत्युदाहरणम् । अत्रापि यादौ प्रत्यये विवक्षितइति पूर्ववदेव सूत्रार्थः । तेन ण्यति कृते अन्तस्वरितत्वम् । प्राचा तु यति परइति व्याख्यातम् । तदाकरविरोधादुपेक्ष्यम् ॥

गदमद ॥ व्यत्ययेन पञ्चम्यर्थे सप्तमी । एभ्यो ऽनुपसर्गेभ्यो यत्स्यात् । अनुपसर्गे किम् । "न नैषधे कार्यमिदं निगाद्यम्" । यमेरिति । पूर्वेणैव सिद्धेरिति भावः । नियमे साधुरिति । यमः समुपनिविषु चेति वैकल्पिके अपि कृते तद्धितो यदित्यर्थः । यद्यप्यस्मिन्पक्षे कृत्यानां कर्त्तरीत्यस्याप्रवृत्तः कर्त्तरि तृतीया दुर्लभा कर्तृकर्मणोः कृतीति षष्ठ्या दुर्वारत्वात्तथापि त्वयेति तेनेति च करणत्वविवक्षया तृतीया बोध्या । यद्वा । यमो ऽपरिवेषणे मिदिति मतमाश्रित्य पर्यवसितं नियमयन्नित्यादाविव मित्त्वं स्वीकृत्य ण्यन्ताद्यद्बोध्यः । अथ वा ण्यत्येव सञ्ज्ञापूर्वकत्वान्न वृद्धिरिति दिक् । एवञ्च वार्त्तिकप्रयोगो ऽप्यन्यथासिद्धतया निपूर्वाण्ण्यतञ्ज्ञापयितुं न प्रभवतीति भावः । स्तुत्यर्हमिति । यद्यपि पणितव्यशब्दो ऽर्थद्वयसा-

---

पूर्वेणेति । पोरदुपधादित्यनेन । तद्धित इति । तत्र साधुरिति प्राग्घितीय इत्यर्थः । षष्ठ्या दुर्वारत्वादिति । अवन्तत्वादिति भावः । न चात्र तद्धिताधिक्यात्कथं प्राप्तिः कृदन्तशक्त्योपस्थितार्थनिरूपितकर्तृत्वसत्त्वेनात्र प्राप्तेः । कृतपूर्वीत्यत्र तु नैवम् । तद्घटककृदन्तस्य स्वातन्त्र्येण क्वापि प्रयोगाभावेन प्रक्रियादशायामपि कृदन्तशक्त्योपस्थितार्थकर्मत्वाभावात् । तद्धिताधिक्ये इत्यस्यापि तद्धितान्तशक्तिमात्रसहकारेणोपस्थितक्रियाकर्तृकर्मणोर्नेत्यर्थ इति भावः । करणत्वविवक्षयेति । कर्त्तुः करणत्वविवक्षयेत्यर्थः । मतमाश्रित्येत्यनेन तन्मतस्य पूर्वोक्तस्वरीत्या ऽयुक्तत्वं सूचितम् । तेनास्य परिहारस्यायुक्तत्वं सूचितम् । इति दिगिति । अत्र पक्षे कृत्यानामिति

धारणस्तथाऽपि पण्यशब्दस्य व्यवहर्त्तव्ये एव रूढत्वात् अर्थनियमो लभ्यते। एतदर्थमेव हि निपातनमाश्रितम्। यदाहुः॥

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च।

अनुबन्धविकाराणां रूढ्यर्थञ्च निपातनम्॥ इति।

शतेनेति। शतशब्दोऽनियतपरः। कन्याया वरणे वरयितॄणां नियमो नास्तीत्यर्थः। वृङ इति। अनिरोधरूपस्य सम्भक्तिवाचिन्ये-व सौष्ठवादिदं लभ्यते इत्याहुः। अनिरोधेष्वित्यस्यानुक्तौ तु वृञो ऽपि स्यादिति ध्वनयन्नाह। वृत्येति। एतिस्तुशास्वृदृत्यादिना वृञः क्यप्। इह सूत्रे अवद्यादीनि निर्विभक्तिकानि न तु द्वन्द्वः। तेन वर्ये-ति स्त्रियामेव निपात्यते। अस्त्रियान्तु वृञो ऋदुपधोरिति ण्यत्। वार्या ऋत्विज इति वृत्तिकारमतम्। न चात्र एतिस्त्वति क्यप् शङ्क्यः। तत्र वृञ एव ग्रहणं न तु वृङ इति सिद्धान्तितत्वात्। भट्टिस्तु द्वन्द्वाञ्जसा निर्देशं मन्वानः पुंल्लिङ्गेऽपि यतं प्रायुङ्क्त। "सुग्रीवो मम वर्योसा"-विति॥

उपसर्या॥ प्रजननं प्रजनः। गर्भग्रहणम्। कालः प्राप्तोस्याः काल्या। समयस्तदस्य प्राप्तमिति वर्त्तमाने कालाद्यदिति यत्। अध्याहार्यमिति। यदि तु अजर्यशब्दस्यैव योगरूढिराश्रीयेत तर्हि भट्टिप्रयोगे पुनरुक्तं स्यादिति भावः। मृगैरजर्यमिति कालिदासप्रयोगे ऽजर्यशब्दस्य जर-णाभावविशिष्टसङ्गते ऽजहल्लक्षणापि सुवचा। सर्वथापि सङ्गतत्वेन रूपेण वाच्यता नास्तीत्यत्र तात्पर्यम्। अत एव भाष्ये सङ्गतञ्चेत्कर्तृ इति व्याख्यातमिति भावः। भावग्रहणमुत्तरार्थमिति भाष्यस्य स्वरस-मनुरुन्धानानां मतमाह। कर्मणीति॥

---

सूत्रे विभक्तेन कर्त्तरि चेत्यनेनानुभयप्राप्तिविषयेण विकल्पात्तृतीयेति बोध्यम्। न प्रभवतीति। सञ्ज्ञापूर्वकेत्यस्यासत्त्वे ऽपि प्रथमोपस्थितप्रत्ययबाधापेक्षया पश्चात्प्राप्तवृद्धिबाध एव भाष्यप्रयोगान्न्याय्य इति बोद्धव्यम्। नियमो नास्तीति। दाने तु नि-

एतिस्तु ॥ एभ्य इति । सुप्यनुपसर्गे भावइति सर्वं निवृत्तमिति भावः । इत्य इति । कथन्तर्हि उपेयमिति । ईङो दैवादिकात् यत् । न वृङ इति । ईडवन्देति ज्ञापकात् । तत्र हि ईडिवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङो ग्रहणमिति भावः । परस्यापीति । ओरावश्यक इति प्राप्तस्य । आङ्पूर्वादिति । न चैवमाज्यङ्किमासीदित्यत्रावग्रहः स्यादिति वाच्यम् । ऋत्विजं पूर्वेभिरित्यादाविव सत्यप्यवान्तरपदत्वे संप्रदायानुरोधेन क्व चित्तदकरणात् । यत्तु प्राचा जगताविव्यस्याज्यमुक्तं तद्भाष्यविरोधादर्थानुगमाच्चोपेक्ष्यम् । अनित्येति । इह च तपरकरणं लिङ्गमिति भावः ॥

ई च खनः । ह्रस्वः सुपठ इति । दीर्घं पठतः सूत्रकृतस्त्वयमाशयः । इ इ इति प्रश्लेषेण द्वितीय इकारो ये विभाषेत्यात्वं बाधितुं विधीयते । अन्यथा ये विभाषेत्यस्यावकाशः । खायते खन्यते । इत्वस्यावकाशः । यस्मिन्पक्षे आत्वं नास्ति । आत्वपक्षे तूभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात् । ये विभाषेत्यत्र हि ये इति विषयसप्तमी तेन यकारादौ बुद्धिस्थे एव प्राप्तमात्वमन्तरङ्गम् । इकारस्तु क्यपा सह विधानाद्बहिरङ्ग इति । दीर्घं प्रत्याचक्षाणस्य भाष्यकृतस्त्वयं भावः । इत्वमन्तरङ्गम् । क्यप्सन्नियोगशिष्टत्वात् । आत्वन्तु बहिरङ्गम् । यइति परसप्तम्याश्रयणात् । एवञ्च इत्वेनात्वबाधो न्याय्य एव । न च ह्रस्वादे-

---

यम एवेति भावः । सम्भक्तिर्वरणं याच्ञारूपम् । वृञ् वरणे इत्यत्र वरणं स्वीकारस्तत्र निरोध एवेति भावः ॥

सर्वं निवृत्तमिति । भाष्ये क्यब्विधौ वृञो ग्रहणं कर्त्तव्यम् । इह मा भूत् वार्या ऋत्विज इति कर्मणि निरुपपदोदाहरणादिति भावः । ईङ इति । अत एव वृद्धिर्न । अत्र च प्रसिद्धत्वादिण एव ग्रहणन्तेनाध्येयमिति सिद्धम् । आत्मनेपदिन इति । आत्मनेपद्यकारवद्धिकरणप्रकृतिभूते ईडवन्दसाहचर्येण तादृशात्मनेपदिन एवं क्र्यादेर्वृङो वृशब्देन ग्रहणम् । एतेन पूर्वोत्तरसाहचर्यादीडिति सूत्रे उभयपदिनो ग्रहणमित्यपास्तम् । पूर्वोत्तरयोरेकैकस्योभयपदित्वाभावाच्चेति भावः । विषयसप्तमीति ।

मो ह्रस्वस्य पितीति तुक् प्रसङ्गः। आङ्गुणस्य षत्वतुकोरित्यसिद्धत्वादि-ति वाच्यम्। पदान्तपदाद्योरेकादेशो ऽसिद्धो न त्वन्यो ऽपीति सिद्धा-न्तात्। अन्यथा वृत्रे च्छत्रमित्यत्र ह्रस्वाश्रयो नित्यस्तुक् स्यात्। इष्य-ते तु दीर्घात्पदान्ताद्वेति वैकल्पिक इति दिक्। विभक्तेः क्यपो ऽप्र-सङ्गे बीजमाह। तदनुबन्धेति॥

राजसूय॥ यद्वेति। राजानञ्चोपन्तीत्यादौ तथा दर्शनादिति भावः। रूढ्यर्थं निपातनन्तेनाद्यपक्षे ऽश्वमेधादौ द्वितीये ज्योतिष्टोमादौ च नातिप्रसङ्गः। उत्वमिति। तस्य रपरत्वाद्धलि चेति दीर्घ इति भावः। नित्यङ्क्यबिति। तेन यत्प्रत्ययो नेति भावः।

भिद्योद्ध्यौ॥ क्यबिति। कर्त्तरीति शेषः। पापमिति वेति। तपो न कल्को ऽध्ययनन्न कल्क इत्युपक्रम्य तान्येव भावोपहतानि कल्क इति भारते दर्शनात्। कल्कः पापाशये पापे दम्भे विट्किट्टयोरपीति को शाच्चेति भावः। वक्तव्यमिति। वृत्तिकृता तु सूत्रे प्रक्षिप्तम्। क्यप उदाहरणन्तु। मत्तस्य न प्रतिगृह्यम्। तस्मान्नापिगृह्यम्। लोके त्विति। ण्यदेवेति भावः॥

पदास्वैरि॥ अवगृह्यमिति। अवग्रहो विच्छेदः। अवान्तरपदस-ञ्ज्ञां सूचयितुं पदपाठकाले किञ्चित्कालमवसानम्। प्रग्रहस्तु प्रकृति-भावाद्यणाद्यभावे परस्परमचोरसन्निकर्षः। अवगृह्यप्रगृह्यशब्दौ प्रा-तिशाख्यादिषु पदविशेषपरतया निरूढौ। गृह्यका इति। गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते इत्यमरः। पत्रं वाहनमिति। पतन्त्य-नेनेत्यर्थे दाम्नीशसेत्यादिना करणे ष्ट्रन्। युग्यो गौरिति। यद्यपि त-द्वहति रथयुगप्रासङ्गमिति तद्धितेनापीदं सिध्यति, तथापि ण्यतं व्या-

---

इद्भ्वाचः कर्तृयकीति सूत्रे भाष्ये स्पष्टम्। परसप्तम्याश्रयणादिति। वस्तुतो विषयसप्तमीत्वे ऽपि ये विभाषेत्यत्र जनादिसाहचर्येण यादिप्रत्ययोत्पत्तिकालेना-न्तस्यनेरेव तेनात्वविधानेनात्र तदप्राप्तिरिति बोद्धव्यम्।

वर्त्तयितुं सूत्रम्। अन्यथा हि योग्यो गौरिति स्यात्। वृद्धौ सत्यामिति। तेन अमावास्याया वेति विहितस्तद्धितो ह्रस्वपक्षे ऽपि सिध्यति। यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमाश्रीयते तदा यता मुक्ते ऽधिकरणे ण्यदेव तावद् दुर्लभः। अथापि वाकुलकाल्लभ्येत एवमपि ण्यदन्तमनूद्य विहितस्तद्धितो यदन्तान्न स्यादिति दिक्॥

रुहलोः॥ पञ्चम्यर्थे षष्ठी। रु इति न अर्त्तेर्ग्रहणं किं तु वर्णमात्रस्य हला साहचर्यात् परं कार्यमिति निर्देशात्। ईडवन्देत्यादिलिङ्गाच्च। लपिदभिभ्याञ्चेति। पोरदुपधादिति प्राप्तस्य यतो ऽपवादः। जयादित्यस्तु आसुयुवपीति सूत्रे लपिं रपेरुपरि प्रक्षिप्य अनुक्तसमुच्चयार्थेन चकारेण दभेः सङ्ग्रहमाह। तत्र वैरूप्यं निर्बीजम्। भाष्यादिविरोधश्च स्पष्ट एवेति बोध्यम्। स्त्रीकार्य इति। चुलुम्पादिवदिति भावः। तथा च प्रयुज्यते न ता नशन्ति न दभाति तस्करः। विष्णुर्गोपा अदाभ्य इत्यादि॥

ओरावश्यके॥ अवश्यंभाव आवश्यकम्। मनोज्ञादित्वाद्वुञ्। अव्ययानां भमात्रे इति टिलोपः। लाव्यमिति। क्व चित्तु द्योतितार्थस्यापि प्रयोगो दृश्यते। लाघवं प्रत्यनादरात्। अवश्यलाव्यम्। अत्रोपपदसमासासम्भवे ऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः। यु मिश्रणे इति। युञ् बन्धनइति तु न गृह्यते। सानुबन्धकत्वादिति भावः।

---

यत्प्रत्ययो नेति। वदःसूपीति चकारप्राप्त इत्यर्थः। तद्धितेनापीति। यतेति शेषः। इति दिगिति। उपपदसमासतत्प्रयुक्तस्वरासिद्धिर्दिगर्थः। ममत्वमेति लुप्तसप्तमीनिर्देशात्तत्सिद्धामति बोद्ध्यम्। किं चामावस्येति सहत्वं यतो ऽनाव इत्याद्युदात्तं स्यादन्तस्वरितं लिष्यते इति बोद्ध्यम्।

लिङ्गाच्चेति। ण्यदन्तवृधातोस्तितृस्वरविधानं लिङ्गमिति भावः। भाष्यादीति। तत्रोभयविषयवार्त्तिकस्यैव पाठादिति भावः।

उपपदसमासासम्भवे ऽपीति। उपपदत्वाभावादिति भावः। तत एव कृदुत्तरपदप्रकृतिस्वरोपि बोद्ध्यः। सानुबन्धकत्वादिति। न चानया लुग्विकरणपरिभाषया

वैश्यकुलादेरिति । दक्षिणाग्नेर्हि योनिर्विकल्प्यते वैश्यकुलादित्तवतः भ्राष्ट्राद्वा गार्हपत्याद्वेति ॥

प्रणा॥ कर्मव्यापार इति । वस्तुतस्तु संमतिः प्रीतिः । सा यस्मिन् चौ-रादौ नास्ति लोकानां सो ऽसंमतिः । यद्वा संमतिर्यस्य विषयेषु ना-स्ति स विरक्तो ऽसंमतिः। तन्त्रेणार्थद्वयमपि गृह्यते ॥

पाय्यसान्नाय्य॥ मीयतेऽनेनेति । माङः करणे ण्यत् । मेयमन्यत् । धीयते ऽनयेति । अत्र न सर्वा सामिधेनी धाय्या किं तु समिध्यमा-नवतीं समिद्धवतीञ्चान्तरेण विकृतिषु प्रक्षिप्यमाणा पृथुपाजा अमर्त्य इत्यादिकैव । सूत्रे सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थं तथा चासामिधेन्यामपि दृश्यते । धाय्याः शंसन्तीति । न हि शस्त्रेण समि-त् प्रक्षिप्यते ॥

क्रतौ॥ कुण्डपाय्य इति । पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च । न तु ण्यत् । तित्स्वरितप्रसङ्गात् । यतो ऽनाव इत्याद्युदात्तः कृदुत्तर-पदप्रकृतिस्वरः । तथा च प्रयुज्यते । प्रणयात्कुण्डपाय्य इति । संपूर्वा-च्चिनोतेस्तु ण्यदायौ निपात्येते । क्रतौ किम् । कुण्डपानं सञ्चेयः ॥

अग्नौ परि॥ अग्निरिह न ज्वलनः किं तु तद्धारणार्थमिष्टकाच-यनेन निर्मितस्थलम् । तस्मिन्नभिधेये परिपूर्वाच्चिनोतेर्ण्यत् । आ-यादेशश्च। संपूर्वस्य वहेस्तु संप्रसारणं दीर्घश्च निपात्यते। चित्यो ऽग्नि-रिति । चिनोतेः कर्मणि क्यप् यतो ऽपवादः । इह सूत्रे अग्नावित्यनुव-र्त्तते । तच्च चित्याशब्दस्यैव विशेषणं न द्वितीयस्य । तस्य भावार्थकत्वे-

---

चोभयोर्ग्रहणापत्तिरिति वाच्यम् । उदिश्श्रयतियौतीत्यादौ प्रसिद्धत्वेन यौतेरेव ग्रहणमित्याशयात् । योनिरिति । उत्पत्तिस्थानमित्यर्थः ।

सा यस्मिन्निति । असंमतिरिति बहुव्रीहिरिति भावः ।

समिध्यमानवतीसमिद्धवत्यौ ऋग्विशेषौ । प्रक्षिप्यमाणेति । प्रक्षिप्यमाणस-मित्करणीभूतेत्यर्थः ।

नाग्निवाचकत्वासम्भवात्। अग्नेरित्यत्र तु चेयमित्येव। क्तल्युडिति। हसितं हसनं छात्रस्य। अत्र क्तल्युटोर्विषये नपुंसके भावे घञ् न। इच्छति भोक्तुम्। अत्र इच्छार्थेषु लिङ्लोटाविति लोपन। लिङ् तु भवत्येव। लिङ् चेति वचनात्। ईषत्पानः। आतो युच्। अत्र खल् न॥

शक्ति लिङ् च॥ लाघवादिति। इह हि चकारमात्रेण वासरूपवि-धेरनित्यता ज्ञापयितुं शक्या। इतरत्र तु कृत्यग्रहणेन कृत्यतृज्ग्रहणे-न च ज्ञापने गौरवमिति भावः॥ इति कृत्यप्रक्रिया॥

ण्वुल्तृचौ॥ चकारः तुश्छन्दसि तुरिष्ठेमेयस्सु इत्यत्र सामान्य-ग्रहणाविघातार्थः। नंष्टा नंशितेति। रधादिभ्यश्चेति वेट्। प्रक्रन्तेति। प्रोपाभ्यां समर्थाभ्यामिति क्रमेरात्मनेपदविषयता। अल्लोपश्चेति। यत्तु प्राचोक्तं न धातुलोपे इत्यत्र इक इत्यनुवृत्तेः पापाचक इति। त-न्न। यङन्ते अल्लोपस्य स्थानिवत्त्वात् यङ्लुगन्ते तु न धातुलोपे इति निषेधस्याप्रसक्तत्वादिति प्रागेव प्रपञ्चितम्। जारभरेति। जारं बि-भर्त्तीति विग्रहः। श्वपाकोऽपीति। कर्मण्यणपि पक्षे भवतीति भावः। चेक्रिय इति। संयोगपूर्वकत्वान्न यण्। लोलुव इति। उवङ्। यण् तु न। ओः सुपीत्युक्तेरिह च सुबभावात्॥

पाघ्राध्मा॥ इह सूत्रे उपसर्गइति के चिदनुवर्त्तयन्ति। तद्धरनाम-संमतम्। तथा च श्रीहर्षः। फलानि धूमस्य धयानिति। श्रूयते च यदा पश्यः पश्यते रुक्मवर्णमिति॥

---

निमितस्थलमिति। अभिन्त्वारोपादिति भावः। अत्रेच्छार्थेष्विति। लिङ् चेति विशेषविधानेन लोटो बाधे सिद्धेऽत्र तुमुन्ग्रहणं चिन्त्यप्रत्ययोजनमित्याहुः। अनित्यता ज्ञापयितुं शक्येति। तज्ज्ञापने च शकि लिङो विषये तदभावशङ्कावारणाय चः सार्थक इति भावः। प्रैषातिसर्गादिसूत्रविषये तु अप्रवृत्तेः क्वाचित्कत्वाद्वासरूपप्रवृत्तिरिति तात्पर्यम्। कृत्यतृज्ग्रहणेन चेति। ण्वुलः प्राक् कृत्या इत्यधिकार इत्यर्थस्तु व्या-ख्यानेनापि सुलभ इति भावः। इति कृत्यप्रक्रिया॥

अनुपसर्गाल्लिम्प ॥ इह लिम्पविन्देति भाविना नुमा सहितौ निर्दिष्टौ। तेन लाभार्थस्यैव विन्देर्ग्रहणं न तु सत्ताद्यर्थानाम्। धारय इति। धृञ् धारणे। धृङ् अवस्थाने। ण्यन्तयोर्द्वयोरपि ग्रहणम्। अथ कथं न मह्यमन्योत्तरधारयस्य ते इति श्रीहर्षः। परत्वाद्धि कर्मण्यणा भाव्यं सूत्रधारादिषु यथा। तथा च वार्त्तिकम्। अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेति। सत्यम्। कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति। वेदय इति। विद चेतनाख्यानादिषु। चुरादिः। ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः। इहोदाहरणेषु लिपिविदिभ्यान्तुदादिभ्यः शः। शे मुचादीनामिति नुम्। धार्यादिभ्यः शब्गुणायादेशौ। अरविन्दमिति। चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः। तदाकाराणि। दलानि तत्सादृश्यादराः। तानि विन्दति लभते इत्यर्थे कर्मण्यणो बाधनायेदम् ॥

ददातिदधात्योर्विभाषा ॥ ननु दद दाने दध धारणे आभ्यामचि ददो दध इति दाधाभ्यां णे दायो धाय इति च सिद्धम्। सत्यम्। स्वरार्थमिदं सूत्रम्। अददः। अदधः। इह हि अव्ययपूर्वपदप्रकृतिस्वर इष्यते। अजन्तत्वे तु अच्काविति अन्तोदात्तत्वं स्यात् ॥

श्याद्व्यधा ॥ अनुपसर्गादिति निवृत्तम्। उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। एवञ्च तत्सम्बद्धं विभाषाग्रहणमपि निवर्त्तते तदाह। नित्यमिति। श्यैङ इति। इह हि सूत्रे श्या आदिति प्रश्लेषः। न तु शीङो यणादेशेन तथा। अततः अच्छब्दान्तानां वा पतिप्रभृतीनामकारान्तानां वा न ग्रहणं व्याख्यानादिति भावः। स्रु गताविति। प्राचा तु सूत्रे आस्रुसंस्रिवति तालव्यं पठित्वा शृणोतेरुदाहृतन्तदनाकरम्। तथा च प्रयुज्यते। अनास्रवा वः किमहमिति। अमरोऽप्याह। वच-

---

इह हीति। शी आत् श्यादिति वा न च्छेद इति भावः।

ने स्थित आस्रवः । दाव इति । दवदावौ वनारण्यवह्नी इत्यमरः ॥

गेहे कः ॥ गेहइति प्रत्ययार्थस्य कर्तुर्विशेषणम् । नोपपदम् । गृह-पतिना संयुक्ते ञ्य इति निर्देशादित्यभिप्रेत्याह । गेहे कर्त्तरीति । एतत्सूत्रं शक्यमकर्त्तुम् । गृह ग्रहणे इति भ्वादेरिगुपधलक्षणे कप्र-त्यये कृते गृहशब्दस्य सिद्धेः । भाष्यमते त्विति । तथा च षष्ठे रजकर-जनरजःसूपसंख्यानमिति वार्त्तिकं प्रत्याख्यातुं भाष्यकृतोक्तङ्कित एते औणादिका इति ॥

गः ष्वकन् ॥ गामादाग्रहणेष्वविशेषे ऽपि गै शब्दइति अयमेवेह गृह्यते । न तु गाङ् गताविति । गायकशब्दस्य गायत्यर्थविषयकशि-ल्पिन्येव निरूढत्वादित्याकरः । तदाह । गायतेरिति । जहात्युदक-मिति । उदकादधिकवर्द्धनात् ॥

प्रसृल्वः ॥ लच्यतइति । भूयःसहचारात् । यो हि यां क्रियां पुनः पु-नरधितिष्ठति स तत्र प्रायेण कौशलं लभते नेन सकृदपि यः सुष्ठु क-रोति तत्र वुन् । बहुशो ऽपि दुष्टङ्कुर्वति नेति भावः ॥

कर्मण्यण् ॥ कुम्भकार इति । अणि कृते कर्तृकर्मणोः कृतीति ष-ष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः ॥

ह्वावामश्च ॥ कापवाद इति । आतो ऽनुपसर्गे क इति प्राप्तिर्बोद्ध्या । माङ्मेङोरिह ग्रहणम् । न तु मा मानइत्यस्य अकर्मकत्वात् । गो-सन्दाय इति । अण् युक् । ब्रह्मज्य इति । कप्रत्यये हि संप्रसारणे पूर्व-

---

वार्त्तिकमिति । नलोपविधायकमित्यर्थः । भाष्यकृतोक्तमिति । एवन्ततो ण्वुल्ल्यु-टोरनभिधानं बोद्ध्यम् ।

शिल्पिनीति । तद्विषयकप्रशस्तशिल्पवति गानकर्त्तरीत्यर्थः । प्राप्तिर्बोद्ध्येति । सोपसर्गे तु पूर्वेणैव सिद्धम् । न च तत्रापि सुपीति योगविभागात्कप्राप्तिः । आतो नुपेति सूत्रारम्भसामर्थ्येन तस्य कर्मण्युपपदे ऽप्रवृत्तेरिति भावः । अण् युगिति । सुपीति को नोक्तयुक्तेः । यद्वा सत्सू इति सूत्रे उपसर्गे ऽपीत्यनेनात्र प्रकरणे सुप्युप-

रूपत्वे च कृते इयङि ब्रह्मजिय इति स्यात्। न च अनेकाच इति यण्। अङ्गस्यैकाच्त्वात्। आरम्भसामर्थ्यादिति। कर्त्तरि पूर्वेणैव सिद्धेरिह कर्त्तरि कृदिति न सम्बद्ध्यते। अनिर्दिष्टार्थस्य स्वार्थे। धातोः स्वार्थस्य भाव एव। नन्वेवं घञर्थे कविधानमित्यनेन गतार्थतेति चेत् न। वार्त्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः। किं च। नित्यसमासार्थमिदम्। अत एव ल्युडन्तेनास्वपदविग्रहमाह। आखूनामुत्थानमिति। नन्वेवं घञर्थे कविधाने स्थास्नापाव्यधिहनियुध्यर्थमिति वार्त्तिके स्थाग्रहणं व्यर्थं स्यादिति चेन्मैवम्। अकर्त्तरि कारके चरितार्थत्वात्। इह प्राचा आखूत्थं वर्त्तत इति नपुंसकं पठितन्तत्पाठेन च तथैवाभिनिवेशेन व्याख्यातन्तदुपेक्ष्यम्। भाष्यादौ सर्वत्र पुल्लिङ्गस्यैवोदाहृतत्वात्। ल्युः कर्त्तरीमनिज्भावे कः किर्घोः प्रादितोऽन्यत इत्यमरकोशे भावे कस्य पुंस्त्वविधानात्। भावेनणकचिद्भ्योऽन्य इति नपुंसकविधाने कस्य पर्युदासाच्चेति दिक्॥

अम्बाम्ब॥ कप्रत्ययान्तस्येति। तेन भूमिस्थितङ्गोस्थानमित्यादौ नेति भावः। यत्तु प्राचा स्थः सस्येति व्याख्यातन्तदाकरविरुद्धं कप्रत्ययान्तस्येत्यध्याहृत्य वा व्याख्येयम्। द्विष्ठः त्रिष्ठः इति। एवमम्बष्ठ आम्बष्ठः गोष्ठः भूमिष्ठः सव्येष्ठः अपष्ठः कुष्ठ इत्यादि। तुन्दपरिमृज इति। अत्र मृजेरजादाविति पाक्षिकी वृद्धिः प्राप्ता व्यवस्थितविभाषया नेत्येके। स्यादेवेत्यन्ये। प्रादन्यस्मिन्निति। अनुपसर्गग्रहणेन पर्युदस्यते। सूत्रे विशिष्योपात्तत्वादिति भावः। गोसंख्य इति। गाः सञ्चष्टे इति विग्रहः। ख्या प्रकथन इत्यस्य तु संपूर्वस्य प्रयोगो नास्तीति न्यासकारः। सार्वधातुकमात्रविषयोऽसौ धातुरिति चावोचाम॥

गापोष्टक्॥ गायतेरेव ग्रहणं न तु गाङ् गतौ गा स्तुताविति अनयोरनभिधानात्। पिबतेरिति। लुग्विकरणालुग्विकरणपरिभाषालभ्यार्थ-

---

पदेनोपसर्गाग्रहणान्नेति भावः। पूर्वेणैवेति। सुपीत्यनेनेत्यर्थः। स्वार्थे इति। अत

कथनम्। उपपदपरिगणनन्तु वाचनिकमेव। कवचहर इति। कवचोद्य-मनङ्क्रियमाणं संभाव्यमानं वा वयो गमयति। तेनासत्यपि कवचग्रहणे कवचहर इति भवत्येव। हस्तिसूचकयोरिति। अन्यत्र तु स्तम्बे रन्ता। कर्णे जपिता॥

भ्रमिधातोः॥ भ्रमि उपपदे धातुमात्रात्संज्ञायामच् स्यात्। भिक्षा-ञ्चरतीति। चरतिरत्र चरणपूर्वके ऽर्जने वर्त्तते। चरणेन भिक्षामर्ज-यतीत्यर्थः। सेनाचर इति। सेनाञ्चरति प्रविशतीत्यर्थः। पचादिष्वि-ति। टविधानन्तु नित्यसमासार्थम्। इति वार्त्तिकमिति। कैयटहरद-त्तादिरीत्योक्तम्। माधवस्तु इष्टिरियमित्याह। परत्वादिति। यत्तु न्या-सकृतोक्तं हेत्वादिषु तु पूर्वसूत्रेण ट एव भवति। तेन किङ्करीत्युपपन्न-मिति। तन्न। पूर्वविप्रतिषेधस्य निर्मूलत्वादिति भावः। यदपीह किं-यत्तद्बहुषु अज्वेति प्राचा पठितं तत्र विकल्पोक्तिराकरविरुद्धा। अयु-क्ता च कर्मण्यणोपि प्रसङ्गात्। न चाजभावे दिवाविभेति ट इति वा-च्यम्। सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात्। यत्तु परिष्कुर्वन्ति हेत्वाद्यभावे ऽच् हेत्वादौ तु टः। एवञ्च भिन्नविषयेणाचा टस्य बाधासम्भवादुभयमपि भवतीत्याशयेनाचार्यैर्वेत्युपनिबद्धमिति। अत्रेदं वक्तव्यम्। अज्विधौ हेत्वाद्यभाव इति विशेषणं न तावन्मुनि-त्रयेण दत्तं येन भिन्नविषयत्वं स्यात्। पूर्वविप्रतिषेधस्तु निर्मूल इत्युक्त-

---

एवास्य नित्यैकवचनान्तत्वं न तु पाकादिवद्द्विवचनाद्यपीति भावः। नित्यसमासार्थं मिति। नित्याधिकारस्थोपपदसमासार्थमित्यर्थः। अकर्त्तरि कारके इति। अत एव प्रतिष्ठन्ते ऽस्मिन् धान्यानीति प्रस्थ इति भाष्ये व्याख्यातम्। चिद्भ्य इति। इत्सञ्ज्ञकचकारवद्भ्य इत्यर्थः। परिभाषालब्धेति। अलाक्षणिकत्वेन सकर्मकत्वेन चास्यैव ग्रहणं बोद्धव्यम्। हरदत्तादिभिरिति। अनेन भाष्यकृता न प्रत्या-ख्यातमिति ध्वनितन्तेन हेत्वादिग्रहणस्य सूत्रएव निवृत्त्या चैषु कृञः प्रत्ययद्वयग-पीत्याशयेन प्राचा वेत्युक्तमिति सूचितम्। अत एव। अचा टस्य बाधादेव। त-

मेव। अत एव पुंयोगादन्यत्र किङ्करीत्यसाधुरेवेति कैयटहरदत्तादयः। तस्मान्नैवं प्राचो ग्रन्थस्य निर्वाहः। यदि तु तन्निर्वाहे आग्रहस्तर्हीत्थमुक्तिसम्भवः। वृत्तौ हि क्वचित्पुस्तके पठ्यते। अथवा पचादिपाठः करिष्यतइति। इह किमादिग्रहणमपनीय पचादिष्वेव किंयत्तद्बहुषु कृञ इति पाठ्यम्। वार्तिकमपीत्थमेव नेयमिति तस्याशयः। अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वचनम्। हेत्वादिविवक्षायां परत्वाट्टेन बाध्यन्तेन पुंयोगं विनापि किङ्करी स्यादेव। व्याख्यानान्तरे तु नेत्युक्तमेव। एवञ्च विषयविशेषे व्याख्याभेदात्फलितं विकल्पमाश्रित्य प्राचा वेत्युक्तमिति सहृदयैराकलनीयम्॥

कर्मणि भृतौ॥ कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह। कर्मशब्द इति॥

अरुर्द्विषत्॥ वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं पुनिन्धय इत्यादौ ह्रस्वे कृते मुम्प्रवृत्त्यर्थम्। तथा हि अन्तशब्दः समीपपरः। अचासावन्तस्येति विग्रहः। समीपः खित्यनव्ययस्येति सूत्रे विहितो योऽच् तदन्तस्य मुम् इति व्याख्यायते। एवञ्च जनमेजय इत्यादौ स्वतो ह्रस्वेऽपि मुम्सिद्धये प्रथमं खितीति ह्रस्वः प्रवर्त्तनीय इत्यवधेयम्। शर्धंजहा इति। शर्द्धनं शर्द्धः। शृध शब्दकुत्सायां घञ्। यत्तु प्राचो ग्रन्थं व्याचक्षाणैरुक्तम्। आकरे तु वातशुनीतिलशर्द्धेष्विति पठित्वा

---

स्य। वृत्तिकृतः। अस्मिन्पक्षे पचादिपाठपक्षे। एवञ्च पक्षभेदे फलैक्याय न्यासकृता पूर्वविप्रतिषेध आश्रित इति कश्चित्। प्राचा वेत्युक्तमिति। बीजान्तरमपि पूर्वं सूचितमिति बोध्यम्॥

तदन्तविधेः सिद्धाविति। उत्तरपदाक्षिप्तपूर्वपदस्याचा विशेषणादिति भावः। मुम्प्रवृत्त्यर्थमिति। अन्यथा परत्वान्मुम्यनजन्तत्वान्न स्याद्ध्रस्व इति भावः। समीपपर इति। समीपमात्रपरो व्याख्यानादित्यर्थः। समीपः समीपशास्त्रविहितः। स च खितीति ह्रस्वविधायकविहितोऽजुपस्थितत्वादित्याशयेनाह। समीपः खित्यनव्ययेत्यादि॥

गर्द्दञ्जहा इत्युदाहृतमिति । तद्भ्रमात् । भाष्यवृत्त्यादिषु सर्वत्र ताल्व-व्यादिपाठस्यैव दृश्यमानत्वात् । शर्द्धोपानशब्द इति माधवादिभिर्विवृतत्वाच्च । दुर्गसिंहादिग्रन्थे ऽपि तथैव दर्शनाच्चेति दिक् । यथासंख्यं वारयितुमाह । अत्रेति । घेटष्टित्त्वादिति । अवयवे ऽचरितार्थत्वादिति भावः । खश्प्रत्ययान्तादेव धेटो ङीबिष्टो नान्यत इति वर्द्धमानक्षीरस्वामिहरदत्तादयः । तेन पाघ्राध्मेति शप्रत्यये आतो ऽनुपसर्गे क इति कप्रत्यये च टाबेव । अत्र च संप्रदाय एव शरणम् ॥

नाडीमुष्ट्योश्च ॥ यथासंख्यं नेति । एतच्चेहैव भाष्ये वृत्तौ च स्थितम् । यत्तु यथासंख्यमिति सूत्रे नाडीमुष्ट्योरित्युदाहृतं भाष्ये तत्प्राप्तिमात्राभिप्रायेणेति बोध्यम् ॥

उदि कूले ॥ ननु कूलस्येव उच्छब्दस्यापि सप्तम्यन्तत्वात् उपपदत्वं स्यात्ततश्च रुजिवहिभ्यां सह यथासंख्यं स्यादिति चेन्न । एवं हि सति लाघवादुत्कूलयोरित्येव ब्रूयात् । नाडीमुष्ट्योरितिवत् । तस्मादुदीति पञ्चम्याः स्थाने सप्तमी । रुजिवहोरिति तु पञ्चम्याः स्थाने षष्ठी । एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम् । किं च रुजेः सकर्मकत्वात्कर्मणीत्युपतिष्ठते तेन कूलं विशेष्यते नोच्छब्दो ऽसत्त्ववाचित्वेनासम्भवात् । तदेतदाह उत्पूर्वाभ्यामित्यादिना । अरुन्तुद इति । अरुन्तुदस्तु मर्मस्पृक् इत्यमरः । व्रणो ऽस्त्रियामीर्ममरुरिति च । असूर्यंपश्या इति । गुप्तिपरञ्चेदम् । यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति सत्यपि सूर्यदर्शने प्रयोगो भवत्येव । यदा तु सूर्यदर्शनाभावमात्रे सूर्येतरस्य चन्द्रादेर्दर्शनं वा विवक्षितम् । तदा खश् न भवति । अनभिधानात् ॥

प्रियवशे ॥ खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इ-

---

कैयटे स्पष्टमिति । अत्रारुचिबीजमुदि सति कूले उपपदे रुजिवहोरनन्तरः प्रत्यय इत्यर्थे न क्षतिः । ते प्राग्धातोरिति नियमान्नातिप्रसङ्गः । उपपदसञ्ज्ञालिङ्गन्तु प्रथमार्थे सौत्री सप्तम्येव न तु सर्वापीत्यन्यत्र प्रपाञ्चितम् ॥

त्यत्र ह्रस्वणिलोपौ यथा स्यातां मुम् च मा भूत्। नन्वेवमुत्तरत्रैव क्रियतामिति चेत्सत्यम्। इह करणादन्यत्रापि क्वचित् तदेतद्वार्त्तिकमुखेनाह। गमेरिति। असञ्ज्ञार्थमिति। सञ्ज्ञायान्तु गमश्चेति सूत्रेण सिद्धमिति भावः॥

वाचंयमपुरन्दरौ च॥ अमन्तत्वमिति। अत्र हरदत्तः। खश्प्रत्ययो ऽप्यनेनैवास्तु। न चैवं वाचंयम इत्यस्य व्रतविषयता न लभ्येतेति वाच्यम्। निपातनबलादेव तल्लाभसम्भवात्। अथवा वाचियमो ऽव्रते पुरन्दरश्चेति सूत्र्यताम्। सर्वथापि वाचि यमो ऽव्रतइति सूत्रं पूःसर्वयोरित्यत्र पुरिदारेरित्यंशश्च त्यज्यतामिति॥

पूःसर्वयोः॥ दॄ विदारणे अयमेव गृह्यते न तु दृ भये दृङ् आदरे इत्येताविति संप्रदायः। आशितं भव इति। यावता ओदनेनातिथ्यादिर्भोजितो भवति स एवमुच्यते। इह वासरूपविधिना ल्युडपि। आशितभवनः। आशितभवनं सरूपत्वात्तु घञ् बाध्यतएवेति प्राञ्चः। यत्तु वदन्ति। क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नेति निषेधात् ल्युडयुक्त इति। अत्रेदं वक्तव्यम्। यत्र घञादेर्बाधकत्वेन क्तल्युडादयः प्रसक्ताः तत्र नित्यं बाधः न तु विकल्पेनेति तस्यार्थः। इह तु ल्युटो ऽपवादः खश् तत्र वासरूपन्यायो निर्बाध एव। अत एवेह जयादित्येन ल्युडुदाहृत इत्यास्तान्तावत्॥

सञ्ज्ञायां भृ॥ विश्वम्भरः कैटभजित्। रसा विश्वम्भरा स्थिरेत्यमरः। व्युत्पत्तिमात्रमिति। तत्फलन्तु स्वरावग्रहौ। रथन्तरमाजभारा वसिष्ठः। इह हि कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तमधीयते। रथमित्यवगृह्णन्ति च। अखण्डत्वे तु नब्विषयस्येत्याद्युदात्तो निरवग्रहता च स्यात्। इत्युक्तमिति। माधवाद्यनुरोधेनेत्यर्थः। मतान्तरे त्विति।

---

उत्तरार्थत्वमेवोपपादयति। द्विषन्तप इति।

हरदत्तादिमते इत्यर्थः। चित्तेन्द्रिययोर्व्यापारोपरमरूपौ शमदमावित्यादिवेदान्तग्रन्थास्त्वेतदनुकूलाः ॥

गमश्च ॥ योगविभाग उत्तरार्थः।

कुमारशीर्षयोर्णिनिः। एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात्। सुप्यजातावित्यादिभिः सिद्धे ताच्छील्याद्यभावे ऽपि णिन्यर्थं शिरसः शीर्षभावार्थञ्च वचनम्। लक्षणवतीति। सूत्रे लक्षणशब्दो ऽर्शआद्यजन्त इति भावः। जायाघ्न इति। जायामरणसूचकं पाणिरेखादिकं यस्यास्ति स तां हन्तीति गौणो व्यवहारः। एवं पतिघ्नीत्यत्रापि ॥

शक्तौ हस्ति॥ शक्ताविति किम्। विषेण हस्तिनं हन्तीति हस्तिघातः। शक्तिग्रहणसामर्थ्याद्धि प्रकर्षो विज्ञायते स्वबलेनैव हन्तुं या शक्तिरिति। कपाटघ्न इति। कं शिरः पाटयति प्रविशत इति कपाटम्। पाठान्तरे तु अटतेः पचाद्यच्। कवञ्चोष्णे इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः॥

आढ्यसुभग ॥ प्रतिषेधसामर्थ्यादिति। तथा हि। आढ्यीकरणमिति रूपं ल्युट्ख्युनोस्तुल्यम्। न च ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्। अव्ययपर्युदासात्। च्व्यन्तस्याव्ययत्वात्। न च ख्युनि उपपदसमासो विशेषः। ल्युट्यपि गतिसमाससम्भवात् उभयोरपि नित्यत्वाविशेषात्। न च स्त्रीप्रत्यये विशेषः। टिड्ढेति सूत्रेण ख्युन उपसंख्यानेन च ङीपस्तुल्यत्वात्। नापि स्वरे विशेषः। ल्युटि लित्स्वरेण ख्युनि नित्स्वरेण कृञ उदात्तत्वाविशेषात्। न चोत्तरार्थमच्व्यावित्युक्तमिति वाच्यम्। केवलोत्तरार्थत्वे हि तत्रैव ब्रूयात्। तदेतदुक्तमिहेति। भाष्यमते त्विति। भाष्यवार्त्तिकस्वरसेन ल्युडिष्ट इति निर्णीते

---

सुप्यजाताविति सिद्धे इति। ऊरुभिन्नीत्यत्र बहुव्रीहेश्चान्तोदात्ताज्जातिपूर्वादिति ङीषतः अत्राप्यजाताविति निषेधो दुर्वार इत्यरुचेराह। शिरसः शीर्षेति। प्रविशत इति षष्ठ्यन्तमेतत्। पाठान्तरे। कवाटेति पाठे। हरदत्त इति। बाहुल-

ऽच्चावित्यस्य केवलोत्तरार्थत्वमगत्या स्वीकर्त्तव्यमिति भावः ॥

कर्त्तरि भुवः ॥ कर्तृग्रहणं करणानुवृत्तिभ्रमनिरासार्थमुत्तरार्थञ्चे-ति प्राञ्चः। वस्तुतस्तु व्यर्थमेव। अस्वरितत्वादेवाननुवृत्तिसिद्धेः। उत्त-रत्रापि अनुप्रयोगः स्पष्टीकरिष्यते। खिष्णुचः खकारो मुमर्थः। न-न्विकारो मास्तु इडागमेन रूपसिद्धेः। एवञ्चकारो ऽपि मास्तु प्रत्य-यस्वरेणेष्टसिद्धेः। न च कृत्योकेष्णुच्चार्वादयश्चेति स्वरसूत्रे ऽस्य ग्रह-णं न स्यात्। चकाराभावात्। इकारस्य त्वाश्रयिकत्वात्षत्वणत्वयोर-सिद्धत्वेनेष्णु इति रूपाभावाच्चेति वाच्यम्। कृते ऽपि इकारे ऽनुब-न्धपरिभाषया ऽलङ्कृञादीष्णुच एव ग्रहणस्य न्याय्यत्वात्। इकारो-च्चारणसामर्थ्यादस्यापि ग्रहणमिति चेत् हन्तैवञ्चकारमात्रमस्तु त-त्सामर्थ्यादस्यापि ग्रहणे सिद्धे किमिकारेणेति। चिन्त्यमेतत्। यत्तु हरदत्तेनोक्तं षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति। तदापाततः। खुजपेक्षया ष्णुजुक्तौ प्रक्रियालाघवेन सामर्थ्यायोगादिति दिक्।

---

कात्कोराटजिदित्यन्ये। गतिसमासेति। च्व्यन्तस्य गतित्वादिति भावः। अगत्येति। एवञ्च च्व्यन्तो ल्युटो विषयः केवलः ख्युन इति भावः॥

स्पष्टीकरिष्यत इति। एवञ्च तद्व्यर्थमेवेति भावः। न चात्रैव कर्तृप्रत्य-यार्थन्तत् कर्मण्युपपदे एको ऽन्यत्रापर इति। न च भुवो ऽकर्मकत्वात्कर्मणीत्य-स्यासम्बन्धे उक्तार्थे फलाभावो ऽर्थान्तरे सकर्मकत्वे ऽप्याढ्यादीनां च्व्यर्थत्वासम्भ-व इति वाच्यम्। अन्तर्भावितण्यर्थस्य करोतिपर्यायत्वेन तेषां योगे कर्मत्वस्य च्व्यर्थयोगस्य च सम्भवादेवञ्च तत्रैव प्रवृत्तिः स्यात्कर्मणीत्यस्य निवृत्तौ मानाभा-वात्कर्तृग्रहणाच्च सर्वत्र प्रवृत्तिरिति चेन्न। अन्तर्भावितण्यर्थस्य भुवो ऽप्रसिद्धत्वे-नात्र ग्रहणाभावात् ध्वनितञ्चेदं भुवो भावइत्यत्र भाष्ये। रमिजपोर्ण्यन्तर्भावित-ण्यर्थत्वसम्भवेन स्तम्बेरम इत्यस्यासिद्ध्यापत्तेश्च। न हि तत्रापि कर्तृग्रहणमस्तीति दिक्। इडागमेनेति। न चेकाराभावे खस्य चर्त्वं स्यात्। व्याख्यानेन निर्णय-सम्भवेनाक्षतेरिति भावः। तत्सामर्थ्यादिति। तत्सामर्थ्याच्च प्रतिपदोक्तपरिभाषा-यास्तदनुबन्धकपरिभाषाया असिद्धपरिभाषायाश्च बाध इति भावः। चिन्त्यमेतदि-

निवृत्तमिति। ननु स्पृशेः सकर्मकत्वात्कर्मण्युपपदे इत्येवोचितमिति चेत्। अत्र प्राञ्चः। पूर्वसूत्रात्कर्त्तरीत्यनुवर्त्तते तच्च व्यर्थं सत्कर्तृप्रचयार्थं संपद्यते। कर्मण्युपपदे एकः कर्त्ता करणादौ चापर इति कर्तृप्रचयः। एवञ्च सुबन्तउपपदइति फलितं भवतीति। वस्तुतस्तु व्यर्थोयं यत्नः। मन्त्रस्पृगित्यादेः क्विपापि सिद्धे क्विन्प्रत्ययो यस्मादिति बहुव्रीहिबलादेव कुत्वसम्भवादिति दिक्। सद्दगिति। कर्मकर्त्तरि प्रत्ययः। रुच्यर्थानुगुणत्वात्। द्युसदिति। पूर्वपदादिति षत्वं तु न भवति। छन्दसीत्यनुवृत्तेः। आदितेया दिविषद इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। उपनिषदिति। सदिरप्रतेरिति षः। अग्रग्रामाभ्यामिति। स एषाङ्ग्रामणीरिति निर्देशेन ज्ञापितमेतत्। नीरूपप्रत्ययविषयञ्चेदम्। तेन कर्मण्यपि णत्वं न। ग्रामनायः॥

अदो ऽनन्ने॥ विट् स्यादिति। जनसनखनक्रमगमो विडिति पूर्वसूत्रादनुवृत्तेः। पूर्वसूत्रे तु छन्दसि सह इत्यतश्छन्दसीत्यनुवर्त्ततइत्याकरः। अत एवेदं तत्रोपन्यस्तम्॥

विजुपेछन्दसि आतो मनिन्क्वनिब्वनिपश्चेत्यधिकृत्याह। अन्येभ्यो

---

इति। स्पष्टञ्चेदं भाष्ये। कर्तृप्रचय इति। तत्सामर्थ्यादस्य निवृत्तिरिति भावस्तदाह सुबन्तइति। क्विपापि सिद्धेरिति। न च यङ्लुगन्ते स्वरे विशेषः। नकारप्रत्याख्यानपरभाष्यप्रामाण्येन स्पृशेर्यङ्लुगभावस्य ध्वनितत्वात्। इति दिगिति। अत एव सत्सूद्विषेति सूत्रे सदादिषु सुब्ग्रहणं कर्त्तव्यमिति भाष्यं सङ्गच्छते। कर्मकर्त्तरीति। भाष्ये त्वध्यारोपितप्रेषणपक्षे व्युत्पत्तिर्दर्शिता। निर्देशेति। असञ्ज्ञात्वात्पूर्वपदादिसूत्रस्याप्राप्तिरिति भावः। नीरूपप्रत्ययेति। नीरूपो यः क्विप् तद्विषयमित्यर्थः। वासरूपसूत्रे भाष्ये ग्रामनाय इति दन्त्यपाठादिति भावस्तदाह। तेनेति। सम्प्रति तु भाष्ये मूर्द्धन्यपाठो दृश्यते तस्य प्रामाणिकत्वे नीरूपाद्धातोर्विहितप्रत्ययविषयमित्यर्थः। तेनेत्यस्यायवयेत्यादिदण्डकपठितनयतेर्धातोरिति शेषः। अत्र निर्णयो बहुश्रुतैः कार्यः॥

पूर्वसूत्रे। जनसनखनक्रमेति सूत्रे। आकरो वृत्त्यादिः॥

ऽपी ति सुश्रर्मेति। सुष्ठु शृणोतीति विग्रहः। प्रातः एतीति प्रातरित्वा। वाहभ्रडिति। वाहादस्मात् भ्रश्यतीति विग्रहः। वृत्तौ तु वहाभ्रडिति पाठः। वहः स्कन्धः। अन्येषामपि दृश्यतइति पूर्वपदान्तस्य दीर्घ इति हरदत्तः। आशास इति। आशिषि लिङ्लिटावित्यादिनिर्देशेनेदं सिद्धम्। न च शास इदङ्हलोरित्येव वाच्यम्। तत्र परस्मैपदिन एव शासेर्ग्रहणात्। तद्बीजन्तु आङा साहचर्यम्। यद्यपि सर्त्तिशास्तीति सूत्रे पृथग्योगकरणात् पदद्वये ऽप्यङिति सिद्धान्तः। तथा ऽप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शासिः तस्मात्परस्याङिति निष्कर्षः। अत एव शास्ते इत्यादौ नेत्वमिति भावः। सुम्बाविति। ओः सुपीति यण्॥

स्थः क च॥ शंस्था इति। क्विपि लुप्ते घुमास्थेतीत्वं न। स्थानिवद्भावस्यानल्विधाविति निषेधात्। प्रत्ययलक्षणसूत्रन्तु नियमार्थमिति निष्कर्षात्। यत्तु कैयटेनोक्तमीत्वमवकारादाविति वचनात् भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्वं नेति। तत्तु अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये ऽल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षे बोध्यम्। एतेन मित्राणि शास्ति मित्रशीरित्यत्र ईत्वं व्याख्यातम्। निष्कर्षे तु शास इत् ङ्किति। ततः अङीति नियमार्थमिदम्। अजादौ चेदङ्येव नान्यत्रेति। हल्ग्रहणं मास्तु इत्यवधेयम्।

---

अङा साहचर्यमिति। अङा सम्बन्ध इत्यर्थः। तेन यस्माच्छासेरङ् तत्रैवेत्वमिति भावः। दृष्टो य इति। परस्मैपदे दृष्टेभ्यः सर्त्यादिभ्यः परस्य च्लेरङित्यर्थ इत्यभिमानः। वस्तुतः परस्मैपदे एवाङित्यन्यत्र निरूपितम्। पावान इत्यस्य वनिपा सिद्धिमाश्रित्येत्वमवकारादावित्यस्य भाष्ये प्रत्याख्यानादाह। भाष्यकारीयेति। इति पक्षे इति। धीर्दधातेर्ध्यायतेर्वेति ध्यायतेः सम्प्रसारणमिति वार्त्तिकस्थभाष्याद् घुमास्थेत्यत्र हलीत्यस्यानजादावित्यर्थे लक्षणेति पक्षे इत्यपि बोध्यम्। तत्पक्षे प्रत्ययलक्षणसूत्रस्य नियमार्थत्वे ऽपि स्थानिवद्भावस्य सुलभत्वात्। एतेन। प्रत्यय लक्षणसूत्रस्याल्विधौ विध्यर्थत्वेन। निष्कर्षे त्विति। नियमार्थत्वे त्वित्यर्थः।

स्यादेतत्। सुपि स्थः क्विप्चेति सूत्राभ्यां कक्विपौ सिद्धौ तत्राह। भ्र-मीति। धातुग्रहणसामर्थ्याद्धि धातुमात्राद् भवन्नच्प्रत्ययो हेत्वादिषु कृत्ष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति भावः। नन्वेवं भ्रमिधातोरित्यस्यानन्तरं स्थः क चेति सूत्र्यताम्। चकारेणाचि समुच्चिते सवर्णदीर्घेण भ्रंस्था इति भविष्यति। एवञ्चोत्सर्गापवादयोः समानदेशतया सन्दर्भशुद्धिः। इत्वाभावार्थञ्च नायसनीयमिति महल्लाघवमिति चेत्। मैवम्। अच्कावशक्ताविति सूत्रेण भ्रंस्था इत्यत्रोत्तरपदान्तोदात्तत्वापत्तेः। कृद्ग्रहणे गतिकारकपूर्वस्यापीति भ्रंस्था-

---

पाविति। वासरूपन्यायेनेति भावः। कृत्ष्टमिति। शङ्करोति तच्छीला शङ्करा परिव्राजिकेत्यत्र परत्वात्प्राप्तमित्यर्थः। बाधेतेति। न च कस्य परत्वाद्बाधेन सरूपतया च वासरूपाप्रवृत्त्या नित्यबाधे ऽपि क्विप्तेन न्यायेन सुलभ इति वाच्यम्। धातुग्रहणाद्विध्यन्तरकल्पनेन तत्सामर्थ्याद्धेत्वादिषु परत्वात्प्राप्तस्य टस्येव वासरूपन्यायेन पक्षप्राप्तक्विपो ऽप्यत्र बाधात्। न च पुरस्तादपवादन्यायेन टस्यैवायं बाधको न क्विप इति वाच्यम्। येननाप्राप्तिन्यायेन क्विप एव बाध इत्यस्यापि वक्तुं शक्यत्वात्तस्माद्बाध्यसामान्यचिन्तयोभयोरपि स बाधक इति। स्थः क चेति। बाधकबाधनार्थम्। न च स्थः क चेति चो व्यर्थः। वासरूपन्यायेन कस्याभावे क्विपः सिद्धिरिति वाच्यम्। अस्य धातुग्रहणप्राप्ताजपवादत्वे ऽपि क्विपपवादत्वाभावेन धातुग्रहणबाधितक्विपं विना साधयितुमशक्यत्वादिति स्पष्टं भाष्ये। इति भविष्यतीति। अन्तवत्त्वेन धातुत्वाच्छंस्थ इत्यादावातो धातोरिति लोपसिद्धिः। स्थानिवत्त्वं तु न। अपूर्वविधित्वादिति भावः। इत्वाभावार्थञ्चेति। धातुग्रहणसामर्थ्याविक्विपो ऽप्राप्तेरिति भावः। मैवमिति। अयं भावः। पूर्वधर्मावच्छिन्नोद्देश्यकविधिसत्त्वे न कृदतिङ्सूत्रस्थभाष्यरीत्या स्थानिवत्त्वस्य दुर्वारत्वात्। न च धियाविश्यादावियङ्ग्नया रीत्या पूर्वरूपस्य स्थानिवत्त्वं स्यादिति वाच्यम्। आकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाभावात्। इवर्णान्तधातोर्हि सः। एतेन जुहुवतुरित्याद्यसिद्धिरत्र पक्षे इत्यपास्तम्। धियाविश्यत्रैकादेशस्थाने हल इति दीर्घप्रवृत्तेश्च। भी ई भिय इति स्थानिवत्सूत्रस्थभाष्ये तु सौत्रत्वादियङ् लोके त्वीदृशप्रयोगो ऽसाधुरेव। परनिमित्तइत्यत्र परो ऽस्यानिभूत एव गृह्यत इत्यत्र न मानम्। तक्रकौण्डिन्यन्या-

शब्दस्याजन्तत्वात्। क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वरः सिध्यति। आमन्त्रयितेति। ताच्छील्यस्य विवक्षितत्वात्तृन्। अत एव ब्राह्मणानिति कर्मणि षष्ठी न कृता भाष्यविरोधादिति। उक्तं हि भाष्ये। सुपीति वर्त्तमाने पुनः सुब्ग्रहणं किमर्थम्। अनुपसर्गइत्येवन्तदभूत् इदं सुबमात्रे यथा स्यात्। उद्गासारिण्यः प्रत्यासारिण्य इति। प्रसिद्धस्येति। एवञ्च व्यापीत्यादिप्रयोगा अपि निर्बाधा एव। अमरश्च प्राग्रुक्त। "लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित" इति। यत्तु सप्तपदार्थीटीकायां व्यापीत्याङ्प्रश्लेषादुद्गासारिण्यः प्रत्यासारिण्य इतिवत् साधु इत्युक्तम्। तस्योक्तिसम्भवमपि चिकीर्षता भ्रमपरंपरा शरणीकर्त्तव्या। तथा हि सुबुक्तिरुपसर्गनिवृत्त्यर्थेति तावदेको भ्रमः। तथा सति पाणिनीयानुसारिणीमित्यादौ असङ्गतिमाशङ्क्य उपसर्गग्रहणं केवलोपसर्गपरम्। इह तु पाणिनीत्यादिपदान्तरमप्यस्तीति प्रसादादिग्रन्थं पुरस्कृत्य तत्रत्यकेवलपदस्य असहायपरतया ऽनेकोपसर्गसद्भावे णिनिर्भवत्येवेत्यपरो भ्रमः। एवं सति उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानमिति स्वोपजीव्यग्रन्थविरोधापर्यालोचनम्। उपसर्गेपीत्येतदंशव्यावृत्तिफलकमिह सुब्ग्रहणमिति वृत्तिमते उपसर्गान्तरङ्कञ्चिदाश्रित्यैव णिनिः प्रवर्त्तते, न त्वनेकमप्युपसर्गमिति मतशरीरस्यापर्यालोचनं च तन्मूलमित्यास्तान्तावत्। साधुकारिणीति। एतच्च ज्ञापकसिद्धम्। आक्केरिति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते। तच्च ताच्छील्यं विनापि णिनौ सत्येव सङ्गच्छते। ब्रह्मणि वद इति। वाचनिकमेवेदम्। अताच्छील्यार्थमिति। एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम्। यत्तु भट्टवार्त्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधु-

---

यस्यापवादविषयत्वेनेदृशविषये ऽप्रवृत्तेरिति दूषणान्तरमाह। अच्कावित्यादि। गतिकारकेति। स्थाधातोरन्तर्भावितण्यर्थत्वे शशब्दार्थस्य कर्मत्वेन कारकत्वमिति भावः। उपसर्गान्तरमिति। पञ्चम्यन्तोपसर्गपदेन भिन्नवाच्यन्तरशब्दस्य समास-

कारिपरतया व्याख्यानं दृष्टम्। आक्वेरित्यधिकारे णिनिविधायकं वार्त्तिकमस्ति इति के चिद्भ्राम्यन्ति तद्भाष्यादर्शनप्रयुक्तम्। भट्टपादानामन्वयमाश्रयः। सुप्यजाताविति सूत्रेण ताच्छील्ये णिनिः उपसंख्यानेन ज्ञापकेन वा साधुकारिणि। आवश्यकाधमर्ण्ययोर्णिनिरिति आवश्यके णिनिस्तु तद्धर्मे पर्यवस्यति। एवञ्च ब्रह्मणि वद इति वार्त्तिकेन ताच्छील्यादिविरहे यद्यपि णिनिरुपसंख्यानस्तथाऽपि प्रागुक्तरीत्या ताच्छील्यादिष्वर्थेषु सुलभ इति। एवञ्च फलितार्थकथनपरं भट्टवार्त्तिकं न त्वाक्वेरिति सूत्रव्यापारदर्शनपरमिति स्थितम्॥

मनः॥ बहुलग्रहणानुवृत्तेरिह दैवादिकस्यैव ग्रहणं न तु तानादिकस्य। तेनोत्तरसूत्रे खशि श्यनेव भवति न उप्रत्ययस्तदाह। मन्यतेरिति॥

आत्ममाने॥ मननं मानः। आत्मशब्दः स्वपरः कर्मणि षष्ठ्या समासः। तदाह। स्वकर्मकइत्यादि। प्रत्ययार्थत्वेन संनिहितः कर्त्ता स्वपदार्थः। चादिति। यद्यपि वासरूपविधिना लभ्यतएव णिनिस्तथाऽप्यविच्छेदाय समुच्चीयते तेन कारणे यज इत्यादौ णिनिश्चानुवर्त्तते न तु खशिति भावः। पण्डितमात्मानमिति। एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं बोध्यम्। कालिमन्येति। स्त्रियाः पुंवदिति प्राप्तं पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वः। यत्त्वत्र क्यङ्मानिनोश्चेति प्राप्तः पुंवद्भाव इति प्र-

---

स्तेनोपसर्गभिन्नमित्यर्थः। णिनौ सत्येवेति। साधुकारिशब्दे इति शेषः। साधुकारिणीति ब्रह्मवादिशब्दे णिनिरिति शेषः। णिनिस्त्विति। तत्रैव शब्दे यद्यपि णिनिरिति। अनेन वार्त्तिकचारितार्थ्यं दर्शितम्। न त्विति। अत एवात्ममानइति सूत्रे यगर्थं कर्मकर्तृग्रहणमिति वार्त्तिकं श्यनैव सिद्धिमाश्रित्य भाष्ये प्रत्याख्यातम्। अन्यथा तनादेरुप्रत्ययवारणाय वार्त्तिकमावश्यकमेव स्यात्।

कर्मणि षष्ठ्येति। कर्तृषष्ठ्या तु न समासः। आत्मग्रहणसामर्थ्यादिति भावः। इति प्राप्तमिति। पुंवत्कर्मधारयेत्यस्य न प्राप्तिः समानाधिकरणाधिकारस्थस्यैव कर्मधा-

सादृकृतोक्तान्तप्रामादिकमेव। दिवामन्येति। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम्॥

इच एकाचः॥ अमग्रहणमिह्वावर्त्तते। तत्रैकेन अम् विधीयते। अपरेण प्रत्ययो विशेष्यते तदाह। स्वाद्यम्वदिति। भाष्यकारेति। अयं भावः। यथा प्रष्ठादयः शब्दाः पुंयोगात् स्त्रियां वर्त्तन्ते प्रष्ठी गणिकेति तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्त्तते तत्र ह्रस्वो नपुंसकइति ह्रस्वः। नुम् तु न। अपवादेनामा बाधात्। स्वमोर्नपुंसकादित्यमो लुक्। न चैवं ग्रामन्य इत्यादावपि सुपो धातुप्रातिपदिकयोरिति लुक् स्यादिति वाच्यम्। अम्विधिसामर्थ्यादेव तद्बाधात्। श्रीशब्दस्येह क्लीबत्वे प्रमाणन्तु भाष्यमेवेति दिक्॥

भूते॥ धात्वर्थस्य विशेषणमिदम्। धातोरित्यधिकारात्। भूतार्थे विद्यमानाद्धातोरित्यर्थः। सोमेनेति। सोमेन लताविशेषेण यागकर्तृ-

---

रयत्वात्। अत्राभेदान्वयाभावे ऽपि पूर्वपदार्थस्यैवोत्तरपदेनाभिधानाद्वस्तुतः सामानाधिकरण्यमस्त्येव। एकविशेष्यकप्रतीतिजनकत्वस्यैव सामानाधिकरण्यपदार्थत्वात्। अत एव वक्ष्यन्ते महद्भूतेत्यादौ प्रकृतेः कर्तृत्वे ऽप्यमहच्छब्दार्थस्यैवामहच्छब्देनाभिधानात्सामानाधिकरण्यप्रयुक्तपुंवत्त्वसिद्धिरिति दिक्।

प्रत्ययः। प्रत्यय इति सूत्रस्थप्रत्ययपदार्थरूप इत्यर्थः। स्त्रियां वर्त्ततइति। पुंयोगादिति सूत्रबलात्स्वलिङ्गत्यागेन स्त्रियां वर्त्ततइत्यर्थः। तथेहेति। भाष्यप्रामाण्यादिति शेषः। अम्विधिसामर्थ्यादिति। समाससञ्ज्ञाप्रातिपदिकसञ्ज्ञोत्तरं मध्ये जातस्य तन्मध्यपतितत्वात्तद्ग्रहणे ऽपि तदवयवत्वाभावज्ञापनेनेति भावः। न च स्वमोरित्यस्याप्यर्थवदमो ग्रहणज्ञापनद्वारा ऽप्रवृत्तिः स्यादिति वाच्यम्। येननाप्राप्त्या मध्येपवादन्यायेन च सामासिकस्याप्रवृत्तिनिमित्तज्ञापने ऽपि स्वमोरित्यस्याप्रवृत्तिनिमित्तार्थज्ञापने मानाभावात्। अर्थवत्परिभाषा त्वनित्यत्वादत्र न प्रवर्त्तते। न चान्तरङ्गे लुक्ययमसिद्धः। उत्तरपदाधिकारे ऽन्तरङ्गपरिभाषाया अप्रवृत्तेरन्यथा परन्तप इत्यादावनुस्वारो न स्यादिति स्पष्टं भाष्ये। यत्र प्रातिपदिकस्यैव लक्षणा मानसिद्धा तत्र स्वलिङ्गत्यागो यत्र तु पदस्य लक्षणा तत्र स्वलिङ्गात्याग

वानित्यर्थः । अग्निष्टोमेनेति । अग्निष्टोमसंस्थाकेन यागेनापूर्वं भावितवानित्यर्थः । उक्तञ्च काशिकायाम् । अग्निष्टोमः फलभावनायां करणमिति । एतच्च भावकर्मप्रक्रियायामेवोपपादितम् ॥

कर्मणि हनः ॥ पितृव्यघातीति । अत्र काशिका । कुत्सितग्रहणं कर्त्तव्यम् । इह माभूत् । चोरं हतवानिति । यद्यपीदं भाष्ये नास्ति तथा ऽपि शब्दशक्तिस्वाभाव्याल्लभ्यत इत्याहुः । चतुर्विध इति । अयमाशयः । इह सूत्रे श्रुतत्वात् पूर्वं ब्रह्मादय उद्देश्याः । ततो ऽनन्तरं प्रकृतित्वाद्धन्तिः । ततः परिशेषाद् भूतइति । क्विप् सर्वान्ते निर्देष्टव्यः । विधेयत्वात् । तदेवं वचनव्यक्तिः ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति । एवं स्थिते यत्रैवकारस्ततो ऽन्यत्र नियम इति न्यायेन नियमो ऽत्र भवन् अनन्तरे भवति । ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरं निर्दिष्टत्वाद् उपपदान्तरसम्बन्धनिवृत्तिफलो नियमो भवति ।

---

इति मर्यादेति दिक् । वस्तुत उत्तरपदाधिकारे एषा परिभाषा नास्तीत्युक्तिर्भाष्ये उक्तिप्रत्युक्तिक्रमेण पूर्वपक्षिण इति स्पष्टन्तद्विदाम् । अत एव क्रियायाः कार्यकालपक्षे ऽपि न अन्तरङ्गपरिभाषाप्रवृत्तिरित्यस्य विसर्जनीयसूत्रे भाष्ये सिद्धान्तितत्वान्नेदं युक्तमित्यपास्तम् । पूर्वपक्ष्युक्तित्वेनेष्टापत्तेः । एवञ्चामो ऽसिद्धत्वाल्लुगभावे श्रियंमन्य इत्येनात्रान्तरङ्गपरिभाषाया अप्रवृत्तौ मानाभावादिति बोद्ध्यम् ।

करणमितीति । यजेस्त्यागकरणकव्यापारे शक्तिस्तत्र व्यापाररूपभावनाया भाव्याकाङ्क्षायान्धात्वर्थस्य करणत्वेनैवोपस्थितेः स्वतः पुरुषार्थत्वाभावाच्च सुखरूपः स्वर्गो भाव्यत्वेनान्वेति । त्यागस्य करणत्वञ्च भावनाभाव्यनिर्वर्त्तकत्वमेव । सर्वत्र करणानामीदृशमेव करणत्वम् । संस्थावचनस्यापि ज्योतिष्टोमशब्दस्य तद्वत्यारोपेण त्यागसामानाधिकरण्यात्करणत्वम् । स्वर्गादेः कर्मत्वमपि भाव्यत्वरूपमेव । न तु फलाश्रयत्वरूपम् । अत एवेदृशानां कामान्तपदेनैवोल्लेख इति दिक् । लभ्यते इति । एवङ्कुमारशीर्षयोरिति सूत्रमपि कुत्सायामिति भूतइति सूत्रे भाष्ये ध्वनितम् । ततः परिशेषादिति । तस्याप्युद्देश्यत्वेन क्विपः पूर्वमेव निवेशादिति भावः । इत्यवधारणे इति । इति नियमे इत्यर्थः । कालनियम इति । आनन्तर्यादिति भावः । निष्ठा

ब्रह्मादिषु हन्तेरेव भूतइति तु अनन्तरत्वाविशेषे ऽपि प्राथम्यादुपपदनियमः। ब्रह्मादिषु हन्तेर्भूतएव क्विबिति तु आनन्तर्यं क्विब्हन्त्योरपि श्लिष्टो ऽपि प्राधान्यात्प्रत्ययनियमः। ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ कालनियमः। सोयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्यमाणविशेषत्वात्तु चतुर्विधस्यापीह ग्रहणम्। तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूतइत्याश्रयणात् कालान्तरे ऽपपदान्तरे ऽपि भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा। हरिहयोरिहयोगविचक्षणः। ब्रह्मादिषु हन्तेरेवेत्युपपदनियमे ऽपि भूतइत्याश्रयणात् कालान्तरे धात्वन्तरादपि भवत्येव। वृत्रं जयति जेष्यति वा वृत्रजिदिति। भूतएव क्विबिति प्रत्ययनियमे ऽपि ब्रह्मादिष्वित्युक्तः पुरुषहा अरिहेति प्राग्वत्। भूते क्विबेवेति कालनियमे ऽपि उपपदान्तरे भूते ऽपि प्रत्ययान्तरं भवत्येव। पितृव्यं हतवान् पितृव्यघातीति। सोपपदस्य प्रत्ययो नियमेन व्यावर्त्यते। निष्ठा तु भवत्येव वृत्रं हतवानिति। भाष्यकारस्तु प्रकृतिकालनियमावेव अशिश्रियत्। तस्यायमाशयः। धातुकालौ हि नेह सूत्रे श्रुतौ। किं तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ। अतस्तयोरेव उपरोधो न्याय्यः। न तूपपदप्रत्यययोः श्रुत्युपस्थापितत्वात्। एवं न्यायोपबृंहितेन भाष्येण सह विरोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनोक्तंन्यात्तूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति। तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्॥

सुकर्म॥ त्रिविध इति। धातुनियमस्त्विह नेष्यतइति भावः।

सुत्र:॥ इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रे ऽपि॥

---

क्विति। मध्येपवादन्यायेन तन्निवृत्तेरभावादिति भावः। प्रकृतिकालेति। तथा च भाष्यम्। उभयतो नियमोयं ब्रह्मादिष्वेवेति। क्विन्नेवेति।

दिगिति। दिगर्थस्तु दृशिग्रहणेन निर्वाहस्यागतिकगतित्वात् विधायकत्वमेवैषां

कर्मण्यग्न्याख्यायाम् ॥ श्येनचिदिति । समुदायोयमाहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः ॥

दृशेः क्वनिप् ॥ अन्येभ्योऽपि दृश्यतइति सिद्धे नियमार्थमिदं क्वनिबेव यथा स्यात् । तत्सूत्रनिर्दिष्टं मनिनादि सोपपदं चाणादि मा भूदिति । निष्ठा तु भवत्येव पारं दृष्टवानिति । एवं स्थिते विश्वदृश्वनयनावयमेवेत्यादौ विश्वं पश्यन्तीति लुटा विग्रहेऽपि न क्षतिः । प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येव वृत्तिकारादिभिर्व्याख्यातत्वात् । कालान्तरनिवृत्त्यर्थत्वस्य चाभियुक्तैरनुक्तत्वादिति दिक् । मन्दुरायामिति । वाजिशाला तु मन्दुरेत्यमरः । पुमनुजेति । इह जनिः सकर्मकः । अनुरोधविशिष्टजननवृत्तित्वात् ॥

अन्येष्वपि दृश्यते ॥ अपिशब्द इति । यत्तु अन्तात्यन्ताध्वेति प्रकरणे अन्यत्रापि दृश्यतइत्युपसंख्यातं तद्भूतकालं विनापि यथा स्यादित्येवमर्थम् । वस्तुतस्तु प्रकृतसूत्रस्थस्य अपिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्तद्वार्त्तिकमनेनैव गतार्थं विभावितश्चेदमिको गुणवृद्धी इति सूत्रे जनेर्डं प्रक्रम्य गमेरप्ययं डो वक्तव्य इति वदता भाष्यकारेण । एवञ्च प्रकृतसूत्रस्थमन्येभ्योऽपि दृश्यतइति वार्त्तिकमपि गतार्थं बोध्यम् ॥

निष्ठायामण्यदर्थे ॥ भावकर्मणी इति । यद्यपि याज्या ऋगित्यादौ करणादपि बाहुलकाद् ण्यद्भवति तथापि तयोरेवेति वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति भावः । क्षि क्षये क्षि निवासगत्योः द्वयोरपि ग्रहणम् । क्षितः काम इति । अन्तर्भावितण्यर्थात्कर्मणि क्तः । एतच्च अक्षितोतिसनेदिममिति मन्त्रव्याख्या-

---

भाष्ये तूदासीनमिति ।

अनेनैवेति । अन्येष्वपीति सूत्रेण । द्वयोरपीति । क्षी हिंसायामित्यस्यापि ग्रहणं बोद्ध्यम् । न निष्ठेति । एकदेशत्वादिति भावः । द्वाविंशतिरिति । यद्यपि गृधृ

यां माधवग्रन्थे स्पष्टम्। भावे तु श्वितश्चामेनेत्युदाहार्यम्॥

रदाभ्याम्॥ इह रदाभ्यामित्यनेन तकारो विशेष्यते न निष्ठा तेन चरितं मुदितमित्यत्र न। तकारस्येटा व्यवहितत्वात्। तदेतदाह। परस्य निष्ठातस्येति। एकविंशतेरिति। क्र्यादिषु ल्वादयो द्वाविंशतिः तन्मध्ये पूञं विहाय ल्वादयो ज्ञेयाः। जीन इति। सिद्धत्वान्नित्यत्वाच्च संप्रसारणे कृते संयोगादेरित्यस्याप्राप्तिः। गून इति। गु पुरीषोत्सर्गे। विनष्ट इति। धातूनामनेकार्थत्वात्पुनातेर्विनाशे वृत्तिः। सिनो ग्रास इति। पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद्बन्धनेऽनुकूलो भवति तदा कर्मण एव कर्तृत्वं बोध्यम्॥

यस्य विभाषा॥ यस्येत्यार्द्धधातुकापेक्षा षष्ठी यदीयस्यार्द्धधातुकस्येत्यर्थः। उदक्तमिति। उत्थितमित्यर्थः। द्यून इति। क्षीण इत्यर्थः। द्यूतमिति। विजिगीषया हि तत्राक्षाः पात्यन्तइति गम्यते विजिगीषा। क्षीबादिष्विति। क्षीबृमदे। कृश तनुत्वे। लाघृ शक्तौ उत्पूर्वः। एभ्यः क्तः। ननु फुल्ल विकसने ऽस्मात् उल्लाघेस्व पचाद्यचि इतराभ्यामिगुपधलक्षणे कप्रत्यये च फुल्लादयः सिध्यन्ति तत्किं सूत्रेणेत्यत आह। सूत्रन्त्विति। निवृत्त्यर्थमित्युपलक्षणं फुल्लवानिति रूपस्य निष्ठा च द्व्यजनादिति स्वरस्य च सिद्ध्यर्थमिति बोध्यम्। वेत्तेस्त्विति। तथा च भाष्यम्॥

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते।
वेत्तेर्विन्नस्च वित्तस्च भोगे वित्तस्च विन्दतेरिति॥

पूर्त्त इति॥ श्र्युकः क्कितीति नेट्। मूर्त्त इति आदितश्चेति। मत्त

---

इत्येतावपि तत्र दृश्येते तथाऽप्येकीयमतन्तदिति भावः। रदाभ्यामित्यनेन तत्र सिद्धिरित्यन्ये। पुनातेरिति। पूञ इत्यर्थः। कप्रत्यये चेति। भावे घञर्थे कप्रत्यये चेत्यपि बोद्धव्यम्। रूपस्येति। इदं वृत्तिकारोक्तेष्टचभिप्रायेण। भाष्यमिति। वित्तो भोगेति सूत्रे इति शेषः। आदितश्चेतीत्यस्य नेडिति शेषः। अन्यथेति। यद्यपि कर्त्ता सिद्धस्तथापि तद्गतनिमित्तत्वस्य विधेयत्वेन विशेषविहितेन कर्तृगतनिमित्तत्वेन

इति स्त्रीदित इति । भुज्यतइति भोगः प्रतीयतइति प्रत्यय इति कर्मसाधनावेताविति व्याचष्टे । भोग्ये प्रतीते चेति ॥

भित्तं शकलम् ॥ भिदेः क्ते नत्वाभावो निपात्यते । भित्तं शकलखण्डे इत्यमरः । भिन्नमन्यदिति । विदीर्णमित्यर्थः ॥

ऋणमाधमर्ण्ये ॥ अधमन्दुःखप्रदमृणं यस्य सोऽधमर्णस्तस्य भाव आधमर्ण्यम् । तेन च व्यवहारविशेषो लक्ष्यते । तेनोत्तमर्णोऽपि सिध्यति । धारेरुत्तमर्ण इति निर्देशस्येव लिङ्गम् ॥

स्फायः स्फी ॥ कथन्तर्हि स्फीतिकाम इति । स्फीत इति प्रसिद्धिः स्फीतिः । आख्यानण्यन्तादच इः । यस्येति । निरः कुष इति विकल्पितेट्कत्वादिति भावः । उषित इति । यजादित्वात् संप्रसारणम् । शासिवसीति षः । चुधित इति । एवञ्च तस्यालमेषा चुधितस्येति प्रयोगमुद्दङ्क्य क्षुधेर्भावे क्विपि तारकादित्वादितजिति यद्वातुवृत्तिघूक्तान्तद् वृथैव । समानन्यायतया क्षुधितादावुपयोच्यतइति वा बोद्ध्यम् । अञ्चेरुदित्त्वात् क्त्वायां विकल्पे प्राप्ते निष्ठायां यस्य विभाषेति वचनम् । अञ्चित इति । नाञ्चेः पूजायामिति नलोपनिषेधः ॥

लुभः ॥ तीषसहेति क्त्वायां विकल्पे निष्ठायां निषेधे च प्राप्ते वचनम् ॥

पूङश्च ॥ श्र्युकः क्रितीति निषेधे प्राप्ते वचनम् ॥

पूङः क्त्वा च ॥ उत्तरार्थमिति । इह तु न क्त्वा सेडित्येव सिद्धमिति भावः । क्त्वैवेति । न तु निष्ठा । चानुकृष्टत्वादिति भावः । शिश्रियत इति । एरनेकाच इति यण् । चादिति । अन्यथा तक्रकौण्डिन्यन्यायेन बाधः स्यादिति भावः । भ्वादिरिति । स्नेहनमोचनयोरिति पठितः । स्विद्यतेस्त्विति । गात्रप्रक्षरणे पठितस्य । न चायमपि ञिदिति वाच्यम् । हरदत्तग्रन्थविरोधादिति भावः । अत्र हरदत्तः । ञिष्विदा स्नेहनमोचनयोरिति दिवादिर्गृह्यते न तु ञिष्विदा अव्यक्ते शब्दे इति भ्वादिरपि मिदिना साहचर्यादित्याह । तच्चिन्त्यम् । भ्वादिष्वपि मिदेः

पद्यमानत्वात् । तस्मादविशेषादुभयोर्ग्रहणं न्याय्यम् । तदेतदाह । दि-वादी भ्वादी चेति । खिदादीनामादितश्चेति निषेधात्तेषिनिष्ठा दुर्लभे-त्यत आदिकर्मणि निष्ठोदाहृता ॥

क्षुब्धस्वान्त ॥ अनायाससाध्य इति । उष्णमौषधजातमुष्णोदके प्रक्षिप्य सद्योभिषुत्य पूत्वा यत्पीयते तत्फाण्टमित्याहुः । वेदभाष्यइ-ति । तद्वै नवनीतं भवति घृतं वै देवानां फाण्टं मनुष्याणामिति शतप-थश्रुतेर्व्याख्यायामित्यर्थः । अन्यत्रेति । मन्थादेरवाच्यइत्यर्थः । वाहि-तमिति । वाहृ प्रयत्ने ॥

धृषिशसी वैयात्ये ॥ विरुद्धं यातो वियातः । अविनीतः । तस्य भावो वैयात्यम् । नियमार्थञ्चेदं वचनम् । ञिधृषा प्रागल्भ्ये श-सु हिंसायाम् अनयोरादितश्च, यस्य विभाषेति सूत्राभ्यामिट्प्रतिषे-धसिद्धेः । तदेतदाह । अविनय एवेति । नास्तीति । अनभिधानादिति भावः । अत्र प्रमाणमाह । अत एवेति । अत एव नियमार्थमिदं सूत्र-मिति वृत्तिः । अन्यथा विभाषा भावादिकर्मणोरिति विकल्पे प्राप्ते नित्यार्थं स्यादिति भावः । माधवस्त्विति । एवं हरदत्तोक्तं चिन्त्यमु-द्भूतमिति भावः ॥

दृढः स्थूल ॥ बलमस्यास्तीति बलः । अर्श आद्यच् । तदाह । बलवती-ति । तस्येति । तकारस्येत्यर्थः । हस्येति । ननु हो ढ इति ढत्वे ढो ढे लोपेनैव सिद्धमिति चेत् । मैवम् । तथा हि सति ढलोपस्यासिद्धत्वेन द्रढिमेत्यत्र र ऋतो हलादेर्लघोरिति रभावो न स्यात् । परिद्रढय्य ग-त इत्यत्र ल्यपि लघुपूर्वादिति अयादेशो न स्यात् । परिदृढस्यापत्यं

---

भावकर्मगतक्तनिरूपितं निमित्तत्वं बाद्ध्यतइति भावः । विकल्पे प्राप्ते इति । धृषे-रादित्वादिति भावः ।

चिन्त्यं समुद्भूतमिति । अवैयात्ये शैवादावादित्त्वफलस्य सत्त्वादिति भावः । हो ढ इति । घत्वाभावमात्रं निपात्यतामिति भावः ॥

पारिहढी कन्येत्यत्र गुरूपोत्तमलक्षणः ष्यङ् स्यात् । अतो ऽसिद्धत्वनिवृत्तये ढलोपो निपात्यतइति भाष्यादौ स्थितम् । अत एव ढलोपइति सूत्रे अणः किं दृढ इति प्राचो ग्रन्थस्य प्रामादिकतामवोचाम ॥

प्रभै ॥ निपातनमिति । ढलोपे प्रयोजनमिति प्राग्वदेव बोध्यम् ॥

कृच्छ्रगहनयोः कषः ॥ कृच्छ्रं दुःखन्तत्कारणञ्च गृह्यते । कषतिर्हिंसार्थः । कष्टो मोह इति । दुःखहेतुरित्यर्थः ॥

अभेः ॥ अविदूरस्य भाव आविदूर्यं ब्राह्मणादित्वात् ष्यञ् । अस्मादेव निर्देशान्न नञ् पूर्वादिति निषेधो न भवति । सामीप्यइत्येव तु नोक्तम् । नातिदूरस्यासङ्ग्रहापत्तेः । तदेतत् ध्वनयन् व्याचष्टे । नातिदूरमासन्नञ्चेति । एवञ्च सामीप्ये इति व्याचक्षाणस्य प्राचो न्यूनतेति भावः ॥

णेः ॥ अधीयतइत्यध्ययनम् । बहुलवचनात्कर्मणि ल्युट् ॥

वा दान्त ॥ शमु दमु उपशमे । पूरी आप्यायने दिवादिश्चुरादिश्च । दस्तु उपक्षये । स्पश बाधने । छद अपवारणे । ज्ञपिर्मित्सञ्ज्ञायामुक्तः ॥

रुष्यम ॥ रुष रोषे । अस्य तीषसहेति विकल्पितेट्त्वात् यस्य विभाषेति निषेधे प्राप्ते विकल्पो विधीयते । अम गत्यादिषु । अम रोगे इति चौरादिकस्तु न गृह्यते । एकाच इत्यधिकारादित्याहुः । तूर्ण इति । ञित्वरा संभ्रमे । ज्वरत्वरेत्यूठ् । आदितश्चेति निषेधे प्राप्ते विकल्पः । आदित्त्वस्य फलन्तु आत्मनेपदमात्रम् । तदेतदाह । फलं मन्दमिति । तथा च एधत्य । दित्त्वत् ह्रस्वानुबन्धत्वमेव न्याय्यमिति भावः । संघुष्ट इति । अविशब्दने ऽपि संपूर्वस्य परत्वादयं विकल्प एव । आस्वान्त इति । आङ्पूर्वस्य स्वनेर्मनोभिधाने ऽप्ययमेव विकल्पः परत्वात् । प्रह्लन्न इति ह्लादी सुखे । ईदित्त्वान्नेट् ॥

द्यतिस्यति ॥ श्तिपा निर्देशो धातुविशेषणार्थः । नहि तेन विना श्यन् सुलभः । यत्तु प्रसादकृतोक्तं श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः

दादत्तः सासान इति। तन्न। यङ्लुकि दीटा भाव्यम्। दादितः सासित इति। तत्र ति कितीति वचनान्नास्ति प्रसङ्गः। अभ्युपेत्य ब्रूमः दो दद्घोरिति विधीयमान आदेशो ऽनेकाल्त्वात्सर्वस्येति निर्विवादम्। तथाच साभ्यासस्य प्रवर्त्तत इत्तेर्यङ्लुगन्तस्येव विधिः। तथाच दादत्त इति त्वदुदाहृतं रूपं कथमुक्तिसंभवं लभेत॥

दधातेर्हिः॥ श्तिपा निर्देशो धेटो निवृत्त्यर्थः। तीत्यनुवृत्तेर्यङ्लुकि तु दाधितः। अत्रापि प्रसादकृता श्तिपा निर्देशस्य यङ्लुङ्निवृत्त्यर्थत्वाद्दाधीत इति घुमास्थेतीत्वमुदाहृतन्तत्पूर्ववदेव हेयम्॥

दो दद्घोः॥ इह आदेशस्तान्त एव न तु तदधान्तः। संहितायास्तुल्यत्वे ऽपि प्रक्रियायान्दोषादिति प्राञ्चः। तथा चाहुः। "तान्ते दोषो दीर्घत्वाख्यो दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वाख्यः स्यान्निर्दोषत्वात्थान्तो ग्राह्य" इति। तदनुसारेणाह। दथ् स्यादिति। वस्तुतस्तु सर्वे पक्षा इह सूपपादा इत्याह। तान्तो वेत्यादिना॥

अच उपसर्गात्तः॥ अच इत्यावर्तते। तत्रैकं पञ्चम्यन्तमुपसर्गं विशिनष्टि, अपरं षष्ठ्यन्तं स्थानिलाभायेति व्याचष्टे। अजन्तादित्यादिना। यद्वा द्वितकारकोयमादेशः। तेनानेकाल्त्वात्सर्वस्य घोर्भविष्यति। अच इति तु अनावृत्तं पञ्चम्यन्तमेवास्तु। न चैवमपो भीत्युत्तरसूत्रे ऽपि सर्वादेशत्वापत्तिः। अच इत्यनुवर्त्य अचः परस्य यकारस्यादेशविधानं तत्रान्त्यस्य संयोगान्तलोपे पूर्वस्य जश्त्वे रूपसिद्धेः। अवदत्तमिति। आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव विशेषणम्। धीतमिति। दधातेर्हिरित्यत्र श्लुविकरणस्य निर्देशाद्धेटो हिर्न।

---

धातुविशेषणार्थ इति। श्यन्निर्देशद्वारा धातुविशेषलाभार्थ इति भावः। अभ्युपेत्येति। श्तिपं विना ऽपि सेवेत्यादौ शपा निर्देशवत् श्यना निर्देशस्य कर्त्तुं शक्यत्वेन श्तिपूनिर्देशादिडभावमभ्युपेत्येत्यर्थः। साभ्यासस्येति। एतच्च माधवरीत्येति बोद्धव्यम्। तथाचाहुरिति। भाष्यकृत इति शेषः।

नापि दत्। तद्विधौ द इत्युपादानादिति भावः। झरो झरीति। अनेन पाक्षिको धलोप इत्यर्थः। प्रक्रन्त इति। कर्त्तुमारब्धवानित्यर्थः। नदीष्ण इति। नदीस्नाने कुशल इत्यर्थः। गङ्गां प्राप्त इति। प्रपूर्व आप्लृ व्याप्तौ। प्राप्तिरपीह सूत्रे गतिशब्देन विवक्षितेति भावः। उपोषित इति। वसतिक्षुधोरिडितीट्। शासिवसीति षः। मुकुन्दस्येति। आस्यते ऽस्मिन्नित्यासितमासनमित्यर्थः। यायते ऽस्मिन्निति यातं मार्गः। भुज्यते ऽस्मिन्निति भुक्तम्। भाजनम्। अधिकरणवाचिनश्चेति चिष्वपि कर्त्तरि षष्ठी। क्षिष्टः इद्ध इति। आदितश्च श्वीदित इति नेट्। इष्ट इति। तीषसहेति वेट्कत्वाद्यस्य विभाषेति नेट्॥

सुयजोर्ङ्वनिप्॥ इह सु सृ गतौ षु प्रसवैश्वर्ययोरिति निरनुबन्धकयोर्ग्रहणं प्राप्तमनभिधानादुभयपदिना साहचर्याद्वा न भवतीत्याह सुनोतेरिति। ङकारः सुनोतेर्गुणप्रतिषेधार्थः पकारः स्वरार्थस्तुगर्थश्च। छन्दसि लिडिति सूत्रस्यार्थमाह। भूतसामान्ये इति। न च छन्दसि लुङ्लङ्लिट इत्यनेनैव गतार्थता। धातुसंबन्धइत्यधिकारे स विधिः। इदन्तु धातुसंबन्धं विनापि भवतीति विशेषात्। त्रिमुनिमतमिति। सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे विभाषाग्रहणाच्च भाष्यवार्त्तिकयोरपि क्वसुकानचोश्छन्दस्युभयथेति वचनात्सार्वधातुकत्वेन सार्वधातुकमपिदिति ङित्त्वादेव आजिवान् इत्यादौ नलोपादीनाङ्कित्कार्याणामन्यथा सिद्धिमाशङ्क्य तितीर्वान् तिस्तिराण इत्यादौ ऋच्छत्यृतामिति प्राप्तस्य गुणस्य बाधनार्थङ्कित्करणमिति सिद्धा-

---

आवर्ततइति। एतेनादेः परस्येत्यादेस्तः स्यादित्यपास्तम्। विवक्षितेति। प्राप्ते चेति सूत्रप्रयोगादिति भावः। भाजनम्। भोजनपात्रम्। इदं लिति। न चानेन सिद्धे तत्र तिङ्ग्रहणं व्यर्थं लुङ्लङ्भ्यां बाधापत्तेः। अनुबन्धातिरिक्तकृतोपदेशिकासरूपत्वस्यैव वासरूपसूत्रे ग्रहणेन तस्येहाप्रवृत्तेरत एव लिटा लुङ् बाध्यते इति दिक्। सिद्धान्तितत्वादिति। आरिवानित्यादौ गुणस्तु ऋच्छत्यृतामित्यत्र ऋ-

न्तितत्वात्। अत एव क्रित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इति केषाञ्चिदुत्प्रेक्षा नादर्त्तव्येति हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः। कवयस्त्विति। गतानुगतिकयेति भावः। अत्र प्राचा दाश्वान् साह्वान् मीढ्वांश्चेति सूत्रमुपन्यस्तम्। तच्च यद्यपि छन्दसि भाषायाञ्चाविशेषेण वर्त्तत इति वृत्त्यादौ स्थितं तथापीहोपेक्षितम्। छन्दस्येव प्राचुर्येण दाश्वानित्यादिप्रयोगाणामुपलम्भात्। उक्तसूत्रस्य द्वित्वाभावादिनिपातनमात्रोपक्षीणत्वात् क्वसोश्च छान्दसताया निर्णीतत्वात्। अनेनैव क्वसोरपि विधाने गौरवात्। यदाहुः। "अल्पार्थविधिसन्तुष्टो नानेकार्थविधिश्रम" इति। अत एव हि तत्सूत्रमनावश्यकम्। तथा च पदकाराः साह्वान् विश्वा इति मन्त्रे साह्वानिति ह्रस्वञ्चिच्छिदुरिति दिक्॥

उपेयिवाननाश्वान्॥ इडिति। वलादिलक्षण एवेट् नेड् वशि कृतीति प्रतिषिद्धः क्रादिनियमात्प्राप्तः वस्वेकाजाद्घसामिति सूत्रेण कृतद्वित्वानामेकाचामादन्तानाङ्घसेश्च वसोरिट् स्यान्नान्येषामिति नियच्छता प्रतिषिद्धः। नित्यत्वात्। द्वित्वे कृते ऽनेकाच्त्वात्। न च सवर्णदीर्घेणैकाच्त्वं दीर्घ इणः कितीति दीर्घेकृते तत्सामर्थ्यात्सवर्णदीर्घाभाव इति पक्षाश्रयणात्। स एवेट् इह प्रतिप्रसूयते नापूर्वो विधीयते। तेन

---

कारप्रश्लेषेण ऋधातोः पुनर्विधानाद्बोद्धव्यः। हरदत्तेत्यादि। अत्रारुचिबीजन्तु कि-भाषापूर्वाह्णेति सूत्रे भाष्ये पपुष आगतं पपिवद्रूप्यमिति लौकिकविग्रहे क्वसुप्रयोगात् लोके ऽपि क्वसुः। उक्तभाष्यप्रामाण्यात्संयोगान्तेभ्यश्छन्दस्येव क्वसुः। कानच् तु छन्दस्येव। उत्तरसूत्रन्तेभ्यो ऽन्यत्र क्वचिदेवेत्यर्थज्ञापनार्थमिति। गतानुगतिकतयेति। गतमनुलक्षीकृत्य गतिर्यस्य तत्त्वेनेत्यर्थः। द्वित्वाभावदीति। आदिनेडभावदीर्घत्वानि। अयं वृत्तिग्रन्थो ऽपि क्वसोर्लोके प्रवृत्तौ साधक इति बोद्धव्यम्। दिगिति। दिगर्थस्तु पदविभागस्यापि लौकिकत्वात्तत्र दीर्घस्यौचित्ये ऽपि तदभावाय पृषोदरादित्वस्यावश्यकत्वेन तेनैव सर्वसिद्धाविदं व्यर्थमिति। वस्तुतो न लक्षणेन पदकारा अनुवर्त्या इति न्यायेन तथा पदपाठो भ्रान्त्यैवेति बोद्धव्यम्।

संप्रसारणविषयेन भवति। अत एवोदाहरति। उपेयुष इति। अविवक्षितमिति। व्याख्यानमेवात्र शरणम्। वचेः कर्त्तरीति। न तु भावकर्मणोः। एतच्च निपातनाल्लब्धम्॥

लटः शतृशानचौ॥ सामानाधिकरण्ये सतीति। यद्यपि केवलस्य लटः प्रयोगाभावात् सामानाधिकरण्यन्दुर्लभम्। तथापि आदेशयोः शतृशानचोस्तद्दृष्ट्वा स्थानिन्यपि तत्कल्प्यते। पचन्तमिति। विक्लित्त्यनुकूलवर्त्तमानव्यापाराश्रयमित्यर्थः। पचतीति विग्रहप्रदर्शनन्तु ईषत्साम्येन। क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति सिद्धान्तात्॥

आने मुक्॥ अतो येय इति सूत्रादनुवृत्तं पञ्चम्यन्तमपि अत इति पदं षष्ठ्या विपरिणम्यते। आनइति सप्तमीबलात्। न च विपरीतं शक्यं, पञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्। सप्तम्याश्चाचरितार्थत्वात्। तदेतदाह। अङ्गस्यात इति। यत्तु प्राचा अदन्ताङ्गस्येति व्याख्यातन्तन्न। पचमान इत्यादौ अदुपदेशाल्लसार्वधातुकमनुदात्तमिति शानचः स्वरस्यासिद्धिप्रसङ्गात्। त्वत्पक्षे हि अङ्गभक्तो मुक् स च तदेव न व्यवदध्यात्। तदवयवमकारन्तु व्यवदध्यादेव। स्पष्टञ्चैतदाकरे।

---

नेड्वशीति। इदमेकाच उपदेशे इत्यस्याप्युपलक्षणम्। इतिपक्षेति। अत्रारुचिबीजन्तु ईयतुरित्यादौ यणादेशे स सावकाशः। अचः परस्मिन्निति पूर्वस्यैव विधौ न पूर्वपरविधौ। एवञ्च सवर्णदीर्घे कृते क्रादिनियमादिटि कृतदीर्घस्येयादेशो निपातनादिति बोद्ध्यम्। तेनेति। अकृतव्यूहपरिभाषयेति भावः। वस्तुत इत्यपि न क्षतिरिति निरूपितम्। व्याख्यानमेवेति। अत एवैकादिष्टस्य ईयू भवतीति भाष्ये दीर्घोच्चारणमसान्धिश्चेति बोद्ध्यम्।

सामानाधिकरण्यमिति। अप्रथमान्तेनेत्यादिः। आदेशयोरिति तिङ्रूपादेशोपस्थाप्यकर्त्तृकर्मणोरप्रथमान्तसामानाधिकरण्याभावादाह। शतृशानचोरिति। तत्स्थानिलकारे प्रकृत्यर्थं प्रति प्रधानभूतकर्त्राद्यभिधायकत्वमेव कल्प्यते। एवञ्च कल्पितसामानाधिकरण्यानुवादेन शत्रादिविधिरिति भावः। इति सिद्धान्तादिति। वस्तुतो विग्रहे वृत्त्यनुसार्येव विशेष्यविशेषणभावः। क्रियाप्रधानमिति तु लोकेऽर्थबोधाय

लुङिति। यद्यपि प्रथमान्तं प्रकृतं तथापि षष्ठ्या विपरिणम्यतइति भावः। पुनरिति। एवं हि पुनर्विधिः सम्पद्यते। स च प्रथमेनाप्राप्ते ऽपि क्वचित्प्रवृत्त्यर्थ इति भावः। प्रथमेति। उपलक्षणमिदम्। अप्रथमान्तेन समानाधिकरणभावे ऽपीत्यर्थः। तेन कुर्वतो ऽपत्यङ्कौर्वतः। कुर्वतो भक्तिः कुर्वद्भक्तिः कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिध्यति॥

विदेः शतुर्वसुः॥ स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं वसोः संप्रसारणमित्यत्र क्वसोरपि सामान्यग्रहणार्थम्। अनुबन्धग्रहणपरिभाषा ऽपि तत्सामर्थ्यादेव न प्रवर्त्तते॥

पूङ्यजोः॥ ण्वुलादिवत्स्वतन्त्रोयन्न तु शत्रादिवल्लादेशस्तथा हि सति वेति वाच्यं स्यात्। पचते यजते इति तिङोपि यथा स्युः। न च वासरूपन्यायेन निर्वाहः। लादेशेषु तदभावस्य आकरे स्थितत्वात्। किं च लादेशे त्वभावकर्मणोरपि स्यात्। कर्त्तर्येव चेष्यते। एवञ्चानशो वक्ष्यमाणशतुश्च स्वातन्त्र्यं बोध्यम्। यत्तु शानचो लादेशत्वे लसार्वधातुकानुदात्तत्वं स्यादिति वदन्ति तच्चिन्त्यम्। नित्स्वरस्य जागरूकत्वात्। अनुदात्तत्वे इष्टापत्तेश्चेत्यास्तान्तावत्। नन्वेषां लादेशत्वाभावे सोमं पवमान इत्यादौ कर्मणि षष्ठी स्यादिति चेत् मैवम्। न लो-

---

प्रयुज्यमानाख्यातविषयमेवेति निरूपितम्। व्यवदध्यादेवेति। स्वरोद्देश्यकविधेरभावात् हल्स्वरप्राप्तेरभावाच्च न व्यञ्जनस्याविद्यमानवत्त्वम्। एवं हि पुनरिति। इदं वृत्त्यनुसारि। भाष्ये तु तदभावे प्रत्ययान्तरत्वमेव स्यादेवञ्च कर्मणि शानज् न स्यात् अतो लटः शतृशानचाविति योगविभागेनायमर्थः साध्य इत्युक्तम्।

अनुबन्धग्रहणेति। एकानुबन्धकेऽस्याप्युपलक्षणम्।

न लिति। लट इति निवृत्तेरिति भावः। वासरूपन्यायेनेति। नन्वभिन्नार्थत्वादनयोर्न तिङपवादत्वन्तिङि हि संख्या युष्मदाद्यर्थोपि भासते न कृतीति वाच्यम्। युष्मदाद्यर्थस्य समभिव्याहृतपदेन संख्यायास्तदुत्तरसुपा प्रतीत्या ऽविशेषादिति भावः। लादेशेष्विति। प्रत्ययविषयत्वात्तस्यादेशे ऽप्रवृत्तेरिति भावः। अनुबन्धग्रहणपरिभाषेति। एकानुबन्धकपरिभाषेत्यर्थः। स्वातन्त्र्यमिति। लट इत्यस्य निवृत्तेरिति

केति सूत्रे ठन्निति प्रत्याहारनिर्देश इत्युक्तत्वात् ॥

ताच्छील्य ॥ चानशो लादेशत्वाभावेन अनात्मनेपदत्वात्परस्मैपदिभ्यो ऽपि विधानमिति ध्वनयन्नुदाहरति । शत्रुं निघ्नान इति ॥

सुञो यज्ञसंयोगे ॥ सुनोतेः शतृप्रत्ययः स्यात् । यज्ञेन संयुज्यमाने वृत्तिश्चेत् । नन्विह सुञो यज्ञे इत्येवास्तु यज्ञविषयकश्चेत्सुनोत्यर्थ इति व्याख्याय सुरां सुनोतीत्यादेर्व्यावर्त्तयितुं शक्यत्वात् । अत्राहुः । संयोगग्रहणं प्रधानकर्तृसंप्रत्ययार्थम् । तेन यजमानादन्यत्र न भवतीति । एवञ्चाप्रधाने कर्त्तरि लटः शतृशानचावित्यनेनापि न भवति । संयोगग्रहणसामर्थ्याद् इति हरदत्तः । यः सुन्वन्तमवतीत्यादीनामेकवचनान्तानामधिकारपरत्वं निर्बाधम् । बहुवचनान्तानां तु स्थलविशेष एव संभवतीति दर्शयितुमुदाहरति । सर्वे सुन्वन्त इति । तद्व्याचष्टे सर्वे इत्यादिना ॥

अर्हः ॥ प्रशंसायामिदम् । अर्हति चोरो वधम् ।

आक्वेः ॥ शीलादीनान्त्रयाणां विशेषणं समर्थयितुं निर्दिष्टैस्त्रिभिः तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते ॥

अलङ्कृञ् ॥ कृञ इति करोतेर्ग्रहणं प्रसिद्धेर्न हिंसार्थस्य । इह पञ्चादयस्त्रय उत्पूर्वाः पठ्यन्ते । तत्रोदः पचपतमद इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्त्यर्थः । तेन समुत्पतिष्णुरिति न भवतीत्याहुः । इह पचेरनन्तरं पतिस्तान्तः पठ्यते । तथा च भट्टिः । "उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणाविति । कालिदासो ऽपि "ससत्त्वरत्नखचितामेतानामुत्पतिष्णव" इति । केचित्तु तत्स्थाने दान्तं पठित्वा पद गतावित्यस्मात्प्रत्ययमाहुः । पारयिष्णव इति । अयामन्ताल्वाय्ये-

---

भावः । यज्ञेन सम्प्रयुज्यमाने इति । कर्त्तरि शत्रन्तस्येति शेषः । अप्रधाने ऋत्विक्षु । अधिकारीति । यजमानेऽर्थः ॥

इत्येवेति । पृथक्पाठेनेत्यर्थः । प्रत्ययमाहुरिति । अत्रारुचिबीजन्तु दान्तपाठस्य

त्यायः। नैतदिति। चकारस्यानुक्तसमुच्चयार्थत्वमित्यर्थः। गकारेति। नन्वेवङ्गकारचर्त्वस्यासिद्धतया दृशि चेत्युत्वं स्यादिति चेत्सत्यम्। सौत्रोयं निर्देशः। तथा च वार्त्तिकम्॥

स्योर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्वशासनात्।

गुणाभावस्त्रिषु स्मार्यः श्र्युको ऽनिट्त्वङ्गगोरितोरिति॥

चसि॥ चक्षुरिति। नेड्वशीति नेट्॥

शमित्यष्टाभ्यः॥ इतिशब्द आद्यर्थः॥

संपृचा॥ परिदेवीति। देवृ देवने भ्वादिः। ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणम्। लाक्षणिकत्वात्। अण्यन्तैः साहचर्याच्च।

वौ कष॥ कषहिंसार्थः। लस श्लेषणक्रीडनयोः। कत्थ श्लाघायाम्। स्रम्भु विश्वासे॥

अपे च लषः॥ लष कान्तौ। प्रमाथीति। मथे विलोडने॥

निन्दहिंस॥ इह सूत्रे विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः। अकारस्त्वागन्तुकः। केचित्तु विनाशीति ण्यन्तमेव पठन्ति। परिवादी तु वदेर्ण्यन्तपाठो निर्विवाद एव। असूयतिः कण्ड्वादियगन्तः। निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। स्यादेतत्। असूयतेरेव वुञ् विधेयो नेतरेभ्यः निन्दादीनां ण्वुलैव सिद्धेः। न हि तत्र ञित्स्वरञित्स्वरयोर्विशेषो ऽस्ति। उभयथा ऽप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि प्रत्ययात्पूर्वमुदात्तं वुञि तु आदिरुदात्त इति विशेषः। तत्राह। ण्वुलिति। तृजादयो नेति। न केवलं ण्वुल्विषयमेव ज्ञापकङ्किं तु प्रत्ययमात्रविषयकमित्यर्थः॥

---

बहुसंमतत्वाभावः।

साहचर्याच्चेति। घिनुण्कर्मकाणामिति भाष्योक्तेः। सकर्मकाच्चेदपि बोद्ध्यम्। इति विशेष इति। न च तच्छीलादिषु तृन्बाधकः वासरूपन्यायेन सिद्धेरिति भावः।

दविक्रुशोः ॥ दीव्यतेर्हेतुमण्ण्यन्तस्य दिवु कूजने इत्यस्य चुरादिण्यन्तस्य च ग्रहणम्। शब्दनइति। शब्द शब्दने चुरादिः ॥

अनुदात्तेतश्च हलादेः ॥ आदिग्रहणाभावे हलन्तादित्यर्थः स्यात्। ततश्च जुगुप्सन इत्यादि न सिध्येत्। अस्ति चेहानुदात्तेत्त्वम्। गुपादिष्ववयवेषु अचरितार्थस्यानुबन्धस्य समुदायविशेषकत्वात् ॥

जुचङ्क्रम्य ॥ क्रमिद्रमी यङन्तौ। परस्परमिति। निन्दादिसूत्रे हि तच्छीलादिषु वासरूपविधिना तृजादयो नेति ज्ञापितमिह तु ताच्छीलिकेषु परस्परं वासरूपविधिर्नेति विवेक इति भावः ॥

न यः ॥ अयपयतयनयगताविति पठितस्य नयतेर्नायं निर्देशः। अनुदात्तेत्त्वादेव युचः सिद्धत्वात्। किं तु नेति पृथक्पदमिति मत्वाह। यकारान्तादिति। क्नूयिता। क्ष्मायितेति। क्नूयी शब्दे। क्ष्मायी विधूनने ॥

सूददीपदीक्षश्च ॥ ताच्छीलिकेष्विति। परस्परमिति भावः। प्रायिकमिति। न केवलं यथाश्रुतं भाष्यमवलम्ब्य युज्ञयोरेव समावेश इति मन्तव्यम्। किं तु प्रायिकत्वएव भाष्यतात्पर्यम्। तेन गमेर्लषपतपदेत्युकञ्विषये तृन्नपि। गन्ता गामुकः। वौ कषलसेति घिनुण्विषये युजपि विकत्थी विकत्थन इत्यादि सिध्यतीति भावः ॥

जल्पभिक्ष ॥ कुट्ट च्छेदने। लुण्ठ स्तेये। चौरादिकौ ॥

जिदृक्षि ॥ जि जये। जि अभिभवे ॥ दृङादरे। क्षि चये। क्षि निवासगत्योः। श्रिञ् सेवायां विपूर्वः। व्यथ भयसञ्चलनयोर्नञ्पूर्वः।

---

ण्यन्तस्य चेति। पूर्वसूत्रस्थप्रत्ययान्तसाहचर्यान्न तु देवतेरिति भावः।

न सिध्येदिति। न च तत्र तितिक्षुरित्यादिवत्परत्वाद् उः प्राप्नोतीति वाच्यम्। एधादिभ्यो युजभावस्य फलस्य सत्त्वेनाक्षतेः। मूलन्तु वृत्त्यनुरोधेन चेनानुक्तसमुच्चयार्थेन जुगुप्सनादौ युजित्यन्ये।

यथाश्रुतभाष्यमिति। भवति हि रेण युचः समावेश इति हि भाष्ये उक्तम्।

निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः। प्रसवीति। षू प्रेरणे। असादिनिः। सूतिसूयत्योस्तु सानुबन्धत्वान्नेह ग्रहणम्। जिह्मीत्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम्। एवं हि पृथग्विभक्तिस्वकारस्य मास्त्विति सुवचम्।

स्पृहिगृहि॥ तत्पूर्व इति। तच्छब्दस्य समासो ऽपि निपातनादिति बोध्यम्॥

दाधेट्॥ डुदाञ्दोदेङामन्त्रयाणामेव ग्रहणमित्याहुः॥

भञ्जभास॥ भङ्गुर इति। भञ्जेः कर्मकर्त्तर्येव अभिधानस्वभावादित्याहुः॥

विदिभिदि॥ विदेर्ज्ञानार्थस्यैव ग्रहणम् न लाभाद्यर्थस्य व्याख्यानात्। छिदुरमिति। कर्मकर्त्तरीति वृत्तिः। नैतद्भाष्ये दृष्टम्। तथा च माघः। मुख्ये कर्त्तरि प्रायुङ्क्त। "प्रियतमाय वपुर्गुरुमत्सरच्छिदुरया ऽदुरयाचितमङ्गना" इति॥

जागुरूकः॥ जागुरिति पञ्चम्यन्तं तद्व्याचष्टे। जागर्त्तेरिति। जागरूक इति सिद्धरूपमेव न तु निपातितम्। उत्तरत्र ऊकस्याननुवृत्तिप्रसङ्गात्॥

यजजप॥ जञ्जपूक इति। जपजभदहदशभञ्जपशाञ्चेति नुक्। वावदूकशब्दस्तु उलूकादयश्चेत्यत्र वक्ष्यते। माधवस्त्वाह। कुर्वादिगणे वावदूकेति पाठादेव यङन्ताद्वदेरूकप्रत्यय इति॥

सनाशंस॥ सनिति प्रत्ययग्रहणात्तदन्तग्रहणम्। षणु दाने षण सम्भक्ताविति धात्वोस्तु नेह ग्रहणम्। गर्गादिषु विजिगीषुशब्दस्य

---

त्रयाणामेवेति। त्रयाणामपीत्यर्थः।

व्याख्यानादिति। रुढिप्रकारास्ताच्छीलिका इत्याद्योति सूत्रे भाष्योक्तेरिति भावः।

प्रत्ययाप्रत्ययोरिति न्यायलब्धेऽर्थे लिङ्गमप्याह। गर्गादिष्विति। आङः शंसि-

पाठात्। आङः असु इच्छायाम् ॥

विन्दुरिच्छुः॥ वेत्तेरिति ज्ञानार्थस्यैव ग्रहणन्नेतरेषाम्। एवमिषेरपीच्छार्थस्यैव ग्रहणं न तु इष्णातीष्यत्योः। अनभिधानात् निपातनाद्वेति भावः॥

क्याच्छन्दसि॥ क्वित् यः य इति व्याख्यानात्कण्ड्वादियगपि गृह्यते तेन तुरण्यवोऽङ्गिरसो नक्षन्त। सपर्य्येम सपर्यवः। यमस्य योनौ शकुनं भुरण्युमित्यादि सिद्धम्। अथ कथं "सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयव" इति भट्टपादाः। मृगय्वादिषु असूयुशब्दो द्रष्टव्यः। सुम्नयुरिति। न च्छन्दस्यपुत्रस्येति निषेधात् क्यचि चेति ईत्वमकृत्सार्वेति दीर्घश्च न भवति।

आदृ॥ आदिति दकारो मुखसुखार्थः। न त्वयन्तकारः। तेन तात्परत्वाभावात् ऋ इत्यनेन दीर्घोऽपि गृह्यते। तेन ततुरिर्जगुरिः। तरतेर्गिरतेश्च बहुलं छन्दसीत्युत्वे रूपमिति प्राञ्चः। वस्तुतस्तु आदित्यादिप्रकृतिविशेषग्रहणमुदाहरणप्रपञ्चमात्रङ्किकिनौ लिट् चेत्येतावन्मात्रन्तु विवक्षितम्। तथा च वार्त्तिकम्। "किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनादि"ति। उदाहृतञ्च भाष्ये सेदिर्नेमिरित्यादि। एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह। आदन्तादृदन्तादिति। बभ्रिर्वज्रमिति। न लोकेति षष्ठीनिषेधाद्द्वितीया। किकिनोः स्थाने तिबादयस्तु न लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात्। छान्दससूत्रद्वयोपन्यसनं भाषाया-

---

ति। आङा सह निर्देशात्तत्सुसर्थंशतेर्न ग्रहणमिति भावः।

कथमिति। लोके कथमिति प्रश्नः।

स्वरूपाबाधेनैवेति। अत एव किकिनोर्विधानञ्चरितार्थमिति भावः। न च लिड्वदतिदेशाद्भावकर्मणोरप्येतौ स्याताम्। उत्पन्नयोः कार्यातिदेशात्। उत्पत्तिश्च कर्त्तरि कृदित्येकवाक्यतया कर्त्तर्येव। वर्तमानइत्यधिकारेण भूतकालेऽपि नातिदि-

मित्यादिवार्त्तिकविशेषविवेचनार्थम् । इह च वार्त्तिके गमिर्यद्यपि न दृश्यते तथापि धातुवृत्तौ क चिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः । नी-गभावश्चेति । नीग्वञ्चित्यादिना प्राप्तस्य नीगागमस्याभाव इत्यर्थः । श्रयति हरिं श्रीरिति । प्राचा तु श्रयन्त्येनामिति कर्मणि क्विबुदाहृतः । तत्र कर्त्तरि कृदिति सूत्रविरोधः स्पष्ट एव । बाहुलकन्तु अगतिकग-तिः । एतेन श्रीयते इति श्रीरिति कर्मणि निङ्गा विग्रहो न तु श्र-यतीति कर्त्रर्थे कर्मणि क्विपो विधानादिति प्राचो ग्रन्थं व्याचक्षाणा-नामुक्तिरपि प्रत्युक्ता । अत एव जुहूरित्यस्य जुहोत्यनयेति प्राचां विग्र-हो ऽप्युपेक्ष्यः । तथा च जुहूरित्यत्र हरदत्तेनोक्तङ्करणस्यात्र कर्तृत्व-विवक्षेति । एतेन धीरिति व्याख्यातम् ।

भुवः सञ्ज्ञान्तरयोः ॥ धनिकेत्यादि । तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र नेति भावः । एतच्च द्विग्रहणानुवृत्तेर्लभ्यते । नन्वेवं प्रतिभूशब्दः सञ्ज्ञेति फलितम् । तत्र सञ्ज्ञायामित्येव सिद्धं किमन्तरग्रहणेन । अत्राहुः । यावद्द्रव्यभाविन्यः सञ्ज्ञाः प्रतिभूशब्दस्तु सत्येव तस्मिन्नृ-णप्रदाने निवर्त्तते इति ॥

दाम्नी ॥ दशेति नलोपिनो निर्देशो ज्ञापकः क चिदकिङ्त्यपि दं-शेर्नलोपो भवति इति तेन ल्युटि दशना दन्ताः । दंश दशने इति सिद्धम् । न च सन्निधानात् ष्ट्रन्येव नलोपः स्यादिति वाच्यम् । पुंसो दन्तदंष्ट्रेति निर्देशात् । तच्चेदिति । एतेन हलसूकरयोरभिधेयत्वमु-पपदत्वञ्च निरस्यति । मुखमित्यर्थ इति । तत्रैव रूढेरिति भावः ॥

अर्त्तिलूधूसू ॥ धू इति कुटादिरेव गृह्यते । निरनुबन्धकत्वात् । अत एव गाङ्कुटेति ङित्त्वाद्गुणनिषेधे उवङ् । तदाह । धुवित्रमिति ॥

---

इयतइति दिक् । बाहुलकन्त्विति । ताभ्यामन्यत्रोणादय इत्युक्तेरुणादिक्विपः क-र्मण्यपि सत्त्वमित्यगतिका गतिरिति बोद्धव्यम् ।

निर्देशादिति । ग्रीवादंष्ट्रो मणिरिति भाष्यप्रयोगाच्चेत्यपि बोद्धव्यम् । एतच्च

॥ अथोणादयः ॥

कृवापा॥ कारुः शिल्पिनि कारके इति धरणिकोशमभिप्रेत्याह । कारुरित्यादि । आद्ये योगरूढिः । द्वितीये तु योगमात्रमिति विवेकः अत एव द्वितीये धात्वर्थं प्रति कारकान्वयो भवत्येव । तथा च भट्टिः । "राघवस्य ततः कार्यङ्कारुर्वानरपुङ्गवः । सर्ववानरसेनानामाश्वागमनमादिशत्" इति । पायुः पुंसि । गुदन्त्वपानं पायुर्नेत्यमरः । पिबत्यनेन नैत्वादिकमिति विग्रहः । पाति रक्षतीति विग्रहे रक्षकोपि । तथा च मन्त्रः । भुवस्तस्य स्वतवाः पायुरग्ने इति । स्वतवान्पायाविति रुत्वम् । जायुरिति । भेषजौषधभैषज्यान्यगदो ज्यायुरित्यपीत्यमरः । साहचर्यात्पुंस्त्वम् । मायुः पित्तङ्कफः श्लेष्मेत्यमरः । शब्दोपि मायुः । यत्पशुर्मायुमकृत गोमायुरेको अजमायुरेक इत्यादौ वेदभाष्यकारादिभिस्तथैव व्याख्यानात् । स्वदते रोचते इति स्वादुः । विशेष्यनिघ्नोयम् । एवं साधुरपि । आशु शीघ्रमिति । विलम्बाभावमात्रपरत्वे क्लीवन्तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम् । अथ शीघ्रमित्युपक्रम्य क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेद्यगामि यत् इत्यमरः । व्रीहौ तु पुंस्येव । छन्दसीणः ॥ उणनुवर्तते मान आयाविति आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः । अत एव त्वामग्ने प्रथममायुमायवे । मानस्तोकइत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम् । अर्वाचीनास्तु छन्दसीण इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्त्ततइति स्वीकृत्य आयुर्जीवितकालो ना इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः । वायुना जगदायुनेति वर्णविवेकः । एतेर्णिच्चेत्युप्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु

---

वृत्त्यनुसारेण । दशेति शपि निर्देशो दंशसञ्जेति नलोप इत्यनिदितामिति सूत्रे भाष्ये । दशना इति औणादिकक्युना सिद्धम् । अत एव तनुत्रं वर्म दंशनमित्यमरः सङ्गच्छते इति बोद्ध्यम् ॥

अथोणादयः ॥ अर्वाचीनास्त्विति । अत्रारुचिबीजन्तु लोके एषामसाधुत्वमेव ।

लोकवेदयोर्निर्विवाद एव । अत एव जटा आयुरस्येति विग्रहे गृध्रं हत्वा जटायुषमिति प्रयोगः । कथन्तर्हि मा वधिष्ट जटायुं मामिति भट्टिः । तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमज इति विन्ध्यवर्णने अभिवन्दनेति चेत् । अर्वाचीनमते तावद्भद्रमेव । वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः । मृगय्वादित्वात्कुः । आयातीत्यायुः । जटायुषा जटायुश्च विद्यादायुस्तथायुषेति द्विरूपकोशः । चाटविति । चटु चाटु प्रियं वाक्यमिति हेमचन्द्रः । "चाटुचाकृतकसंभ्रममास्वाङ्कामंपात्वम-गमद्रमणेष्व"ति माघः । चाटुर्नरि प्रियोक्तिः स्यादिति रत्नमालाकोशः । नरि पुंसि । चकार च वक्रचाटून् प्रौढयोषिदिवस्येति माघः । इह सूत्रे रङ्किमपि पठित्वा राङ्करित्येके । बाहुलकादिति तु बहवः । सस्येति । किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणीति मेदिनीकोशः । चोरस्तु ॥ च इति तरतेः षष्ठ्या निर्देशः । के चित्तु चोरिति छित्वा चट-धातोरपि प्रश्लेषाद् इयर्त्ति अर्यते वा आलुः शाकविशेषो घटी चेत्या-हुः । कर्कर्यालुर्गलन्तिकेत्यमरः । भृमृशी ॥ मरुरिति । मरुः स्वर्णे ह-रे पुंसीति मेदिनी । भरुर्भर्त्तृकनकयोरिति हेमचन्द्रः । शयुरिति । अजगरे शयुर्वाहस इत्युभौ इत्यमरः । तरुरिति । तरन्ति नरकमनेन रोपकाः । चरुरिति । अनवस्रावितान्तरूष्मपक्व ओदन इति या-ज्ञिकाः । त्रिवृदधिकरणेप्येवम् । उगवादिभ्यो यदिति सूत्रे कैयट-स्त्वाह । स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति । विश्वप्रका-शे तु चरुर्भाण्डे च हव्यान्ने इति नानार्थतोक्ता । अथ पुमान् चरुर्हव्या-न्नभाण्डयोरिति मेदिनी च । हव्यपाके चरुः पुमानित्यमरग्रन्थे क-

---

बाहुलकात्तत्र प्रवृत्तौ मानाभाव इति । शाकविशेष इति । अरुईत्याख्यः । गलन्ति-का । सच्छिद्रघटे लोहमये दर्व्याकारे सच्छिद्रे भाषायां झरणेत्याख्ये च । तरन्ति न-रकमिति । तरति जलमद्ध्ये इत्यपि बोद्ध्यम् । चरुर्भाण्डे चेति । भाण्डं चरु-स्थाल्येव । कर्मार्थघञन्तेन कर्मधारयमधिकरणघञन्तेन षष्ठीतत्पुरुषञ्चेति पाठः ।

र्थघञन्तेन कर्मधारयमधिकरणार्थघञन्ते षष्ठीतत्पुरुषञ्चाश्रित्य द्वेधा व्याचक्षाणाः स्वाम्यादयोपि नानार्थतायामनुकूलाः। तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे। धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने इति नान्तमेदिनी। विश्वप्रकाशमुदाहरति। धनुषा चेत्यादि। स्यात्तनुस्तनुषा सार्द्धमित्यतः सार्धमित्यनुषज्यते। धनुरिवेति। "शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्तः" "त्रिपुरेन्मृजुमाप्य विपक्षं सायक"मिति श्रीहर्षश्लोकशेषः। "धनुर्वंशविशुद्धोपि निर्गुणः किङ्करिष्यती"ति धन्वन्तरिः। के चित्तु इह सूत्रे धनिं न पठन्ति। तेषां मते सकारान्तधनुःशब्दमेवाश्रित्योक्तग्रन्था निर्वाह्याः। तस्यापि पुंस्त्वात्। उक्तं ह्यमरेण। अथास्त्रियौ। धनुश्चापाविति। किन्नर इति। तुरङ्गवदनो मयुरित्यमरः। मीनातिमिनोतीत्यात्वन्तु नेह बाहुलकात्। कटति रसनामिति कटुः। कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि। नपुंसकमकार्ये स्यात्पुल्लिङ्गो रणमात्रके। त्रिषु तद्वत्सगन्धोग्र मत्सरेपि खरेऽपि चेति मेदिनी। वटतीति। वटुर्द्विजसुतः स्मृत इति संसारावर्त्तात्। नटवटुरिति तूपचारात्। दन्त्योष्ठ्यादिरयम्। कल्पद्रुमादिप्रामाण्यात्। अभिव्याप्येति। यद्यपि फक्किपाटीत्यादिसूत्रं यावदनुवर्त्ततइति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते। तथापि अभिव्याप्येत्येवोचितम्। पिबतं सौम्यं मधु इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात्। वोतो गुणवचनादिति सूत्रे हरदत्तेन अभिव्याप्येति स्पष्टमभिधानाच्चेति भावः। त्रपु सीसमिति। तद्धि अग्निं दृष्ट्वा त्रपते लज्जतइव। त्रपु सीसकरङ्गयोरिति मेदिनीकोशः। हनुरिति। हनुः पुमान् परो गण्डादिति वररुचिकोशः। स्त्रीलिङ्गोप्ययम्।

---

प्रियालद्रौ। भाषायां चिरौञ्जीत्याख्ये। राशयो मेषाद्याः। कटुरोहिणी। कटुकी लता औषधिविशेषः। राजिका। राई इति प्रसिद्धम्। अकार्यम्। पापम्। खरे। तीक्ष्णे। आद्युदात्तदर्शनादिति। यद्यपि नब्विषयस्येत्याद्युदात्तत्वं सिद्धमत्र

हनुर्हट्टविलासिन्यां स्त्यावस्त्रगदे स्त्रियाम्। द्वयोः कपोलावयवे इति मेदिनी। अति प्रायने मतुप्। हनुमान्। अन्येषामपि दृश्यते इति द्र-ग्निग्रहणात् पाक्षिको दीर्घः। हनूमान्। खेदेन बध्नातीति बन्धुः प्र-ज्ञादित्वात् बान्धवः। मनुरादिराजो मन्त्रस्य बिन्दुः पवर्गीयादिः। कन्दु-रिति। स्कन्दत्यस्मिन् जनताप इति व्युत्पत्त्या भोगस्थानमित्याङ्ः। अ-मरस्त्वाह। क्लीबेम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियामिति। क-न्दुर्वा ना इति पूर्वेणान्वयाद्वा पुमानित्यर्थः। सृजेरसुम्वा सृजतीति र-ज्जुः स्त्रियां, रज्जुर्वेण्यां गुणे योषिदिति मेदिनी। आगमसकारस्य स्तुत्वेन शः। जश्त्वेन जः। तर्कुरिति। कृन्तत्यनेनेति विग्रहः। तर्कुरिति हारावलीकोशः। फलिपाटि। एकापि षष्ठी विषयभेदाद्भिद्यते। गुणा-गमे हि फलेरवयवषष्ठी पत्याद्यादेशचतुष्टयविधौ तु पाट्यादिभ्यः स्था-नषष्ठी। सा धनयोर्विधौ अन्ये ऽप्युपसंक्रियते इति विवेकः। अनाग-मकानां सागमका आदेशा इति पक्षे तु स्थानषष्ठ्येवेति बोध्यम्। फल्गुस्सारेभिधेयवत्। नदीभेदे मलयूर्वा स्त्रीति मेदिनी। वल संवरणे इति दन्त्योष्ठ्यादिः। यत्तूज्ज्वलदत्तेन सूत्रे पवर्गीयादिं पठित्वा बलप्रा-णनइत्युपन्यस्तन्तल्लक्ष्यविरोधादुपेक्ष्यम्। अयं नाभा वदतिवल्गवो गृहे इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात्। धरणिकोशस्त्वमाह। बभ्रुर्वैश्वानरे मूलपाणौ च गरुडध्वजे। विशाले नकुले पुंसि पिङ्गले त्व-भिधेयवत् इति मेदिनीकोशः। अन्यतोपीति। श्रः कुस्वेति वक्तव्ये प्रा-

---

तथापि पुंस्त्वाद्युदात्तार्थन्तथैव युक्तमिति भावः। गण्डात्। कपोलात्। हट्टविला-सिनी औषधिः। अस्त्रगदो रक्तविकारः। स्वेदनी। कढाईति भाषायाम्। भर्ज-नमृत्पात्रञ्च वेणी स्त्रीणाङ्केशविन्यासः। तर्कुरिति। सूत्रवेष्टनस्य टेकु इत्या-ख्यस्य नाम। विषयभेदाद्भिद्यते इति। सौत्रत्वाच्च साधुत्वं बोद्धव्यम्। इति पक्षे लि-ति। शुकपदस्य तद्विशिष्टे लक्षणेति भावः। असारं तुच्छम्। नदीभेदो नदी-विशेषः। गयास्थः। मलयूर्वृक्षविशेषः। निर्विवादत्वादिति। बवयोरैक्याद्वल्गु व-

क् प्रत्ययनिर्देशादित्याङः। भ्रस्वेति प्रकृतिसंस्पृष्टेन चकारेण प्रकृत्य- न्तरसमुच्चयाच्चेति बोध्यम्। पृभिदि॥ पुरुः प्राज्ये ऽभिधेयवत्। पुंसि स्याद्देवलोके च नृत्यभेदपरागयोरिति मेदिनी। विधुरित्यादि विश्व- कोशः। इह सूत्रे धृषिच्छिविभ्यस्चेति पठित्वा छषुर्धर्षः सूर्याग्निशनिरा- हवोपि छषव इति केचित्। कृग्रोः॥ करोतीति। केचित्तु सूत्रे कृ इति दीर्घं पठित्वा किरतीति विगृह्णन्ति। कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति इति मेदिनी। सुषामेत्यादि। एतच्च न्यासाद्यनुरोधेनो- क्तम्। वार्त्तिककृता तु स्थास्थिन्स्थूनामुपसंख्यातम्। अपष्ठुः पुंसि वार्त्ते च वामे स्यादन्यलिङ्गक इति मेदिनी। अर्जिदृशि॥ अर्ज अर्जने अस्य ऋजिरादेशः। दृशेः पशिः। कमेस्तुगागमः। अम रोगगत्यादिषु। अ- स्य धुगागमः। पशि नाशने। सौत्रो धातुः। अस्य दीर्घः। बाधृ लोडने। अस्य बादेशः। षड्भ्योपि कुप्रत्ययः स्यादित्यर्थः। अविशेषणेति। चादि- गणे तु पश्विति पठितम्। पशु इत्यर्थमव्ययमिति धरणिः। कन्तुः कन्दर्पं इः। कन्तुर्मकराङ्क इति त्रिकाण्डशेषः। पांसुरिति। पडि पसि नाशने चुरादिर्दन्त्यान्तः। स्त्रीपुंसयोरित्युक्तमित्यमरेण। द्वौ परौ द्वयोर्भुज- बाहू इति। परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुंसयोरिति तदर्थः। अ- कारान्तो ऽप्ययम्। अतएव बाहोस्र भुजयोः पुमानिति दामोदरः। बाहा भुजे ऽपुमान्मानभेदास्र वृषवायुच्चिति मेदिन्यां टाबन्तो ऽप्यय- म्। प्रथिम्रदि॥ प्रथते इति पृथुः। पृथुः स्यान्महति त्रिषु। त्वक्पत्र्या- ङ्कृष्णजीरे ऽथ पमानग्नौ नृपान्तरइति मेदिनी। म्रदितुं शक्यते

---

लघु च सुन्दरम्॥ पिङ्गले वर्णविशेषे। प्राज्यम् बहुपरागयोरिति। परागः कौ- सुमे रेणौ स्नानीयादौ रजस्यपीति बोद्धव्यम्। भक्ते ओदने। नीवृति। जनपदे। स्थास्थिन्स्थूनामिति। संप्रति भाष्ये स्थास्थिन्स्थूणामिति पठ्यते सव्येष्ठाः परमेष्ठी सव्येष्ठा सारथिरिति चोदाहृताङ्कं चेदं भाष्यं न वार्तिकमिति चिन्त्यमेतत्। वामे। प्रतिकूले सुन्दरे च। दृश्यर्थमिति॥ सम्यगर्थमित्यपि बोद्धव्यम्। त्वक्पत्र्यां म-

चकठिनत्वादिति मृदुः कोमलः। भृगुः पुमान् मुनौ हरे तटे शुक्रे इति मेदिनी। भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनीति कोशान्तरम्। लघुरिति। पृक्कायां स्त्री लघुः क्लीबं शीघ्रकृष्णागुरुण्यपि इति त्रिकाण्डशेषः। लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम्। शीघ्रे कृष्णागुरुण्यपि च पृक्कानामौषधौ तु स्त्रीति मेदिनी। नृपभेद इति एतेना "वेच्छ धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभव" मिति व्याख्यातम्। बहु तु त्र्यादिसंख्यासु विपुले त्वभिधेयवत् इति मेदिनी। ऊरुर्जङ्घेति उज्ज्वलदत्तः। तन्न। तयोर्भेदात्। ऊर्णूयते आच्छाद्यते इत्यूरुः। कर्मणि प्रत्ययः। उरु महदिति कर्त्तरि प्रत्ययः। उद्यतइति। स हि यावत्कार्यं सिध्यति लगति व्याप्रियतइति यावत्। पर्शुरपीति। पर्शुः परशुना सहेति विश्वः। हरिद्रुर्वृक्ष इति। दारुहरिद्रा इत्येके। तदाहेति। द्युद्रुभ्यां मः॥ खरुशब्दस्य क्रूरो मूर्ख इत्यर्थः। हयन्दशपादीवृत्त्यनुसारेणोक्तम्। खरुः पतिंवरा कन्येत्यपि बोध्यम्। खरुर्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत् इति विश्वत्रिकाण्डशेषौ। शङ्कुरिति। शकि शङ्कायाम्। शङ्कते ऽस्मादिति शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः। यादोभेदे च पापे च स्थाणावपि च दृश्यतइति विश्वः। पीयुरिति। पीयुः काले रवौ घूकइति मेदिनी। कृमिविशेष इति। नीलङ्गुः कृमिजातौ स्यात् भ्रमरालीप्रसूनयोरिति विश्वः॥

पाठान्तरमिति॥ नीलङ्गुरपि नीलाङ्गुरिति विश्वः। धातोरपीति। केचित्तु नीलशब्दे उपपदे गमेष्टिलोप उपपदस्य मुम् दीर्घश्च पाक्षिको निपात्यतइत्याहुः। लिगु चित्ते नपुंसकमिति वररुचिः। मृगय्वादयश्च॥ मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनीति मेदिनी।

---

भ्रेला इति प्रसिद्धायाम्। शुक्रे। दैत्यगुरौ। प्रपातः कराडा इति लोकप्रसिद्धः। पृक्का औषधिविशेषः। पादपभेदयोरिति। सखुवेत्याख्ये वृक्षे। घूके। पक्षिविशेषे। क्रिमिजातौ। सोनकीड़ेति भाषया प्रसिद्धे। भमूभराली। भाषया वैर

मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि। देवयुर्धार्मिके ख्यातो देवयुर्लोकयात्रिकइति विश्वः । आकृतिगण इति । तेन पीलु प्रतिष्टम्भे। अस्मात्कुः । पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोरिति विश्वः । भट्टास्तु पीलुशब्दस्य वृत्ते आर्यप्रसिद्धिः । गजे तु म्ले-च्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः । कडि मदे । कण्डुरित्यादि बोध्यम्। वागुरा रात्रिरिति। वाश्यन्ते अस्यामिति विग्रहः। वागुरो गर्दभ इत्यन्ये। वागुरा वासितारात्र्योरिति मेदिनी। चङ्कुरः स्यन्दने वृत्ते इति मेदिनी। अङ्कुरो रुधिरे लोम्नि पानीये ऽभिनवोद्भिदि इति च । खर्जूरेति । अङ्कूरोङ्कुर एव चेति विश्वप्रकाशः । व्यथेः॥ व्यथ भयसञ्चलनयोः। अस्मादुरच् कित् स्याद्धातोः संप्रसारणञ्च । दश-पाद्यां तु धः किच्चेति पठित्वा धकारमन्तादेशं विधाय विधुरो ऽन-ग्निक इत्युदाहृतं माधवेनापि तदेवानुसृतम्। न त्वेतद्युक्तम्। त्वमे-षां विथुरा शवांसि। अतिविद्धा विथुरेणाचिदस्त्रा इत्यादिमन्त्रेषु थ-कारपाठस्य निर्विवादत्वात्। यदपि माधवेनोक्तं विदिभिदीत्यत्र व्यथेः संप्रसारणञ्चेति वचनात् कुरचि थान्तं रूपमिति। तदतिस्थवीयः। कु-रज्विधायके सूत्रे व्यथेरुपसंख्यानस्याप्रसिद्धत्वात् । तस्मादिह धः किच्चेति दशपादीपाठं पुरस्कुर्वन्तः प्रसादकारादयो ऽप्युपेक्ष्याः । कथन्तर्हि विधुर इति प्रयोगस्य निर्वाह इति चेत्। धुरो विगत इति प्रादिसमासेनेत्यवधेहि। समासान्ता इति सूत्रे वृत्तिपदमञ्जर्योस्तथै-वोक्तत्वात् । मकुर इति । मकि मण्डने । अस्मादुरच्। नलोपश्च। बाहुलकादिति। धातोरुपधायाः पक्षे उकार इति भावः। मुकुरो मकुरो ऽपि चेति विश्वः। मुकुरः स्यान्मकुरवत् दर्पणे बकुलद्रुमे। कुला-लदण्डइति मेदिनी च। धातोरिति। केचित्तु गणे दुगागमस्य निपा-

---

इति प्रसिद्धा । गोमायुः शृङ्गालः । काण्डे बाणे । वाशितेति । स्त्री करिणी चेत्य-र्थः । नवोद्भित् । नवीनवृक्षः । प्रादिसमासेनेति । व्यथेरपि बाहुलकादुरच्संप्र-

त्यते इत्याहुः। कर्बुरमिति। कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत् इति मेदिनी। मसेश्च। मसूरा मसुरा वाऽथ वेश्याव्रीहिप्रभेदयोः। मसूरी पापरोगे स्यादुपधाने पुनः पुमानिति मेदिनी। श्वशुर इति। पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः। अविष इति। राजा समुद्रश्च। महिषो महान्। तुरीयन्धाम महिषो विवक्ति। उत माता महिषमन्ववेनत्। टित्वात् ङीप् महिषी राजपत्नी। रुहेः। रौहिषो मृगभेदे स्याद्रौहिषञ्च तृणं मतमिति संसारावर्त्तः। वेदभाष्यमिति। इन्द्रो मित्रस्य तविषीम्। इन्द्रस्याच तविषोभ्य इत्यादिमन्त्रेष्विति भावः। वैदिकनिघण्टौ ओजः पाज इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम्। तविषः शोभनाकारे भेले ऽब्धिव्यवसाययोः। तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ। तविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने इति मेदिनी। किल्बेर्बुक् च॥ किल श्वैत्यक्रीडनयोः। किल्बिषं पापरोगयोः। अपराधे ऽपीति मेदिनी। इषिरो ऽग्निरिति। आहार इत्यन्ये। क्षिदिरः पावके रश्मौ करवाले परश्वधे। मन्दिरं नगरे ऽगारे क्लीबं ना मकरालये। चन्दिरो ऽनेकपे चन्द्रे। तिमिरन्ध्वान्तनेत्रामयान्तरे। मिहिरः सूर्यबुधयोः। मुहिरः काममूर्खयोः। रुधिरोऽङ्गारके पुंसि क्लीबन्तु कुङ्कुमासृजोः। शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम्। मूषिके ना स्त्रियां नील्योषधौ रन्ध्रान्विते त्रिषु। आङ्गिरो वीतिहोत्रे स्यात् राक्षसे भास्करे पुमान् इति मेदिनी। अजिरमङ्गणमिति। अङ्गेर्युटि अनादेशस्य बाहुलकाण्णत्वमित्येके। अन्ये तु विश्वकोशाद्युपष्टम्भेन दन्त्यमेवेच्छन्ति। इह दशपादीवृत्तौ नञ्पूर्वस्य जी-

---

सारणे इत्यन्ये। व्ययेरेव बाहुलकात्पक्षे धकार इति परे। कृष्णवृन्ता भाषया पाडलीत्याख्या। पापरोगः शीतला भेलो जलतरणद्रव्यम्। व्यवसायो निश्चयः। मकरालयः समुद्रः। अनेकपो हस्ती। कुङ्कुमे। केसरे। नील्योषधाविति। ज-

र्यतेश्चर्त्ववर्णलोपो निपात्यते इत्युक्तत्वादपि ग्राह्यम्। आयुन्दूतमजिरं प्रत्नमीड्यमित्यादौ न जीर्यतीत्यजिर इत्यर्थस्यानुगुणत्वात्। अजिरं प्राङ्गणे कार्यविषये दर्दुरे ऽनिले। शिशिरो ना हिमे न स्त्री त्वृतुभेदे जडे त्रिषु। खदिरः शाकभेदे स्याद् ना चन्द्रे दन्तधावनइति मेदिनी। शिबिरमिति। शेरते ऽस्मिन् राजानः। निवेशः शिबिरं षण्ढमित्यमरः। सलिकलि। कलिल इति। मिश्रो गहनश्च। मह्लिलेति। मह्लिला फलिनीस्त्रियोरिति मेदिनी। पृषोदरेति। तथा च दमयन्तीकाव्ये परमहेलारतो ऽप्यपारदारिक इति परमहेला स्त्री। अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः। कपिल इति। कपिला रेणुकायाञ्च शिंशपागोविशेषयोः। पुण्डरीकः करिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्। ना नले वासुदेवे च कुकुरे इति मेदिनी। रेणुकेह लताविशेषः। हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनीत्यमरात्। मिथिलादयश्च॥ मथे विलोडने अकारस्येत्त्वं निपातनात्। कठेर इति। कठ कृच्छ्रजीवने। कुठि च। द्वितीयस्य इदित्वान्नुमि प्राप्ते आह। बाहुलकादिति। कबेरोतच्॥ गुपादिसूत्रादारभ्य एतदन्तानि सप्त सूत्राणि केषाञ्चिदसंमतानि। कपोत इति। कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोरिति मेदिनी। कपोतः पक्षिमात्रे ऽपीति त्रिकाण्डशेषः। अत्रोतचस्त्वित्त्वं प्रामादिकम्। यत्कपोतः पदमग्नौ कृणोति। देवाः कपोत इषितो यदिच्छन् इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैव पठ्यमानत्वात्। कठोर इति। कठिनः पूर्णश्च। कठोरताराधिपलाञ्छनच्छविरिति माघः। किशोर इति। किशोरोश्वस्य शावके। तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोरिति मेदिनी। कटोल इति। कटे व-

---

लोपरिस्थे शाकविशेषे प्रवालवल्ल्याञ्चेत्यर्थः। विषये देशे। दन्तधावने खदिरवृक्षे। फलिनीति। प्रियङ्गुः फलिनी फली। रेणुका लताविशेषः। पुण्डरीकः करिण्याम्। अग्निकोणस्थदिग्गजभार्यायाम्। द्वितीयस्येति। कुठीति

षांवरणयोः। केचित्तु सूत्रे कडिं पठन्ति। कडि मदे। कण्डोलः पिटकः चण्डालस्य। चण्डालिका तु कण्डोलवीणाचण्डालवल्लकीत्यमरः। पटोल इति। पटोलं वस्त्रभेदे नौषधौ ज्योत्स्नायान्तु योषिति इति मेदिनी। कल्ल शब्दे बाहुलकादतोप्योलच्। कल्लोलः पुंसि हर्षे स्यान्महत्सूर्मिषु वारिण इति मेदिनी। स्यन्देः॥ सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके। सिन्दूरी रोचनारक्तवेल्लिकाधातकीषु चेति मेदिनीविश्वप्रकाशौ। सितनि॥ सेतुरालौ कुमारकइति मेदिनी। सेतुरालौ स्त्रियां पुमानिति। मण्डन्दधिभवं मस्तु इति चामरः। धातुर्नेन्द्रियेषु च। शब्दे योनिमहाभूततद्गुणेषु रसादिषु। मनःशिलादौ श्लेष्मादौ विशेषाङ्गेरिकेस्ति चेति मेदिनी। श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिशब्दयोनिश्च धातव इत्यमरः। अर्त्तेस्तुः॥ तुनि प्रकृते अन्तोदात्तत्वार्थन्तुः क्रियते। ऋतुना यज्ञम्। य ऋतुर्जनानामित्यादि। ऋतुर्वर्षादिषट्सु च। आर्त्तवे मासि च पुमान् इति मेदिनी। कमिमनि॥ कमिग्रहणं प्रपञ्चार्थम्। अर्जिदृशीत्यादिना कप्रत्यये तुकि सिद्धत्वात्। मन्तुरिति। मन्तुः पुंस्यपराधे ऽपि प्रजापताविति मेदिनी। दीर्घं ह्यङ्कुशमिति मन्त्रस्य वेदभाष्ये तु मन्तुम इति मन्तुर्ज्ञानन्तद्वान् हे इन्द्रेति व्याख्यातम्। गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे इति मेदिनी। भानुर्ना किरणे सूर्ये इति च। चायः किः। केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणीति मेदिनी। अमुः शरीरमिति। अभिलषितार्थस्य। आप्तव्यत्वात्। अत एव आप्तोर्यामशब्दस्याभिलषितार्थप्रापक इत्यवयवार्थमाहुः। क्तञः कतुः॥ क्रतुर्यज्ञे मुनौ पुंसीति मेदिनी। एवं धि-

---

धातोरित्यर्थः। पिटक इति। पिटकः पेटकः पेटी। कुण्डोलं वीणा। भाषया किङ्गरियाख्या। रक्तवेल्लिका। पुष्पविशेषः। धातकी धातुः। आलिर्जलबन्धनम्। कुमारो वरणाख्यो वृक्षः। शब्दयोनीति। भू सत्तायामि-

स्योऽस्तु ॥ चित्त्वादन्तोदात्तः। स्योनं पत्ये वहतुं कृणुष्व। पथिके वृषभे पुमानिति मेदिनी। आटकन् ॥ जैवातृकः पुमान् सोमे क्षपकायुष्मतोर्खिष्विति मेदिनी। कृषिचमि ॥ रभसकोशस्थमाह। कर्षूः पुमान् करीषाग्नौ स्त्रियाङ्कुल्याल्पखातयोरिति मेदिनी। सर्जूर्वणिजि विद्युति स्त्रियां स्वर्गे विधौ रुद्रे इति। खर्जूः कीटान्तरे स्मृता। खर्जूरी पादपे कण्ड्वामिति च। मृजेः मर्जूः स्त्रीशुद्धौ धावके ऽपि चेति मेदिनी। वहः ॥ वधूः स्नुषा नवोढा स्त्री भार्या पृक्काङ्गनासु चेति विश्वः। पृक्का च महिला वधूरिति त्रिकाण्डशेषः। कषेः। कषशषेति दण्डके पठितः। कच्छ्वान्तु पामपामा विचर्चिकेत्यमरः। णित्कसि ॥ कस गतौ। कासूर्विकलवाचि स्यात् तथा शक्त्यायुधे स्त्रियामिति मेदिनी। कासूः शक्त्यायुधे रुजि युधौ विकलवाचि स्यादिति हेमचन्द्रः। न लम्बते अलाबूः। त्रो दुट् च तर्दूरिति। नेड्वशीति नेट्। वरमनादाविति परिगणनस्यानाश्रयत्वात् बाहुलकाद्वा। के चित्तु त्रो दुक् चेति पठित्वा धातोर्दुगागममाहुः। तेषान्धातोर्गुणो दुर्लभः चकारबलेन वा साधनीयः। दुगागमात्पूर्वं यत्प्राप्तन्तदपि भवतीति व्याख्यानात्। दरिद्रातेः ॥ इस्य आस्येति। भोजदेवस्तु यलोप इति रेफादिकं पदं छित्वा द्वेधा व्याख्यत्। रिस्य आस्य। दद्रूः। रस्य इस्य आस्य। अन्त्यबाधे ऽन्त्यसदेशस्येति द्वितीयरेफलोपः। दर्द्रूः। कृगरवादित्वाद् दर्द्रुर्ह्रस्वान्तस्य। दद्रुणो दद्रुरोगी स्यादित्यमरः। इत्यच्चत्वारि रूपाणि। अन्दूदम्भू ॥ अन्दूर्बन्धनमिति। अदि बन्धने। अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य चेति मेदिनी। अ-

---

स्यादिः। महाभूतानि। पृथिव्यादीनि। तद्गुणा गन्धादयः। श्लेष्मादौ श्लेष्मवातपित्तेषु। रसरक्तमांसमेदोमज्जास्थिशुक्राणि। अश्मविकारे हरितालादेः। आर्त्तवम्। स्त्रीपुष्पम्। रोषणे। सक्रोधे। लक्ष्मणि। चिन्हे। कृषकः। कृषीवलः

न्दुको हस्तिनिगडइत्यमरः। सञ्ज्ञायाङ्कन्। के ऽण इति ह्रस्वः। के चित्तु अम गतौ अस्य दुक् अन्दूर्बुद्धिरिति व्याचख्युः। हभी ग्रन्थे इति तुदादिः। हम्भूरिति। सन्दर्भकर्त्रीत्यर्थः। कथक इत्यन्ये। अस्य रूपाणि ह्रूवदित्युक्तम्। कैयटो ऽप्यत्रानुकूलः। माधवादयस्तु दृढशब्दे उपपदे भुवः क्विप्प्रत्ययः। उपपदस्य दृन्नादेशो निपात्यते। यद्वा दृन्निति नान्तमव्ययं दृढार्थकमुपपदं दृन्भूः तरुः सर्पः कपिर्वेति व्याख्याय दृन्करेति यण् वर्षाभूवद्रूपमस्येत्याहुः। ह्रस्वो ऽपीति। उदाहृतञ्च विक्रमादित्येन। तस्या जम्बोः फलरसो नदीभूय प्रवर्त्ततइति। यत्तु "परिणतजम्बुफलोपभोगहृष्टा" इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजह्रुः। तन्न। इको ह्रस्वो ऽङ्य इति सूत्रेण गतार्थत्वात्। दिधिमिति। के चित्तु दधातेरित्वन्द्वित्वं षुक् च निपात्यते। दधात्यसौ दिधीषूरित्याहुः। उज्ज्वलदत्तोक्तं पाठमाह। के चित्त्विति। एतच्च कैयटमाधवादिमहाग्रन्थविरुद्धमित्यवधेयम्। अत एव दृम्भूः स्त्री सर्पचक्रयोरिति भान्ते मेदिनी। मरुदिति। प्रज्ञादित्वादणि मारुतो ऽपि। मरुतशब्दो ऽप्यव्युत्पन्नो ऽस्ति। तथा च विक्रमादित्यकोशः। मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत् इति। संसारावर्त्तस्य। कोयं वाति स दाक्षिणात्यमरुत इति कविराजः। अत्रानुपपत्तिं मत्वा दाक्षिणात्यपवन इति पाठं कल्पयन्त्यल्पदृश्वान इति वर्णविवेकः। गरुदिति। यवादिरयम्। तेन मतुपो वत्वं न। गरुत्मान्। ग्रो मुट् च॥ गर्मुत् स्त्री स्वर्णलतयोरिति मेदिनी। विश्वकोशमाह। हरिदिति। हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः। अस्त्रियां स्यात्तृणे चेति मेदिनी। कृष्यस्येति। एतेन गतं रोचिद्भूता रिरमयिषुमृश्यस्य वपुषेति पुष्पदन्तप्रयोगो व्याख्यातः। रोचिन्मृग्यां लता-

---

इत्याहुरिति। अत्राहचिबीजन्तु क्विपा सिद्धे निपातनवैयर्थ्यम्। लाक्षणिकत्वादस्य

भेदे स्त्री नार्कइति मेदिनी। शमेर्ढः॥ बाहुलकादिति। यद्यपि नेड्वशि-
कृतीति इण्निषेधः सुवचः तथापि नेड्वरमनादाविति परिगणनादेवमु-
क्तम्। शण्ढः स्यात्पुंसि गोपतौ। आकृष्टाङ्गे वर्षवरे तृतीयप्रकृतावपीति
मेदिनी। कमठ इति। कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकमिति
मेदिनी। जरठ इति। जॄष् वयोहानौ। जरठः कठिने पाण्डौ कर्कशे
ऽप्यभिधेयत इति विश्वमेदिन्यौ। जरठः कठिने जीर्णे इति वैजयन्ती।
शमेः खः॥ शङ्खो निधौ ललाटास्थिन कम्बौ न स्त्रीत्यमरः। शङ्खः
कम्बौ न योषिन्ना भालास्थिन निधिभिन्नखे इति मेदिनी। कण्ठः॥
कण्ठो गले सन्निधाने ध्वनौ मदनपादपे इति विश्वमेदिन्यौ। फल-
त्रिकमिति। त्रिफला तृफला च सेति विश्वः। त्रिफलाशब्दसमानार्थ-
स्तृफलाशब्द इति द्विगोरिति सूत्रे रक्षितः। शपेः॥ शप आक्रोशे।
वृषादिभ्यश्चित्॥ शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः इत्यमरः।
वृषलस्तुरगे शूद्रे इति हेमचन्द्रः। पललमिति। पल गतौ। पललन्ति-
लचूर्णे च पङ्के मांसे नपुंसकम्। ना राक्षसे इति मेदिनी। सरलः पूति-
काष्ठे ना ऽथोदारावक्रयोस्त्रिष्विति मेदिनी। सरला विरलायन्ते घ-
नायन्ते कलिद्रुमाः। न शमी न च पुन्नागा अस्मिन्संसारकानने॥
इत्यभियुक्तप्रयोगः। कमेरिति। बाहुलकादित्यत्रानुषज्यते। कम्बलो
नागराजे स्यात् सास्नाप्रावारयोरपि। कृमावप्युत्तरासङ्गे सलिले तु
नपुंसकमिति मेदिनी। मुसलं स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम्।
तालमूल्यामाखुपर्णीगृहगोधिकयोरपीति मेदिन्याम्। मूर्द्धन्यमध्यो
ऽप्ययमिति वर्णदेशना। मुस खण्डनइति धातोर्दन्त्यान्तेषु मूर्द्धन्यान्तेषु
च वोपदेवात्रेयादिभिः पठितत्वात्। उज्ज्वलदत्तादयस्तु तालव्यमध्य-
मप्याहुः। अत एव मुसलो ऽपि चेति विश्वकोशे मुशलो ऽपि चेति
पाठान्तरम्। लङ्गेरिति। बाहुलकादित्येव। एवमग्रेऽपि। लाङ्गल-
न्तालहलयोः पुष्पभिद्गृहदारुणोः। लाङ्गली गृहपिप्पल्यामिति

हेमचन्द्रः। लाङ्गली तोयपिप्पल्यां क्लीबन्तु कुसुमान्तरे। गोदारणे हलेराजगृहदारुविशेषयोरिति मेदिनी। कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे। कोमलं मृदुले जले इति च। बाहुलकादन्यत्रापि। तथा कुस श्लेषणे दन्त्यान्तो निर्विवादः। वोपदेवमते तालव्यान्तोऽपि। गुणः कोसलः कोशलो वा देवविशेषः। वृद्धेत्कोसलेति सूत्रे तु दन्त्यपाठ एव सांप्रदायिकः। सम्ब सम्बन्धे। शम्ब च। सम्बलं शम्बलम्। शम्बलोऽस्त्री सम्बलवत् कुलपाथेयमत्सरे इति मेदिनी। कदि आह्वाने। नलोपः। गौरादित्वात् ङीष्। मदान्दोलितकर्पूरकदलीदलसञ्चया। विश्रमाय श्रमापन्नानाह्वयन्तमिवाध्वगानिति काशीखण्डम्। अजादेराकृतिगणत्वाट्टाबपि। कदला कदली पृश्न्यां कदलीकदली पुनः। रम्भावृक्षेथ कदली पताकामृगभेदयोः। कदला डिम्बिकायाञ्चेति मेदिनी। पिजि हिंसायाम्। न्यङ्क्वादित्वात्कुत्वम्। पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके। निधिभेदे कवावग्नौ पुंसि स्यात्कपिले ऽन्यवत्। स्त्रियां वेश्याविशेषे च करिण्याङ्कुमुदस्य चेति मेदिनी। कश इति सौत्रो धातुः कुशलः शिक्षिते त्रिषु। मेषे च सुकृते चापि पर्य्याप्तौ च नपुंसकमिति मेदिनी। कम कान्तौ कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोरिति विश्वमेदिन्यौ। मडि भूषायाम्। मण्डलं परिधौ

---

भुवो वार्त्तिके ग्रहणाभावेनेको यणचीति यण औचित्यञ्च। कुश इति सौत्र इति। कुशान् लातीति कुशल इत्यन्ये। तृतीयाप्रकृतिर्जन्मक्लीबः। उदारावक्रयोरिति। उदारे वक्रभिन्ने चेत्यर्थः। पुष्पभिद् पुष्पविशेषः। गोदारणो हले। तृणराजस्तालः। कुलपाथेयमत्सरे इति समाहारद्वन्द्वः। तेषु इत्यर्थः। पृश्निरोषधिविशेष इत्यर्थः। डिम्बिका। भाषया धाडि इत्युच्यते। पाशश्चोराणां वधसाधनं सूत्रमयम्॥

परिच्छदे। शिबिकाद्याच्छादने। प्रस्तरान्तरे इति। पाषाणविशेषइत्यर्थः।

कोठे देशे द्वादशराजके। क्लीबे ऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे इति मेदिनी। कोठो मण्डलमित्यरः। बिम्बो ऽस्त्री मण्डलं त्रिष्विति। कुडि दाहे। पट गतौ क्लो छेदने। कुण्डलं कर्णभूषायां पाशे ऽपि वलये ऽपि च अथ पटलम्पिटके च परिच्छदे। छदिर्द्दग्रोगतिलके क्लीबं वृन्दे पुनर्न ना। छलं स्खलितशाठ्ययोरिति मेदिनी। मृजेष्टिलोपश्च॥ मलो ऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्। इति मेदिनी। चुपेः॥ चपलः पारदे मीने चिबुके प्रस्तरान्तरे। चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च। नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले। इति मेदिनी। शकिश-म्योः॥ शकलं खण्डे रोहितादीनान्त्वचि च॥ तद्योगाच्छकला मत्स्याः। मत्स्यान् शकलानिति भाष्यम्। शकलन्त्वचि खण्डे स्यात् रागवस्तुनि वल्कले इति मेदिनी। शमलं शकृदेनसोरिति नानार्थरत्नमाला। छो-गुग्॥ छगलं नीलवस्त्रे ना च्छागे स्त्रीवृद्धदारके इति मेदिनी। छग-लश्छागेच्छगली वृद्धदारकभेषजे इति हेमचन्द्रः। ञमन्ताड्डः॥ ञमि-ति प्रत्याहारः। त्रिभ्य एव कणमा इति वृत्तिकारोक्तिस्तु अष्टाध्या-यीस्थमात्रविषया। दण्ड इति। बाहुलकात् चुटू इति नेत्सञ्ज्ञा। द-ण्डो ऽस्त्री लगुडे ऽपि स्यादित्यमरः। दण्डौ सैन्यार्कपार्श्वगाविति त्रिकाण्डशेषः। रण्डा मूषिकपर्ण्याञ्च विधवायाञ्च योषिति। खण्डो ऽस्त्री शकले नेक्षुविकारमणिभेदयोः। मण्डः पञ्चाङ्गुले शाकभेदे क्लीबन्तु मस्तुनि। चण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते। आण्डं मुष्के च पेश्यां स्यात्। षण्डं पद्मादिसङ्घाते न स्त्री स्याद्गोपतौ। पुमान्। गण्डः स्यात्पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीथ्यङ्गे पिट-के ऽपि च। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे। चण्डोला तिन्तिणी-वृत्ते यमकिङ्करदैत्ययोः। चण्डी कात्यायनीदेव्यां हिंस्राकोपनयोषि-

---

वृद्धदारको विधारेति प्रसिद्धः। पांसुला। व्यभिचारिणी। हस्तिसंनाहो हास्तिक-

तोः। चण्डा धनहरी शङ्खपुष्पी चिष्वतिकोपने। तीव्रे ऽपि। पण्डः शण्ठे धियि स्त्री स्यादिति मेदिनी। फण गतौ। फण्डः। प्रज्ञादित्वादण् फाण्डं सुन्दरम्। कादिभ्यः कित्॥ कुण्डमिति। कुण शब्दोपकरणयोः। कित्त्वान्न गुणः। कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्। पिठरे तु न ना इति मेदिनी। काण्डमिति। कमु कान्तौ। अनुनासिकस्य कीति दीर्घः। काण्डो ऽस्त्री दण्डवाणार्ववर्गावसरवारिषिवत्यमरः। अर्वा कुत्सितः। अत एव काण्डं स्तम्बे तरुस्कन्धे वाणे वरदनीरयोः। कुत्सिते वृत्तभिन्नाडीवृन्दे रहसि न स्त्रियामिति मेदिनी। गुडो गोलेक्षुपाकयोरित्यमरः। गुडा स्नुही। तद्वत्केशा अस्य गुडाकेशः शिवः। जटाधारित्वात्। गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः। गुडा स्नुह्याञ्च कथिता गुडिकायाञ्च योषितीति मेदिनी। स्थाचति॥ स्था सिद्धे आलच आकारश्चिन्त्यप्रयोजनः। चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थ इत्येके। स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोरिति मेदिनी। चात्वालो यज्ञकुण्डे स्याद्दर्भे चेति विश्वः। मार्जालीयः स्मृतः शूद्रे बिडाले कायशोधने इति मेदिनी। पातालमिति। उपधावृद्धिः। पातालं नागलोके स्याद्विवरे वडवानले इति मेदिनी। चडि कोपे इत्यस्य तु इदित्वान्नुमि अदुपधत्वाभावान्न वृद्धिः। यत्तु माधवग्रन्थे पतिचण्डिभ्यामालञ्निति पठित्वा पातालशब्दे बाहुलकाद् वृद्धिमुक्त्वा आलञ्निति वृद्ध्यर्थं ञितङ्के चित्पठन्ति इत्युपन्यस्य चण्डालशब्दे ऽपि वृद्धिः स्यादिति दूषितम्। तदतिरभसात्। एके इत्यपरितोषोद्भावनम्। तद्बीजन्तु कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि इति चण्डालात्स्वार्थे ऽणं विदधता वार्त्तिकेन तद्भाष्येण च सह विरोध इति बोध्यम्। तमिविशि॥ तमु काङ्क्षायाम्। विश प्रवेशने। विड आक्रोशे। मृण हिंसायाम्। कुल संस्याने। कपि चलने। निर्देशान्नलोपः। पल

गतौ। पचि विस्तारे। तमालस्तिलके खड्गे तापिच्छे वारुणद्रुमे। विशा-ला त्विन्द्रवारुण्यां सज्जयिन्यान्तु योषिति। नृपवृत्तभिदोः पुंसि पृथुत्वे ऽप्यभिधेयवत्। बिडालो नेत्रपिण्डे स्यात् पृषदंशुकके पमान्। मृ-णालं नलदे क्लीबं पुन्नपुंसकयोर्बिसे। कुलालः ककुभे कुम्भकारे स्त्री त्वञ्जनान्तरे। कपालो ऽस्त्री शिरोस्थिन स्यात् घटादेः शकले व्रजे। पाञ्चाली पुत्रिकागत्योः स्त्रियां पुंभूम्नि नीवृतीति मेदिनी। बाहुलका-न् शपतेरपि शाला। शल चलने ऽस्मात् घञि छायाशालानिशानामि-ति निपातनात् स्त्रीत्वमिति न्यासकारः। वोपदेवस्तु शालङ्कत्थने इति पपाठ। शाला द्रुस्कन्धशाखायाङ्गृहे गेहैकदेशयोः। ना झषे इति मेदिनी। पतेर्बाहुलकादर्थान्तरेपि। पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः। क्लीबं स्रुते इति मेदिनी। स्रुते पारदे इत्यर्थः। तरत्या-दीति। तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोरिति विश्वः। विडङ्ग इ-ति। विड आक्रोशे। विडङ्गः कृमिसङ्घघ्ने विडङ्गो नागरे ऽन्यवत् इति विश्वः। विडङ्गस्त्रिष्वविज्ञे स्यात् कृमिघ्ने पुंनपुंसकमिति मेदिनी। मृदङ्ग इति। मृद क्षोदे। मृदङ्गः पटहो घोषे इति मेदिनी। कुरङ्ग इति। कृ विक्षेपे। बाहुलकादुत्वम्। कुर शब्दे इति वा ऽस्तु। सारङ्गः पुंसि हरिणे चातके च मतङ्गजे। शबले त्रिष्विति मेदिनी। बाहुलकात् नृ नये। अथ नारङ्गः पिप्पलीरसो यमजप्राणिनिकटे नागरङ्गद्रुमे ऽपि चेति मेदिनी। गन्गम्यद्योः॥ बाहुलकादमेरपि। अङ्गं गात्रउपाये च प्रतीके चाप्रधानके। अङ्गो देशविशेषे स्यादङ्ग संबोधने ऽव्ययमिति विश्वः। अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृ-ति। क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिकइति मेदिनी। छापू॥ छायते छिद्यते छागः। पूयते मुखं यज्ञार्थमनेन। पूगस्तु क्रमुके वृन्दे

---

वचम्। नागरे। अभिज्ञे। धूम्याटो भ्रमरः। षिङ्गो विटः। व्यूहः। सेनारचना।

इति मेदिनी। खण्ड भेदने। खड्गो गण्डकशृङ्गे स्यात् निस्त्रिंशे गण्डकेऽपि चेति शब्दतरङ्गिणी। खड्गो गण्डकशृङ्गेऽसिबुद्धभेदेषु गण्डके इति मेदिनी। भृञः॥ किदग्रहणं स्पष्टार्थम्। अनुवृत्त्यैव लाभात्। भृङ्गो धूम्याटपिङ्गयोः। मधुव्रते भृङ्गराजे पुंसि भृङ्गङ्गुडत्वचि इति मेदिनी। शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषायां स्वर्णमीनभेदयो ऋषभौषधौ इति मेदिनी। शृङ्गं विषाणमाख्यातं शैलाग्रे जलयन्त्रके। मीनौषधिसुवर्णानां भेदे शृङ्गी प्रयुज्यते। इति उत्पलिनीकोशः। अण्डन् कृसृ॥ करण्डो मधुकोशासिकारण्डेषु ललाटके इति मेदिनी। वरण्डोऽन्तरावेदौ समूहमुखरोगयोरिति विश्वमेदिन्यौ। बाहुलकात् तरतेः। तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवइति मेदिनी॥ शॄदॄ॥ शरत् स्त्रीवत्सरेऽप्यृतौ। दरत् स्त्रियां प्रपाते च भयपर्वतयोरपि। भसत् स्त्री भास्वरे योनाविति च मेदिनी। "उवे अम्बसुलाभिके" इति मन्त्रस्य व्याख्यायां भसद्गग इति वेदभाष्यम्। "जाघन्या पत्नीः संयाजयन्ति भसद्दीर्या हि स्त्रियः"। इत्यत्र भसज्जघनमिति व्याख्यातारः। दृणातेः दृषन्निष्पेषणशिलापदप्रस्तरयोः स्त्रियामिति मेदिनी। अर्त्तिस्तु सोमसुद्दिनदीधितौ। वानरे च कुबेरे च पितृदेवे समीरणे। वस्तुप्रभेदे कर्पूरे नीरे सोमलतौषधौ इति मेदिनी। धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे इति च। धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रताविति विश्वः। क्षौमं मदे दुकूले ऽस्त्री क्षौमं वल्कलजांशुके। शणजे तसिजे इति मेदिनी। भामः क्रोधे रवौ दीप्तौ। यामस्तु पुंसि प्रहरे संयमेऽपि च कीर्त्तितः। वामस्त्वने पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ। वामी शृगालीवडवारासभीकरभीषु च। पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेम्बुजे। ना नागे इति च मेदिनी।

यस्य पूजायामिति। यत्तूज्ज्वलदत्तेन यच्च भच्च हसनयोरित्युपन्यस्तम्। तस्य चवर्गतृतीयादित्वात्। न च लच्च्मपि तथैवेति भ्रमितव्यम्। "अक्षीभ्यान्ते नासिकाभ्यामिति" मन्त्रे यक्ष्मशब्दस्यान्तस्थादित्वनिर्णयात्। न च तदुपन्यस्तधातुरप्यन्तस्थादिरिति भ्रमितव्यम्। जक्षत् क्रीडत् रममाण इत्यादिप्रयोगेण तथा कविकल्पद्रुमादिभिः सह विरोधादिति दिक्। मनिन्प्रत्यये तु नान्तः। राजयक्ष्मेव रोगाणामिति माघः। यक्ष्मणापि परिहाणिराययाविति रघुः। दशपादीवृत्तौ तु इह सूत्रे पच्चीति पवर्गीयादिं पठित्वा सौत्रो धातुः। बाहुलकान्नकारस्य नेत्संज्ञा इत्युक्त्वा अचिपक्ष्मेत्युदाहृतन्तत्र। पक्ष परिग्रहे इत्यस्मान्मनिना गतार्थत्वात्। नेमः क्लीवे ऽवधौ गर्त्ते प्राकारे कैतवे ऽपि चेति मेदिनी। नेमस्त्वर्द्धे प्रकारगर्तयोरपथौ कैतवे चेति हेमचन्द्रः। जहातेः॥ जिह्मस्तु कुटिले मन्दे क्लीबन्तगरपादपे इति मेदिनी। अवतेः॥ ओं प्रश्ने ऽङ्गीकृतौ रोषइति विश्वः। ग्रसेरा च॥ ग्रसु अदने। अतो मनिन् धातोराकारस्य। ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकइति विश्वः। शब्दादिपूर्वको ग्रामशब्दो वृन्दे। शब्दग्रामो गुणग्राम इति यथा। संपूर्वोयं युद्धे। तदुक्तम्। संपूर्वः संयुगे स्मृत इति। उर्म नगरमिति। उमा सूर्यका सूयजमाना इति क्रतमन्त्रे इति वेदभाष्यम्। स्यूमोरश्मिरिति। सूत्रतन्तुरित्यन्ये। शुष्म तेजसि सूर्ये ना इति मेदिनी। शुष्मं बलमिति वेदभाष्ये। युध्म इति। युध्मो धनुषि संयुगे इति मेदिनी। दस्मस्तु यजमाने स्यादपि चौरे हुताशने इति च। न पूषणमिति मन्त्रस्य भाष्ये तु दस्मो दर्शनीय इति व्याख्यातम्। त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिका निशेत्यमरः। श्यामो वटो प्रयागस्य वारिदे वृद्धारके च कृष्णाहरितोः पुंसि स्यात्तद्वति त्रिषु। मरिचे सिन्धुलवणे क्लीवं स्त्रीशारिकौषधी। अप्रसूताङ्गनायाञ्च प्रियङ्गावपि वागुजा यमुनायां त्रियामायाङ्कृष्णात्रिवृतिकौषधौ। सी-

त्रिफलायामिति मेदिनी। ईर्ममिति। ईर गतौ। व्रणोऽस्त्रियामीर्ममरुः क्लीबे इत्यमरः। जन जनने। जन्मम्। मनिवन्तस्तु नान्तः। जनुर्जननजन्मानीत्यमर उभयसाधारणः। युजिरुचि॥ रुक्मन्तु काञ्चने लोहे इति विश्वमेदिन्यौ। दन्तेर्हि च॥ हिमन्तुषारमलयोद्भवयोः स्यान्नपुंसकम्। शीतले वाच्यलिङ्ग इति मेदिनी। भीमो गाङ्गेयघोरयोः। भीमोऽम्लवेतसे घोरे शंभौ मध्यमपाण्डवे। घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि। ग्रीष्म ऊष्मर्तुभेदयोरिति च॥ अशूप्रुषि॥ अश्वः पुंभेदवाजिनोरिति विश्वः। लट्वा करञ्जभेदे स्यात्फले मद्ये खगान्तरे इति विश्वमेदिन्यौ। कण्वं पापे मुनौ पुंसि कण्वं बीजाद्यमीधुषु। विश्वात्वतिविषा याश्री जगति स्यान्नपुंसकम्॥ नानाशुघ्यां पुंसि देवप्रभेदे प्यखिले त्रिषु इति मेदिनी। इण्शीभ्याम्॥ शेवं सुखमिति वेदभाष्यम्। ह्रस्व इति। ह्रस्व शब्दे। ह्रस्वन्यक्खर्वयोस्त्रिषु इति मेदिनी। शवयक्क। दशपादीवृत्तिरीत्याह पात्यनेनेति। अन्ये तु यजतेर्जकारस्य हकारो निपात्यतइत्याहुः। यक्व शब्दो वैदिकनिघण्टौ महन्नामसु पठितः। प्रवोयक्कं पुरूणाम्। यक्कं महान्तमिति वेदभाष्यम्। मीवेति। वेदभाष्ये तु अमीकइति श्रुत्वा अम रोगे इत्यस्माद्धः इट्च नेत्युक्तम्। अमीवहावास्तोष्पते इत्यादिमन्त्रास्तत्रानुकूलाः। कनिन्यु॥ युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि। वृषाकर्णे महेन्द्रे ना इति मेदिनी। तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् इत्यमरः। राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यादिति मेदिनी। समानौ मरुधन्वानौ इत्यमरः। अथास्त्रियाम्। धनुश्चापौ धन्वशरासनकोदण्डकार्मुकमिति। धन्वा तु मरुदेशे ना क्लीबे चापे स्थले ऽपि चेति मेदिनी। धन्विर्गत्यर्थः सौत्रो धातुः। द्यु अभिगमे द्युवा हर्यः। प्रतिदिवेति। प्रतिदीव्ने इन्धन् आकृतानिति मन्त्रे तु प्रतिदिवा कितव इति व्याख्यातम्। श्वन्नुक्षन्॥ कनिप्रत्ययान्ता इति। नायं निदिति भावः। एतच्च द्वन्तशब्दप्रकरणे मघवन्शब्दे व्युत्पा-

दितम्। के चित्तु नित्यं स्त्रीकृत्योच्चनादीनां सैत्रमन्तोदात्तनिपातनमाहुः। तद्दैरवादुपेक्षितम्। वेंति। इकारलोपो निपात्यते। पूषेति। पूष वृद्धौ। क्रोदौषधिविशेषाङ्कयोरिति यादवः। मूर्द्धेति। मूर्द्धा ना मस्तकोऽस्त्रियामित्यमरः। मज्जेति। टाबन्तोऽप्ययम्। उभया सार्द्धमुभापि मज्जोक्ता मज्जया सहेति द्विरूपकोशात्। अर्यमा तु पुमान् सूर्ये पितृदेवान्तरेऽपि चेति मेदिनी। परिजायतइत्यादि। एतच्च दशपादीवृत्त्यनुरोधेनोक्तम्। परिज्मानं सुखं रथमिति मन्त्रस्य वेदभाष्ये तु परिज्मा परितो गन्ता। अजेः परिपूर्वस्य श्वन्नुक्षन्नित्यादिना मन्प्रत्ययः। अकारलोपः। आद्युदात्तत्वं च निपात्यतइत्युक्तम्। उज्ज्वलदत्तस्तु परिज्वेति पठित्वा ज्रु इति सौत्रो धातुः परिपूर्वः। यणादेशः। परिज्वा चन्द्र इत्याह। तद्भाष्यविरोधादुपेक्ष्यम्। मातरिश्वेति। सप्तम्या अलुक् उदात्तत्वञ्च निपात्यते। इह भत्वविषये संप्रसारणन्न भवति। श्वयुवेति सूत्रेऽभिव्यक्ततरत्वेन कुकुरवाचकस्यैव श्वशब्दस्य तदन्तस्य च ग्रहणम्। इह सूत्रान्तइतिशब्द आद्यर्थः। तेनान्येभ्योपि यथादर्शनङ्कनिः। दशपाद्यान्तु इतिशब्दो न पठ्यते। इत्युणादिषु प्रथमः पादः॥

कृहृभ्याम्॥ करेणुरिभ्यां स्त्री नेभे इत्यमरः। करेणुर्गजयोषायां स्त्रियां पंसि मतङ्गजइति मेदिनी। गन्धेति। कलापस्येति बोध्यम्। कलापस्तु सतीनकः। हरेणुः खण्डके चास्मिन्निति वैश्यवर्गेऽमरः। हरेणुर्ना सतीने स्त्री रेणुका कुलयोषितोरिति मेदिनीविश्वप्रकाशौ। कुष्ठं रोगे सुगन्धे चेति विश्वः। नीथे नीथे मघवानं सुतास इति मन्त्रे नीथशब्दस्यान्तोदात्तत्वं बाहुलकात्। नीथे नी-

———

इत्यस्मान्मनिनेति। यद्यन्तोदात्तत्वमस्येष्यते तदा तदपि बाहुलकाद्बोद्धयम्। वागुलाविति। अधोमुखतया विष्ठाकारिणि पक्षिणि। निवृत्तिका। विधाराख्या॥ इति उणादिषु प्रथमः पादः॥

थे खोत्रे इति वेदभाष्यम् । रथः पुमानवयवे स्यन्दने वेतसेऽपि चेति मेदिनी । रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि चेति विश्वः । काष्ठा दारुहरिद्रायाङ्कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकमिति मेदिनी । उषिकुषि ॥ कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च । गाथा श्लोके संस्कृतान्यभाषायां श्लेषवृत्तयोरिति मेदिनी । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । अर्थो विषयार्थनयोर्द्धर्मकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने इति मेदिनी । शोथः श्वयथुः । शु गतौ । सर्त्तेर्णित् ॥ सार्थो वणिक्समूहे स्यादिति सङ्घातमात्रके इति मेदिनीविश्वप्रकाशौ । जृवृञ् ॥ जरूथो ऽसुरविशेष इति वेदभाष्यम् । वरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोरिति हेमचन्द्रः । वरूथो रथगुप्तौ स्यात् वरूथं रथवेश्मनोरिति विश्वः । पातॄ ॥ तुत्थो ग्रावाञ्जने तु स्यान्नीलीसूक्ष्मतयोरपीति विश्वः । तुत्थमञ्जनभेदे स्यात् नीलीसूक्ष्मतयोः स्त्रियाम् । सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकमिति मेदिनी । अर्त्तनिरिद्रोघवाचस्ते निर्ऋथं सचन्तामिति मन्त्रे निर्ऋथो हिंसेति वेदभाष्यम् । निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके इति मेदिनी । प्रतित्यच्चारुमध्वरमिति मन्त्रे गोपीथः सोमपानमिति वेदभाष्यम् । यास्को ऽप्येवम् । तीर्थमिति तु वृत्तिकाराः । अवगथ इति । गाङो ह्रस्वत्वं निपातनात् । समीणः ॥ समिथशब्दः सङ्ग्रामपर्यायेषु वैदिकनिघण्टौ पठितः । अग्ने जात इति मन्त्रे समिथा युद्धानीति वेदभाष्यम् । युक्तञ्चैतत् । सम्यगेति जयाय मन्त्रे इति व्युत्पत्तेः । संपूर्वस्य इणः क्तिन्नाद्यन्तस्य लोके ऽपि युद्धार्थत्वदर्शनाच्च । उक्तं ह्यमरेण समित्याजिसमिद्युधः । तिथं पृष्ठम् । पृषु सेचने । पृष्ठन्तु चरमन्तनोरित्यमरः । पृष्ठञ्चरममात्रे ऽपि देहस्यावयवान्तरे इति मेदिनी । स्तोत्रविशेषो ऽपि

---

नेभे इति । इभः पुमानित्यर्थः । कालमानेति । अष्टादशनिमेषाः काष्ठाः पुटा

पृष्ठम्। चित्राधिकरणे पृष्ठैः स्तुवतइत्यादौ तथापि निर्णयात्। गूथ-मिति। गु पूरीषोत्सर्गे। निपातनाद्दीर्घः। एवं यूथे ऽपि। यूथन्तिर्यक्-समूहे स्त्री पुष्पभेदे च योषितीति मेदिनी। यूथी पुष्पप्रभेदे स्यात् मा-गध्याञ्च करेणुके। यूथन्तिर्यक्समूहे ऽपि वृन्दमात्रे ऽपि भाषितमि-ति विश्वः। प्रुङ् गतौ। निपातनात् गुणः। प्रोथी ऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिष्विति मेदिनी। स्फायितञ्चि॰ द्वात्रिंशत इति। दशपाद्यान्तु चयस्त्रिंशदुक्ताः। दम्भिवहीति पठित्वा वह प्रापणे। ऊ-ढः। अनड्वानित्युदाहरणात्। माधवो ऽप्येवम्। स्फारमिति। नेड्वशीति नेट्। वलि यलोपः। स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे इति मेदिनी। तक्रमिति। तञ्चू सङ्कोचे। वक्रः स्याज्जटिले क्रूरे पुट-भेदे शनैश्चरे इति विश्वः। वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम्। शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोरिति मेदिनी। क्षुद्र इति। क्षुदिर् संपेषणे। क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्। क्षुद्रा व्य-ङ्गानटीकण्टकारिकासरघासु च। चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्र-योरपीति मेदिनी। ह्वग्नः पुरोडाश इति। न ह्वग्ना उरुव्यंस इति म-न्त्रे वेदे भाष्यकारैः प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्चेत्थं व्याख्या-तम्। दशपादीवृत्तौ तु ह्वग्नमाजाङ्काष्ठञ्चेत्युक्तम्। ह्वग्नन्दुःखमिति सुख्यातुवृत्तौ माधवः। हिमांशुरित्यादि शब्दार्णवः। दस्यति रोगा-न् क्षिपति दस्रः। दस्रः खरे ऽश्विनीसुते इति मेदिनी। दस्रः खरे चा-श्विनयोरिति विश्वः। भूयोभिप्रायेति। माधवस्तु वृत्तिस्वरसमनु-रुध्य अविन्द उस्रिया इति मन्त्रे बाहुलकात्षत्वं नेति व्याचष्टे। उ-स्रो वृषे च किरणे ऽपिस्त्रार्जुन्युपचित्रयोरिति मेदिनी। उस्रा गव्यु-पचित्रायामुस्रन्तु किरणे स्मृत इति विश्वः। वास्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे इति मेदिनी। वास्रो रासभपक्षिणोरित्येके। मा-

---

भेदो ऽधस्तनजलस्याकस्मादुपरि निर्गमः। उपचित्रा। भूषकपर्णी। क्लिन्ने जलार्द्रे।

धवस्तु वाश्चेव विद्युम्निमातीति मन्त्रे शब्दयुक्ता प्रस्तुतस्तना धे-
नुर्वाश्चेति व्याख्यत् । शुभ्रं स्यादभ्रके क्लीवमुद्दीप्रं शुक्रयोस्त्रिषु
इति मेदिनी । चुक्रमिति । चक तृप्तौ । चुक्रस्त्वम्ले ऽम्लवेतसे ।
चुक्री चाङ्गेरिकायां स्यात् वृक्षाम्ले चुक्रमिष्यते इति विश्वः । चुक्रं वृत्ता-
म्ले चाङ्ग्यां स्त्री पुंस्यम्ले ऽम्लवेतसइति मेदिनी । अर्द्देर्दीर्घश्च ॥ आ-
र्द्रा नक्षत्रभेदे स्यात् स्त्रियाङ्क्लिन्नेभिधेयवत् इति मेदिनी । शुचेर्द-
श्च ॥ शूद्रो वृषलः । अवदारे त्वाभूद्रेति श्रुतौ तु रूढेर्बाधात् योग
एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता व्यासेन सूचितम् । शुगस्य
तदनादरश्रवणादिति । कृतेः ॥ अन्त्यस्य च्छः । क्रू तु सर्वस्य । अनेका-
ल्त्वात् । कृच्छ्रमाख्यानमाभीले पापसान्तपनादिनोरिति विश्वमे-
दिन्यौ । क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवदिति च । बहुलमन्य-
त्रापि ॥ सञ्ज्ञायां बृंहयति वर्द्धयति प्रजाः ब्रह्मा । शं सुखं भावयति
शम्भुः । शोषयति शुष्मेत्यादि । छन्दसि वर्द्धन्तु त्वा सुष्टुतयः । यद्-
मं जजान । बाहुलकादसञ्ज्ञाछन्दसोरपि क्व चिदित्याशयेनोदाह-
रति वान्तीत्यादि । जोरी च ॥ जीरः खड्गे वणिग्द्रव्ये इति विश्वः ।
जीरस्तु जरणे खड्गे इति मेदिनी । ज्यश्चेति । तथा च न धातुलोप इ-
ति सूत्रे जीवेरदानुरित्यस्य प्रत्याख्यानार्थं नैतज्जीवे रूपङ्किं तु रकि
ज्यः संप्रसारणमिति भाष्ये उक्तम् ॥ सुसू ॥ सुरा चषकमद्ययोः । पु-
ल्लिङ्गस्त्रिदिवेशे स्यादिति मेदिनी । सुरो देवे सुरा मद्ये चषकेऽपि
सुरा क्व चिदिति विश्वः । सुवति प्रेरयति कर्मणि लोकमिति सूरः ।
सूर्यः । धीरो धैर्यान्विते स्वैरे बुधे क्लीवन्तु कुङ्कुमे । स्त्रियां श्रवणतु-
ल्यायामिति मेदिनी । गृध्रः खगान्तरे पुंसि वाच्यलिङ्गो ऽर्थलुब्धके
इति च । शुरिति तालव्यादिर्गत्यर्थः । शूरः स्याद्यादवे भटे इति

---

शुगस्येति । शुचं रातीति शूद्रः । आतो ऽनुपसर्गइति कः । पृषोदरादित्वाद्वर्ण-
व्यत्यय इति भावः । आभीलन्दुःखम् । सान्तपनादि प्रायश्चित्तार्थव्रतम् । नृशंसो

मेदिनी। शूरस्त्वारभटे सूर्ये इति विश्वहेमचन्द्रौ। शूरः सूरश्च तरणाविति द्विरूपेषु विश्वः। चीरो ऽर्कवल्कलयोः पुंसि चीरो झिल्ल्यां नपुंसकम्। गोस्तने वस्त्रभेदे च रेखालेखनभेदयोरिति मेदिनी। चीरन्तु गोस्तने वस्त्रे चूडायां सीसके ऽपि च। चिरी कृच्छ्रादिकाझिल्ल्योरिति विश्वः। वाविन्धेः॥ वीध्रन्तु विमलार्थकमिति विश्वेष्यनिघ्नेष्वमरः। वप्रः पितरि केदारे वप्रः प्राकाररोधसोरिति धरणिरन्तिदेवौ॥ वप्रस्ताते पुमानस्त्री वेणुक्षेत्रचये तटे इति मेदिनी। ऋज्रेन्द्र॥ ऋज गत्यादिषु। ऋज्राश्वः प्रष्टिभिरम्बरीष इति मन्त्रे ऋज्रा गतिमन्तो ऽश्वा यस्य स ऋज्राश्व इति वेदभाष्यम्। शचीपतावन्तरात्मन्यादित्यइति विश्वः। अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवदिति मेदिनी। क्षुरः स्याच्छेदनद्रव्ये कोकिलाचे च गोक्षुरे इति विश्वमेदिन्यौ। खुरः कोलदले शफे। भद्रः शिवे खञ्जरीटवृषभेरुकदम्बके। करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः। काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च। तिथिभेदे प्रसारिण्याङ्कट्फलानन्तयोरपि। त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे। उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे। स्त्री वचाचुद्रयोरिति मेदिनी। भेलः प्लवे भीरुके च निर्बुद्धमुनिभेदयोरिति विश्वः। भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत्। शुक्रः स्याद्भार्गवे ज्येष्ठे मासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदोः क्लीबं शुक्लो योगान्तरे सिते। नपुंसकन्तु रजते। गौरः पीते ऽरुणे श्वेते विशुद्धे ऽप्यभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे। गौ-

———

घातुकः। चषकः। सुरापानपात्रम्। चीरी। चिकटदेशप्रेषितपत्रम्। क्षेत्रचये। क्षेत्ररक्षणार्थे कुड्ये। कोकिलाक्षस्तालमखाणा। कोलो बदरी। कृष्णा पिप्पली।

री त्वसञ्जातरजःकन्याशङ्करभार्य्ययोः । रोचना रजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषे ऽपि यादसां पतियोषिति इति मेदिनी । नदीभेदे च गौरी स्यादरुणस्य च योषितीति विश्वः । अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्त्तित इति ब्रह्माण्डवचनं श्राद्धकाण्डे हेमाद्रिणा उदाहृतम् । एतेन गौरः शुच्याचार इति भाष्यं व्याख्यातम् । इरा भूवाक्सुरासु चेति मेदिनी । मालङ्क्षेत्रे जने मालो मालापुष्पादिदामनीति विश्वः । मालं क्षेत्रे स्त्रियां पुष्पस्रजोर्जात्यन्तरे पुमानिति मेदिनी । मालमुन्नतभूतलमित्युत्पलः । क्षेत्रमारुह्य मालमिति मेघदूतः । मणिपूर्वोयमर्थान्तरे ऽपि रूढः । मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे इति विश्वः । बाहुलकात् तिज निशाने रन् दीर्घत्वञ्जस्य वः । तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः ॥ त्रिष्वत्युष्णे नितान्ते च कटौ इति मेदिनी । समि कसः ॥ सङ्कसुको ऽस्थिरे इति विशेष्यनिघ्ने अमरः । कन् ॥ अपूर्वस्य निरुपपदस्य अपिशब्दात्सोपपदस्य अर्थद्वारकसंबन्धे षष्ठी प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात् । रजको धावके शुके इति विश्वः । रजकौ धावकशुकाविति हेमचन्द्रः । कुट्ट च्छेदने । इक्षून् कुट्टयति इक्षुकुट्टको गौडिकः । चषको ऽस्त्री सुरापात्रे मद्यमाद्यप्रभेदयोरिति मेदिनी । लमको ऋषिविशेषः । कृषेः ॥ कर्षकः कृषीवलः । कृषकः स एव । कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत् इति मेदिनी । स्त्री कुशी कुशिकः फालइति रत्नकोशः । उदकश्च उन्दी क्लेदने । ननु वुन् शिल्पीत्यादिना गतार्थमिदमत आह । प्रपञ्चेति । प्राङि ॥ सङ्गते उपपदम् । आङि पणि ॥ नन्वनेनैव सिद्धे प्राङीत्यत्र परिग्रहणं व्यर्थमिति चेन्न । उपसर्गान्तरनिवृत्त्यर्थत्वात् । आपणिक

---

रोचनो गोरोचनाख्ये ॥ नितान्ते । अतिशये । व्यवहरतीत्यर्थं इति । तेन दीव्य:

इति । वणिक् नित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु कित इत्यन्तोदात्तः । श्याख्या ॥ श्येनः पक्षिणि पाण्डुरे इति मेदिनी । स्त्येनश्चोरः । स्तेन चौर्ये इति चौरादिकात्पचाद्यचि तु निर्यकारोऽपि । के चित्तु स्तायूनां पतये इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टै-धातोर्भ्वादिषु माधवादिभिः स्वीकृतत्वात् प्रकृतसूत्रे ऽपि तमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । हरिणः पुंसि सारङ्गे विशदे स्वभिधेयवत् । हरिणी हरितायाञ्च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायाञ्चेति मेदिनी । वृजेः किच्च ॥ वृजिनं कल्मषे क्लीबङ्केशे ना कुटिले ऽन्यवदिति मेदिनी । अजिनञ्चर्म कृत्तिः स्त्रीत्यमरः । कठिनमिति । कठ कृच्छ्रजीवने । कठिनमपि निष्ठुरे स्यात्स्तब्धे तु नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिना गुडशर्करायाञ्चेति मेदिनी । मल मल्ल धारणे । मलिनन्दूषिते कृष्णे ऋतुमत्यान्तु योषिति इति मेदिनी । कुण्डिनमिति । नगरङ्कुण्डिनमण्डजो ययाविति श्रीहर्षः । कुण्डिनः ऋषिः । यस्यापत्यङ्कौण्डिन्यः । परुषि पर्वणि दिनं खण्डितमिति तैत्तिरीयश्रुत्यर्थः । द्रुदक्षिभ्याम् ॥ द्रु गतौ । दक्ष वृद्धौ । द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे । दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्त्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियामिति मेदिनी । दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु । वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोरिति विश्वः । अर्त्तेः ॥ इरिणं शून्यमूषरमित्यमरः । इरिणन्तु खरे शून्ये ऽपीति मेदिनी । तुहिनमिति । तुहिर् अर्द्दने । लघूपधगुणे कृते ह्रस्वः । तलिपुलिभ्याञ्च ॥ तल प्रतिष्ठायाम् । पुल महत्वे । तलिनं विरले स्तोके स्वच्छे ऽपि वाच्यलिङ्गकमिति

---

तीति सूत्रेणेत्यर्थः । स्तब्धो ऽनम्रः । यस्यापत्यमिति । यस्य कुण्डिनस्य वाचकात्लान्तकुण्डिनूशब्दात् ङीपि तस्या अपत्यमित्यर्थः । कुण्डिनात्तु यञ् दुर्लभः । कुण्डिनीत्येव गर्गादौ पाठात् । ध्वनितञ्चेदं भस्याढइति वार्तिके भाष्ये ।





मेदिनी। मद्धः॥ कुतस्त्वमिन्द्र माहिन सन्निति मन्त्रे माहिनो महनीयः पूजनीय इति वेदभाष्यम्॥

क्विब्वचि॥ पृच्छतीति प्राट्। च्छ्वोः शूडिति शः। प्राशौ। प्राशः। श्रीरिति। कृदिकारादिति ङीष् तु न। क्तप्रत्ययो य इकार इति व्याख्यानात्। कृदन्तं यदिकारान्तमिति पक्षेऽपि कारग्रहणे तत्सामर्थ्यादेव केवलग्रहणात्। दुर्घटस्तु ङीषि श्रीमित्यपि रचित इच्छतीत्याह। श्रीर्वेशरचना शोभा भारती सरलद्रुमे। लक्ष्म्यान्त्रिवर्गसंपत्तिविधोपकरणेषु च। विभूतौ च मतौ च स्त्रीति मेदिनी। जूराकाशेत्यादि मूलोदाहृतञ्च। द्रुवः॥ चात् क्विप्दीर्घौ। स्रुवः कः॥ स्रु गतौ। स्रुवो यज्ञपात्रविशेषः। अयं स्रुवोऽभिजिहर्ति। स्रुवेण पार्वणौ जुहोतीत्यादौ प्रसिद्धः। चिक॥ स्रुव इत्येव। योगविभाग उत्तरार्थः। तनोतेः॥ व इति सङ्घातग्रहणम्। तदाह। वशब्देति। स्त्रियान्तु त्वगरूधरेत्यमरः। केशवोक्तमाह। गौर्नेत्यादि। गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि चेति मेदिनी। द्यौरिति। कर्त्तर्यधिकरणे वा प्रत्ययः। दोरिति। त्रिलिङ्गोयमिति प्रागेवोक्तम्। जसिसहो रुरिन्॥ जसुरये-स्तर्यं पिप्यथुर्गामिति मन्त्रे जसुरये श्रान्ता येति नीचायमानञ्जसुरिं न श्येनमित्यत्र जसुरिक्षुधितम्। श्येवन्नश्येनपक्षिणमिवेति। उतस्य वाजी सहुरीर्ऋतावेति मन्त्रे सहुरिः सहनशील इति च वेदभाष्यम्। सयु॥ सवनन्त्वध्वरे स्नाने सोमनिर्दलने ऽपि चेति मेदिनी। स्वणः शब्दने स्वरे इति च। वरणस्तिक्तशाके ऽपि प्राकारे वरणं वृताविति विश्वः। वरुणे वरणः सेतुस्तिक्तशाकः कुमारक इत्यमरः। अशेरश च॥ जिह्वेति। रस आस्वादने। चौरादिकः। ततो नन्यादि-

---

केवलग्रहणादिति। उच्चरितसमकालग्रहणादित्यर्थः। अयन्तु धात्ववयवस्तरिस्तरी

त्वाल्ल्युः। पृयासश्चन्थेति युच्॥ अथ रसनं स्वादने ध्वनौ। जिह्वायान्तु न पुंसि स्यात् राखायां रसना स्त्रियामिति मेदिनी। एषा दन्त्यतालव्यद्वयोरर्थव्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता। वस्तुतस्तु द्वावप्यर्थद्वयौ साधू। तथा हि। तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः। रशनापि च जिह्वायामिति विश्वकोशाज्जिह्वायामुभयम्। रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोरित्यजयधरणिकोशाभ्याङ्काञ्च्यामुभयं साधु। रसनं स्वदने वाथ रसना काञ्चिजिह्वयोः। रसनञ्चापि राखायाम्। इति विश्वप्रकाशाच्चेति दिक्। एवञ्चेह सूत्रे अशू व्याप्तौ अश भोजने इति धातुद्वयमपि ग्राह्यम्। रस आस्वादने रस शब्दे इति धातुभ्यां बहुलमन्यत्रापीत्यनुपदं वक्ष्यमाणो युच्। तेन सर्वत्रावयवार्थानुगमो ऽपि सूपपाद इत्यवधेयम्। उन्देः॥ ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियामिति मेदिनी। बहुलम्॥ स्यन्दनन्तु स्रुतौ नीरे तिनिशे ना रथे ऽस्त्रियामिति मेदिनी। रोचना रक्तकह्लारे गोपिनागरयोषितोः। रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिष्विति च। चदि आह्लादने। चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनीति विश्वः। चन्दनी तु नदीभेदे। चन्दनो ऽस्त्री मलयजे भद्रकाल्यां नपुंसकम्। इति मेदिनी। भद्रकाली ओषधिविशेषः। भद्रकाली तु गन्धोल्याङ्कात्यायन्यामपि स्त्रियामिति मेदिनी। असु क्षेपणे। असनन्तक्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे इति मेदिनी। अत सातत्यगमने। राजपूर्वः। राजातनः क्षीरिकायां प्रियाले किंशुके ऽपि चेति विश्वमेदिन्यौ। एवमन्ये ऽपि द्रष्टव्याः। रञ्जेः क्युन्। बाहुलकात्क्युपेरपि। नलोपाभावश्च।

---

इति च तदुदाहरणमिति भावः। इत्यवधेयमिति। तृज्वत्सूत्रभाष्ये तु रशे रशना राशिः। रश्मिरित्युक्तम्। तिनिशो वृक्षविशेषः। कूटशाल्मल्याम्। यमद्वारस्थशाल्मल्याम्॥ जीवद्रुमो विजयसारः। आवलिः पङ्क्तिः॥

क्षपणः। भूद्ध॥ बहुलवचनाद्भाषायामपि। भुवनं विष्टपे ऽपि स्यात्स-लिले गगने जने इति मेदिनी। कृपू॥ निधनं स्यात्कुले नाशे इति मेदिनी। निधनक्कुलनाशयोरिति हेमचन्द्रः। धृषेः॥ धिषणस्त्रिदशाचार्ये धिषणाधिपयोषिति इति मेदिनी। वर्त्तमाने॥ पृषन्मृगे पुमान् विन्दौ न द्वयोः पृषतोपि ना। अनयोस्त्व त्रिषु श्वेतविन्दयुक्ते ऽप्युभाविमौ इति मेदिनी। वृहती क्षुद्रवार्तक्यां कण्टकार्याञ्च वाचि ना। वारिधान्यां महत्याञ्च छन्दोवसनभेदयोरिति विश्वः। शतवद्भावादुगिदचामिति नुम्। वृहन्विपुलः। महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवदिति मेदिनी। महती नारदी वीणा। अवेक्षमाणं महतीं मुहुर्मुहुरिति माघः। जगत्स्याद्विष्टपे क्लीवं वायौ ना जङ्गमे त्रिषु। जगती भुवने क्ष्मायां छन्दोभेदे जने ऽपि चेति मेदिनी। तत्र वायुवाचिनः पुल्लिङ्गस्य नुमि जगन् जगन्तौ जगन्त इत्यादि। द्युगमिजुहोतीनान्द्वे चेति व्युत्पादितस्य तु नुमभावात् जगत् जगतावित्यादि। सञ्चिनोतेरिति। सुभूतिचन्द्रस्तु संपूर्वाच्छ्यतेः संश्वदित्याह। त्वपत् छत्रमिति। चन्द्रमा इत्यन्ये। पिव मध्वस्तृपदिन्द्रावृषस्वेति मन्त्रे तु त्वपत्शब्दो यौगिकः। त्वप्यन्नित्यर्थः। वेदभाष्ये तु तौदादिकात् त्वपतेः शतृप्रत्यये आगमशास्त्रस्यानित्यत्वान्नुमभाव इत्युक्तम्। तत्प्रौढिवादमात्रम्। एतेन त्वमस्य ब्राह्मणादात्वपत्पिवेत्यादि मन्त्रान्तरं व्याख्यातम्। गौरित्यनुवृत्तौ वेहद्गर्भोपघातिनीत्यमरः। छन्दस्यसानच्॥ शु गतौ। जृष् वयोहानौ। एतेन प्रमन्महे इत्यादिमन्त्रद्वयेपि शवसानशब्दस्य गन्तृपरतया सौष्ठवे वाहुलकोपष्टम्भेन क्लिष्टव्याख्यानं नातीवादर्त्तव्यम्। ऋञ्जिवृधि॥ ऋहजि भर्जने। इदित्त्वान्नुम्। तत एव नलोपाभावः। एवञ्च अयं मन्दिसही च पूर्वसूत्रे एव पठितुं योग्याः। कित्त्वन्तु वृद्धावेवोपयुज्यते। उत्तरसूत्रेपि गणग्रहणं सुत्यजम्। अर्त्तेः शङ्कः, वृधेः क्किदित्युक्तौ स-

र्वसामञ्जस्यात्। ऋञ्जसानो मेघ इति। ऋञ्जसानः पुरुवार उक्थैः। अस्मिन् मन्दसामा वृषभो वद्ध इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः। अर्त्तेः॥ धातोर्गुणः। प्रत्ययस्य रुडागमः। आसाविंषदर्शसानाय शरुमिति मन्त्रस्य भाष्ये अर्शसानाय शत्रूणां हिंसित्रे इति व्याख्यातम्॥ युधिबुधि॥ बाहुलकात् कृपेरपि। कृपाणः खड्गः। कृपाणेन कथंकारं कृपणः सह गण्यते। परेषान्दानसमये यः स्वकोशं विमुञ्चति। जुहोः॥ युयोध्यस्मज्जुहुराणमेन इति मन्त्रे जुहुराणं कौटिल्यकारि पापं युयोधि पृथक् कुर्विति भाष्यम्॥ श्वितेर्दश्च॥ श्विताबर्णे। अस्मात्सनन्तादानच् सनो लुक् तकारस्य दकारः। किदित्यनुवृत्तेर्न गुणः। पुण्यकर्मेति। सद्धि उज्ज्वलो भवितुमिच्छति। शिश्विदानो ऽकृष्णकर्मेति विशेष्यनिघ्ने अमरः। अकृष्णं शुक्लं शुद्धमित्यर्थः। इह क्षीरस्वामी प्रकृतसूत्रं विस्मृत्य श्विदि श्वैत्ये अस्माल्लिटः कानजिति व्याख्यत्। तत्तुच्छम्। कानचश्छान्दसत्वात्। इदित्त्वेन नलोपानुपपत्तेश्चेति दिक्। कृष्णकर्मेत्यमरे पाठान्तरम्। पापकर्मेत्यर्थः। तत्रावयवार्थानुगमबलेन बोध्यः। शुद्धो भवितुमिच्छतीत्युक्तो हि इदानीमशुद्ध इति गम्यते। तृन्तृचौ॥ अप्तृन्निति सूत्रे नप्त्रादिपाठेन ज्ञापितम्। औणादिकयोस्तृन्तृचोस्तत्राग्रहणमिति। अतो ऽत्र दीर्घो नेत्युदाहरति। संस्तारावित्यादि। नित्त्वादाद्युदात्तः। तथा च मन्त्रः। ग्रावग्राभ उत शंस्तास्तु विप्रः। आदिशब्दात्। शासु अनुशिष्टौ। शास्ति विनयति सत्त्वान् शास्ता बुद्धः शास्तारौ शास्तारः। शास्ता समन्तभद्रे ना शासके पुनरन्यवदिति मेदिनी। प्रपूर्वस्य तु अप्तृन्निति दीर्घः। प्रशास्तारौ प्रशास्तारः। क्षत्ता शूद्राच्च वैश्याजे प्रतीहारे च सारथौ। भुजिष्यातनये ऽपि स्यात् नियुक्तवेधसोः पुमानिति मेदिनी। कोशानुसारेणाह। वैश्यायामिति। अमरस्तु क्षत्त्रियायाञ्च शूद्रजइत्याह याज्ञवल्क्यो ऽपि। क्षत्त्रिया मा-

गर्धं वैश्यात् शूद्रात् चत्तारमेव चेति। इह बहुलमन्यत्रापीति प्रपञ्चार्थत्वात् उपेक्षितम्। नप्तेति। नञः प्रकृतिभावः। यतेरच्छब्दलोपः। त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपीति मेदिनी। जाया मातीत्यन्तर्भावितण्यर्थः। सुञ्यसेः॥ असु क्षेपणे। अस दीप्त्यादिषु। आभ्यां सुञि उपपदे ऋन्। यतेः॥ यती प्रयत्ने। नञि च नन्देः॥ उषाप्यूषा ननन्दा च ननान्दा च प्रकीर्त्तितेति द्विरूपेषु विश्वः। देवेति। भ्रातर इत्यनुवृत्तौ स्वामिनो देवृदेवराविल्यमरः। देवे धवे देवरि माधवे चेति श्रीहर्षः। नयतेः॥ स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा इत्यमरः। सव्ये॥ ष्टर्डिच्चेत्यनुवर्त्तते। सव्येष्ठेति। तत्पुरुषे कृतीति सप्तम्या अलुक्। अर्त्तिस्त्रु॥ धमिः सौत्रः। अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणीति मेदिनी। सरणिः श्रेणिवर्त्मनोरिति दन्त्यादौ रभसः। सरणिः पङ्क्तौ मार्गे चेति मेदिनी। शॄ हिंसायाम्। ततः शरणिरित्येके। सरणिरित्येके। शरणिः पथि चावलाविति तालव्यादावजयः। इमामग्ने शरणिमिति मन्त्रे शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्वेति वेदभाष्यम्। धमनी तु शिरा हट्टविलासिन्याञ्च योषिति। अशनिः स्त्रीपुंसयोः स्यात् चञ्चलायां पवावपि। तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्। रजनीनीलिनीरात्रिहरिद्राजतुकासु चेति मेदिनी। कुमारी लताविशेषः। तरणी रामतरणी कर्णिका चारुकेसरा। सहा कुमारी गन्धाढ्येति धन्वन्तरिनिघण्टुः। रञ्जेर्नलोपो ऽपि बाहुलकात्। कृषेरादेश्च चः॥ चर्षणिर्जन इति वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात्। सोमासस्चर्षणीधृतः प्रवर्षिणिभ्यः इत्यादिमन्त्राणां भाष्ये तथैव व्याख्यानाच्च। अत एव आदेश्च च इति दशपादीवृत्तिपाठ एवेह पुरस्कृतः। उज्ज्वलदत्तस्तु आदेश्च ध इति पठित्वा धर्षणी बन्धकीति व्याख्यत्। तथा सति धृषेरित्येव सूत्रयेत् प्रागल्भ्यरूपात्तयवार्थानु-

गमात् । आदेरु ध इत्यंशस्य त्यागेन लाघवाच्च ॥ वर्त्तनिरिति । कृदिकारादिति पक्षे ङीष् । सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति चेत्यमरः । क्षिपणिरायुधमिति । उतस्य वाजी क्षिपणिन्तुरण्यति इति मन्त्रस्य वेदभाष्यम् । क्षिपणिङ्क्षेपणमनु तुरण्यति त्वरयति गन्तुमिति व्याख्यातम् । अर्चिरिति सान्तम् । तमर्चिषा स्फूर्जयन्निति मन्त्रः । नयनमिव सनिद्रघूर्णंतदैषमर्चिरिति माघः । ज्वालाभासोर्न पुंस्यर्चिरिति नानार्थे सान्तेष्वमरः । इदन्तोपीति । णिजन्ताद्च इरिति भावः । अर्चिर्हेतिः शिखा स्त्रियामित्यमरः । रोचिः शोचिरुभे क्लीबे इति च । छाद्यते ऽनया च्छदिः । छदिः स्त्रियामेवेति लिङ्गानुशासनसूत्रम् । एवञ्च पटलं छदिरित्यमरग्रन्थे पटलसाहचर्यात् छदिषः क्लीबतां वदन्त उपेक्ष्याः । बृहेः ॥ बर्हिः पुंसि हुताशने । न स्त्री कुशे इति मेदिनी । द्युतेः ॥ ज्योतिरग्नौ दिनकरे । पुमान्नपुंसकं दृष्टौ स्यान्नचत्रप्रकाशयोरिति मेदिनी । वसौ रुचेः ॥ बाहुलकात्केवलादपि । रोचिः शोचिरुभे क्लीबे । अर्त्तिपॄ ॥ व्रणो ऽस्त्रियामीर्ममरुः क्लीबे इत्यमरः । ग्रन्थिर्ना पर्वपरुषीरिति च । वपुः क्लीबन्तनुः शस्ता कृतावपीति मेदिनी । तनुः शरीरम् । तनुषे तनुषेनङ्गमिति सुबन्धुः । स्यात्तनुस्तनुषा सार्धन्धनुषा च धनुं विदुरिति द्विरूपेषु विश्वः । अथास्त्रियान्धनुश्चापावित्यमरः । धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिष्विति सान्ते मेदिनी । क्षेः ॥ शित्त्वात्सार्वधातुकत्वे ख्याञ् । न चक्षते रूपमनुभवन्त्यनेनेति चक्षुः । मुचेः ॥ मुहुः पुनः पुनः शश्वद् अभीक्ष्णमसकृत् समाः । इत्यव्ययेष्वमरः । अस्मात्परं बहुलमन्यत्रापीति सुस्पष्टत्वात्त्यक्तम् । कृग ॥ नैरुतः कर्बरः क्रव्यात्कर्बुरो यातुरक्षसोरिति शब्दार्णवः । शर्वरी यामिनीस्त्रियोरिति मेदिनी । बर्बरः पामरे केशविन्यासे नीवृदन्तरे । बर्बरः फञ्जिकायान्तु बर्बरा शाकपुष्पयोरिति विश्वः । बर्बरः पामरे केशवल्कले नीवृदन्तरे । फञ्जिकायां पुमान् शाकभेदपुष्प-

भिट्टोः स्त्रियामिति मेदिनी। चत्वरं स्थण्डिले ऽङ्गणइति च। नौ स-द्देः॥ षरजनुवर्त्तते। सदिरप्रतेरिति षत्वम्। निषद्वरः स्मरे पङ्के निशा-यान्तु निषद्वरेति मेदिनी॥

इत्युणादिषु द्वितीयः पादः॥

छित्वर॥ छित्वरञ्छेदनद्रव्ये धूर्त्ते वैरिणि च त्रिष्विति मेदिनी। तु धाञ्। अन्त्यस्य ईत्वम्। एवं पा पानइत्यादीनामित्येके। अन्ये तु पीव मीवतीव नीव स्थौल्ये। एभ्यः प्रत्यये लोपो व्योरिति वलोपमाहुः। पीवरः कच्छपे स्थूले इति मेदिनी। तीवरो नाम्बुधौ व्याधे इति च स्यान्नीवरो वणिजके वास्तवे ऽपि च दृश्यते। इति मेदिनीविश्वप्रका-शौ। कट्वरन्तु स्मिते वाच्यलिङ्गन्तक्रे नपुंसकमिति मेदिनी। बाहुल-कादुपपूर्वाज्जुहोतेरुकारलोपः। उपह्वरं समीपे स्यादेकान्तेपि नपुं-सकमिति मेदिनी। उपह्वरो रथ इति केचित्। तदुपयस्थतममिति मन्त्रे तु उपह्वरे उपगन्तव्ये समीपे देशे। ह्वृ कौटिल्ये गतिविशे-षवाचिना धातुना गतिमात्रमिह लक्ष्यते। ततो ऽधिकरणे घः। कृ-दुत्तरपदप्रकृतिस्वरत्वमिति भाष्ये व्याख्यातम्। इण्सिञ्॥ इनः पत्यौ नृपार्कयोः। जिनो ऽर्हति च बुद्धे च पुंसि स्यात् त्रिषु जित्वरइति मेदिनी। दीना मूषिकयोषायान्दुर्गते कातरे ऽन्यवत् इति विश्वः। उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गक इति मेदिनी। फेनमी-नौ॥ डिण्डीरो ऽब्धिकफः फेन इत्यमरः। मीनो राश्यन्तरे मत्स्यइति विश्वः। कृषेः॥ कृष्णः सत्यवतीपुत्रः केशवे वायसे ऽर्जुने॥ कृष्णा स्यात् द्रौपदी नीलीकणाद्राक्षासु योषिति। मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोरिति मेदिनी। ब्रध्नः सूर्यः। बुध्नः शिफायां रुद्रे चेति विश्वः। बुध्नो ना मूलरुद्रयोरिति मेदिनी। धाप्॥ धाना भृष्टयवे प्रो-क्ता धान्यके ऽभिनवोद्भिदि इति विश्वः। पर्णं पत्रे किंशुके ना इति मेदिनी। वस्तस्त्ववक्रयोः पुंसि वेतने स्यान्नपुंसकमिति च। वेन इति

लुण्टाकः प्रजापतिश्च । सपूर्व्या महानामिति मन्त्रे मनोः पुत्रे ऽपि प्रसिद्धः । लचणमित्यादि । लक्ष्मणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौ । रामभ्रातरि पुल्लिङ्गौ हंसयोषायां लक्ष्मणा सारसयोषायां लक्ष्मणा इति व्यवस्थेत्यर्थः । लक्ष्मणं नाम्नि चिह्ने च सारस्यां लक्ष्मणा क्व चित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवदिति मेदिनी । कोशे तु सारस्यामपि निर्मकारः स्वीकृतः । वेन्नेति । लघूपधगुणः । बाहुलकादिति । एतच्च च्छ्वोः शूडिति सूत्रे वृत्तौ येन विधिरिति सूत्रे कैयटग्रन्थे स्पष्टम् । घ्रोनः किरणसूर्ययोरिति मेदिनी । कवृ ॥ कर्णः पृथाज्येष्ठसुते सुवर्णाद्रौ श्रुतावपीति विश्वमेदिन्यौ । वृञ् वरणे । दीर्घपाठे तु वॄ वरणे । वर्णो द्विजातिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाचरविलेपने इति मेदिनी । विश्वमेदिनीस्थमाह । जर्ण इति । जर्णो जीर्णद्रुमेन्दुष्विति हेमचन्द्रः । द्रोणो ऽस्त्रियामाढके स्यात् आढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियाङ्काष्ठाम्बुवाहिन्याङ्गवादन्यामपीष्यते । अन्नं भक्तं च भुक्ते स्यात् । स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमानिति मेदिनी । धेट इच्च ॥ धेना नद्यां नदे पुमान् इति मेदिनी । धेनः समुद्रे नद्याञ्च धेना इति विश्वः । श्लोको धारेत्यादिषु सप्तपञ्चाशत्संख्याकेषु वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव धेनां जिगाति दाशुषे । इन्द्र धेनाभिरिह मादयस्व इत्यादिषु धेना वागिति व्याख्यातं भाष्ये । ञिविष्वृषि॥ ञितृष् पिपासायाम् । तृष्णा लिप्सा पिपासायाम् इति विश्वः । सूञः ॥ सूना ऽधोजिह्विकापि चेति नान्ते अमरः । सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलगण्डिकयोः स्त्रियामिति मेदिनी । रमे-

---

जित्वरो जयशीलः । दुर्गते दरिद्रे । कणा । पिप्पली । एवञ्च सूत्रे वर्णग्रहणञ्चिन्त्यप्रयोजनम् । अवक्रयो मूल्यम् । काष्ठाम्बुवाहिनी । क्षेत्रसेचनार्थ

स्त च॥ रत्नं स्वजातिभेदे ऽपि गणावपि नपुंसकमिति मेदिनी। च्युवः। च्युङ् गतौ। अनेकार्थत्वादिह भाषणे। च्यवन्ते भाषन्ते ऽनेनेति विग्रहः। दशपाद्यान्तु चुपः किच्चेति पठ्यते। चुप मन्दायाङ्गतौ चोपतीति चुप्पो मन्दगमनकर्त्ता। सुश॥ सूपो व्यञ्जनसूदयोरिति मेदिनी। शूर्पमिति। बाहुलकादुत्वं रपरत्वं हलि चेति दीर्घः। प्रस्फोटनं शूर्पमस्त्रीत्यमरः। दशपाद्यान्तु कुसुषुभ्यश्च। कशृभ्यामूङ् चेति पठित्वा सूपं शूर्पञ्च व्युत्पादितम्। द्विरूपकोशे ऽप्युभयन्दर्शितम्। कुयुभ्याच्च॥ कु शब्दे। यु मिश्रणे। आभ्यां यः सन्त्वात् धातोर्दीर्घत्वञ्च। कूपः कूपकमृन्मानगर्त्तात्तु गणवृक्षके इति मेदिनी। खष्पः क्रोधे बलात्कृताविति विश्वः॥ शष्पं बालतृणे ऽपि च। पुंसि स्यात्प्रतिभाहानाविति मेदिनी। विश्वोक्तिमाह। बाष्प इति। बाष्पमूष्मणि चाश्रुणीति कोशान्तरमभिप्रेत्याह। बाष्पश्चेति। रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। ग्रन्थवृत्तौ नाटकादौ आकरश्लोकयोरपीति विश्वमेदिन्यौ। तल्पमट्टे कलत्रे च शयनीये च न द्वयोरिति मेदिनी। अमरोक्तमाह। तल्पमिति। स्तनिहृषि॥ स्तनगदी देवशब्दे चुरादिण्यन्तौ। हृष तुष्टौ। पुष पुष्टौ। मदी हर्षग्लेपनयोः। घटादिः। स्तनयित्नुः पुमान् वारिधरेपि स्तनितेपि चेति मेदिनी। हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे। स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरोगयोरिति विश्वः। गदयित्नुः पुमान्कामे जल्पाके कार्मुके ऽपि चेति विश्वमेदिन्यौ। मदयित्नुः कामदेवे पुमान् मद्ये नपुंसकमिति मेदिनी। कृहनिभ्यां क्नुः॥ कृनुरिति। कर्त्तेत्यर्थः। कित्त्वान्न गुणः। हत्नुरिति। अनुदात्तेत्यादिना अनुनासिकलोपः। एवमुत्तरत्र गमेरपि। शस्त्रञ्चेति। चाद्धन्ता। दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्त्ता हनुर्वक्त्रैकदे-

---

नौकाकारङ्काष्ठम्। आजिमुष्को वृक्ष विशेषः। कूपकः शुष्कनद्यादौ जलार्थं कृतो गर्त्तः। मृन्मानं मृत्कृतं मानपात्रङ्गुणवृक्षकः नौकादौ गुणाख्यरज्जुबन्धनार्थङ्काष्ठम्॥

प्रः । बाहुलकान्नलोपः । गमेस्तु जिगत्नुरित्युदाहृतम् । तत्त्वेवं प्रामादिकम् । लक्ष्यविसंवादात् । तथा च श्रूयते । सुरूपकृत्नुमूतये । ज्येष्ठराजं भरेकृत्नुम् अथक्रत्नुरगृभीतः । मा नो वधाय हत्नवे । मृगं न भीम उपहत्नुमुग्रम् । यो नः सनुत्य उत वा जिगत्नुरित्यादि । अत एव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य त्नोः कित्त्वादनुनासिकलोप इत्युक्तम् । यत्तु तेनैव सुरूपकृत्नुमिति मन्त्रे विवृण्वता तकारोपजनश्छान्दस इत्युक्तम् । तद्भ्रमपादीवृत्तिमनुहृत्य न तु वस्तुस्थितिमनुरुध्येति सहृदयैराकलनीयम् । दाभाभ्यां नुः ॥ दानुर्दातरि वक्रान्ते इति मेदिनी । भानू रश्मिदिवाकरावित्यमरः । वचेः ॥ वग्नुर्वक्ता । धेटः ॥ धेनुः स्यान्नवसूतिकेत्यमरः । विश्वोक्तिमाह । सूनुरिति । जहातेः ॥ जह्नुः स्यात्पुंसि राजर्षिभेदे च मधसूदने इति मेदिनी । विश्वोक्तिमाह । स्थाणुरिति । स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे इति मेदिनी । अजिवृ ॥ वेणुर्नृपान्तरे वंशे इति विश्वः । रेणुः स्त्रीपुंसयोर्धूलौ पुल्लिङ्गः पर्पटे पुनरिति मेदिनी । विषेः किच्च ॥ चकारान्नित् । आद्युदात्तः । विष्णुरित्याप्रविष्णवे शूषम् । कृदा ॥ कर्कः कर्के तले वह्नौ शुक्लाश्वे दर्पणे घटे इति विश्वमेदिन्यौ । राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् । संपूर्णेन्दुतिथावपीति मेदिनी । राका तु सरिदन्तरे । राका नवरजःकन्या पूर्णेन्दुः पूर्णिमाऽपि चेति विश्वः । इह दाधारा एवाङ्केण इति ह्रस्वोऽपि बाहुलकान्नेति बोध्यम् । अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ इति विश्वमेदिन्यौ । कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनरिति मेदिनी । बाहुलकाद्रमेरपि कः । रङ्कः कृपणमन्दयोरिति मेदिनी । कपिलकादित्वाल्लत्वपटाप् । लङ्का रक्षःपुरी शाखाशाकिनीकुलटासु चेति विश्वमेदिन्यौ । हृवृ ॥ हृका बाणोत्पलवाता इति हेमचन्द्रः । हृकं संशाय

पविमिन्द्र तिग्मम्। इति मन्त्रस्य वेदभाष्ये तु हकं सरणशीलम्। पविं वज्रं संग्राय सम्यक्तीक्ष्णीकृत्येति व्याख्यातम्। भूकं छिद्रे च काले चेति मेदिनी। मुष्को मोक्षकवृक्षे स्यात् सङ्घाते वृषणे ऽपि चेति मेदिनी। शुको व्याससुते कीरे रावणस्य च मन्त्रिणि। शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ॥ वल्कं वल्कशल्कयोरिति च। उल्का ज्वाला विभावसोरिति भूतिचन्द्रः। इणभी॥ एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिष्विति मेदिनी। काकः स्याद्वायसे वृत्तप्रभेदे पीठसर्पिणि। शिरोवत्तालने मानप्रभेदे द्वीपभेदयोः। काका स्यात्काकनासायाङ्काकोलीकाकजङ्घयोः। रक्तिकायामलघ्वाञ्च काकमाच्यां च योषिति। काकं सुरतबन्धे स्यात् काकानामपि संहताविति विश्वमेदिन्यौ। पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्यात्स्थाली पाचने ऽपि च। शल्कन्तु शकले वल्के इति मेदिनी। शल्कैरग्निमिन्धान इति मन्त्रे काष्ठखण्डैरिति व्याख्यातारः। मर्क इति। मर्चिः सौत्रो धातुरिति बहवः। वर्म शब्दे चौरादिक इति मित्‌चोत्सूत्रे कैयटः। मर्तो मर्त्तं मर्चयति द्वयेनेति मन्त्रे मर्चयति विधेयीकरोति भर्त्सयतीति वेदभाष्यम्। न चैवं णिलोपस्य स्थानिवद्भावात्कत्वं न स्यात् इति वाच्यम्। पूर्वत्रासिद्धे तदभावात्। बाहुलकात् शयतेः कन्। शाको द्वीपान्तरे ऽपि च। शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियामिति मेदिनी। नौ हः॥ निहाका गोधिका समे इत्यमरः। शाकं नस्यनिहाकयोतिरिति श्रुतिः। निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः। वक्षोलङ्करणे हेममात्रे हेमपले ऽपि चेति मेदिनी। स्यमेः॥ स्यमु शब्दे। स्यमीका मिलीकायां स्त्री स्यमीको नाकुवृक्षयोरिति मेदिनी। श्रजिय॥ एभ्यः कन्। एषान्दीर्घस्य। तत्सामर्थ्याद्गुणाभावः। शकिः॥

---

जल्पाको बहुवक्ता। कार्मुकन्धनुः। विक्रान्तो वीरः। अर्कपर्णी अर्कवृक्षः। ग्रन्थिपर्णं। अरीन्धाख्ये भाषया॥ शल्को मत्स्यत्वक्। पीठसर्पी पङ्गुः। रक्तिका गु

शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा इत्यमरः। शकुनस्तु पुमान्पक्षि-मात्रे पक्षिविशेषयोः। शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम् इति मेदिनी। शकुन्तः कीटभेदे स्याद् भासपक्षिविहङ्गयोरिति। शकुनिः पुंसि विहगे सौबले करणान्तरे इति च। बाहुलकात्कमेरपि प्रत्ययादिलोपे कुशब्दादेशः। कुन्तिः। इतो मनुष्यजातेरिति ङीष् कुन्ती पाण्डुप्रियायाञ्च शल्लक्याङ्गुग्गुलुद्रुमे इति मेदिनी। कन्युन्॥ त्रिपण्युस्तुपमान्देचे सुरभौ वाच्यलिङ्गक इति मेदिनी। भुवन्युः स्यात्पुमान् भानौ ज्वलने शशलाञ्छने इति विश्वमेदिन्यौ। क्टॄ॥ करुणस्तु रसे वृक्षे कृपायाङ्करुणा मतेति विश्वमेदिन्यौ। वरुणस्तरुभेदे ऽप्सु प्रतीचीपतिसूर्ययोरिति विश्वः। दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे इति मेदिनी। त्रो रश्च॥ तरुणङ्कुब्जपुष्पे ना रुचके यूनि च त्रिष्विति मेदिनी। तरुणी तलुनीति चेति द्विरूपेषु विश्वः। क्षुधिपिशि॥ पिशुनङ्कुङ्कुमे स्मृतम्। कापि वक्रे च काके ना सूचककूरयोस्त्रिषु। पृक्कायां पिशुना स्त्री स्यादिति मेदिनी। मिथुनं तु द्वयो राशिभेदे स्त्रीपुंसयुग्मके इति च॥ फलेः फलगुनस्तु गुडाकेशे नदीजार्जुनभूरुहे। तपस्यसञ्ज्ञमासे च पूर्णिमायाञ्च फाल्गुनीति मेदिनी। अण् चेति। प्रज्ञादित्वात्स्वार्थे ऽणित्यर्थः। फलगुनः फाल्गुने ऽर्जुन इति द्विरूपकोशः। अशेर्लश् च॥ अश भोजने। अस्मादुनन् धातोर्लशादेशश्च। लशुनं महाकन्दः। उशना लशुनं वेश्म कश्मलं विश्वमश्ववदिति मध्यतालव्येषु विश्वः। लस् चेति पाठस्तु प्रामादिकः। अर्जेर्णिलुक् च॥ अत्र णेरनिटीति लोपेन सिद्धे णिलुक् चेत्युक्तिः फलञ्चिन्त्यम्। अर्जुनः ककुभे पार्थे कार्त्तवीर्यमयूरयोः। मातुरेकसुते ऽपि स्याद्धवले पुनरन्यवत्। नपुंसकन्तृणं नेत्ररोगे चाप्यर्ज्जुना गवि। उषायां बाहुदानद्याङ्कुट्टिन्यामपि च क्वचित् इति विश्वमेदिन्यौ। अर्त्तेश्च॥ अरुणो व्यक्तरागे ऽर्के संध्यारागे ऽर्कसारथौ। निःशब्दे कपि-

ले कुष्ठभेदे ना गुप्तिनि त्रिषु। अरुणा ऽतिविषा श्यामा मञ्जिष्ठात्रिवृतासु चेति मेदिनी। अजियमि॥ विश्वानि देव वयुनानि विद्वानिति मन्त्रे वयुनानि प्रज्ञानानीति वेदभाष्यम्। वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः। वृतू॥ वर्षन्तर्षमिति। नितुचेति नेट्। षत्वन्तु न भवति। बाहुलकेन षत्वे कर्त्तव्ये प्रत्ययसञ्ज्ञाया अप्रवृत्तेः। कत्तशब्दे तु षत्वं भवत्येव। एतच्च सर्वमादेशप्रत्यययोरिति सूत्रे भाष्यकैयटपदमञ्जरीषु स्पष्टमेव। उणादिवृत्तिकृतस्तु सर्वेपीह षत्वमुदाजह्रुः। तेषामयमाशयः। अस्तु भाष्यप्रामाण्याद्वर्सन्तर्समिति दन्त्योपि साधुः। बाहुलकवलभ्यषत्वाभावस्य पाक्षिकत्वे ऽपि बाधकाभावात्पक्षे षत्वमस्तु। वृषितृषिभ्याङ्गुणिण्यन्तादेरचि घञर्थे कप्रत्यये वा वर्षतर्षशब्दयोर्दुर्वारत्वात्। अल्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थमित्यत्र वर्षमित्याकरे उदाहृतत्वाच्चेति। तस्मादिह द्विरूपता फलिता। वर्षो ऽस्त्री भारतादौ स्याज्जम्बूद्वीपाब्दवृष्टिषु। प्रावृट्काले स्त्रियां भूम्नि इति मेदिनी। तर्षो ऽभिलाषोदन्ययोरिति च। पुत्रादौ तर्णके वर्षे वत्सः क्लीवन्तु वक्षसि इति त्रिकाण्डशेषः। हंसः स्यान्मानसौकसि। निर्लोभनृपविष्णवर्कपरमात्मसु मत्सरे। योगभेदे मन्त्रभेदे शरीरमरुदन्तरे। तुरङ्गमप्रभेदे चेति मेदिनी। कंसो ऽस्त्री तैजसे द्रव्ये कांस्ये माने ऽसुरे तु नेति च। कंसो दैत्यान्तरे स्मृतः। कांस्यपात्रे च मानभेदे च कीर्त्तित इति विश्वः। कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे। स्पर्द्धायां ना तु दोर्मूलकच्छवीरुत्तृणेषु चेति मेदिनी। शुषेः॥ शुष्को जटी गर्दभाण्डद्विपभित्कुञ्जराशने इति मेदिनी। शुष्को द्वीपविशेषे स्यात्पर्कटीगर्दभाण्ड-

---

ञ्जा। नाकु वल्मीकम्। इतो मनुष्येति। कृदिकारादित्युचितम्। प्रत्ययसञ्ज्ञाया इति। षत्वं नेत्येव युक्तम्॥ जटा जटामांसी। लक्ष्यविरोधादिति। बहिष्ठसंवत्स-

योः। पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तित इति विश्वः। माने मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियामिति मेदिनी। अशेः॥ अथाक्षमिन्द्रिये। ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे इत्यमरः। अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके। रुद्राचेन्द्राक्षयोः सर्पे विभीतककरावपि। चक्रे कर्षौ पुमान् क्लीबन्तुत्थसौवर्चलेन्द्रिये इति मेदिनी। स्नुव्रश्चि॥ ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान्। कृते वध्यानेन्यलिङ्गं नक्षत्रे च नपुंसकमिति मेदिनी। ऋषेर्जातौ॥ नियमार्थमिदं सूत्रं ऋषेर्जातावेवेति। तेनान्येभ्यः केवलयौगिकत्वेऽपि प्रत्ययः। उन्दिगुधि॥ गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोरिति मेदिनी। गुच्छस्य गुत्सो गुच्छो गुलुच्छवदिति द्विरूपकोशात्॥ स्याद्गुच्छः स्तबके स्तम्बे हारभेदकलापयोरिति च। वर्मं द्वितीयान्तमेदिनीकोशाच्च। गृधेस्त्वत्वेन सिद्धे भष्भावनिवृत्तये दकारविधिः। पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोरिति विश्वमेदिन्यौ। अशेः सरः॥ अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोरिति हेमचन्द्रः। उज्ज्वलदत्तादयस्तु अशेः सरन्निति पेठुः। तन्न। नित्स्वरापत्तेः। इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम्। ऋचो अक्षरे परमे व्योमन्। अक्षरेण मिमते सप्तवाणी इत्याद्यृङ्मन्त्रेषु चीणि च शतानि षष्टिश्चाक्षराणीति यजुषि च तथैव पाठात्। अत एव द्वितीयाह्निकान्ते। अश्नोतेर्वा सरो ऽक्षरमिति भाष्यकृतोक्तम्। सपूर्वाच्चित्॥ पूर्वेण सहितः सपूर्वः। इद्वत्सराय परिवत्सराय। संपूर्वादिति पाठस्तु लक्ष्यविरोधादुपेक्ष्यः। कृधू॥ कृसर इत्यादि हारावलीस्थम्। धूसरी किन्नरीभेदे नागरे त्रिषु पाण्डुरे इति मेदिनी। मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान्। असह्यपरसंपत्तौ कृपाणे चाभिधेयवत् इति। मत्सरो ऽन्यशुभद्वेषे तद्वत् कृपणयोः स्त्रि-

ण्विति अमरः। अन्यशुभद्वेषे मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिष्विति अमरः। असह्यपरसंपत्तौ मात्सर्यं कृपणे क्रुधीति विश्वः। वेदे तु योगं पुरस्कृत्य प्रयुज्यते। इदुमिन्द्राय मत्सरम्। तं सिन्धवो मत्सरमिन्द्रपानमित्यादि। मत्सरं हर्षहेतुमिति तद्भाष्यम्। अमरोक्तिमाह। तसर इति। अनुदात्तोपदेशेत्यादिना ऽनुनासिकलोपः। ऋत्वरः। ऋत्विक् इति। ऋत्वरन्तोयधारायामृत्वरस्त्वृत्विजि स्मृतमिति मेदिनी। अनृत्वरा ऋजवः सन्तु पन्था इति मन्त्रस्य वेदभाष्ये तु ऋश्वरः कण्टक इति व्याख्यातम्। पीयुक्वणिभ्याम्॥ राजादनं प्रियालुः स्यादित्यमरः। प्रियालुः स्यात्पियालवदिति द्विदिरूपकोशः। बाहुलकाद्गञ्जेरपि कालन्। नलोपः। न्यङ्क्वादित्वात्कुत्वम्। भगालं नरमस्तकम्। मत्वर्थे इनिः। चण्डीकान्तो भगाली च लेलिहानो वृषध्वज इति राजशेखरः। कठिकुषिभ्याम्॥ कठ कृच्छ्रजीवने। कुष निष्कर्षे। कठाकुः कपिवन्त्यर्के ना परोत्तापिनि चिण्विति मेदिनी। उज्ज्वलदत्तस्तु कठिकषिभ्यामिति पठित्वा कषशिखेति दण्डकधातुमुपन्यस्य कषाकुरित्युदाजहार। तत्कोशविरुद्धम्। मेदिनीकोशे उकारप्रक्रमे पाठात्। सर्त्तेः॥ स्रदाकुर्नानिले चक्रे ज्वलने प्रतिसूर्यके इति मेदिनी। वृत्तेः॥ वार्त्ताकुरपि वार्त्ताके वृन्ताको ऽपि च दृश्यते इति द्विरूपे विश्वः। वार्त्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणीत्यमरः। वार्त्ताकं पित्तलङ्किं चिदङ्गारपरिपाचितमिति वैद्यकशास्त्रम्। पर्देः॥ पृदाकुरित्यादि। पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमानिति मेदिनी। सृयुः॥ सरण्युस्तु पुमान्वारिवाहे स्यान्मातरिश्वनि इति मेदिनी। सरण्युरस्यसूनुरश्व इति मन्त्रस्य भाष्ये तु सरण्युः शीघ्रगामीति व्याख्यातम्। यवागूरुष्णिका श्राणा विलेपी तरला च सेत्यमरः। वचक्नुस्तु पुमान् विप्रे वावदूके ऽभिधेयवदिति मेदिनी। ऋषिविशेषे ऽप्ययम्। यस्य कन्या वाचक्नवीति प्रसिद्धा। आनकः॥ भयानकः स्मृतो व्याघ्रे रसे

रात्रौ भयङ्करे इति मेदिनी। शिङ्घाणकइति। शिघि आघ्राणे। शिङ्घाणङ्काचपात्रे स्यात् लोहनासिकयोर्मलइति विश्वः। शिङ्घाणः फेनपिण्डोऽशे नक्रेतस्य पिच्छलइति विक्रमादित्यकोशः। हारावलीस्थमाह। शिङ्घाणमिति। उल्मुकमिति च। दर्विः कम्बिः खजा काचेत्यमरः। स्त्रियः॥ कुक् प्रत्ययोयङ्ककारो गुणनिषेधार्थः। हसिम्ह॥ हस्तः करे करिकरे सप्रकोष्ठे करेऽपि च। हस्ते केशात्परो व्राते इति मेदिनी। मर्त्तो भूलोकः। तत्र भवो मर्त्यः। दिगादेराकृतिगणत्वाद्यत्। गर्त्तस्त्रिगर्त्तभेदे स्यात् वटे च कुकुन्दरे। एनः कर्बुरआगते। अन्तः स्वरूपे नाशे वा न स्त्री शेषे ऽन्तिके त्रिषु। दन्तो ऽद्रकटके कुञ्जे दशने चौषधौ स्त्रियामिति मेदिनी। लोतमश्रुणि चोरिते इति विश्वः। क्तक्तवतू इति सूत्रे लोतो मेष इति कैयटः। पोतः शिशौ वहित्रे चेति विश्वमेदिन्यौ। धूर्त्त इति। धुर्वी हिंसायाम्। लोपो व्योरिति वलोपः। क्ङितीत्यनुवृत्तिपक्षे तु राल्लोप इति लोपः। हलि चेति दीर्घः। धूर्त्तन्तु खण्डे लवणे धत्तूरे ना शठे त्रिष्विति मेदिनी। तनिमृङ्भ्याम्॥ ततं वीणादिकं वाद्यमित्यमरः। अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात् पुंल्लिङ्गस्तु समीरणे। मृतन्तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिष्विति मेदिनी। अञ्जिजमि॥ अक्तं परिच्छिन्नम्। अक्तपरिमाणस्य वाचक इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात्। अत्र व्यक्तं प्राप्ते च सङ्कुले इति विश्वप्रकाशे लिपिभ्रमादक्तं व्याप्ते च सङ्कुले इत्युदाहरन्नुज्ज्वलदत्तो भ्रान्तत्वादुपेक्ष्यः। तथा च मेदिन्यां वकारादिप्रक्रमे व्यक्तन्तु व्याकुले व्याप्तइत्युक्तम्। घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्। सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री इति मेदिनी। ऋ गतौ। बाहुलकात् क्तः। ऋतमुञ्छशिले जले। सत्ये दीप्ते पूजिते स्यादिति मेदिनी। दुतनिभ्याम्॥ दूतः प्रेष्यः। गौरादित्वात् ङीष्। दूती। अथ

कथन्तेन दूतिविदितं विषेदुषेति रघुः। दूङ् परितापे। अस्मात् क्तिच्। दूत्यान्दूतिरपि स्मृतेति द्विरूपकोशः। ततो ऽनुकम्पे जनक इति विश्वमेदिन्यौ। वाङ्कलकात् शीङो ऽपि। सीता लाङ्गलपद्धतिः। रामपत्नी च। शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च। शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽग्न्यासेचबहुवारतरौ च दृष्ट इति तालव्यादौ धरणिः। शीता दन्त्यादिरपि। सीता लाङ्गलपद्धतिः। वैदेही स्वर्गगङ्गा तु इति मेदिनी कोशात्। सीता लाङ्गलरेखा स्यात् व्योमगङ्गा च जानकी इति दन्त्यादौ रभसकोशाच्च। अत्र त्यक्तं सूत्रम्। जेर्मुट् चोदात्तः॥ जि जये। अतः क्तस्तस्य मुडागमः स चोदात्तः धातोर्दीर्घश्च। जीमूतश्चेव भवति। जीमूतोऽद्रौ भूतिकरे देवताडे पयोधरे इति मेदिनी। वेणी खरा गरीदेवताडीजीमूत इत्यपि इति अमरः। जीमूतः स्याद् वृत्तिकरे शक्रे द्रौ घोषके घने इति विश्वः। इदं सूत्रमार्षमिति पुरुषोत्तमः। अत एव आकरे पृषोदरादिषु जीमूतशब्द उदाहृतः। लोष्टानि लेष्टवः पुंसि इत्यमरः। अत्र पुंसीत्युभयान्वयि। तेन पुंनपुंसकलिङ्गोयम्। तथा च स्थाने ऽन्तरतमसूत्रे भाष्यम्। लोष्टः क्षिप्तो बाहुवेगङ्गत्वा इत्यादि। अत एव लोष्टः शण्ढे ऽपि लेष्टः स्यादिति पुंस्काण्डे गोपालितः। पलितं शैलजे तापेके शपाके च कर्दमे इति मेदिनी। हरिता स्त्री च दूर्वायां हरितवर्णयुते ऽन्यवदिति च। रुहेः॥ रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने। पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे। रोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने। पुमान्नदान्तरे भीमे वर्णे च त्रिषु तद्वतीति मेदिनी। विशेः॥ पिशितं मांसं मांस्यां स्त्रीति मेदिनी। मांस्याञ्जटामांस्याम्। तथा च जटा च पिशिता पेशीति

---

रोति स्वरविधायकन्तूपायान्तरं बोध्यम्॥ बहुवारतरुर्लहसोराख्यः। शैलजं शिला-

धन्वन्तरिः । श्रुदक्षि ॥ उद्यतस्रुचे भवसि श्रवाय्य इति मन्त्रे श्रवाय्यो मन्त्रैः श्रवणीय इति वेदभाष्यम् । दक्षाय्यो यो दम आसनित्यः । विश्वरूपस्य स्पृहयाय्यस्य राजन् । मित्र इव यो दिधिषाय्यो भूद् इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः । उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वञ्च दधिषाय्यो घृतं इति व्याख्यत् । दशपादीवृत्तिकारस्तु दधिशब्दस्य द्वित्वङ्गुणाभावः । अत्वञ्चाभ्यासस्य निपात्यत इत्याह । प्रसादकारादयो ऽप्येवमेव प्रतिपन्नाः । तदेतत्सर्वं लक्ष्यविरोधाद्वेदभाष्यविरोधाच्चोपेक्ष्यम् । स्तुषेय्यं स्तोतव्यम् । बहुरूपमिति वेदभाष्यम् ॥ यत्तूज्ज्वलदत्तेन स्तुवः केय्य इति पठित्वा कित्त्वाद्गुणाभाव उवङादेशे स्तुवेय्यः पुरन्दर इत्युक्तम् । तन्न । वेदतद्भाष्यादिविरोधात् । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायान् । पर्जन्यो मेघशब्दे ऽपि ध्वनदम्बुदशक्रयोरिति मेदिनी । अजयकोशस्थमाह । वदान्य इत्यादि । अमिनक्षि ॥ नक्ष गतौ । विधिः प्रकृत्यन्तरम् । नक्षत्रमिति । नभ्राण्नपादिति सूत्रे नञः प्रकृतिभाव उक्तः । तदेः सौत्रे अनि नञ्समासे व्युत्पत्त्यन्तरन्तदिति बोध्यम् । यत्र नोपदृष्व्यदेवता । संत वायुर्वातेन गच्छता संयजत्रैरङ्गानीति मन्त्रे तथा दर्शनात् । गडेः ॥ गड सेचने । कलत्रं श्रोणिभार्ययोरित्यमरः । वृञश्चित् ॥ चित्त्वादन्तोदात्तः । वादत्रायान्दार्वा नह्यमानः । सुविदेः कत्रः ॥ इह प्रायेण कत्रन्निति नितं पठन्ति तत्प्रामादिकम् । बृहस्पतेः सुविदत्राणि राध्येत्यादौ नित्स्वरादर्शनात् । कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्च । धन्वचत्कान्तत्रस्येति मन्त्रे ऽपि तथैव कृन्तत्रङ्कर्त्तनीयमरण्यमिति वेदभाष्यम् । भृमृदृशि ॥ भृञ् भरणे मृङ् प्राणत्यागे । दृशिर् प्रेक्षणे । दशपाद्यान्तु भृदृशीङिति पठित्वा दृङ् आदरे द्रियते दरत्तः शेते शयत्त इत्युदाहृतं तन्न । रुशन्तमग्निन्दर्शतं बृहन्तम् । तरणिर्विश्वदर्शतः । दैव्यो दर्शि-

तो रथ इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात् । भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ इति मेदिनी । यजते ऋत्विगिति उज्ज्वलदत्ताद्यनुरोधेनोक्तम् । त्रिर्नो अश्विना यजता हिरण्यशम्यं यजतो बृहन्तमित्यादिषु यजतशब्दो यष्टव्यपरतयैव वेदभाष्ये व्याख्यातः । पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले इति मेदिनी । हर्यतो ऽश्व इति । एतदपि हर्य कान्तौ गतौ चेति धात्वर्थं वृत्तिकारोक्तिञ्चानुसृत्योक्तम् । परित्यं हर्यतं हरिम् आ-हर्यताय धृष्णवे इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम् । पृषिरञ्जि॥ पृषन्मृगे पुमान्बिन्दौ न द्वयोः पृषतो ऽपि ना । अनयोस्तु त्रिषु श्वेतबिन्दुयुक्ते ऽप्युभाविमौ । रजतस्त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्ण इति मेदिनी । शीङ्शपि॥ उज्ज्वलदत्तेनात्र पञ्चमो वञ्चिः पठ्यते अन्यैस्तु वन्दिः । वञ्चथ-वन्दथयोरन्यतरं वेदादावुपलभ्य बहुश्रुतैः पाठो निर्णेयः । बाहुलका-दिति । शमथः शान्तिमन्त्रिणोरिति मेदिनी । दमथस्तु पुमान् दण्डे दमे च परिकीर्त्तित इति च । रुदिविदि॥ विदथो योगिज्ञानिनोरिति मेदिनी । अत्रोज्ज्वलदत्तः । रुविदिभ्याङ्कदिति पठित्वा रौतीति रु-वथः श्वेत्युदाजहार । दशपादीवृत्तिकारस्तु रुदिविदिभ्याङ्किदिति पपाठ । किं चोपसर्गे वसेरित्येवंरूपमुत्तरसूत्रद्वयमपि न पेठतुः । तथा हि । शीङ् शपेति सूत्रानन्तरं सोपसर्गाद्वसेः भृञश्चित् रुदिविदिभ्याङ्कित् । इत्युज्ज्वलदत्तस्य सूत्रपाठः । अन्यस्य तु शीङः शपेति सूत्रान्तरम् । आङि वसेः, भृञश्चित्, रुदिविदिभ्याङ्कित्, इति सूत्रपाठः । तदेतत्पाठद्वयं भाष्यादिविरोधादुपेक्षितम् । तथा हि । गाङ्कुटादिसूत्रे के पुनस्तङादयः चङ् अङ् नजिङ्अवङ्नङः इति भाष्यम् । रु-

---

तुः । कुचन्दनम् । रक्तचन्दनम् । मतान्तरे । ब्रह्मपुत्राख्ये ॥ दुर्वर्णं रूप्यम् ।

दिविदिभ्यां ङिदित्यनुवर्त्तमाने उपसर्गे वसेरित्यपप्रत्यय इति कैयटेन व्याख्यातम्। एवञ्च कुर्वता भाष्यादिविरोधः स्पष्ट एवेत्यास्तान्तावत्॥ भाष्यकैयटमते ऽपि ङिदित्यस्यानुवृत्तेः फलञ्चिन्त्यम्। अत्यविचमि॥ गौरादित्वात् ङीष्। अतसी स्यादुमा क्षुमेत्यमरः। चमसो यज्ञपात्रस्य भेदे ऽस्त्री पिष्टके स्त्रियाम्। पनसः कण्टकिफले कण्टके वानरान्तरे। स्त्रियां रोगप्रभेदे स्यादिति मेदिनी। वेञस्तुट् चेति पठित्वा वी गत्यादिष्विति धातुरुदाहृतः। वहियुभ्याम्॥ अजगरे शयूर्वाहस इत्युभावित्यमरः। वा तु क्लीबे दिवसवासराविति च। कृशॄ॥ करभो मणिबन्धादिकनिष्ठान्तोष्ट्र तत्सुते। शरभस्तु पशौ इति मेदिनी। समौ। पतङ्गशलभावित्यमरः। करभः करिशावक इति च। गर्दभः श्वेतकुमुदे गर्दपो गन्धभिद्यपि। रासभे गर्दभो क्षुद्रजन्तुरोगप्रभेदयोरिति मेदिनी। ऋषिवृषिभ्याङ्कित्॥ ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः। उत्तरस्तु स्मृतः श्रेष्ठे स्त्री नराकारयोषिति। शूकशिम्ब्यां शिराल्नायां विधवायां क चिन्मतेति मेदिनी। वृषभः श्रेष्ठवृषयोरिति च। रासिवल्लिभ्याञ्च॥ रासृ शब्दे वल्ल संवरणे। वल्लभो दयिते ऽध्यक्षे सल्लक्षणतुरङ्गमे इति च मेदिनी। जृविशिभ्यां झच्॥ बाहुलकादर्हतेरपि झच्॥ अर्हन्तः क्षपणको जिन इति विक्रमादित्यकोशः। तृभू। इह नन्दिर्ण्यन्तः। तदाह। नन्दयन्त इति। उज्ज्वलदत्तस्तु नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थतामाशङ्क्य अनाशीरर्थं नन्दिग्रहणमित्याह। तन्न। इहाप्याशिषीत्यस्य स्वयमेवानुवर्त्तितत्वात्। बाहुलकादिति। जर्जरं शैवले शक्रध्वजे त्रिषु जरन्तरे। झर्झरः स्यात् कलियुगे वाद्यभेदे नदान्तरे इति मेदिनी। अर्त्तिकमि। अररं छदकपाठयोः। भ्रमरः कामुके भृङ्गे चमरश्चामरे स्त्रि तु मञ्जरीमृगभेदयोरिति मेदिनी। वासर इति। वसेर्ण्यन्तादरः। के चित्तु सत्रे वाशिभ्य इति तालव्यं प-

ठित्वा वाभृ शब्दे वाश्यते वाभरः ॥ कोकिल इत्याङ्कः। अङ्गिमदि ॥ अङ्गार उल्मुके न स्त्री पुंलिङ्गस्तु महीसुते इति मेदिनी। मन्दारः स्यात् सुरद्रुमे। पारिभद्रे ऽर्कपर्णे च मन्दारो हस्तिधूर्त्तयोरिति च। मदि स्तुत्यादावित्यस्माद्दाङ्गलकादारुरपि। पारिभद्रे तु मन्दारुर्मन्दारुः पारिजातक इति शब्दार्णवः। गडेः ॥ कडारः कपिले दासे इति मेदिनी। शृङ्गारभृङ्गारौ ॥ शृङ्गारः सुरते नाट्यरसे च गजमण्डने। नपुंसकं लवङ्गे ऽपि नागसंभवचूर्णयोरिति मेदिनी। भृङ्गारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान् इति च। कञ्जिमृजिभ्याम् ॥ कञ्जारो जठरे सूर्ये विरिञ्चौ चारणे मुनाविति विश्वमेदिन्यौ। मार्जार ओतौ खट्वाङ्गे इति च। कमेः ॥ कुमारः स्याच्छुके स्कन्दे युवराजे ऽश्ववारके। बालके वरुणाद्रौ ना न द्वयोर्जात्यकाञ्चने। कुमारी शैलतनया वनमाल्योर्नदीभिदि। सहायराजिता कन्याजम्बूद्वीपेषु च स्त्रियामिति मेदिनी। विश्वप्रकाशे तु कुमारी रामतरणीति पाठः। रामतरणी लताविशेषः। सहेति प्रसिद्धः। तरणी रामतरणी कणिका चारुकेसरा। सहा कुमारी गन्धाढ्येति धन्वन्तरिनिघण्टुः। जम्बूद्वीपसहा कन्या कुमार्यौथाश्ववारके। बालके कार्त्तिकेये च कुमारी भर्तृदारके इति त्रिकाण्डशेषः ॥ तुषारस्तुहिनं हिमम्। कासारः सरसी सरः। कणेः ॥ कुणपः पूतिगन्धे शवे ऽपि च मेदिनी। विटपविष्टप इति। विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे। पीठाधिपे चेति मेदिनी। आदेः परइति। एतच्चोज्ज्वलदत्तरीत्योक्तम्। अन्ये तु सूत्रे विष्टपेति दन्त्योष्ठ्यादिमेव पठन्ति। युक्तञ्चैतत्। यत्र ब्रध्नस्य विष्टपमित्यादौ तथा दर्शनात्। उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे इति मेदिनी। ललिकेति। ललिः सौत्रः। इष्टकेति। इष्टकेषीकामालाना-

---

पिष्टके। माषचूर्णे। शूकशिम्बी। कपिकच्छुः। नागसंभवम्। सिन्दूरम्। चू-

मिति निर्देशात् प्रत्ययस्यादिति नेत्त्वम्। अर्त्तिगृ॥ गर्भभूणेर्भके कुचौ सन्धौ पनसकण्टके इति मेदिनी। इणः॥ इभः स्तम्बेरमः पद्मीत्यमरः। लक्षेर्मुट् च॥ लक्ष दर्शनाङ्कनयोः। चुरादिण्यन्तः। अस्मादीप्रत्ययः स्यात्। तस्य मुडागमस्य णिलोपः। लक्ष्मीः संपत्तिशोभयोः। ऋद्धौषधौ च पद्मायां वृद्धिनामौषधेऽपि च। फलिन्यां स्त्रीति मेदिनी॥

इत्युणादिवृत्तौ तृतीयः पादः॥

अयमिति॥ द्विचतुःषट्पदोरगाः। इत्यमरेणोभयलिङ्गोक्तेः। सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः। तत्र कृदिकारादिति पाक्षिको ङीष् कैश्चिदिष्यते न हि कारग्रहणे केवलग्रहणमिति मुनित्रयेण परिभाषितम्। अत एव वातप्रमी श्री लक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रचितः। एतच्च दुर्घटग्रन्थे स्पष्टम्। आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मीहरिस्त्रियामिति द्विरूपकोशः। अत एवाशीविषो विषधर इति सङ्गच्छते। आशीमिव कलामिन्दोरिति राजशेखरः। आशीर्हिताशंसाहिदंष्ट्रयोरिति सान्ते ऽमरात्। सान्तो ऽप्याशीःशब्द इत्यन्यदेतत्। बद्धेति। मुष्ट्या तु बद्धया सरत्निः स्यादित्यमरः। सहस्त इत्यर्थः। प्रसङ्गादाह। अरत्निरिति। न रत्निरिति। न रत्निरिति नञ्समासः। दशपादीवृत्तौ तु इह सूत्रे अर्त्तेरत्निचमकितं विधाय रत्निः साधितः। उज्ज्वलदत्तानुसारेणाह। वायू रात्रिश्चेति। इह शब्दो मेघः। अशनिश्चेति अपि बोध्यम्। आविष्कृणोमि तन्यतुर्न वृष्टिमिति मन्त्रे तन्यतुर्गर्जितमिति च मन्त्रे तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात्। अञ्जलिस्तु पुमान् हस्तसंपुटे कुटवे ऽपि चेति मेदिनी। स्थविरान्तमि-

---

र्णम्। पटवासः। कनकालुः। स्वर्णजलपात्रम्। सहा घृतकुमारी इति तृती-

ति । वनिष्टोर्दयया विधीतिमन्त्रस्य भाष्ये तथोक्तत्वात् । अञ्जिष्ठ इति । केचिदञ्जेरिष्णुचमिच्छन्ति । तेषामञ्जिरित्युदाहरणम् । मदेरिति । मत्स्यो मीने ऽथ पुंभूम्नि देशइति मेदिनी । अतिथिः कुशपुत्रे स्यात् पुमानागन्तुके त्रिषु । अङ्गुलिः करशाखायाङ्कर्णिकायाङ्गजस्य चेति मेदिनी । कवसः सन्नाहः । कण्टजातिश्च । अच इति । कवचो दुर्गभाण्डे च सन्नाहे पर्पटेपि चेति मेदिनी । पुषः ॥ पुष्यतेः करः स्यात् । स च कित् । पुष्करं खे ऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधे द्वीपतीर्थभेदयोश्च न पुंसकम् । ना रागनागविहगनृपभेदेषु वारुणौ इति मेदिनी । कलंश्च ॥ पुष्यतेः कलन् कित्स्यात् । पुष्कलस्तु पूर्णे श्रेष्ठे इति हेमचन्द्रः । मन्था इति । पथिमथीत्यात्वम् । इतो ऽत्सर्वनामस्थाने । मन्था मन्थनदण्डे च वज्रे वाते ऽपि च स्मृतः । पन्था इति । पथे गतावस्मात्पचाद्यचि अकारान्तो ऽप्यस्ति । वाटः पथश्च मार्गश्चेति सुभूतिचन्द्रपुरुषोत्तमौ । त्वचि त्वचः किरोपि स्यात् किरौ प्रोक्तः पथः पथीति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे ऽन्येभ्यो ऽपि दृश्यत इति डः । ऋभुक्षः स्वर्गवज्रयोरिति विश्वः ॥ ततो मत्वर्थीये इनिः । ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । आत्वात्वे । ऋभुक्षा इन्द्रः । ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः । दशपाद्यान्तु अर्त्तेर्भुक्षिनगिति सूत्रमुपन्यस्तम् । ऋभुक्षणमिन्द्रमाहुवतयइति मन्त्रस्य वेदभाष्ये ऽपि तत्सूत्रमुदाहृतम् । अत्रायं विवेकः । आद्यमन्त्रे ऽन्तोदात्तत्वं न्याय्यम् । अवग्रहाभावे बाहुलकात् । द्वितीये तु अवग्रहाभावो न्याय्यः । अन्तोदात्तस्तु बाहुलकात् इति । खजाक इति । खज मन्थे बलाका बकपङ्

---

यः ॥ कुशपुत्रे । रामपौत्रे । गजकर्णिका । गजशुण्डाग्रम् ॥

क्तिः स्याद्वल्लाका बिसकण्ठिका। बलाका कामुकी प्रोक्ता बलाकस्य बको मत इति विश्वप्राश्वनौ। शलाका शल्यमदनसारिकाशल्लकीषु चेति मेदिनी। पताका वैजयन्त्यञ्च सौभाग्यनाटकाङ्कयोरिति च। पताका वैजयन्त्याञ्च सौभाग्ये ऽङ्के ध्वजे ऽपि चेति विश्वः। पिनाकादयश्च॥ पिनाको ऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयोरिति मेदिनी। अमरोक्तिमाह। क्लीबेति। किञ्च पिष्ट्ट सञ्चूर्णने। षकारस्य णत्वन्धातोर्युगागमः। पिण्याको ऽस्त्री तिलकल्के हिङ्गुवाल्हीकसिल्हके इति मेदिनी। अमरोक्तिमाह। दूषिकेति। किञ्च दूषयतेरच इरिति ईप्रत्यये दूषिः। कृदिकारादिति ङीष्। दूषी। उभाभ्यामपि स्वार्थे कनि दूषिका ह्रस्वमध्यैव। के ऽण इति ङीषो ह्रस्वादेशात्। पिचण्डी दूषिका दूषिः पिचाटञ्च दृशो मलमिति विक्रमादित्यकोशः। दूषिका तूलिकायाञ्च मले स्याल्लोचनस्य चेति मेदिनी। अनिकृषिभ्याम्॥ अनीको ऽस्त्री गणे सैन्ये ऽपीति मेदिनी। हृषीकं विषयेन्द्रियमित्यमरः। पर्फरादेश इति। उज्ज्वलदत्तरीत्योक्तम्। वस्तुतस्तु धातोर्द्वित्वम्। उकारस्याकारः सलोपः। रुक् चाभ्यासस्येति दशपाद्युक्तमेव न्याय्यम्। चरेर्नुम् चेत्युत्तरग्रन्थानुरोधेन हेरुक्केत्यादेरनुवृत्तेर्न्याय्यत्वात्। किसलयमिति। नैतोश्चेव तुर्फरीपर्फरीकेति मन्त्रस्य वेदभाष्ये तु ञिफला विशरणे, पृ पालनपूरणयोः, पर्व पूरणे, एषामन्यतमस्य निपातनमिदमाश्रित्य शत्रूणां विदारयितारौ स्तोतॄणां पालका विशिष्टार्थस्य पूरयितारौ चेति व्याख्यातम्। तिन्तिडीक इति। तिमेर्मकारस्य डकारः। अभ्यासस्य नुक् च। तिन्तिडी चिञ्चाम्लिकेत्यमरे तु शब्दान्तरम्। तथा च तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रियेति वाचस्पतिः। अम्लीका चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिडी इति चन्द्रः। अम्लिका चुक्रिका चुक्रा साम्ला शुक्ला ऽथ शुक्लिका। अम्लिका चिञ्चिका चिञ्चा तिन्तिडीका च तिन्तिडेति धन्व-

न्तरिनिघण्टुः। यत्तु उज्ज्वलदत्तेनोक्तम् उपदंशस्तृतीयायामिति सूत्रे तिन्तिडीकोपदंशं भुङ्क्ते इति भाष्यप्रयोगात्साधुतेति, तदुपेक्ष्यम्। उपदंशइति सूत्रस्यभाष्यकारैरस्पृष्टत्वात्। तदुदाहृतप्रयोगस्य भाष्ये कुचाप्यभावाच्च। भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः। इन्दिन्दिरः पुष्पकीमधुद्रोमधुके शठइति त्रिकाण्डशेषः। कर्कर्यालूर्गलन्तिकेत्यमरः। पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रे च दिङ्नागे कोशकारान्तरेऽपि चेति मेदिनी। ईषेः॥ ईषिका स्यादिषीका ऽपि वानायुजवनायुजाविति द्विरूपकोशः। स्यन्देः॥ स्यणीका स्यन्दिनी लाला इत्यमरः। मृडः कीकः॥ कित्त्वादन्तोदात्तः। कीकनित्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः। मृळीके अस्य सुमतौ स्याम। मृळीकावप्रियव्रजान् इत्यादिषु चित्स्वरस्यैव दर्शनात्। अलीकमप्रिये ऽपि स्यात् दिव्यसत्ये नपुंसकमिति मेदिनी। अलीकमप्रिये भाले वितथे इति हेमचन्द्रः। तथाच प्रयुज्यते। "ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च। नीचाः सदैव सविलासमलीकमग्ना ये कालताङ्कुटिलताञ्च न सन्त्यजन्ति" इति। व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीठके। ना नागरे इति मेदिनी। वलीकनीध्रे पटलप्रान्ते इत्यमरः। वलतेर्मुगागमे वल्मीकम्। वामलूरश्च नाकुश्च वल्मीकं पन्नपुंसकमित्यमरः। वदतेर्वृद्धिश्च॥ वाचीको गौः। वाहश्च॥ सुप्रपूर्वादिणस्तुट् च॥ सुप्रतीकः। शाम्यते। शमीकः ऋजीषम्। एतच्च ऋजीषिणं वृषणं संसतश्रिये। आसत्यो यातु मघवां ऋजीषीत्यादिमन्त्रभाष्ये स्पष्टम्। अयमिति। ईषन् प्रत्ययः अरुट् च तस्यागम इत्यर्थः। वोपालितोक्तिमाह। अम्बरीष इत्यादि। अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे। नरकस्य प्रभेदे च किशोरे भास्करे ऽपि च। आम्रातके तु तापे चेति मेदिनी। कृशृ॥ करीरो वंशाङ्कुरे ऽस्त्री वृक्षभिद्घटयोः पुमान्। करीरा चीरिकायाञ्च दन्त-

मूले च दन्तिनामिति मेदिनी। शरीरं वर्ष्मविग्रह इति अमरः। अर्द्धर्चादित्वात् शरीरो ऽपि। बाहुलकात् छिडि गत्यनादरयोः। छिण्डते इतस्ततो गच्छतीति छिण्डीरः। छिण्डीरो ऽब्धिकफः फेन इत्यमरः। डिण्डीरो ऽपि च छिण्डीर इति द्विरूपकोशः। किर्मीरजम्बीरदधीरादयो ऽप्येवं बोध्याः। किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे इति मेदिनी। जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठे द्रुमे इति च। उशीरं वीरणमूलम्। उशीरो ऽपि। मूले ऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यमित्यमरः। कुरीरमिति। कपिलकादित्वाल्लत्वे कुलीरः कर्कटकः। घसेः॥ क्षीरमिति। उपधालोपः। कत्वं षत्वम्। क्षीरन्दुग्धे च नीरे चेति विश्वः। गमेरिति। निम्नङ्गभीरङ्गम्भीरमित्यमरः। पच एलिमच्। कर्त्तर्यर्थङ्कृत्यप्रत्ययेषु रिदुपसंख्यानः। शेरते ऽनेन शीधुः। मद्यविशेषः। मैरेयमासवः सीधुरित्यमरः। अर्धर्चादिपाठात्क्लीबत्वञ्च। पुन्नपुंसकयोर्दारुजीवातुस्थाणुशीधव इति त्रिकाण्डशेषः। शीलं स्वभावे सद्वृत्ते इति मेदिनी। जलनीली तु शैवालं शैवलं इत्यमरः। शैवलं पद्मकाष्ठे स्यात् शैवले तु पुमानयमिति मेदिनी। शब्दार्णवोक्तिमाह। शेवालमित्यादि। उलूकादयश्च॥ उलूकः पुंसि काकारराविन्द्रे भारतयोधिनि इति मेदिनी। वदेर्यङन्तादूकः। वाचोयुक्तिपटुर्वाग्मी वावदूकश्च वक्तरीत्यमरः। शमेर्बुक्च॥ शम्बूको गजकुम्भान्ते घोषे च शूद्रतापसे इति मेदिनी। बाहुलकादुकप्रत्यये ह्रस्वमध्योपि। जम्बूकं जम्बुकं प्राहुः शम्बूकमपि शम्बुकमिति द्विरूपकोशः। जम्बूकबन्धूकादयो ऽप्यत्रैव द्रष्टव्याः। जम्बूकः फेरवे नीचे पश्चिमाशापतावपीति विश्वमेदिन्यौ। बन्धूकं बन्धुजीवे स्याद्बन्धूकः पीतसारके इति च। शल्लिमण्डि॥ सौगन्धिकन्तु कह्लारमित्याद्युपक्रम्य शालूकमेषां कन्दः स्यादित्यमरः। एषां सौगन्धिकादीनाङ्कैरवान्तानां कन्दो मूलमित्यर्थः। नियो

मिः ॥ नेमिर्नो तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियामिति मेदिनी । बाहुलकादन्यतोपि । या प्रापणे । यामिः स्वसृकुलस्त्रियोरित्यन्तस्था-दौ रभसः । यामिः कुलस्त्रीस्वस्रोः स्त्रीत्यन्तस्थादौ मेदिनी । जै क्षये । जामिः स्वसृकुलस्त्रियोरिति च वर्गतृतीयादौ अजयकोशः । चवर्गा-दिरपि प्रोक्ता यामिः स्वसृकुलस्त्रियोरिति द्विरूपेषु विश्वः । अर्त्ते-रूच्च ॥ उचेत्युचितम् । ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायां वेदनापीडयोरपीति भूमिः । भूमिर्वसुन्धरायां स्थानमात्रेपि च स्त्रियामिति मेदिनी । अश्नोतेः । रश्मिः पुमान् दी-धितौ स्यात् पक्ष्मप्रग्रहयोरपीति मेदिनी । वीज्या ॥ अमरोक्तमा-ह । वेणिरित्यादि । वेणी केशस्य बन्धने । नद्यादेरन्तरे देवताडे इति मेदिनी । वेणी खरा गरीदेवताडो जीमूत इत्यपीत्यमरः ॥ ज्यानिर्हानौ स्रवत्यांचेति विश्वः । जूर्णिः स्त्रीरोगः । सृवृषि ॥ अङ्कुशो ऽस्त्री सृणिः स्त्रियामित्यमरः । सृणिः स्यादङ्कुशे पुमानिति कोशान्तरम् । अत एव आरक्तमग्नमवमत्य सृणिं शितायमिति माघः । वृष्णिस्तु यादवे मेषे वृष्णिः पाखण्डचण्डयोरिति विश्वः । ऐन्द्रवृष्णिं षोडशिनि तृ-तीयमिति श्रुतौ वृष्णिं मेषमित्यर्थः । अङ्गेः ॥ अग्निर्वैश्वानरो ऽपि स्या-च्चित्रकाख्यौषधौ पुमानिति मेदिनी । श्रेणिः । श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहताविति च । कटिः श्रोणिः ककुद्मतीत्य-मरः । योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे इति मेदिनी । घृणिपृश्नि ॥ घृ सेचने निप्रत्ययो गुणाभावश्च घृणिः पुनः अंशुज्वा-लान्तरङ्गेषु इति हेमचन्द्रः । पृश्निरल्पतनावित्यमरः । पार्ष्णिः स्या-दुन्मदः स्त्रियाम् । स्त्रियान्द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरे ऽपि चेति मेदिनी । भूर्णिर्धरणीति । तन्नानभूर्णिरिति मन्त्रे भाष्ये त भूर्णिर्धारकः पोषको वेति व्याख्यातम् । द्विवो दे ॥ दीदिविर्धिषणा-न्नयोरिति विश्वः । दीदिविर्ना धिषणेन्ने तद्वस्त्रियामिति मेदिनी । धि-

पणो बृहस्पतिः । दीदिवीर्दार्दशकरस्वचाः सुरगुरुर्गुरुरिति त्रि-काण्डशेषः । दीदिविर्दार्दशार्च्चिः स्याज्जीवः प्राक् फल्गुनीसुत इति हारावली । ओदनो ऽस्त्री सदीदिविरित्यमरः । अत्र सदीदिविर्दी-दिविसहित इति व्याख्यानं न्याय्यम् । स इति च्छेदे तु अस्त्रियामिति न लभ्येत । ततश्च अन्ने तदस्त्रियामिति मेदिनीग्रन्थो विरुध्येतेति ध्ये-यम् । गोपामृतस्य दीदिविमिति मन्त्रे तु द्योतमानमित्यर्थः । ष्ठविधृ-षि ॥ एतेन क्तिन्नन्ता निपात्यन्ते । घृष्विर्वराह इति । उग्रस्य पुनः स्थविरस्य घृष्वेरिति मन्त्रे तु घृष्वेः कामानां वर्षकस्येत्यर्थः । घृषु सेचने इति धात्वर्थानुगमात् च्छविः शोभारुचेर्योषिदिति मेदिनी । अथ चाषः किकीदिविरित्यमरः । विनिमय इति । किकिदीविः किकी-दिविरिति द्विरूपकोशः । पातेः ॥ पतिर्द्धवे ना त्रिष्वीशे इति मेदिनी । शकेः ॥ उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री वि-ष्ठाविशौ स्त्रियामित्यमरः । अमेरतिः ॥ अथामतिः पुंसि हिमदीधि-तिकालयोरिति मेदिनी । अमितिस्त्वामतिः काल इति द्विरूपेषु विश्वः । वहिवसि ॥ वहतिः सचिवे गवीति विश्वः । वसतिः स्यात्स्त्रियां वासो यामिन्याञ्च निकेतने इति मेदिनी । अमरोक्तिमाह । प्रादे-शनमिति । रमेः ॥ रमतिर्नायके नाके पुंसि स्यादिति मेदिनी । वृत्तिकारोक्तङ्कोशान्तरमाह । रमतिरित्यादि । नित्त्वमाद्युदात्तार्थ-म् । रन्तिरसि रमतिरसि ॥ सूङः क्रिः ॥ धीमान् सूरिः कृती कृष्टि-र्लब्धवर्णो विचक्षण इत्यमरः । दशपाद्यान्तु सूङोरिन् दीर्घश्चेति पाठः । तत्र रिनो नकारो नानुबन्धः । उत्तरसूत्रे प्रत्ययान्तरारम्भा-त् । अनुबन्धत्वे हि लाघवादिहैव क्तिनुच्येत । तथा सति सूरी सूरि-णौ सूरिण इत्यादि रूपम् । अत एवाभिधानमालायां सूरीति ना-न्तमुदाहृतमित्यवधेयम् । यत्तु दशपादीवृत्तिकारैर्नित्त्वं स्वीकृत्य सू-रिभिः प्रत्युदाहृतम् । तदेतेन प्रत्युक्तम् । स्वरविरुद्धमपि । सदा प-

श्यन्ति सूरयः । विसूरयो दधतो विश्वमायुरित्यादौ सूरिशब्दस्यान्तोदात्तत्वात् । अदिशदि ॥ अद्रयो द्रुमशैलार्का इत्यमरः । भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक इति मेदिनी । वङ्क्रिरिति । वकि कौटिल्ये । तन्द्रिरिति । कृदिकारादिति पक्षे ङीष् । तन्द्री निद्राप्रमीलयोरिति मेदिनी । तन्द्री तन्द्रिश्च तन्द्रायामिति द्विरूपकोशः । विभज्य नक्तन्दिवमस्ततन्द्रिणेति भारविः । राशदिभ्याम् ॥ शत्रिर्नाम्भोधरे जिष्णाविति मेदिनी । शत्रिम इव उपमाङ्कतुमये इति मन्त्रस्य वेदे भाष्ये तु उपमामुपमानभूतं केतुं प्रख्यातं शत्रिम् एतन्नामकं राजर्षिमिति व्याख्यातम् । अदेस्त्रिनिश्च ॥ अत्री भक्षकः । अत्रिः ऋषिविशेषः । उज्ज्वलदत्तस्तु अदेस्त्रिन् इति पठित्वा अत्रिरित्युदाजहार तन्न । त्रिपैव सिद्धे प्रत्ययान्तरवैयर्थ्यात् । गोवर्द्धनस्तु अदेस्त्रिन्निश्चेति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा । अत्री अत्रिणौ अत्रिण इत्याह । तदपि न । आद्युदात्तापत्तेः । न चेष्टापत्तिः । जहीन्यात्रिणं पिपिणम् । दूरे वा ये अन्तिवा के चिदत्रिणः । अग्ने त्वंसित्यात्रिणमित्यादावन्तोदात्तस्य निर्विवादत्वात् । दशपादीवृत्तौ तु अदेस्त्रिन्निश्चेति पठित्वा चकारात्त्रिवित्युक्तम् । तदपि न । त्रिनिचस्त्रित्वस्य व्यर्थत्वात् । इकारेण वकारपरित्राणे सति प्रत्ययस्वरेणैवेष्टसिद्धेः । अत एव वधैर्दुःशंसानिति मन्त्रस्य भाष्ये अदेस्त्रिनिस्येति माधवः । न लुमताङ्गस्येति सूत्रे कैयटोऽप्येवमेवाहेति दिक् । पतत्त्रिरिति । पक्षिवाचकात्पतत्त्रशब्दान्मत्वर्थे इनि तु पतत्त्री पतत्त्रिणावित्यादि । म्रकणिभ्याम् ॥ मरीचिः कृपणे दीप्तावृषिभेदे च दृश्यतइति विश्वः । मरीचिर्मुनिभेदे ना गभस्तावनपुंसकमिति मेदिनी । कणीचिः पुष्पितलताङ्कुञ्जयोः शकटे

---

वैलक्ष्यः । विनयान्वितः । किशोरः । अश्वकुमारः । एकादशमारभ्यापञ्चदश-

ऽस्त्रियामिति च । वज्ञः ॥ वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोरिति विश्वमेदिन्यौ । पुरः । पुरुषः पुरुषे सांख्यगे च पुन्नागपादपे इति विश्वमेदिन्यौ । पृनद्वि ॥ परुषङ्कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवदिति मेदिनी । नहुषो राजविशेषे नागभिद्यपीति हेमचन्द्रः । चित्स्वरेणान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वाद्वा आद्युदात्तो ऽयम् । एतच्च देवा अकृण्वन्नहुषस्य विश्पतिमिति मन्त्रस्य भाष्ये स्पष्टम् । कलुषं त्वाविलैनसोरिति विश्वः । पीयेः ॥ पीयूषं सप्तदिवसावधिक्षीरे तथा ऽमृते इति मेदिनी । पियूष इत्यादिस्त्वमरः । मस्तेः ॥ पिटकः पेटकः पेटा मञ्जूषेत्यमरः । गण्डेश्च ॥ गण्डूषो मुखपूर्त्ताम्भःपुष्करप्रहृतोन्मिते इति मेदिनी । अर्तेररुः ॥ उकारान्तोयं प्रत्ययः । न तु सकारान्त इति स्फोटयति । अररु इत्यादिना । युक्तञ्चैतत् । कं चिघावारसुश्वरमर्त्याम् । अपारहमदेवयजनोजजिइत्यादिमन्त्रेषु तथा दर्शनात् ॥ यत्तु मानः शंसो अररुष इति मन्त्रस्य भाष्ये सान्तोयमिति माधवेनोक्तं तत्प्रौढिवादमात्रन्न तु वास्तवम् । पदस्याद्युदात्तत्वानुपपत्तिप्रसङ्गात् । उक्तप्रयोगस्य क्वसन्तेन रातिना नञ्समासे सौष्ठवात् । गुरुद्वेषो अररुषे दधन्तीत्यत्र स्वयमेव तथा व्याख्यानात् । यो नो अग्ने अररिवांअघायुरित्यादिमन्त्रोत्तरसंवादाच्चेति दिक् । क्लीबे ऽनः शकटो ऽस्त्री स्यादित्यमरः । करटो गजगण्डे स्यात्कुसुमे निस्वजीविनि । एकादशाद्यादिश्राद्धे दुर्दुरूटे ऽपि वायसे इति मेदिनी । कृकदि ॥ करम्बो मिश्रिते बान्तो भान्तस्तु दधिसक्तुष्विति विश्वः । कदम्बन्निकुरम्बे स्यान्नीपसर्षपयोः पुमानिति मेदिनी । कलम्बो शाकभेदे स्यात्कदम्बशरयोः पुमानिति च । कदेः ॥ कदम्बा स्यात्पुमान्पक्षिविशेषे सायके ऽपि नेति मेदिनी । कलि ॥

---

हूकुमार इत्यन्ये ॥ प्रमीला । आलस्यम् । पुन्नागः । केसरः । कर्बुरः श्वेतरक्ष-

कलमः पुंसि लेखन्यां शालौ पाटच्चरे ऽपि चेति मेदिनी। कुपेर्वा॥ कुप क्रोधे। अतः किन्दच्। वकारान्तादेशश्च वा। तन्तुवायः कुविन्दः स्यादित्यमरः। बाहुलकात् अल भूषणादौ। अलिन्दः। यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि इति माघः। प्रज्ञादित्वादपि दीर्घादिरप्ययम्। निषङ्गथिरिति। चजोरिति कुत्वम्। आभुरस्य निषङ्गथिः। रथकूबर इत्यर्थः। सक्तौ॥ नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिरित्यमरः। खर्जिपिञ्जादिभ्यः॥ खर्जमार्जने एवमादिभ्य ऊरः। पिञ्ज हिंसायाम्। एवमादिभ्य ऊलच्। खर्जूरं रूप्यफलयोः। खर्जूरः कीटवृक्षयोरिति मेदिनीहेमचन्द्रौ। कृपू सामर्थ्ये। बाहुलकाल्लत्वाभावः। अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसञ्ज्ञः सिताभ्रो हिमवालुकेत्यमरः। वल्ल संवरणे। वल्लूरम्। उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरन्त्रिलिङ्गकमित्यमरः। एवं शालूरमण्डूरादयः। भेके मण्डूकवर्षाभूशालूरप्लवदर्दुरा इत्यमरः। अथ मण्डूरम्। शिङ्घाणमपि तन्मले इति च। तन्मले। तस्य पूर्वोक्तस्य लोहस्य मले इत्यर्थः। लाङ्गूलं पुच्छशेफसोरिति मेदिनी। कुसूल इति। कुस श्लेषणे। दन्त्यसकारवान्। कुसूलश्च कुसीदश्च मध्यदन्त्यमुदाहृतमिति विश्वः। ताम्बूलादयो ऽप्यत्र। तमु ग्लानौ। ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकमिति मेदिनी। शॄ हिंसायाम्। धातोर्वृद्धिः। दुगागमश्च। शार्दूलो राक्षसान्तरे। व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थित इति मेदिनी विश्वप्रकाशौ। उत्तरस्थित उत्तरपदम्। राजशार्दूल इति यथा। दु गतौ। कुङ् शब्दे। अनयोः कुक् च। दुकूलं सूक्ष्मवस्त्रे स्यात्क्षौमे चेति मेदिनी। कुक्कूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषानले इति विश्वमेदिन्यौ। शिरीषादपि मृद्वङ्गी केयमायतलोचना। अयङ्कुचकु-

---

सोः॥ शेषो लिङ्गम्॥

कूलाग्निककर्कशो मदनानल इति प्रयोगश्च ॥ कुवश्चट् दीर्घश्च ॥ कूचः स्तनः । कुचकूचौ स्तने मताविति विश्वः । कूचीति । टित्त्वान्ङीप् । समीपः ॥ इणः सम्युपपदे चट् स्यात् ॥ दीर्घत्वञ्च धातोः । सिवेः ॥ सूची तु सीवनद्रव्ये आङ्गिकाभिनयान्तरे इति मेदिनी । शमेः । शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिष्विति विश्वमेदिन्यौ । उलादयश्च ॥ गर्भाशयो जरायुः स्यादुल्बञ्च कललो ऽस्त्रियामित्यमरः । शुल्बमिति । शुच शोके । लत्वादि प्राग्वत् । शुल्बन्ताम्रे यज्ञकर्मण्याचारे जलसंनिधाविति मेदिनीहेमचन्द्रौ । वेत्तेर्नुमागमो ह्रस्वत्वञ्च । बिम्बस्तु प्रतिबिम्बे स्यात् मण्डले पुन्नपुंसकम् । बिम्बिकायाः फले क्लीबङ्कृकलासे पुनः पुमानिति मेदिनी । स्थस्तः ॥ स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमे ऽपि चेति विश्वः । स्तम्बो ऽप्रकाण्डद्रुमगुच्छयोरिति मेदिनी । स्याद्गुच्छकस्तु स्तबक इत्यमरः । शाशपि ॥ शादः स्यात्कर्दमे शष्पे इति मेदिनी । अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान् । कुन्दो माघ्ये ऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना इति च । वलिमलि ॥ वलयः कण्ठरोगे ना कङ्कणे पुन्नपुंसकमिति मेदिनी । मलयः पर्वतान्तरे । शैलांशे देशआरामे त्रिवृतायान्तु योषितीति च । आत्मजस्तनयः सूनुः सुतः पुत्र इत्यमरः । वृह्रोः ॥ ह्रियते विषयैः हृदयम् । हटम् । चन्द्रोक्तिमाह संवत्सरेत्यादि । जत्वादयश्च ॥ रुप्रत्ययान्ता निपात्यन्ते । जनी प्रादुर्भावे । नकारस्य तकारः । जत्रु स्कन्धसन्धिः । सन्धी तस्यैव जत्रुणी इत्यमरः । तस्य पूर्वोक्तस्य स्कन्धस्य सन्धी इत्यर्थः । रुशातिभ्याम् ॥ रुरुर्दैत्ये मृगे ऽपि चेति मेदिनी । नवभ्यो यथासंख्यं नव स्युः । जनेरिष्टरन् ॥ इकारोच्चारणमुत्तरार्थम् । जनेरिटा सिद्धत्वात् सूणिरिति । नित्स्वरेणाद्युदात्तोयम् । सृवृषिभ्याङ्किदिति निप्रत्यये त्वन्तोदात्तः । मत्य इति । अन्तोदात्तो ऽयम् ।

चरतन्यञ्चीति सूत्रे तु आद्युदात्तः साधितः। षण्ढ इति। षम ष्टम वैकल्ये। बाहुलकात्सलाभावः। शमो ढ इति सूत्रे तु तालव्यादिः साधितः। सायं सायो भवेत्कोषः कोशः षण्ढस्य शण्ढवदिति द्विरूपकोशः। कैयटस्तु ठस्येक इति सूत्रे शन्ढ इति प्रतीकमुपादाय जनिदाच्यस इत्यनेन ढप्रत्यये शण्ढ इत्याह। नटी नोलौषधौ स्त्री स्यात् शैलूषाशोकयोः पुमानिति मेदिनी। अन्येभ्यो ऽपि दृश्यन्ते॥ इत्वन्नादयो ऽनुवर्त्तन्ते। कुसेः कुस संश्लेषणे। कुसुम्भं हेमनि महारजते ना कमण्डलौ इति मेदिनी। कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोरिति च। कुसीदञ्जीवने वृद्ध्या क्लीवन्त्रिषु कुसीदके इति च। इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः। वृषाकप्यग्नीति सूत्रे ह्रस्व एवेति वृत्तिकारहरदत्तादिप्रयोगोपष्टम्भेन निर्णीतम्। पारलौकिककुसीदकमासीदिति श्रीहर्षः। उक्तस्य गाण्ड्यजगादिसूत्रे ह्रस्वदीर्घयोस्तन्त्रेण निर्देशो वामनेनेति दिक्। उज्ज्वलदत्तमतेनाह। वृञो लुक् चेति। दशपाद्यान्तु सानसिधर्णसीति पठित्वा धृञो नुक् चधर्णसिर्लोकपाल इति व्याख्यातम्। युक्तञ्चैतत्। धर्णसिम्भूरिधायसमित्यादिदर्शनात्। तण्डुला इति। उलच्प्रत्ययः तुमागमः। त्रेधा तण्डुलान्विभजेत्॥ चित्स्वरः तण्डुलस्याद्विगण्डे च धान्यादिनिकरे पुमानिति मेदिनी। अङ्कुश इति। अयमपि चित्स्वरेणान्तोदात्तः। तथा च मन्त्रः। दीर्घं ह्यङ्कुशं यथेति। चषेराल इति। प्रत्ययस्वरेणाद्युदात्तः। उज्ज्वलदत्तादयस्तु आलजिति चितमाहुः। तन्न। चषालं ये अश्वयूपाय तक्षति चषालवन्तस्तरवः पृथिव्याम्। इत्यादौ चित्स्वरादर्शनात्। अमरोक्तिमाह चषाल इति। इल्वल इति। इल स्वप्नप्रेरणयोः। वलक् गुणाभावः। इल्वला तारकाभेदे ना भेदे दैत्यमत्स्य-

---

अप्रकाण्डद्रुमो मूलहीनवृक्षः। कुसीदको वृद्धिजीवी।

योरिति मेदिनी। इल्वलाः तच्छिरोदेशे तारका निवसन्ति या इत्यमरः। तत्रेल्वला इति पाठान्तरम्। तच्च इवि प्रीणने ऽस्मात् वुन् शिल्पिसंज्ञयोरिति क्वुनि बोध्यम्। पिबतेर्वलच्। लुमागमः। ह्रस्वत्वञ्च। पिबन्त्यस्मिन्पल्वलम्। वेशन्तः पल्वलञ्चाल्पसर इत्यमरः। इकार इति। रपरत्वाभावो ण्यप्रत्ययस्येति बोध्यम्। धिष्ण्यं स्थाने गृहे भे ऽग्नावित्यमरः। धिष्ण्यं स्थानाग्निसद्मसु। ऋक्षे शक्तौ चेति मेदिनी। धिष्ण्यं स्थाने च ऋक्षे चा ऽग्नौ धिष्ण्येना ऽऽलये इति धरणिः। शल्लेरिति। शल्ये तु न स्त्रियां शङ्कौ क्लीबं स्वेडेषुतोमरे। मदनद्रुश्वाविधोर्नेति मेदिनी। मूशक्ति॥ मूङ् बन्धने। शक्ऌ शक्तौ। अविशब्दे। मूलम् शिफाधयोः। मूलम् वित्तेन्तिके इति मेदिनी। शक्तः प्रियंवद इति विशेष्यनिघ्ने ऽमरः। अम्लो रसविशेषे स्यादम्लीमत्तारिकौषधाविति मेदिनी। माच्छा॥ माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरे ऽसुरे इति मेदिनी। छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियामिति विश्वमेदिन्यौ। वृक्षादीनां फलं सस्यमित्यमरः। सव्यं वामे ना प्रतीपे चेति मेदिनी। जनेर्यक्॥ जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम्। जन्या मातृवयस्यायाञ्जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोस्च नवोढाज्ञातिभृत्ययोः। वरस्निग्धे इति मेदिनी। अघ्न्यादयश्च। कीते र्डुक्। कुडयमित्युज्ज्वलदत्तादयः। यतो ऽनाव इत्याद्युदात्तः। ण्यक्प्रत्ययान्तोदात्त इत्यन्ये इति निवाते वातत्राणइति सूत्रेवृत्तिः। गुणप्रतिषेधार्थात्ककारात् डकारस्येत्वं नेति तत्रैव हरदत्तः। एवं स्थिते यगन्ता इति प्रायोवादः। अडागम इति। नञ्पूर्वाद्धन्तेर्यगिति वा बोध्यम्। अघ्न्य इति। यत्तु अघ्न्यस्य मूर्द्धंनीति मन्त्रे वेदभाष्यकारैरुक्तम्। हन्तुमशक्यो ऽघ्न्यः पर्वत इति तत् प्रकृतसूत्रमभिप्रेत्यैव। यत्तु अहननमशस्तमर्हतीत्यर्थे छन्दसि चेति य इति तत्रैवोक्तन्तदुपा-

यान्तरपरतया बोध्यम् । माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यादित्यमरः । संपूर्वाद्ध्यायतेर्यक् । आतो लोपः । सन्ध्या पितृप्रसूनद्योस्त्रिताम्ऱ्यादयोरपि । प्रज्ञायां च सन्धाने सन्ध्या च कुसुमान्तरइति विश्वः । सन्ध्या पितृप्रसून्द्यन्तरयोर्युगसन्धिष्विति मेदिनी । सन्ध्या कुमारिका नार्योरोषधीराग्निभेदयोरिति विश्वमेदिन्यौ । वन्ध्येति । बन्ध बन्धने । वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजःस्त्रियामिति मेदिनी । स्नामदि ॥ अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गक इति मेदिनी । पर्वक्लीवं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि इति च । अङ्गुलिरिति । एतच्च आरोहतन्दशतशक्करीममेत्यादिमन्त्रव्याख्यायाम स्पष्टम् । शक्करी छन्दसो भेदे नदीमेखलयोरपीति मेदिनी । सर्वधातुभ्य इन् । यतिरिति । यती प्रयत्ने । यतिः स्त्री पाठविच्छेदे विकारयतिनोः पुमानिति मेदिनी । कोटिः स्त्री धनुषो ऽग्रे ऽस्त्रौ संख्याभेदप्रकर्षयोः । बोधिः पुंसि समाधेस्त्र भेदे पिप्पलपादपे । नन्दिद्यूताङ्ग आनन्दे स्त्री नन्दिकेश्वरे पुमान् । कलिः स्त्री कलिकायां ना शूराजिकलहे युगे इति च । इह इन्नित्येव सूत्रम् । अधिकन्तु प्रक्षिप्तं व्यर्थञ्च । एवं सर्वधातुभ्यष्ट्रन्नित्यादावपि । अत एव दशपाद्यामिन्नित्येव पठितमिति दिक् । हपिषि ॥ हरतेः कीर्त्तयतेश्चाच इरिति प्राप्ते इतरेषान्तु इगुपधादिति किक्त्वे प्राप्ते वचनम् । हरिस्त्वन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरे ऽजेंऽशौ शक्रे लोकान्तरे पुमान् । वाच्यवल्लिङ्ग हरितोरिति मेदिनी । वर्त्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । मात्रानुलेपनीदीपदशादीपेषु योषिति । वेदिः स्यात्पण्डिते पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले इति च । कीर्त्तिः प्रसादयशसोर्विकारे कर्दमे ऽपि चेति विश्वः । सा रसवत्ता विगता नवका विलसन्ति चरति नो कङ्कः । सरसीव कीर्त्तिशेषं गतवति भुवि

विक्रमादित्ये इति कविप्रयोगः । इगुपधात्कित् ॥ इनः कित्त्वं विधीयते । के चित्तु किरिति पठित्वा इनो ऽपवादः किप्रत्यय इत्याहुः । तन्न । प्रत्ययस्वरेण प्रातिपदिकानामन्तोदात्ततापत्तेः । न चेष्टापत्तिः । अग्निः पूर्वेभिर्ऋषिभिः । ऋषिर्विप्रः काव्येन । शुचिर्विप्रः शुचिः कविः । इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात् । कथं तर्हि अश्वैर्मा दिव्य कृषिमित्कृषस्वेत्यादौ कृषिशब्दस्यान्तोदात्ततेति चेत् । इक् कृष्यादिभ्य इतीक्प्रत्यये सतीति गृहाण । ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम् । शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषधे शुद्धमन्त्रिणि इति मेदिनी ॥ यत्तु माधवेन अग्निः पूर्वेभिरित्यृग्व्याख्यावसरे ऋषिशब्दस्येत्प्रत्ययान्तत्वमङ्गीकृत्य ऋष्यन्धकेति निपातनाल्लघूपधगुणाभाव इत्युक्तन्तत्प्रकृतसूत्रविस्मरणमूलकत्वादुपेक्ष्यम् । भ्रमेः ॥ भृमिश्चिद्यथावसवो ऽजुषन्तेति मन्त्रे भृमिं भ्रमणशीलन्दरिद्रञ्जनमिति वेदभाष्यम् । क्रमितमि । क्रमु पादविक्षेपे । कृमिर्ना क्रिमिवत् कीटे लाक्षायाङ्कृमिलं खरे इति विश्वमेदिन्यौ । पारतं पारदं वाश्वी वासरः क्रिमिवत्कृमिः इति द्विरूपकोशः । तिमिरिति । तमु काङ्क्षायाम् । अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः । तिमिङ्गिलगिलो ऽप्यस्ति तद्गिलो प्यस्ति राघव इति बालरामायणे सप्तमान्ते रामवाक्यम् । शितिः कृष्णे ऽसिते भूर्जे इति विश्वः । शितिर्भूर्जे ना रसितासितयोस्त्रिष्विति मेदिनी । मनेः ॥ मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने इति मेदिनी । वर्णेः विलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान्स्त्री तु जरयाश्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेपि चेति मेदिनी । वसिवपि ॥ एभ्यो दशभ्य इञ्स्यात् । वासिरिति । दन्त्यसः । सूत्रे अष्टमस्तु तालव्यशः । द्वयमपि छेदनसाधने प्रयुज्यते । वास्यादीनामिव करणानाङ्कर्तृव्यापार्यत्वनियमादिति वैशेषिकाः । वास्यर्थमित्यत्र स्कोरिति सलोपः प्राप्नोतीति भाष्यम् । वाशी-

मन्यश्चष्टिमन्तो मनीषिणः। इति मन्त्रः। राजिः स्त्री पङ्क्तिरेखयोरिति मेदिनी। इह वादीति ण्यन्तो निर्दिष्टः। वाऽन्तकादण्यन्तादपि। तथा च भूवादिसूत्रे वदन्तीति वादयो वा बलाका इति न्यासकारादयः। वारिर्वागंजबन्धयोः स्त्री क्लीबे ऽम्बुनि बालके। वारी स्याद्गजबन्धन्याङ्कलश्यामपि योषितीति च। वारिः स्मृता सरस्वत्यां वारिद्ध्रीवेरनीरयोः। वारी घटीभबन्धन्योरिति विश्वः। दारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियामिति मेदिनी। खटतेः खाटिः। खाटिः स्त्वसदृग्रहे ऽपि स्यात् किणे शवरथेस्त्रियामिति मेदिनी। नञो भश्च॥ स्त्रियामिति लिङ्गानुशासने। स्त्रियामित्यधिकारे नाभिरक्षत्रिय इति सूचितत्वादिति भावः। केचिदिति। तथा च मेदिनी। नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्॥ स्त्रियाङ्कस्तूरिकामदे इति। भारविश्च प्रायुङ्क्त। समुल्लसत्पङ्कजकोशकोमलैरुपाकृतश्रीन्युपनीविनाभिभिरिति॥ शः॥ शारिर्ना ऽक्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरे ऽपि चेति मेदिनी। कपिलकादित्वाल्लत्वम्। शालिस्तु कलमादौ च गन्धमार्जारके पुमानिति मेदिनी। कृञः॥ कारिः स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनीति मेदिनी। जनिघसिभ्यामिण्॥ प्रत्ययान्तरकरणं स्वरार्थम्। यच्च घासिञ्जघास। आजिन्न जग्मुः सुकृतीतमर्ण इत्यादौ घस्याजिपाणिप्रभृतीनामन्तोदात्तत्वात्। जनिरिति स्त्रीलिङ्गम्। कृदिकारादिति पक्षे ङीष्। जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदीति मेदिनी। आजिः समभावनौ युद्धे इति विश्वः। शराररिराजिराटिश्चेत्यमरः। पादे च॥ पादे उपपदे अज्यतिभ्यामिण्। पादस्य पदाज्यातिगोपहतेष्विति पदादेशः। अत एव निर्दे-

---

वङ्गसेनतरुः। अगस्तिवृक्षः।

श्राद्वाक्षकाद्जेर्वीभावो न। पदातिपत्तिपदगपादातिकपदाजयः। पद्गश्च पदिकश्चेत्यमरः। अम्र॥ राश्मिमेघादिपुञ्जयोरिति मेदिनी। प्रा॥ पुंस्येवान्धुः प्रहिः ऽकूप उदपानन्तु पुंसि वेत्यमरः।नी॥ स्त्रीकटी-वस्त्रबन्धेऽपि नीवीपरिपणे ऽपि चेत्यमरः। परिपणं मूलधनम्। स-माने॥ इण् स्यादिति। यत्तूज्ज्वलदत्तेनोक्तम्। इञ् स्यात्सचोदात्त इति। तन्न। इणः सन्निधानात्। इञो विच्छिन्नत्वात्। यदपि तेनैव नीव्य इति पूर्वसूत्रे उक्तम्। इनेवात्रानुवर्त्तते न त्विण्। उत्तरचोदा-त्तवचनात् ज्ञापकादिति तदपि न। स चोदात्त इति हि नायं प्रत्य-यं निर्द्देष्टुन्तच्छब्दः किं तु समानशब्दस्य स्थाने विधेयं निर्द्देष्टुं शब्द-स्वरूपपरः। तथा च कथञ्ज्ञापकता। यदपि स इञिति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रङ्कृतम्। तदपि न। विधाय-काभावात्। यदपि स्वरमञ्जरीकारादिभिः समानस्य छन्दसीति सू-त्रेणेत्युक्तन्तदपि न। लोके सखिशब्दस्यासाधुतापत्तेः। अपि च। सखा सखायमब्रवीत्। सखा सख्ये अयचत्। सखायस्त्वा ववृमहे। सखा सखिभ्य ईड्यः। इत्यादि मन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम्। एवञ्च इञ् उदात्त इति व्याख्यानं वेदवार्त्तानभिज्ञत्वप्रयुक्तमेव। तथा च ज्ञापकोपन्यासोऽपि गर्भ-स्रावेणैव गतः। अपि च। त्वत्पक्षे सख्य इणित्येव सूत्र्यताङ्किं स चेत्या-दिना शब्दतोऽर्थतश्च गौरवप्रसङ्गात्। अपि च। इणित्यपि मास्तु। नीव्य इत्यादित्रिसूत्री जनिघसिभ्यामित्यतः प्रागेव उपेयताम्। एवं हि महदेव लाघवम्। स चोदात्त इति। मण्डूकप्लुतौ ज्ञापकस्याना-श्रयणात्। ननु वातेर्डिच्चेति डित्त्वोपजीवनार्थमित्थं पाठ इति चेत्। तर्ह्यौणप्रकरणानन्तरमेव इञ्प्रकरणं सर्वत्रास्तु। नीव्य इति सूत्रे इञ् पठ्यताम्। आङि श्रीत्यस्यानन्तरं वसिवपीत्यादि पठ्यताम्। इञ्चा-नुवर्त्तिष्यते न तु डित्त्वम्। वकाराद्यनेकधातुपाठवैयर्थ्यापत्तेरिति दि-

क्॥ तस्मादस्य उक्तैव व्याख्या सुधीभिरादर्त्तव्या। दशपादीवृत्तिग्रन्थाः खयाधातौ माधवग्रन्थः यस्ते सखिभ्य आवरम्, इत्यादीन् मन्त्रान् व्याचक्षाणानां वेदभाष्यकृतामनेकप्रघट्टकस्थिता ग्रन्थाश्चैतदानुकूल्या इत्यवधेयम्। अश्रिः कोणः। अमरोक्तिमाद्य स्त्रिय इति। एवञ्च सुप्रातसुश्वेति सूत्रे चतुरश्रेति तालव्यपाठ एव। केषाञ्चिद्दन्त्यपाठस्तु एतत्सूत्रानालोचनमूलक इत्यवधेयम्। न चैतावता चतुरस्रमिति दन्त्यप्रयोगो ऽशुद्ध इति भ्रमितव्यम्। अकारान्तेन दन्त्यगर्भेणास्रशब्देन विग्रहे तत्सौष्ठवात्। न च तादृशशब्देपि विप्रतिपत्तव्यम्। अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते इति मेदिनीकोशात्। अचिर्वृत्रासुरे सर्पे इति मेदिनी। अच इः॥ कुङ् शब्दे कविर्वाल्मीकिशुक्रयोः। सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषितीति मेदिनी। खनिकषि॥ खनिः स्त्रियामाकरः स्यादित्यमरः। ण्यन्तादच इरितीप्रत्यये खानिरपि। खनिरेव गन्ता खानिरिति द्विरूपकोशः। ग्रन्थिस्तु ग्रन्थिपवर्णोन्धरुकुम्भेदपवर्णोरिति मेदिनी। वृतेश्छन्दसि॥ बाहुलकाल्लोके ऽपि। वर्त्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपनीदीपदशादीपेषु योषितीति मेदिनी। कृगॄ॥ यत्तु नपदान्तेति सूत्रे न्यासकारहरदत्ताभ्याङ्किर्योगियोरित्यत्र कृगोरिच्चेत्युपन्यस्तम्। तत्क चिदुणादिवृत्तिषु अन्वेषणीयम्। कुर्वोः गुर्वोः। कृगोरच्चेति वा पाठः शोधनीयः। वराहः सूकरो गृष्टिः कोलः पोत्री किरिः किटिरित्यमरः। इगुपधज्ञाप्रीति कप्रत्यये किरोपि स्यात्किरौ प्रोक्तः पथः पथि इति द्विरूपकोशः। गिरिर्ना नेत्ररुग्भिदि। अद्रौ गिरिजके योषिद्गीर्णे पूज्ये पुनस्त्रिष्विति मेदिनी।

---

स चोदात्त इति। इणो मण्डूकप्लुतौ स चोदात्त इति ज्ञापकस्यानाश्रयणादित्यन्वयः। वकाराद्यनेकेति। वसिषपीति। सूत्रे इति शेषः। धातूनामनेकार्थत्वादर्थभेदार्थं पाठ इत्यपि न युक्तम्। वादिवाद्योः समानार्थकत्वाच्चेति भावः।

कुटिरिति। ङीपि तु कुटी कुटः कोटे पुमानस्त्री पटे स्त्रीपुंसयोर्गृहे। कुटी स्यात्कुम्भदास्याञ्च सुरायाञ्चित्रगुच्छके इति मेदिनी। कपिर्ना सिह्लके शाखामृगे च मधुसूदने इति च। सर्वधातुभ्यः॥ कर्म व्याप्ये क्रियायाञ्च पुन्नपुंसकयोर्मतमिति रुद्रः। वर्म कृतं च फलके इति मेदिनी। बृहेः॥ ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदो विप्रे इति मेदिनी। अश्मेति। भाषायामपीष्यते। छन्दसीति तु शक्तिनैवान्वेति। हृभृ॥ शरिमेति। शॄ हिंसायाम्। एतच्चोज्ज्वलदत्तीयोक्तम्। दशपाद्यान्तु शृणातिर्नेष्यते। तत्स्थाने सृः प्रत्ययश्च दीर्घादिनिच्च स्तृगसृभ्य ईमन्निति छन्दोग्रहणञ्चानुवर्त्तितम्॥ युक्तञ्चैतत्। पिपृतान्नो भरीमभिः। वातस्य सर्गो अभवत्सरीमणि। स्तीर्णं बर्हिः सुष्टरीम। जुषाणा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिः। इत्यादिमन्त्राणान्तद्भाष्यस्य चानुगुणत्वादुक्तप्रयोगाणां भाषायामदर्शनेन छन्दोनुवृत्तेर्न्याय्यत्वाच्च। अत एव वेञः सर्वत्रेति सूत्रे सर्वत्रग्रहणङ्करिष्यति। नामन्सीमन्। सर्वेति॥ मनिनन्ता इति शेषः। नामेति। म्ना अभ्यासे मलोपः। सीमेति। सीमसीमे स्त्रियामुभे इत्यमरः। पाप्मेति पिबतेः पुमागमः। बाहुलकादन्यतोपि। यज पूजायाम्। यक्ष्मा चेत्यमरः। षू प्रेरणे। सोमा चन्द्रः। डुधाञ्। धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोरिति मेदिनी। सुशर्मेति। कृदुत्तरपदस्वरेणान्तोदात्तं पदम्। मनिनि तु मध्योदात्तं स्यात्। सुष्ठु शृणातीति विग्रहः। स्यति दुःखमिति दुरध्येयत्वात्साम। साम क्लीबमुपायस्य भेदे वेदान्तरे ऽपि चेति मेदिनी। आत्मा पुंसि स्वभावे ऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि इति च। हनि मक्षिका भम्भराली स्यादि-

---

कृग्रोरिच्चेति। के चित्त्वनयोरित् ऋत इद्धातोरित्यनेन। चात्प्रत्ययः प्रकृतसूत्रेणेति प्रक्रियास्मरणपरतया हरदत्तग्रन्थं योजयन्ति। तदक्षरस्वरसविरुद्धम्।

ति हारावली। कबरः। पाठकः। बवयोरैक्यात्कवरी केशविन्यासः। जानपदेति ङीष्। अन्यत्र कबरा। गीर उडच्॥ इदं सूत्रद्वे चिन्न पठन्ति। अत एव गरुताडयतइति विगृह्य डप्रत्यये पृषोदरादित्वाल्लोपे गरुडशब्दं व्युत्पादयन्ति। इन्देः कमिः॥ उज्ज्वलदत्तस्तु कमिन्निति नित्तं पपाठ तन्न। इदन्तो पात्रमिन्द्रियाणाम्। इदन्ते सौम्यं मधु इत्यादौ नित्स्वराभावात्। दशपाद्यान्तु इणो इमगिति सूचितम्। इदमिति। सर्वनामशब्दो यः प्रत्यक्षपरामर्शी। कायतेर्डिमिः॥ प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे इकार उच्चारणार्थः। दशपाद्यान्तु डिमित्येव सूचितम्। किमिति सर्वनाम। दशपाद्यान्तु ष्ट्रन्नित्येव सूत्रम्। अत एवाधिकं प्रक्षिप्तमित्याहुः। अस्तु क्षेपणे। अस्त्रं प्रहरणे चापे करवाले नपुंसकमिति मेदिनी। पत्र॥ पत्रन्तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोरिति मेदिनी। पिबतेः पात्रम् षित्त्वात् ङीष्। पात्र्यमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि। तीरद्वयान्तरे योग्ये इति मेदिनी। भस्जि॥ क्लीबे ऽम्बरीषं भ्राष्ट्रो ना इत्यमरः। वेष्टं विष्टपम्। उष्ट्रः क्रमेलकः। उष्ट्रे क्रमेलकमयमहाङ्गा इत्यमरः। षिविमुच्योः॥ सूत्रिमूत्रिभ्यांचुरादिण्यन्ताभ्यामेरचा सिद्धे स्वरार्थमिदं सूत्रम्। न च घञा तत्सिद्धिः। अचा घञो बाधात्। सूत्रन्तु सूचनाग्रन्थेति सूत्रन्तन्तुव्यवस्थयोरिति विश्वः। अमि चित्॥ आन्त्रमिति। अनुनासिकस्य क्विझलोरिति दीर्घः। चित्राश्वपर्णीगोतुम्बीसुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययोः क्लीबद्वर्बुराद्भुतयोरपि। तद्युक्तयोस्त्वन्यलिङ्गमिति मेदिनी। मित्रं सुहृदि न द्वयोः सूर्ये पुंसीति च। शस्त्रं लोहास्त्रयोः क्लीबं क्षुरिकायान्तु योषितीति च। प्रत्ययस्वरेणैते ऽन्तोदात्ताः। शून आन्त्राणि पेचे।

---

गिरिजकं शिलाजतु। सिल्हकम्। लोहबाण इति प्रसिद्धम्। विष्टपम्। जगत्॥

चित्रन्देवानाम्। मित्रं त्रयम्। ग्रस्तस्य शत्रुमसि इत्यादि। पुनातीति पुत्रः। पुन्नरकन्तस्मात् त्रायते इति तु व्युत्पत्त्यन्तरम्। स्त्रीति। डित्त्वाट्टिलोपः। वलि लोपः। टित्त्वात् ङीप्। स्त्री योषिदबला योषा नारी सीमन्तिनी वधूरित्यमरः। गुधृ॥ गुङ् शब्दे। गोत्रा भूगव्ययो-र्गोत्रः शैले गोत्रकुलाख्ययोः। संभावनीयबोध्ये च काननक्षेत्रवर्त्म-सु इति मेदिनी। सत्रमाच्छादने यज्ञे सदा दाने च कैतवे इति वि-श्वः। सत्रं यज्ञसदादानाच्छादनारण्यकैतवे इति मेदिनी। हुयामा॥ होत्राशब्दः क्वचित्स्वपि स्त्रीलिङ्ग इति होत्राभ्यश्छ इति सूत्रे हरद-त्तादयः। श्रूयते च। काराद्धोत्राश्विनावामिति। होत्रं हविः। यात्रा तु यातने ऽपि स्यात् गमनोत्सवयोः स्त्रियाम्। मात्रा कर्णविभूषा-यां वित्ते ताने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कात्स्न्यें ऽवधारणे इति मेदिनी। कर्णशब्दश्चैः श्रोत्रं श्रुतिः स्त्री श्रवणं श्रव इत्यमरः। भस्त्रा चर्मप्रसेविकेति च। गमेः॥ गात्रमङ्गे कलेवरे। स्तम्बेरमाग्रज-ङ्घादिविभागे ऽपि समीरितमिति विश्वः। चारित्रमिति। इत्रप्रत्यये चरित्रमित्युक्तम्। न च तत एव प्रज्ञाद्यणा सिद्धे किमनेनेति वाच्यम्। स्वरे विशेषात्। धरित्रीति। गौरादित्वात् ङीष्। श्रमेः॥ इत्र एवा-नुवर्त्तते नोत्रः। श्राः समिणा। समयानिकषाशब्दौ समीपवाचकौ। स्वाङ्गत्वात् दुषेः दोषा। दिवेर्गुणाभावश्च। दिवा। स्वदेर्धश्च। स्व-धेत्यादि। अमरोक्तमाह। चिक्कणमिति। सूचेः॥ सूक्ष्ममिति। णि-लोपे क्ते कुत्वादि। सूक्ष्मं स्यात्कपटके ऽध्यात्मे पुंस्यणौ त्रिषु चा-ल्पके इति मेदिनी। पातेः॥ डित्त्वाट्टिलोपः। उकारनकारयोस्तु फलं पुंसोसुङिति सूत्रे ऽवोचाम। यत्तूज्ज्वलदत्तेनोक्तम्। उकार उच्चार-णार्थ इति। तदाकरविरुद्धत्वाद्धेयम्। पुंसो ऽसुङिति सूत्रे न्यासरचि-ताभ्यां पुनातेर्मक् सुन् ह्रस्वश्चेति पठितम्। पुञो डुमसुन्नित्यन्ये। भाष्ये तु सूतेः पुम्प्रसवे पुमानित्युक्तम्। उपेयप्रतिपत्त्यर्था उपाया

अव्यवस्थिता इति तु तत्त्वम्। रुचिभुजि॥ भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः। स्त्रियान्दासीगणिकयोरिति मेदिनी। वसेस्तिः॥ वस्तिर्द्वयोर्निरूहे नाभ्यधोभूमिदृशासु चेति मेदिनी। अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमानिति च। शावसेः॥ अस भुवि। बहुलवचनान्न भूभावः। वौ तसेः॥ अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुल इत्यमरः। स्त्रीपुंसयोर्वितस्तिः स्यादित्यमरमाला। दृणातेः॥ दृतिश्चर्मपुटे मत्स्ये ना इति मेदिनी। कृतॄकृपिकपिदाभ्य इति पठित्वा कृपीट इति चतुर्थमुदाहृतम्। कृपो रो ल इत्यत्र न्यासे तु कृपिभ्यामिति पठ्यते। अतस्तरनिरत्र प्रक्षिप्त इति कश्चित्। तरतेश्चेति पृथक् पठित्वा तिरीटः कूलवृक्ष इति कश्चिद् व्याख्यत्। रुचिवचि॥ उचितन्तु भवे न्यस्ते मिते जाते समञ्जसे इति मेदिनी॥ कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे इति मेदिनी॥ कुश्मलं छादनं विकसितमित्यन्ये। सर्वधातुभ्योऽसुन्॥ दशपाद्यादिष्वसुन् इत्येव सूत्रम्। सर इति। अयं स्त्रियामपि। गौरादित्वान्ङीष्। सरसी तु महासर इति शब्दार्णवः। महान्ति सरांसि सरस्य इति भाष्यम्। पय इति। पीङ् पाने। पयः स्यात् क्षीरनीरयोरिति मेदिनी। वर्च दीप्तौ। वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि। पुंसि चन्द्रस्य तनये इति मेदिनी। णभ हिंसायाम्। भौवादिकः क्रैयादिकश्च। तप सन्तापे। षह मर्षणे। मह पूजायाम्। तमु ग्लानौ। रञ्ज रागे। एभ्यः षड्भ्यः असुनि सान्तम्। अच्कयोरदन्तमपि। नभन्तु नभसा सार्द्धन्तपन्तु तपसा सह। सहश्च सहसा सार्द्धं महश्च महसा सह। तमेन च तमः प्रोक्तं रजेनापि रजः सममिति द्विरूपकोशः। तपो लोकान्तरेऽपि

———

गव्यम्। गोसङ्घः। हस्तसूत्रकम्। विवाहादौ हस्ते बध्यमानसूत्रम्॥ सैंहिकेयो राहुः॥

च। चान्द्रायणादौ। धर्मे च पुमान् शिशिरमाघयोः। सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोरिति च मेदिनी॥ महः उत्सवतेजसोरिति च। तमः क्लीबङ्गुणे शोके सैंहिकेयान्धकारयोरिति रभसः। तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे इति मेदिनी। नभोरजसी तु व्याख्यास्येते। रुदिर्। रोदस्च रोदसी चापि दिवि भूमौ पृथक् पृथक्। सह प्रयोगे ऽप्यनयो रोदस्यावपि रोदसी इति विश्वः। वी गत्यादिषु। वयः पक्षिणि बाल्यादौ यौवने च नपुंसकमिति मेदिनी। अन प्राणने। अनो भक्तान्तस्थानञ्च। अनो ऽश्मायःसरसां जातिसञ्ज्ञयोरिति टच्। पाकस्थानं महानसमित्यमरः। रेपोवद्यमिति। अरे पश्यत चेति मन्त्रे निरपद्ययेति भाष्यम्। ओजो बले। ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपीति मेदिनी। अयतेः॥ उत्तमाङ्गं शिरः शीर्षमित्यमरः। शृणातेर्घञर्थे कप्रत्यये अदन्तो ऽपि शिरोवाची शिरो ऽदन्तो रजोवाची रजश्चेति कोशान्तरम्। पिण्डन्दद्याद्गयाशिरे इति वायवीये। कुण्डलोद्घृष्टगण्डानाङ्कुमाराणान्तरस्विनाम्। निचकर्त्त शिरान् द्रौणिर्नालेभ्य इव पङ्कजानिति महाभारतम्। अर्त्तेः॥ उरो वत्सं च वक्षश्चेत्यमरः। रिचेः॥ इह दशपादीवृत्तौ तु नुट् नानुवर्त्तितः। रिक्रः॥ रक्मी इत्युदाहृतञ्च। तन्न। उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात्। मण्डूकप्लुतौ मानाभावात्। लक्ष्यविसंवादाच्च। उज्ज्वलदत्तेन तु रिचेधने चित्किञ्चेति पठित्वा नुटमत्रानुवर्त्य किच्चाद्गुणाभावे नुटश्चुत्वेन ञकारे रिञ्चमिति साधितम्। तदपि न। उक्तोदाहरणस्य लोकवेदयोरप्रसिद्धत्वात्। निरित्यकारेकणे अमर्त्य। परिकल्लोद्धरणस्य रेक्णः। रेक्णः स्वत्यभिपातममेति इत्यादिमन्त्रेषु रेक्ण इति शब्दस्य प्रसिद्धत्वात्। वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथा पाठात्। वेदभाष्यादिषु प्रकृतसूत्रेण तस्य साधितत्वाच्चेति दिक्॥ यवातेः। वतोदधिष्वपक्तास्तु मेदधिष्वतस्रतः।

इत्यादिमन्त्रेषु वनःशब्दः प्रसिद्धः। एतेन चणो ऽन्नमित्युदाहृत्य बाहुलकात्सत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुगाः प्रसादकारादयश्च परास्ताः। वर्णो रूपमिति। घ्नञ्छिश्नदेवा अभिवर्पसा भूरित्यादिमन्त्रेषु प्रसिद्धमिदम्। शेफः स्याद्वृषणं पेलमिति सुभूतिचन्द्रः। अकारान्तो ऽप्ययमिति शेपपुच्छलाङ्गूलेषु शुन इत्यत्रावोचाम। शेपः शेपौ च शेफश्च शेफं प्रोक्तञ्च शेफसेति द्विरूपकोशः। स्त्रीभ्यां स्रोतोम्बुवेगेन्द्रिययोरिति विश्वः। रेतः शुक्रे पारदे चेति मेदिनी। पातेर्जुट्॥ चवर्गतृतीयादिः। उज्ज्वलदत्तस्तु युट् चेत्यन्तस्थादिं पपाठ। तन्न। विपाजसा पृथुना। पृथुपाजा अमर्त्यः। इत्यादिमन्त्रतद्भाष्यविरोधात्। अदेः॥ भिस्सा स्त्री भक्तमन्धो ऽन्नमित्यमरः। द्विजातिशेषेण यदेतदन्धसेति भारविः। समन्धसा ममदः पृष्ठ्येनेति श्रुतिः। स्कन्देश्च॥ असुन् धस्यान्तादेशः। आपः कर्माख्यायाम्। असुन्। ह्रस्वश्च धातोः। प्रत्ययस्य नुडागमस्तु वा। अप्नस्वतीमश्विना। अपांसि यस्मिन्नधिसन्दधुः। बाहुलकादित्युपलक्षणम्। ह्रस्वनुटौ वा स्त इति व्याख्यानादित्यपि बोध्यम्। तथा च ब्रुवते कतमे ऽपि नपुंसकमाप इति कोशमुदाहृत्य सर्वमापोमयञ्जगदिति प्रयोगो दुर्घटवृत्तौ समर्थितः। रूपे॥ आप्नोतेरसुन् ह्रस्वत्वञ्च धातोः प्रत्ययस्य जट् चेत्यर्थः। अज इति। झलाञ्जश् झशि। नहेः॥ दिवि गगने॥ नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतमिति विश्वः। नभः क्लीबं व्योम्नि पुमान्। घने श्रावणवर्षासु बिसतन्तौ पतद्ग्रहे इति मेदिनी। नभन्तु नभसा सार्द्धमिति द्विरूपकोशादकारान्तोपि। विश्वोक्तिमाह। आग इति। अमेः॥ अमन्ति गच्छन्त्यधो ऽनेनेत्यंहः दुरितम्। रंहो वेगः। अघिरघिभ्यामसुना सिद्धे ऽघिरघिभ्यामसनि अङ्घो रङ्घः इति मा भूदिति सूत्रद्वयमिति गोव-

ह्वन: । तथा च स्यान्मञ्जोत्वमचतुर्थमंहसो रंहसस्तथेति द्विरू-पकोशः। एवञ्च दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमङ्घोविघातमिति। रङ्घः सङ्घः सुराणाञ्जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नो ऽन्वहमहिमरुचेः सो ऽवतात्स्यन्दनो व इति घकारपाठो ऽनुप्राससरसिकानां प्रामादिक इति वदन्ति । देशे ह च॥ रहस्तत्त्वे रते गुह्ये इति मेदिनी। अञ्च्यञ्जि॥ अङ्कः। अङ्कसी। अङ्कांसि। अङ्गः। अङ्गसी। अङ्गांसि। योगः। योगसी। योगांसि। उच समवाये। अस्मादसुनि बाहुलकात्कुत्वं न्यङ्क्वादित्वाद्वा। ओक आश्रयमात्रे ऽपि मन्दिरेपि नपुंसकमिति मेदिनी। भूरञ्जिभ्याम्॥ भुवः अन्तरिक्षम्। षष्ठ्यन्तप्रतिरूपकमव्ययमिदम्। रजो रेणुः। रजः क्लीबङ्गुणान्तरे। आर्त्तवे च परागे च रेणुमात्रे ऽपि दृश्यते इति मेदिनी। घञर्थे कप्रत्यये तु अकारान्तो ऽप्ययम्। रजो ऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिष्वित्यजयकोशः। विरजा नदीम्। विरजान्दीक्षामिति। चन्देः। छन्दः॥ छन्दः पद्यप्रवे[...] ऽपि स्वैराचाराभिलाषयोरिति मेदिनी। अकारान्तोपि। अभिप्रायवशौ छन्दावित्यमरद्विरूपकोशौ। पक्षिवचिभ्याम्॥ पक्षः। पक्षसी। पक्षांसि। अनीकाधिकरणे पूर्वोत्तरे द्वे पक्षसी इति शबरस्वाम्यादयः। माधवस्तु पक्ष परिग्रहे इत्यस्मादसुन्। पक्षः। छदिः। संवत्सराद्वैञ्चेत्याद्य। वक्षिद्रा॥ अत्र पूर्वसूत्रात्सुटमनुवर्त्तयतां उज्ज्वलदत्तादीनां मतेनोदाहरणमाह। वक्षा इत्यादि। प्राञ्च इति। सकलवृत्तिकृतः प्रसादकारादयस्वेत्यर्थः। एतच्चायुक्तम्। उक्तोदाहरणानीह तावल्लोके दृश्यन्ते। न च संभवन्ति। छन्दसीति सूत्रात्॥

---

पतद्ग्रहे। भाषायां पिकदानीत्याख्ये। मा भूदिति। अकाररेफादिभ्यश्चेदमिरम्योरेवेति नियमेनेत्यर्थः। इति वदन्तीति। अत्रारुचिबीजन्तु अमो रम इति प्रयोगवारणाय सूत्रस्यावश्यकत्वेन नियमार्थत्वे मानमिति। एवञ्चाङ्घो रङ्घ इत्यपि साध्वेवेति॥ इति चतुर्थः पादः॥

वेदे तु विपरीतमेवास्तीत्याह । वस्तुतस्त्विति । वेदभाष्यकारास्तेह सा-क्षिण इत्यवधेयम् । मिथुनेसिः ॥ सुपयाः सुस्रोताः इत्याद्युदाहर-णम् । विधाञः ॥ वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि इति मेदि-नी । नोधा इति । सद्योभुवद्वीर्यापनोधा इति मन्त्रे नोधा ऋषि-र्भवतीति निरुक्तम् । नवन्दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम् । अत्र स्वरसूत्रम् । गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वञ्चेति । कृदुत्त-रपदप्रकृतिस्वरापवादो ऽयम् । चन्द्रे ॥ चन्द्रं रजतमम्तनञ्च । तदि-व मीयते । चन्द्रमा इति वा मीयते । इति दासीभारादिव्युत्पादने हरदत्तः । पुरसि च ॥ पुरोधास्तु पुरोहित इत्यमरः । पुरूरवाः बुध-सुतो राजर्षिश्च पुरूरवा इत्यपि । विद्यात्पुरूरवः शब्दे रुकारस्यापि दीर्घतामिति द्विरूपकोशः । नृचक्षा इति । शिञ्चेत्युक्ते सार्वधातु-कसञ्ज्ञा । अतः ख्याञ् न । उषः कित् । दशपाद्यान्तु वसः किदि-ति पाठः । वसति सूर्येण सहेत्युषा । अपो भीति सूत्रे उषसश्चेष्यते इति वार्त्तिकस्य समुषद्भिरित्युदाहरणं विवृण्वद्भिर्हरदत्तादिभिरयं पाठः पुरस्कृतः । दमेरूनसिः ॥ सप्तार्चिर्दमुनाः शुक्र इत्यमरः । पक्षे अ-न्येषामपि दृश्यतइति दीर्घः । जुष्टो दमूनाः । दमूनसङ्गृहपतिं वरे-ण्यम् । दशपाद्यान्तु सूत्रे एव दीर्घः पठ्यते तन्मते पक्षे ह्रस्वो बाहु-लकाद्बोध्यः । प्रायेणेति । स्त्रियां बहुष्वप्सरस इत्यमरः । स्त्रियां बहुष्वप्सरसः स्यादेकत्वे ऽप्सरा अपीति शब्दार्णवः । अप्सरस्त्व-प्सराः प्रोक्ताः सुमनाः सुमनसुः चेति द्विरूपकोशः । एकाप्सरःप्रा-र्थितयोर्विवाद इति रघुः । विदिभुजिभ्याम् ॥ विश्वे शब्दस्वरूपपरत्वा-त्स्मिन्नादेशो न कृतः । उदाहरणं विश्वं वेत्ति विन्दति भुङ्क्ते इति विग्रहः । अचोऽज्वत्वदत्तेन विश्ववेदा अग्निः । विश्वभोजा इन्द्रः । तत्पु-रुषे कृतीति सप्तम्या अलुगित्युक्तम् । तन्न । स्मिन्नादेशस्य दुर्वारत्वा-त् । सुमृडीको भवतु विश्ववेदाः । पूषा भगः प्रभृथे विश्वभोजा इत्या-

दिमन्त्रेषु सपो लुक एव दर्शनात् । वृत्त्यन्तरेषु तथैवोदाहरणाच्च । वशेः ॥ उशना भार्गवः कविरित्यमरः ॥ इत्युणादिषु चतुर्थः पादः ॥

अद्भुतमिति । अत् इत्यव्ययमाश्चर्यार्थे । तस्मिन्नुपपदे भुवः प्रत्ययः । गुध्यते परितो वेष्ट्यते प्राणिभिरिति गोधूमः । गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोरिति मेदिनी । मसेः ॥ मसी परिणामे । स्थूरो मनुष्य इति । स्थूरस्य रायो बृहतो यईशे इति मन्त्रे तु योगपुरस्कारात् स्थिरस्य इत्यर्थः ॥ रभसकोशस्थमाह । वातिरिति । वृञ् लुटि ॥ यद्यपि सानसिवर्णसीति सूत्रे तण्डुलशब्दो निपातितस्तथाऽपि प्रत्ययस्वरेण मध्योदात्तः सः । अयन्तु चित्स्वरेणान्तोदात्त इति विवेकः । दंसेः नः । नकारस्य । दासः शूद्रे दानपत्रे भृत्यधीवरयोरपीति विश्वः । दंशेश्च ॥ कैवर्त्ते दाशधीवरावित्यमरः । पूञः ॥ पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोरिति विश्वः । अर्त्तेः ॥ मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके इत्यमरः । डित्खनेः ॥ मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरिति विश्वः । संध्यन्तरे नाटकादेः शब्दे ऽपि च नपुंसकमिति मेदिनी । अमेः सन् ॥ स्कन्धो भुजशिरोंऽसो स्त्रीत्यमरः । अंसः स्कन्धविभागे चेति दन्त्यान्ते विश्वः । मुहेः ॥ अज्ञे मूढयथाजातमूर्खवैधेयबालिशा इत्यमरः । नहेः ॥ नखः कररुहे शण्ढे गन्धद्रव्ये नखं नखीति विश्वः । नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकमिति मेदिनी । शीङः ॥ ह्रस्वविधिसामर्थ्याद्गुणो न । शिखाशाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायाञ्च ज्वालायां प्रपदे ऽपि चेति मेदिनी । माङः ॥ मयूखस्त्विट्करज्वालास्वित्यमरः । गुल्फ इति । तद्ग्रन्थी घुटिके गुल्फावित्यमरः । तयोः पादयोर्ग्रन्थी इत्यर्थः । स्पृशेः ॥ पार्श्वङ्कक्षाधरे चक्रोपान्ते पर्शुगणे ऽपि चेति विश्वमेदिन्यौ ।

---

शिफा वृक्षमूलम् । पर्शुगणे पार्श्वास्थिसमूहे ॥ इति पञ्चमः ॥

श्मनि ॥ तद्वृद्धौ श्मश्रु पुंमुखे इत्यमरः । पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्त्तते इत्यर्थः । अश्वादयश्च ॥ अशूङ व्याप्तौ । रुन्प्रत्ययः । नञ्पूर्वात् श्रयतेर्डुन् वा । यत्तु अश्नोतेर्डुन् रुट् चेत्युज्ज्वलदत्तेनोक्तन्तन्न । धातुलोपापत्तेः । तदभावेपि निपात्यतइति चेत् तर्हि डित्त्वोत्प्रेक्षणं निष्फलमिति दिक् । जनेष्टन् लोपश्चेति । अलोन्त्यस्य । जटा लग्नकचे मूले मांस्यां स्त्रक्षे पुनर्जटीति मेदिनी । हन्तेः ॥ चादच् अभ्यासकार्यम् अभ्यासाच्चेति कुत्वम् । अमरोक्तिमाह । पश्चादिति ॥ जघनञ्च स्त्रियाः श्रोणिपुरोभागे कटावपीति मेदिनी । क्लिशेः ॥ केशः स्यात् पुंसि वरुणे ह्रीवेरे कुन्तले ऽपि चेति मेदिनी । पलेः ॥ पलितं शैलजे तापे केशपाके च कर्द्दमे इति मेदिनी । पलितञ्जरसा शौक्ल्यङ्केशादाविल्यमरः । कृञादिभ्यः ॥ करकस्तु पुमान् पक्षिविशेषे दाडिमे ऽपि च । द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ इति मेदिनी । कठक इति । क्वुन् शिल्पिसञ्ज्ञयोरिति क्वुना ऽप्ययं सिद्धः । गुणभाज इद्वैवोदाहार्याः । गुणनिषेधभाजस्तु क्वुनि । उदासीनास्तु यत्र कुत्र चिदिति भावः । नॄ नये । नरकः पुंसि निरये देवारातिप्रभेदयोरिति मेदिनी । उदयनाचार्यास्तु न नरकाण्येव न सन्तीति क्लीबं प्रयुञ्जते । तत्र मूलं मृग्यम् । सृ गतौ । सरको ऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोरिति मेदिनी । कुर शब्दे । कोरको ऽस्त्री कुड्मले स्यात् कक्कोलकमृणालयोरिति मेदिनी । विचकार कोरकाणीति माघः ॥ कोरकः पुमानिति अमरस्य प्रमादः । अपवरकावरदयो ऽपीत्थैव बोध्याः । चीकयतेरिति । बाहुलकबललब्धो ऽयमर्थः । एवमनुपदं वक्ष्यमाणं पचिमच्योरित्यपि बोध्यम् । कीचको दैत्यभिद्वाताहतसस्वनवंशयोः । पेचको गजलाङ्गूलमूलोपान्ते च कौशिके । मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत् क्लीबं स्त्रोतोञ्जनान्धकारयोरिति मेदिनी । जनेः ॥

जठरः कठिनोऽपि स्यादित्यमरः। जठरो न स्त्रियां कुक्षौ बद्धककक्खटयोस्त्रिष्विति मेदिनी। वचि॥ वठरः कुक्कुटे वण्टे चेति मेदिनी। ऊर्ज्जि॥ तमूर्द्दरंत्नपृणातायनेनेति मन्त्रः। हर्यतेः॥ हर्य्यं गतिकान्त्योः। हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः। अक्षये मानभेदे स्यादकुप्ये च नपुंकमिति मेदिनी। जनेः॥ तु इत्यविभक्तिकम्। तुप्रत्ययः। रेफस्यान्तादेशः॥ ऊर्णोतेः। ऊर्णा मेषादिलोम्नि स्यादावर्त्ते चान्तराभ्रुवोरित्यमरः। भ्रुवोर्मध्ये य आवर्त्तस्तत्रेत्यर्थः। अन्तरान्तरेणेति द्वितीया। दधातेः॥ धान्यं ब्रीहिषु धान्याके इति मेदिनी। तनोतेः॥ चालनी तितउः पुमानित्यमरः। चालनन्तितउन्युक्तमिति कोशान्तरम्। तितउ परिपवनं भवतीति पस्पशायां भाष्यम्। स्यादास्तु हिङ्कु तितउ इति पुंनपुंसकवर्गे त्रिकाण्डशेषः। अर्भकः॥ अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च। पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्। पाकः परिणते शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचने ऽपि चेति मेदिनी। अवद्य॥ निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः। विपूयकुत्सितावद्यखेटगर्ह्याणकाः समा इति सर्वत्रामरः। अधमः स्यात् गर्ह्यऊनेपीति मेदिनी। अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः। रेफो रवर्णे पुंसि स्यात् कुत्सिते पुनरन्यवदिति। चोलीरीङ्गोः॥ लिप्तं विषाक्ते भुक्ते च वाच्यवत्स्यादिलेपिते इति विश्वः। कीशेः॥ कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत्। यमे ना इति मेदिनी। ईश्वर इति। स्त्रियाः पित्त्वान् ङीप्। ईश्वरी मध्योदात्ता। वनिपि ङीब्रयोस्तु आद्युदात्ता। पुंयोगलक्षणे ङीपि अन्तोदात्ता। स्थेशभासेति वरजन्तादपि ईश्वरेति विवेकः। ईश्वरो मन्मथे शम्भौ नाथे स्वामिनि वाच्यवत्। ईश्वरी चेश्वरोमायामिति मेदिनी। ईश्वरः शङ्करे ऽधीशे तत्पत्न्यामीश्वरीश्वरेति वोपालितः। विन्यस्तमङ्गलमहौषधिरीश्वराया इति

भारविः। दशपाद्यान्तु सूत्रान्तरमपि। हन्तेरन् घश्च॥ रन् प्रत्ययः स्याद्धश्चादेशः। हन्यते गम्यते ऽतिथिभिः। घरः गृहम्। प्रातरिति। अत सातत्यगमने। प्रपूर्वः। स्वरादिपाठादव्ययत्वम्। दहेः॥ नगो महीरुहे शैले भास्करे पवनाशने इति मेदिनी। सिचेः॥ सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थिते। सिंही क्षुद्राबृहत्योः स्यादासके राहुमातरीति विश्वः। हिंसेर्वर्णव्यत्ययतः सिंह इति व्युत्पत्त्यन्तरम्। व्याङि॥ व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः। श्रेष्ठेतराद्युत्तरस्थः कण्टकार्याञ्च योषितीति मेदिनी। हन्तेः॥ घोरं भीमे हरे घोरइति विश्वः। शचेः॥ शहणी रुक्मत्राहिकेत्यमरः। प्रथेः॥ प्रथमस्तु भवेदादौ प्रधाने ऽपि च वाच्यवदिति मेदिनी। प्रथमचरमेति सर्वनामत्वात्पक्षे जसः शी। प्रथमे प्रथमाः। चरेश्च॥ चरमे। चरमाः। प्रथिचरिभ्यामिति सुवचम्। मङ्गेरलच्॥ उखवखेत्यादिदण्डके मगिः पठ्यते। मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे। नपुंसकं तु कल्याणे सर्वार्थरक्षणे ऽपि चेति मेदिनी। भावे ष्यञि माङ्गल्यम्। तत्र साधुरिति यत्। मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके। स्त्रियां शम्यामधःपुष्पीमिसिपुष्पकवचासु च। रोचनायामथो दध्नि क्लीबं शिविकाराच्चिषु इति मेदिनी॥ इत्युणादिवृत्तौ पञ्चमः पादः॥

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतः। सोपि नैकप्रघट्टकतया किन्तु विच्छिद्येति स्पष्टमेव। तत्रापि प्रमादं लेशतो दर्शयामः। भजो ण्विरिति ण्विप्रकरणे छन्दसि सहः, वहश्चेत्युपन्यस्य परौ व्रजेः षः पदान्तइति ण्विस्तेनैव षः। परिव्राट् इति तावत्प्राचो ग्रन्थः तद्व्याख्यायान्तत्पौत्रेण पञ्चपाद्युणादिसूत्रे इदं पठ्यतइत्युक्तम्। तन्न। क्विब्वचीति क्विब्दीर्घौ प्रक्रम्य परौ व्रजेरिति सूत्रस्य पाठात्। अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात्। यदपि प्राचो

ग्रन्थे क चित्पठ्यते चिणिति तदप्यपाणिनीयत्वादुपेक्ष्यम्। एतेन प्रघ-ट्टकान्तरे क्षुद्रुपरिव्रजान्दीर्घश्चेति के चिदिति प्राचो ग्रन्थो ऽपि प्र-त्युक्तः। सूत्रारूढे सर्वसंमते चार्थे के चिदित्युक्तेरप्रामाणिकत्वात्। यदपि धनर्त्तिचञ्चिङ्क्वपिनपिजनियजेरुस् इति पठितन्तदप्यना-करम्। तथा हि। जनेरुसिः। अर्त्तिपृवपियजितनिधनितपिभ्यो नि-त्। एतेर्णिच्च। चक्षेः शिच्चेति सर्वसंमतः पाठः। वपूंषि तस्मै वपुषो वपुष्टरम् इत्यादि मन्त्रेष्वाद्युदात्ततया अनुकूलस्य। वेदभाष्ये ऽप्ये-वमेव स्थितम्। इति द्वितीये प्रमादाः॥ तृतीये ऽपि स्तनिदूषिपुषिग-दिमदिहृदिभ्यो णेरित्नुच् इति प्राचा पठितम्। तत्र दूषिहृदी प्राचां वृत्तिकृतां ग्रन्थे क्वापि न पठितौ। दूषयित्नुः हृदयित्नुरिति प्रयोगौ ऽप्याकरे न दृष्टः। स्तनिहृषिपुषिमुदिगदिमदिभ्य इति हि पञ्चपादी-पाठः। घृषिगन्धिमण्डिजनिनमिभ्य इति दशपाद्यामधिकमित्यन्य-देतत्। यदपि श्रुदक्षिस्पृहिगृहिदजिभ्य आय्य इति पठित्वा दाराय्यः जयाय्य इति प्राचोक्तन्तदपि न। दृजिग्रहणस्याकरविरुद्धत्वात्। यदपि जृविशिभ्यां झच् गण्डिमण्डिजनिनन्दिभ्यश्चेत्युक्त्वा गण्डयन्तो जनयन्त इत्युदाहृतं प्राचा यच्च गण्डयन्त इति प्रतीकमुपादाय मे-घनादमिति व्याख्याय गडि वदनैकदेशे इति व्याख्यातृभिर्विवृतन्त-देतत्सर्वं प्रामादिकम्। तथा हि उणादिवृत्तिषु गडीति निरनुषङ्गं पठित्वा गड सेचने इति विवृतम्। अयामन्तेति सूत्रे वृत्तिन्यासह-रदत्तादिसकलग्रन्थेष्वेवम्। माधवग्रन्थे ऽप्येवमेव। युक्तञ्चैतत्। मेघ इति व्याख्यानं प्रति सेचनार्थस्यैवानुगुणत्वात्। जनेः पाठो ऽप्य-प्रामाणिकः। जिधातुं पठित्वा जयन्तः पाकशासनिरिति सर्वै-

———

एकवाक्यत्वादिति। एवञ्च पञ्चपादुणादिसूत्रे इति तदुक्तिरसङ्गतेति भावः। इति प्राचः प्रमादाः॥



विवृतत्वात् । अप्रसिद्धत्वाच्च ॥ इति तृतीये प्राचः प्रमादाः ॥ यद-पि कृगॄस्तृजागृभ्यः क्विन् । गीर्विः स्तृविरिति तदपि लिपिभ्रम-प्रयुक्तमेव । कृ विक्षेपे । गॄ निगरणे । स्तृञ् आच्छादने इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाप्रुद्ध्यैव ज्ञेया ॥ जॄगॄस्तॄजागृभ्यः क्विनिति पाठ उणादिवृत्तिकृतां माधवादीनाञ्च संमतः । जीर्विः प-शुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति च तत्तद्ग्रन्थेषूदाहृतम् । स्तॄ इत्यस्य दीर्घान्तत्वे एव हि ऋत इद्धातोरितीत्वं लभ्यते न तु ह्रस्वा-न्तत्वेऽपि । तस्माद्यथाकरमेव ग्रहीतुमुचितमिति दिक् ॥ ग्ला-ज्याहात्वरिभ्यो निरित्यप्यनाकरम् । वीज्याज्वरिभ्यो निरिति पठि-त्वा सूत्रद्वयानन्तरं वहिश्रीति सूत्रे ग्लाहात्वरिभ्यो निद्विति सू-त्रितत्वात् । तूर्णिरग्नयः सदानव इत्यादावाद्युदात्तदर्शनाच्च । न च ख्रि-याङक्तिन्नित्यधिकारस्थं वार्त्तिकमेवेदं प्राचोदाहृतं न तूणादिस्थ-मिति वाच्यम् । एवमपि त्वरतेः पाठस्यानुचितत्वात् । न ह्यसौ वार्त्तिके ऽस्तीति दिक् ॥ एवं संख्यायतेर्ड्विति प्राचोदाहृतमप्यनाकरम् । ख्यायतेर्ड्विल्येव सूत्रस्याकरे पञ्चपाद्यान्दशपाद्याञ्च उपलम्भात् । संख्याने ख्यायतेर्ड्विट् स्त्री सूते सप्रसवे पुमान् इति तु भाष्ये श्लोकपाठः । स एव माधवेनोपन्यस्तः । न तु सूत्रपाठस्य तथात्वं दृश्यते । एतद्ग्र-न्थव्याख्यातॄणामपि प्रमादा ऊह्याः । यथा पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम् । मनेरुच्चोपधाया इति । न ह्येवंविधं सूत्रं पञ्च-पाद्यादावस्त्यस्ति । अत इत्यनुवर्त्तमाने मनेरुच्चेति सूत्रितत्वात् इति दिक् ॥ इति चतुर्थे प्राचः प्रमादाः ॥

उणादयो बहुलम् ॥ वर्त्तमाने लडित्यतो वर्त्तमानग्रहणम् । पुंसि सञ्ज्ञायामित्यतः सञ्ज्ञाग्रहणञ्चानुवर्त्तते तदाह । एते इति । बहु-लग्रहणस्य फलमाह । केचिदिति । हृषेरुलजुक्तः शङ्कुरप्युच्यते श-ङ्कुलेति दर्शनात् । किं च फिडफिड्डौ क्वापि न विहितौ । अर्त्तेह्ल-

च्छेते ऋफिडः ऋफिड्ढ इति। सञ्ज्ञास्विति। अनादिप्रयुक्तास्वेव न तु सर्वत्रेत्याहुः। कार्याङ्गप्रतिषेधादिकात् अनुबन्धङ्ककारादिकं विद्यात् तेन फिडफिड्डौ कितावूह्याविति भावः। अनुबन्धमित्यत्र उपसर्गस्य घञीति दीर्घः। एतदुणादिषु शास्त्रं शासितव्यम्॥

भूतेऽपि दृश्यन्ते॥ नन्वेवं वर्त्तमानग्रहणमेव निवर्त्त्यताम्। इदञ्चोत्तरञ्च सूत्रन्त्यज्यतामविशेषात्कालत्रये प्रत्ययलाभादिति चेत् सत्यम्। बाहुल्येन वर्त्तमाने क्वचिदेव भूतभविष्यतोरिति विवेकप्रदर्शनायेदमित्याहुः॥

तुमुन्ण्वुलौ॥ क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम्। अत्रायं सिद्धान्तः। तुमुन्ण्वुलोः कृत्त्वाविशेषेऽपि अव्ययकृतो भावे इति वचनात् भावे तुमुन्। ण्वुल् तु कर्त्तरि। प्रकृत्यर्थस्य उद्देश्यत्वन्तु प्रत्ययद्योत्यम्। तच्च संसर्गः प्रकारो वा मतभेदेन। लिङ्विधौ भाष्ये विध्यादीनां वाच्यत्वमिति पक्षस्याप्युक्ततया तद्रीत्या इच्छोद्देश्यत्वं प्रत्ययार्थः। प्रकृत्युपपदार्थयोः समानकर्त्तृकत्वमपीदाभिधानबललभ्यं प्रयोगोपाधिः। तुमुन्प्रकृत्यर्थस्तु उपपदार्थं प्रति विशेषणम्। ण्वुलि प्रकृत्यर्थो ण्वुलर्थे ण्वुलर्थस्तु कारकद्वारा उपपदार्थे विशेषणम्। कृष्णन्द्रष्टमिति। कृष्णकर्मकभविष्यद्दर्शनार्थमित्यर्थः। दर्शको यातीति। भविष्यद्दर्शनकर्तृकर्त्तृकन्तदुद्देश्यकञ्च यानमित्यर्थः। क्रियायाङ्किम्। भिक्षिष्ये इत्यस्य जटाः। इह भिक्षार्था जटाः तासु द्रव्यं न तु

---

भावे तुमुनिति। अत एव तुमर्थे सेसेनिति सूत्रे तुमर्थ इति चरितार्थम्। अत्र च भावो ऽसत्त्वभूत एव। अव्ययार्थे लिङ्गाद्यभावेन प्रत्ययार्थे वैलक्षण्याननुभवात्। भाववचनाश्चेत्यनेन सत्त्वभूते भावे घञादीनामेव विधानाच्चेति भावः। प्रत्ययद्योत्यमिति। उभयत्रापीति भावः॥ मतभेदेनेति। अर्थाध्याहारवादे संसर्गः शब्दाध्याहारवादे तु प्रकार इत्यर्थ इत्येके। कर्मप्रवचनीयवत् द्योतकत्वे संसर्गः प्रादिवद् द्योतकत्वे प्रकार इत्यर्थ इत्यन्ये। प्रकार एवेति पक्ष एव युक्त इत्याह॥ लिङ्विधाविति॥ अभिधानेनेति॥ प्रयोगस्वभावबललभ्य इत्यर्थः॥ अनभिधानादन्यत्र

क्रिया। भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण योज्यः। क्रियार्थायाङ्किम्। धावतस्ते पतिष्यति दण्डः। अत्र धावतइति क्रिया न त्वसौ दण्डपातनार्था। उद्देशेन हि तादर्थ्यं विविच्यते न हेतुत्वमात्रेण॥

समानकर्तृकेषु तुमुन्॥ अक्रियार्थेति। भोक्तुमिच्छतीत्यत्र हि भोजनविषयिणी इच्छा प्रतीयते न तु भोजनार्था। तदुद्देशेन अनुष्ठीयमानत्वन्तादर्थ्यम्। उद्देशश्चेच्छा। न च भोजनेच्छाऽपि तयैवानुष्ठीयते आत्माश्रयात् अतः पूर्वेणाप्राप्तिरिति भावः। यत्तु वदन्ति समानकर्तृकेष्विति विशेषं समर्पयितुमयमारम्भः। तेन देवदत्तेन भोक्तुमिच्छति यज्ञदत्त इति न भवतीति। अत्रेदं वक्तव्यम्। तुमुन्ण्वुलाविति विधिरपि भिन्नकर्तृकेषु नेष्यते। पुत्रं भोजयितुम् आगच्छतीति वक्तव्ये पुत्रेण भोक्तुमित्यप्रयोगात्। सेयं व्यवस्था शब्दशक्तिस्वाभाव्यात् बहुलग्रहणाद्वा सिद्धेत्यन्यदेतत्॥ एवं स्थिते प्रकृतसूत्रे तादर्थ्याभावेऽपि विध्यर्थमित्येव न्यायः॥ वस्तुतस्तु तन्त्रावृत्त्याद्याश्रयणेन प्रकृतसूत्रं प्रागुक्तेऽपि तुमुनि समानकर्तृकतां नियच्छति। सूत्रे विश्वतोमुखत्वस्यालंकरणत्वात्। स्वरितेनाधिकार इत्यादिसूत्राणां भाष्यएव बहुधा योजितत्वात्। लक्ष्यस्य निर्विवादत्वात्। ननु धातोः कर्मण इति सूत्रे ऽनभिधानबलेन समानकर्तृकादित्यंशो वार्त्तिके प्रत्याख्यातः। तत्किमिह तन्त्राद्याश्रयणेनेति चेत् मैवम्। तत्रैव भाष्यकृता अगतिकगतिरेषा यदनभिधानमित्युक्तत्वादिति

---

प्रयोगो नेति यावत्। प्रयोगोपाधिरिति। समुदायशक्य इत्यर्थः। विविच्यते। गम्यते। तदुद्देश्यकं हि तदर्थमित्युच्यते न तज्जनकमात्रमित्याशयः।

न तु भोजनार्थेति। दर्शनेच्छया यथा दर्शनमनुष्ठेयं न तथा भोजनेच्छया इच्छानुष्ठेयेत्यर्थः। इत्येव न्याय इति। समानकर्तृकेष्विति स्पष्टार्थमेवेति भावः॥ नियच्छतीति। यस्तुमुन्समानकर्तृके उपपदे इत्यर्थे द्वितीयस्येति भावः। विश्वतोमुखत्वमनेका-

दिक्। अत्र काशिका। इच्छन् करोतीत्यत्रानभिधानान्नेति। अस्यार्थः। उक्तविषये इच्छन् कर्त्तुमिति न भवति। इच्छन् कर्त्तुमिच्छतीत्यादौ तुमुन्ण्वुलाविति सूत्रेण स्यादेवेति। अत्रेदं वक्तव्यम्। करोतीत्यर्थे तु तुमुनः प्राप्तिरेव नास्ति तस्य भावार्थकत्वात्। इह च लटा कर्त्तृप्रतीतेः। यत्तु हरदत्तेनोक्तम् इच्छता क्रियत इत्यत्र प्रसङ्ग इति। यच्च परिष्कुर्वन्ति। कर्माविवक्षायां भावे प्रसङ्ग इति तच्चिन्त्यम्। अविवक्षितकर्मणां भावे लो न किं तु कर्मसामान्ये एवेति लः कर्मणिसूत्रस्थस्वग्रन्थविरोधात्। किं च भावे लस्यपि वर्त्तमानकालता निर्विवादा। न चेयन्तुमुना लभ्यते। किं च इच्छन् कर्त्तुमिति प्रयोगो नेष्यत इति रिक्तं वचः। कर्तुमिच्छन्नितिप्रयोगस्य सकलसंमतत्वात्। पदाऽऽनुपूर्व्यास्त्वाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात्तुमुन्प्रकृत्यर्थस्योपपदार्थं प्रति विशेष्यतापि स्यादिति चेन्न। स्वापादकाभावात्। अव्ययकृत्प्रकृत्यर्थानाङ्क्रियान्तरं प्रति विशेषणतायाः क्त्वादौ क्लृप्तया तथैव व्युत्पत्तेश्चेति दिक्। इच्छासन्नन्तस्य विग्रहे सर्वत्रायमेव तुमुन् प्रयुज्यते। कर्मत्वसमानकर्त्तृकत्वयोरिच्छाप्राधान्यस्य च सन्नन्ते दृष्टस्येहापि तौल्यात्। वृत्तिसमानार्थकवाक्यस्य न्याय्यत्वादित्यवधेयम्॥

---

र्थत्वम्। इह च लटेति। अन्यथा तदुपादानवैयर्थ्यमितिभावः। नन्वविवक्षितकर्मभ्योपि
भावे लः षष्ठीप्रकरणस्थभाष्याल्लभ्यते इति न्याय्येर्थे स्वग्रन्थविरोधो न दूषणमत
आह। किं चेति। अपिना कर्त्तर्यपि। न चायन्तुमुनेति। तत्प्रकृत्यर्थे समभिव्याहृ-
तक्रियापेक्षया भविष्यत्वस्यैव प्रतीतेरिति भावः। कर्त्तुमिच्छन्निति कर्त्तुमिच्छन्नस्तीति
तदर्थः। अस्येच्छाप्राधान्ये एव प्रवृत्तेरित्यर्थे मानाभाव इति भावः। न्याय्यत्वादि-
ति। तच्चानेनैव तुमुना निर्वहति न पुनः क्रियार्थेनापीति भावः। अत एव स-
न्नन्तस्य पठनमिच्छतीति न विग्रहः। समानार्थकत्वभिनान्यस्यानौचित्यात्स्पष्टञ्चेदं
सन्विधायके भाष्ये।

शकधृष ॥ अयमप्यक्रियार्थोपपदार्थारम्भः । भोक्तुं शक्नोति धृ-
ष्णोति जानातीत्यत्र भुज्यर्थो विषयतया संबध्यते । प्रावीण्यञ्च गम्य-
ते । ग्लायतीति । तदशक्तिः । घटते अर्हतीति योग्यता । आरभते क्र-
मते उत्सहते भोक्तुमिति भुजेराद्यावस्था । लभते इत्यप्रत्याख्यानम् ।
अस्तीत्यादौ तु संभवमात्रम् ॥

भाववचनाश्च ॥ क्रियार्थोपपदे विशेषविहितेन तुमुना स्वविषये
घञादीनां बाधे प्राप्ते वचनम् । यागायेति । यष्टुमित्यर्थः । तुमर्थाच्च
भाववचनादिति चतुर्थी ॥

पदरुज ॥ पद्यते ऽसाविति करणस्यात्र कर्तृत्वविवक्षा बोध्या ।

सृ स्थिरे ॥ सर्त्तेरिति । भ्वादेर्जुहोत्यादेश्च ग्रहणम् । स्थिरे कर्त्तरीति । ए-
तेन स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणम् न तूपपदमिति दर्शयति ।
अर्द्धर्चादिषु सारशब्दस्य पाठश्चेह प्रमाणम् । व्याधीत्यादि । अस्थिरा-
र्थम् । विसारो मत्स्य इति । विविधं सरतीति कृत्वा । सारो बलमि-
ति । अत्राप्यन्तर्भावितण्यर्थो धातुः । सारयति चेष्टयतीति कृत्वा ।
बलवान् हि चेष्टते । अपाणिनीयमिति । अमेः पुरुह्वाद्वञि वृद्धेर्दुर्ल-
भत्वादिति भावः । यदि तु धुर्यान्विश्रामयेत्यादाविव णिचि वृद्धिमा-
श्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिध्यत्येव । अर्थस्तु भिद्यत-
इति भावः । निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायान्तु न
दोष इत्यवधेयम् । अवोद इति । उन्दी क्लेदने अवपूर्वो घञ्
नलोपो निपात्यते । एध इति । इन्धेर्घञि नलोपो गुणश्च नि-
पात्यते । न धातुलोपइति प्रतिषेधः स्यात् । ओद्म इति । उ-

---

अयमपीति । अत एवायं स्वार्थिक इति भूवादिसूत्रे कैयटः ।

बाधे प्राप्ते वचनमिति । यद्यप्ययं भावो ऽसत्त्वभूतो घञादिवाच्यस्तु सत्त्व-
भूतस्तथा ऽप्यस्यैव विषयविभागस्य स्फुटं बोधनायेदमिति भावः ।

कर्तृत्वविवक्षेति । तेनायङ्कर्त्तरीति भावः । इत्यादाविवेति । मितां ह्रस्व इत्यत्र

न्द्रेरौणादिके मनप्रत्यये नलोपो गुणश्च । अन्येरिति । प्रपूर्वस्य द्विमपूर्वस्य च घञिति बोध्यम् ।

परिमाणाख्यायां सर्वेभ्यः ॥ परिमाणं परिच्छित्तिः । आख्यानमाख्या उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिः प्रत्ययार्थस्य । तण्डुलनिचाय इति । निचीयते राशीक्रियते इति निचायः । अत्र राश्येकत्वेन समुदायिनां परिच्छित्तिर्गम्यते । एरचि प्राप्ते घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः । शूर्पेणेति करणात्तृतीयान्तस्य कर्तृकरणे कृता बहुलमिति समासः । अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः । शूर्पद्वित्वन्तु आर्थिकत्वं तु शाब्दम् । यद्यप्यत्र निरभ्योः पूल्वोरिति घञ् लभ्यते तथाऽपि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः । मुख्योदाहरणमाह । द्वौ काराविति । कृ विक्षेपे कर्मणि घञ् । विक्षिप्तो धान्यादिराशिः कारः । इह प्रकृत्याश्रय एवापवादो बाध्यते न त्वर्थाश्रयः । सर्वेभ्य इति पञ्चमीनिर्देशात् । तेनेह न । एका तिलोच्छित्तिः । कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशीकृत इत्यर्थः ।

---

वेत्यनुवर्त्य व्यवस्थितविभाषयेति भावः । न धात्विति । अन्यथेत्यादिः ।

परिच्छित्तिरिति । इयत्तेत्यर्थः । परिच्छित्तेरिति । तदुक्तिश्चोदाहरणेष्वेकादिशब्दैः स्पष्टैव । समुदायिनामिति । तण्डुलपदेन कर्मधारय इति समुदायिन एव प्रत्ययार्थ इति भावः । तत्परिच्छित्तिश्चैकराशिविषयत्वेनेति बोद्धव्यम् । एरचीति । निश्चाय इति पाठे ग्रहवृदृनिश्चिगमश्चेत्यपो बाध इति बोद्धव्यम् । तच्च परिमाणाख्यायाञ्चरितार्थम् ॥

आर्थिकमिति । एवं राश्येकत्वमपि बोद्धव्यम् । कर्मणीति । इदञ्चिन्त्यम् । अकर्तरि चेति सूत्रे पर्युदासेनैव कारकलाभे पुनस्तद्ग्रहणं परिमाणाख्यायामित्यस्य कारकएव प्रवृत्तिर्न तु भाव इत्यर्थन्तेनेह न । एका तलोच्छित्तिर्द्वे सुती । एकञ्च घञनुक्रमणमजब्विषये । वचने हि स्त्रीप्रत्ययान्मप्यपवादविज्ञानमिति तत्सूत्रस्थवार्तिकं न कार्यमिति भाष्यं सङ्गच्छते । अन्यथा कर्मणि क्तिनो बाधाभावाय तद्वा-

तदेतत्सूचयितुमजपोरित्युक्तम् ॥

दारजारौ ॥ यद्यपि दारयतेः पचाद्यचा सिद्धं स्वरस्य तुल्यः कर्षात्वत इति घञ्यण्यन्तोदात्तत्वात्तथाप्यचकावशक्ताविति स्वरं वारयितुमिदम्। णिलुक्चेति। लोपे हि सति घञाश्रया वृद्धिर्न स्यात् णिलोपस्य स्थानिवद्भावात्। न च णिङिनमित्तैव सा ऽस्तु इति वाच्यम्। जारशब्दे मितां ह्रस्व इति ह्रस्वापत्तेः । लुकि तु सति तस्यापरनिमित्तकत्वात् क्ङितिगुपधेति प्रतिषेधाद्वा स्थानिवत्त्वाभावान्न दोष इति भावः। यत्तु वदन्ति दीर्यन्ते यैस्ते दाराः। जीर्यते ऽनेनेति जार इति अण्यन्ताभ्यामेव करणे घञा सिद्धत्वान्नैतदादर्त्तव्यमिति। तदतिस्थवीयः। अपवादस्य ऋदोरबित्यपो विषये उत्सर्गस्य घञो दुर्लभत्वात्। अपवादो ऽपि परेण ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् ॥ अपादाने स्त्रियामिति । घञनुक्रमणमजपोर्विषये इति वचनात्। स्त्रियामप्राप्तो घञ् विधीयते। उपाध्यायेत्यादि। या स्वयमध्यापयति तस्यामिदं रूपद्वयम्। पुंयोगे तु ङीषेव । आनुगागमस्य पाक्षिक इत्युक्तम्। अकृतनीशार इति। उपसर्गस्य घञीति दीर्घः। अथ कथं प्रदक्षिणप्रसव्यगामिनां शाराणामिति। अचाङ्कः। अत एव वार्त्तिकप्रयोगात् अन्त्येष्वपि शृणातेर्घञिति ॥

---

चनस्यावश्यकत्वेन भाष्यासङ्गतिः स्पष्टैव । तस्मात्परिमाणाख्यायां भावे एव क्तिन् न कारके ऽनभिधानादित्यावश्यकम्। अत्राप्यकर्त्तरीत्यनुवृत्त्या तत्प्रत्याख्यातमित्यन्यत्।

न दोष इति । यद्यपि क्रादिजृधातोर्ण्यन्तात्कर्त्तरि घञि तस्यामित्त्वात् णिलोपेनैव सिद्धे लुग्विधानं व्यर्थं तथा ऽप्येतद्वार्त्तिकभाष्यप्रामाण्यान्न सांप्रदायिकः स इति भावः। नैतदिति। एतद्वचनं न कार्यमित्यर्थः। ल्युटेत्युपलक्षणं घस्यापि। यदि तु नैतदादर्त्तव्यमित्यस्य कर्त्तरीत्यस्य स्थाने करणे इति पठित्वा तत्र घापवादं घञमण्यन्ताद्विधाय णिलुकेयंशो नादर्त्तव्य इति व्याख्यायते तदा सम्यगेव।

यज्ञे समि स्तुवः ॥ अधिकरणे ल्युटो ऽपवादो घञ् ।

प्रथने ॥ विस्तारस्तिर्यगायतिः ॥

छन्दोनाम्नि च ॥ शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम् । अत्र केचिद् द्वाविति नानुवर्त्तयन्ति तेन प्रस्तारपङ्क्तिरित्यादि सिद्धम् ॥

उदि ग्रहः ॥ घञ् स्यात् । ग्रहवृदृनिश्चिगमश्चेति प्राप्तस्यापोपवादः ॥

परिन्योः ॥ परावनु ॥ इह द्विः परिग्रहणङ्क्रियते । सकृदेव तु कर्त्तव्यम् । तथा हि । परौ । नियो द्यूते । इणो ऽनुपात्यये । नावभ्रेषे । इति सूत्ररचनास्तु । सत्यम् । तथा न कृतमित्येव ।

व्युपयोः ॥ ननु पूर्वसूत्रेण अनुपात्यये पर्यायशब्दो व्युत्पादितः । एवञ्चेह पर्यायग्रहणं व्यर्थम् । अनुपात्ययइत्यस्यानुवृत्तिसंभवात् इति चेत् । अत्राहुः । पर्यायग्रहणं पुनर्विधानार्थम् । तेनाभिविधिविवक्षायां परमपि इनुणं बाधित्वा अयमेव घञ् भवतीति । आकायमिति । आचीयते अस्मिन्नग्न्यादि । अधिकरणे घञ् । अग्निस्थलविशेषञ्चिन्वीत चयनेन निष्पादयेदिति श्रुत्यर्थः ॥

हस्ते च ॥ उत्तरे च अधरे च उत्तराधराः । तेषां भाव औत्तराधर्यम् । सूकरेति । स्तनपानाय यदोत्तराधरभावेन सूकराः शेरते तदेदं प्रत्युदाहरणम् । यदा तु भिक्षुवत् पृथक् पृथगेवावतिष्ठन्ते तदेहापि भवत्येव घञ् ॥

कर्मव्यतिहारे ॥ अत्र वर्त्तमानाद्धातोरित्यर्थः भावे णजिति । कर्त्तृवर्जिते कारके तु न भवत्यनभिधानात् इत्याहुः । प्राचा तु भावादावित्युक्तन्तदुपेक्ष्यमाकरविरोधात् । व्यावक्रोशीति । क्रुश आह्वाने ।

---

स्पष्टञ्चेदं भाष्ये । अक्षेष्वपीति । अक्षकरणकद्यूतसाधनेष्वपीत्यर्थः ।

अयमेव घञिति । राजसमीपे ऽभिव्याप्य शयनस्य पर्याय इत्यर्थके राजोपशाय इत्यादाविति भावः । अग्न्यादीति । आदिना इष्टकाः । अग्निस्थलविशेषमिति । अग्न्याधारस्थलविशेषमित्यर्थः ।

हस हसने। णिजन्ताभ्यामञ्। स च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया सोपसर्गाद्भवति। तद्धितत्वादादिवृद्धिः। न स्त्रियामिति तु न कर्मव्यतिहारइति निषिद्धम्। स्यादेतत्। स्त्रियाङ्क्तिन्निति प्रकरणे णज्विधेयः। एवञ्च स्त्रियामिति न वाच्यमिति लाघवमिति चेन्मैवम्। अस्त्रियामिति वासरूपविधिपर्युदासापत्तेः। इष्यते हि व्यावक्रुष्टिरिति क्तिन्नपि। ननु येननाप्राप्तिन्यायेन क्तिन एवापवादोयं णच्। युजादयो ऽप्येवम्। उभयप्रसङ्गे ऽपवाद्विप्रतिषेधाद्युजादयः प्राप्नुवन्ति। इष्यते तु णजेव॥ तद्यथा। व्यावचोरीत्यत्र ण्यासश्रन्थेति युच् प्राप्तः। व्यात्युक्षी। अत्र गुरोश्च हल इत्यकारः प्राप्तः। क्व चित्त्वाकार एवेष्यते न तु णच्। व्यतीक्षा व्यतिहेति यथा। सैषा व्यवस्था न्यायतो दुर्लभापि कृत्यल्युट इति बाहुलकेन समर्थनीयेति स्थितमाकरे। एवं व्यावक्रुष्टिरिति क्तिन्नपि तथैवास्तु। मास्तु च प्रकरणभेदेन स्त्रियामित्युक्तिरिति चेत्। सत्यम्। यावत्यंशे बाहुलकं विनैव निर्वाहस्तस्यांशस्य बाहुलकेन निर्वाहं स्वीकृत्य तदुपायानां प्रत्याख्याने घञादिविषयकानेकवचनवैयर्थ्यापत्तेरित्यास्तान्तावत्। सांराविणमिति। समन्तात्स्थशब्द इत्यर्थः। संशब्दो ऽभिविधिद्योतकः। पूर्ववत् सगतिकादयम्। स्वभावतश्चेदमणिनुणन्तं नपुंसकम्। अनेन नपुंसके भावे क्तो घञ् चेति उभयं वासरूपन्यायेन प्राप्तं पुनर्भावग्रहणसामर्थ्याद्बाध्यते। न च कर्त्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यम्। पूर्वसूत्रइव शब्दशक्तिस्वाभाव्यादेव कारके इनुणो ऽप्रवृत्तेः। ल्युटा तु समावेश इष्यते। संवरणमिति। तच्च बाहुलकात्

---

इष्यते हीति। ध्वनितञ्चेदं वासरूपसूत्रे भाष्ये। प्रकृतसूत्रस्थभाष्यन्तु न्यायानुगृहीततद्भाष्यविरोधादेकदेश्युक्तिरिति भावः। बाध्यतइति। वासरूपइत्यस्य बाधद्वारेति भावः। नपुंसकइत्युत्तरमेव तु न कृतम्। खलर्थविषये भावे खलादयो मा भूवन्निति। अत एव भाष्ये उक्तं ये क्तस्य बाधकास्तदर्थं पृथग्ग्रहणमिति।

भयतइत्याकरः ॥

आक्रोशे ॥ ग्रहवृद्दनिश्चिगमश्चेत्यपि प्राप्ते ऽयमारम्भः । अवग्रहः पदस्येति । छेदविशेष इत्यर्थः । निग्रहो निरोधः । पाचप्रग्राहेणेति । भिक्षापात्रोपादानेन, पात्रङ्गृहीत्वेति यावत् । लिप्सायामिम् । प्रग्रहो देवदत्तस्य । प्रकृष्टो ऽभिनिवेश इत्यर्थः । निवरा कन्येति । ग्रहवृ इत्यादिना कर्मण्यप् । ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना भाव्यम् । अजब्भ्यां स्त्रीखलना इत्युक्तेः । अत आह क्तिन्विषये ऽपीति । एवञ्च घञबन्तः पुंसीति प्रायिकन्द्रष्टव्यम् ।

रश्मौ च ॥ रथशकटादिसंबद्धायां रज्जौ रश्मिशब्दो वर्त्तते न तु रज्जमात्रे । इह बहुकृत्वो ग्रहिरुपात्तः । सकृदेव तु वक्तुं शक्यः । तथा हि उदि ग्रहः ॥ समि मुष्टौ । आक्रोशे वन्योः । प्रे लिप्सायाम् । परौ यज्ञे । अवे वर्षप्रतिबन्धे । विभाषा प्रे वणिजामित्यादि । परौ भुवोवज्ञाने । इत्यस्यानन्तरं आङि रुप्लुवोरित्यस्तु । तथा तु न कृतमित्येव । क्तादिनिवृत्त्यर्थमिति । परत्वाद्धि क्तल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधो ऽयं फलितः । एवञ्च वासरूपन्यायो नास्ति । अनपवादत्वादिति भावः । वर्षमिति । वृषभो वर्षणादिति भाष्यकारप्रयोगात् ल्युडपि भवतीति कैयटादयः । एतच्च वृषिमात्रविषयकं बोध्यम् । अत एव भीत्रार्थानामिति सूत्रे भयं भीरिति न्यासग्रन्थमुपादाय भयनमिति क्वचित्को ऽपपाठ इत्यनुन्यासादयः ॥

ॠदोरप् । नायन्तकारः किं तर्हि दकारो निरभ्योः पूल्वोरित्यारम्भात् इत्याश्रयेन दीर्घान्तादप्युदाहरति । लवः पव इति । वशिरण्योरिति । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दायन्ते ऽस्मिन्निति रणः सङ्ग्रामः । व्यद्यतइति विघसः । वैश्वदेवशिष्टमन्नम् ।

---

आकर इति । भाष्यमित्यर्थः ।

अयमारम्भ इति । घञर्थ इत्यर्थः ।

घासश्चतुष्पदाम् भक्ष्यम् । शष्पं बालतृणं घास इत्यमरः । उपजापो मन्त्रभेदः ।

प्रजने सर्त्तेः ॥ प्रजननं प्रजनः । भावे घञ् । जनिवध्योश्चेति वृद्धिप्रतिषेधः । यद्वा । ण्यन्तादेरच् । प्रशब्दो ऽत्र धात्वर्थं विपरीतयति । यथा प्रतिष्ठतइत्यत्र प्रादुर्भावस्य वैपरीत्यम् । प्रजनङ्गर्भग्रहणम् । तच्च प्रथमन्द्वितीयादिकं चेत्यत्र नाग्रह इत्येके । हरदत्तस्वरसो ऽप्येवम् । वृत्तौ तु प्रथमग्रहणमिति व्याख्यातम् । उत्तरो ग्रन्थः स्पष्टार्थः ।

भावे ऽनुपसर्गस्य ॥ हव इति । एतेन वायवायाहीत्यस्यामृचि हवशब्दव्याख्यावसरे ह्वयतिधातोर्बहुलं छन्दसीति संप्रसारणे सत्युकारान्तत्वादृदोरबित्यबिति वदन्तो वेदभाष्यकाराः प्रत्युक्ताः ॥ ड्वितः क्त्रिः ॥ अयमिति । तथा च पाकेन निर्वृत्तमिति विगृह्यते । न तु पक्वेनेति । यत्तु प्राचोक्तं भावादाविति तन्नेति भावः ।

क्त्रेर्मप् ॥ तद्धितेषु व्याख्यातमिदम् । नित्यग्रहणादिति । तत्र हि नित्यमिति योगो विभज्यते । तत्सामर्थ्यादर्थविशेषानादरेणैवाब्विषयत्वं निर्णीयते । एकयोगत्वे तन्निर्वृत्ते इत्यधिकारात् निर्वृत्तार्थस्य विवक्षायां वाक्यवारणेपि तदविवक्षायां स्वातन्त्र्यं प्रसज्येतेति भावः ।

यजयाच ॥ भावे कर्त्तरि कारके च । अत एव यज्ञेन यज्ञमयजन्तेत्यत्र इज्यतइति यज्ञ इति व्याचक्षते ।

उपसर्गे घोः किः ॥ बाहुलकात्कर्त्तर्यपीति माधवः । अत एव उप समीपे स्वधर्मंमादधातीति उपाधिरिति व्याचक्षते । वस्तुतस्तु तत्र करणे प्रत्ययः सुवचः । तदेतदाह । उपाधीयतेनेनेति । एवं विधाता विश्वस्य विधिरित्यत्रापि माभूत्किः । विधविधाने इत्यस्मादिगुपधात्किदिति इना रूपसिद्धेः । स्त्रियाङ्क्तिन् घञोपवाद इति । यत्तु प्राचो ग्रन्थं व्याचक्षाणा आहुः । भाष्ये त्वधिकः कारोधिकार इति घञप्यदाह-

---

तत्र हि नित्यमित्यादि । तद्धितेषु व्याख्यातमिदम् ।

न इति तदनिरभसात् । न हि तत्र स्त्रीत्वविशिष्टो भावोर्थः किं तु पुंस्त्वविशिष्ट इति ध्येयम् । अजपौ त्विति । तयोरवकाशः । चयः । लवः । क्तिनोवकाशः । कृतिः । हृतिः । चिनोतिस्तौतिभ्यां स्त्रियामुभयप्रसङ्गे परत्वात् क्तिन्नित्यर्थः ।

श्रुयजि ॥ परत्वात् ल्युटि प्राप्ते वचनम् । श्रुतिः श्रोत्रम् । क्तिन्नपीति । अस्त्रियामिति प्रतिषेधात् वासरूपविधेरभावादिदमुक्तम् । अङ इति । स्थादिभ्य आतश्चोपसर्ग इति कः ॥ पचेस्तु षिद्भिदादिभ्य इति प्राप्तस्येति भावः । इत्वाभाव इति । द्यतिस्यतीत्यादिना प्राप्तस्येत्वस्याभाव इत्यर्थः । हन्तेरिति । नकारस्येत्त्वम् । चिनोतेस्तु गुण इति बोध्यम् । कोर्त्तिरिति । अत्र ण्यासश्रन्थेति युचि प्राप्ते क्तिन्निपात्यते उदात्तत्वञ्च । तां स्तुते कोर्त्तिम् ॥

व्रजयजोर्भावे क्यप् ॥ उदात्त इत्येव । पित्करणन्तु उत्तरत्र तुगर्थम् । गजपार्श्वेति । तथा हि कुद्धो ज्ञायतइति भावः । भरणं भृत्या । जीविका । कुमारभृत्या गर्भिण्याः परिचर्या ऽभिधीयते इति हारावली । कुमारभृत्याकुशलैरधिष्ठिते इति रघुः । सञ्ज्ञायाङ्क्तिन् । मतिः । स्तुतिः । भृतिः । तथा च व्यवहृतम् । मतिबुद्धिपूजार्थेभ्यश्च ॥

कर्मणि भृतौ ॥ रजःकृष्यासुतीत्यादि । एतेन उक्तसौत्रप्रयोगादेव एषा साधुरिति दुर्घटाद्युक्तिः प्रत्युक्ता । क्रियेति । यदा भावकर्मणोः शः

---

करणे इति । न च परत्वात् ल्युटा बाधापत्तिर्बाहुलकेन तदप्रवृत्तेः । अत एव प्रस्थादावधिकरणे क उक्त आकरे । व्यञ्जना व्यक्तिरित्यादयः । करणे क्तिन् । युजाद्यन्ता अपि बाहुलकेनैव बोद्ध्याः ।

प्राप्तस्येति भाव इति । पुरस्तादपवादन्यायेनेति भावः । तेन ण्वुलिङ्गोः स्थायिकाप्रस्थायति सिध्यति । नकारस्येति । स्तम्बे क चेति सूत्रस्थभाष्यादिदं लभ्यते । अत्रेति । कीर्त्तेर्ण्यन्तत्वादिति भावः ।

भरणं भृत्येति । अस्मादयं भावएवेति भृञो ऽसञ्ज्ञायामिति सूत्रस्थभाष्यस्वरसः । अन्यत्र त्विति । संप्रदानादौ । ताभ्यामन्यत्रेत्यस्य तु नात्र विष-

 

तदा सार्वधातुके यक्। रिङ् शयग्लिङ्क्ष्विति रिङादेशः। अन्यत्र यगभावे शे परतो रिङादेशे कृते इयङ्॥

इच्छा॥ भावइति। न त्वकर्तरि कारकेपीत्यर्थः। परिचर्येति। कथन्तर्हि धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते इति मुरारिः। अत्र केचित्। गदमदचरेति यत्। न च वासरूपविधेः स्त्र्यधिकारे पर्युदासात् क्तिना यतो बाधः स्यादिति वाच्यम्। बाध्यबाधकयोर्द्वयोरपि स्त्र्यधिकारस्थत्वे सत्येव स्त्रियामिति पर्युदासप्रवृत्तेः। अत एव काशिकायां कथमास्येत्याशङ्क्य ऋहलोर्ण्यदिति समाधाय वासरूपविधिप्रतिषेधस्तु स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्येत्युक्तमित्याहुः। अस्मिंश्च पक्षे घञादयो ऽपि स्त्रियां स्युः। तथा च "क्तल्युट्तुमुनपुंसके भावे स्त्रियां क्तिन्नादयो यतः। अतो घञादः पुंसि परिशेषादिति स्थिति"रिति सिद्धान्तो व्याकुप्येत। अतो ऽपवादमात्रस्य स्त्र्यधिकारस्थत्वे ऽपि वासरूपविधिर्नेत्येव न्याय्यम्। अस्या चर्या इत्यादि तु बाहुलकादिति दिक्। पकारनिवृत्तिरिति। हलादिःशेषस्तु नास्ति। षाष्ठे द्वित्वे धातुद्वित्वे वा ऽभ्याससञ्ज्ञास्वीकारात्। इह तु तदुभयाभावादिति भावः। अटाट्येति। यदा तु यङन्तादप्रत्ययादित्यकारस्तदा अतो लोपे यलोपे च अटाटेति बोध्यम्। जागर्तेति। सार्वधातुके यक्। जाग्रो विचिण्णलिति गुणः।

गुरोश्च हलः॥ प्रकृतस्य धातोर्हला विशेषणात्तदन्तविधौ हलन्तधातोर्लभ्यते। न चायं गुरुरिति संभवति। अज्विशेषो हि गुरुः। अतो

---

यस्तत्रोणादिशब्देन प्रसिद्धोणादिपाठस्थानां विधेयसमर्पकोण्घटितवाक्यस्थानामेव ग्रहणादित्यन्यत्र प्रपञ्चितम्। अत एवोपादुष्याय इत्यत्रापादाने घञिति इङश्चेत्यत्र भाष्ये ध्वनितम्। करणाधिकरणयोस्तु न शो ल्युटा बाधादिति दिक्।

इत्येव न्याय्यमिति। किं च यत्ण्यतोरपि पित्र्यर्थकयोः स्त्रीत्वाद्बाहुलकाश्रयणमावश्यकम्। किं च वासरूपसूत्रे ऽसरूपपदेनापवादस्यैव ग्रहणेनास्त्रियामित्यस्यापि तः

मत्वर्थो लभ्यते तद्वाह । गुरुमत इति । ननु विपरीतमस्तु । गुर्वन्तात् हलन्त इति । मैवम् । चेष्टायामनध्वनि । आशंसायां भूतवच्चेत्यादिनिर्देशात् ॥

षिद्भिदादिभ्योऽङ् ॥ कथन्तर्हि "मधुसुरभिमुखाब्जगन्धलब्धे"रिति माघः । प्रेक्षोपलब्धिरित्यमरस्य । षित्त्वादङि लभेत्येव युचितम् । सत्यम् । अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेरिति भाष्यवार्त्तिकप्रयोगात् बाहुलकाद्वा क्तिन्नपि बोद्ध्यः । एतेन ज्ञप्तिरुपास्तिरित्यादयोऽपि व्याख्यातारः । वृत्तिकृता तु क्तिन्नाबादिभ्य इति वचनं पुरस्कृत्य सर्वं समाहितम् । एवञ्च कण्ड्वादियगन्तस्य कण्डूतिक्तिन्समर्थितः । किन्त्वेतत्सर्वं भाष्यविरोधादुपेक्ष्यम् । तथा हि । अबादिभ्यश्चेति क्तिनमुपसंख्याय निष्ठायां वा सेटोऽकारवचनात्सिद्धमिति ब्रुवतो वार्त्तिककारस्य गुरोश्च हल इति प्राप्तिस्थलएव अबादिभ्यश्चेति क्तिन्नभिमतः । तत्कथं लभेत्यङो विषये उपासनेति युचश्च विषये स्यात् । अथापि अबादेराकृतिगणत्वं स्वीकृत्य बाहुलकलभ्योऽपि अबादिकुक्षौ निक्षिप्येत । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायात् । तथाऽपि कण्डूतिरिति क्तिन्नन्तोदाहरणमयुक्तमेव । न पदान्तसूत्रस्थभाष्यविरोधात् । तत्र हि कण्डूतिरित्युदाहृत्य नैतदस्ति प्रयोजनम् । कण्डूयत्येव भवितव्यमिति निर्द्धार्य क्तिच्क्तौ चेति क्तिचि ब्राह्मणकण्डूतिरित्युदाहृतम् । न चैवंविधे भाष्यकृद्भिरेव स्पष्टं निराकृतेऽर्थे बहुलग्रहणं प्रभवति । एतेन वृत्तिकारानुगामिनः प्राचो ग्रन्थः प्रत्युक्त इत्यवधेयम् । भिदेति । एवमादयः । अजन्ताः समुदाया एव ग-

---

द्विशेषणतैव न्याय्येति बोद्धव्यम् । मत्वर्थो लभ्यतइति । मतोः सौत्रो लुगिति रहस्यम् ।

व्याख्यातार इति । बाहुलकादिति भावः । निष्ठायां वा सेट इति । न चैवमाशंसेत्यनुपपन्नमिति वाच्यम् । आशंसायामिति निर्देशेनानित्यत्वस्वीकारात् त-

ण प्रयन्ते। तत्र ये प्रकृतिभागास्ते भिदादिशब्देन सूत्रे निर्दिष्टाः। गणे विशिष्टपाठस्तु लोकसिद्धार्थविशेषकस्य क चिदलाक्षणिककार्यस्य सङ्ग्रहार्थः। प्रकृतयस्तु भिदिर् विदारणे। छिदिर् द्वैधीकरणे। विद ज्ञाने। क्षिप प्रेरणे। गुहू संवरणे। डुधाञ् धारणपोषणयोः भेदमिद हिंसागतिगमनयोः। ऋ गतौ। हृञ् हरणे। क्षि क्षये। चि निवासगत्योरिति च। तृ प्लवनतरणयोः। धृञ् धारणे। लिख अक्षरविन्यासे। चुद प्रेरणे। पीड अवगाहने। डुवप् बीजसन्ताने। वस निवासे। मृजू शुद्धौ। कृप कृपायामिति वेदितव्याः। भित्तिरन्येति। भिद्यतइति भित्तिः कुड्यम्। छिदेति। द्वैधीकरणे। अन्यत्र तु छित्तिश्छिद्रम्। गुहा दरी ओषधिविशेषश्च। अन्यच्च रूढिः। धार्यन्ते अनया अश्वा आरा प्रतोदः। आर्तिरन्या। आराधाराकारातारा धारेति पञ्चसु ऋदृशो ऽङीति गुणे दीर्घत्वं निपात्यते। लिखेस्तु गुणः। लकारस्य पक्षे रेफश्च। रेखा लेखा। चुदेर्डत्वन्दीर्घत्वञ्च चूडा॥

चिन्तिपूजि॥ चकारो ऽनुक्तसमुच्चयार्थः। तेन तोलयतेस्तुलेति हरदत्तः। घट्टिवन्दि॥ विदिर् लाभार्थो गृह्यते। ज्ञानार्थस्य तु संवित्तिः। विद चेतनाख्याननिवासेष्विति चुरादिना ज्ञाने ऽपि सिद्धम्। प्रच्छर्दिकेति। छर्द वमने। प्रवाहिकेति। प्रवाहयति मुहुर्मुहुः प्रवर्त्तयतीति ग्रहणी। विचर्चिकेति। पामा। चर्च अध्ययने। प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः। शिरोर्त्तिरिति। शिरःपीडा। अर्द हिंसायाम्। नितुद्येति नेट्। आसिका शायिकेति। आसनं शयनम् इत्यर्थः। इक्श्तिपौ। धातोर्निर्देशो ऽनुकरणम्। बहुलमित्यनुवृत्तेः क चिन्न। गुप्तिज्कि-

---

त्र लोकप्रसिद्धार्थविशेषानाह। द्वैधीकरणइत्यादि। धाताविव वृद्धिरित्याद्यभिप्रायम्। अलाक्षणिककार्याण्याह पञ्चसु ऋदृश इति। इदमुपलक्षणमृजेः पाक्षिकवृद्ध्यभावः कृपेः संप्रसारणमित्यपि बोद्धव्यम्।

ञः सन्। पचतिरिति। उपसर्गात्सुनोतिसुवति, ध्यायतेः संप्रसारणं चेत्यादिनिर्देशादकर्त्तृवाचिन्यपि परे श्नबादयः। एवं भावकर्मवाचिन्यपि क चिद्यक्। विभाषा लीयतेरिति यथा। तत्र हि लीलीङोर्यका निर्देश इत्युक्तम्। यत्तु प्राचा शित्करणसामर्थ्यात् श्नबादय इत्युक्तन्तन्न। पिबतिम्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात्। वर्णादिति। वर्णानुकरणादित्यर्थः। न तु वर्णादुच्चार्यमाणादिति। तथा हि सति अकार इत्यादावेव स्यात्। न तु ककार इत्यादौ सङ्घातस्योच्चारणात्। अनुकार्यन्त्विह वर्णमात्रम्। अकारस्योच्चारणार्थत्वात्कथन्तर्हि एवकारस्त्वकार इत्यादि। अत्राहुः। क चित्सङ्घातादपि वषट्कार इति सूत्रनिर्देशात् सर्वे चकाराः प्रत्याख्यायन्तइति भाष्यात्। बहुलवचनाच्चेति। वस्तुतस्तु विभाषा ऽग्रे प्रथमपूर्वेषु कर्त्तरि कृदित्यादौ पुनः पुनर्भाष्यकारैरुक्तत्वात्। एवकारः साधुस्त्वकारवत्। इह कारप्रत्ययस्य धातोरविहितत्वे ऽपि अधिकारबलात् कृत्सञ्ज्ञा तेन कृदन्तत्वात्प्रातिपदिकत्वं प्रयोजनाभावान्न ककारस्येत्सञ्ज्ञा। आर्द्धधातुकसञ्ज्ञाभावान्नेट्। अस्य च्वावित्यादौ न प्रत्ययो बाहुलकादेव। रादिफः॥ वासरूपविधिना ऽकारोपि। रकारादीनि नामानि शृण्वतो मम पार्वति। अकारलोप इति। अत

---

लाभार्थ इति। सकर्मकाकारविकरणच्छन्दिसाहचर्याद् व्याख्यानाच्चेति भावः। बहुलमितीति। अत एव क चिद्धात्वर्थनिर्देशे ऽपि पृच्छतौ सुस्नातादिभ्य इति वार्त्तिकप्रयोगात्। अत एवेक्षतेर्नाशब्दमिति व्याससूत्रं सङ्गच्छते। आत्वनिवृत्त्या चेति। इट् तु तितुत्रेष्वनेनापि सुशक्यवारण इति भावः। इकःकित्त्वेपि वचिस्वपीत्यादौ न संप्रसारणं प्रसिद्धत्वेन शब्दातिरिक्तार्थपरत्वेनैव तत्प्रवृत्तेरिति बोद्धव्यम्। इगित्यत्र चर्त्वंभूतो गकारः पुनर्निर्दिष्ट इत्यन्ये। वर्णानुकरणादिति। प्रतिपादनार्थकनिर्देशपदानुवृत्त्या वर्णस्यैव यत्र प्रतिपादनं तत्रैवायमिति भावः। चकार इति। सूत्रे चकारो विवक्षित इत्यादौ समुदायप्रतिपादने तात्पर्यादिति भावः। उक्तञ्चकारकरणस्य प्रयोजनमिति विभाषा वृक्षमृगेति सूत्र-

द्धितपरत्वादित्वाच्च यस्येति लोपस्याप्राप्तिः। प्रातिपदिकत्वन्तु कृदन्तत्वात्पूर्ववद्बोध्यम्। बाहुलकान्नेह च्छः। तस्मै मत्वर्थे इति। बाहुलकादेव मतुवर्थशब्दादपि। शैषिकान्मतुवर्थीयादिति यथा। अन्ये तु नैतत् कृदन्तम्। किन्तु मतुबर्थे भावे इति विगृह्य गहादित्वाच्छे तद्धितान्तमेवेत्याहुः।

इणजादिभ्यः॥ धात्वर्थनिर्देशे ण्वुलो ऽपवादोयम्। एवमग्रेपि। आजिरिति। बाहुलकादजेर्वीभावो न॥

सञ्ज्ञायाम्॥ अधिकरणे ण्वुलर्थ आरम्भः। उद्दालकः श्लेष्मातकः। तस्य पुष्पाणि भज्यन्ते यस्याङ्क्रीडायां सा तथा॥

विभाषा ऽऽख्यानपरिप्रश्नयोरिञ्च॥ अल्पाच्तरत्वेन सूत्रे आख्यानशब्दस्य पूर्वनिपाते ऽपि आख्यानस्य प्रश्नपूर्वकतया आर्थङ्क्रममनुसृत्य व्याचष्टे। परिप्रश्ने आख्याने चेति। परिपाटीति। पट गतौ। परिपूर्वः। इणजादिभ्य इतीण्। कृदिकारादिति ङीष्। आक्रोशः शपनम्॥

नपुंसके भावे क्तः॥ ननु तयोरेव कृत्यक्तखलर्था इत्येव सिद्धम्। अत्राहुः। भूते इत्यधिकृत्य निष्ठेति सूत्रेण विहितस्य क्तस्य भावो ऽर्थस्तेन विहितः। अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते। अत एवायं स्वविषये परत्वात् घञजपां बाधकः। परिशेषात्तेषां पुंविषयत्वं सिध्यतीत्युक्तम्। स्यादेतत्। इह भावे चाकर्मके-

---

स्थभाष्यप्रयोग इत्यपि बोद्ध्यम्। एतेन करणं कारश्चस्य कार इति समासेनेदं सिद्धमित्यपास्तम्। नन्वाकारपरत्वात्स्याल्लोपो ऽत आह। अतद्धितपरत्वाच्चेति। गहादित्वाच्छे इति। मत्वर्थीयस्याप्येवं सिद्धावदिं वचनं व्यर्थमित्यन्ये।

तस्य पुष्पाणीति। निसङ्क्रीडेति समासः।

इत्येव सिद्धमिति। एवञ्चात्र भावे इति व्यर्थमिति शङ्काशयः। अत एवे-

भ्य इत्यस्यासन्निधानात्सकर्मकेभ्यो ऽप्ययं स्यात् घञादिवदिति चेत्। इष्टापत्तिः। गतन्तिरश्चीनमित्यादिदर्शनात्। नन्वेवन्तद्योगे कर्मणि द्वितीया स्यात्। कृद्योगलक्षणषष्ठ्या न लोकेति निषेधात्। एवञ्च घटकृतं वृत्तं छिन्नमित्यादि प्रसज्येतेति चेत् न। नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यातत्वात्। ननु शेषविवक्षामाश्रित्य प्रत्याख्यातं तदाकरे इति चेत् तर्हि तत्प्रामाण्यात्तत्र प्रायेण शेषविवक्षैवेत्यस्तु। क्वचित्तु द्वितीया ऽपि दृश्यते। भ्रान्तन्देशमनेकदुर्गविषममिति यथा। अन्ये त्वाहुः। अयमपि क्तो ऽकर्मकेभ्य एव। तथा हि। तयोरेवेति सूत्रे भावे चाकर्मकेभ्य इत्यनुवृत्तं वाक्यभेदेन व्याख्येयम्। तद्यथा। कृत्यादयो ये तत्तत्सूत्रविहिताःताननूद्य भावकर्मणोरेवेत्यर्थविधायकमेकं वाक्यन्तेन निष्ठेति विहितस्य क्तस्य भावो ऽप्यर्थो लब्धः। अनुवृत्तेन वाक्यान्तरेण तु भावे यो ऽयक्त इत्यनूद्याकर्मकेभ्य इति विषयो व्यवस्थाप्यते। स चानुवादो निष्ठेति नपुंसके भावे क्त इति च विहितयोः क्तप्रत्यययोरविशिष्टः। आशितः कर्त्तेति सूत्रस्थं भाष्यकैयटादिक-

---

ति। कालसामान्ये विधानादेवेत्यर्थः। असंनिधानादिति। विशेष्यार्थनिर्देशेन तयोरेवेत्यस्याप्रवृत्तेरिति भावः। प्रायेणेत्यस्य कृत्यमाह। क्वचित्विति। अत्र पक्षे ऽरुचिबीजन्तु अत्र भावग्रहणमकर्तृकारकव्यावृत्त्यर्थं कृत्यल्युट इति तावद्भावे अकर्त्तरि कारके इत्यनुवर्त्तत इत्यर्थस्त्वेतद्भावग्रहणमूलक एवेति तद् ध्वनयन्नाह। अन्ये त्विति। ननु तस्य सूत्रस्य भावे एव तत्र चाकर्मकेभ्य एवेत्यर्थद्वये तात्पर्ये ऽप्याद्यांशस्य फलाभावादप्रवृत्तौ तत्सहचरितेतरांशस्याप्यप्रवृत्तिरत आह। तथा हीति। भावो ऽपीति। अपिना कर्म। अत एव तद्विधायके कर्त्तरीत्यस्य न संबन्धः। अविशिष्ट इति। शीतः क्त इतिवदस्यापि पूर्वमुपस्थितेस्तुल्यत्वादिति भावः। आशितः कर्त्तेति। तद्धि आशितशब्दे आद्युदात्तविधायकम्। तत्र हि कर्त्तरि क्तो निपातनादिति भाष्ये उक्तम्। सकर्मकत्वादशेः कर्त्तर्यप्राप्तः क्तो निपात्यतइति कैयटे उक्तम्। यदि तु अयं सकर्मकेभ्यः स्यात्तदा भावे क्तं कृत्वा तत अर्शआद्यचि कर्त्र्थकत्वसंभवान्निपातनपर्यन्तधावनं व्यर्थं स्यादिति भावः। किं च कर्तृकर्मणोरिति सूत्रे कृतपूर्वी कटमित्यत्र भावे क्तसिद्धये ऽविवक्षितकर्मकत्वाश्र-

ष्ठात्रानुगुणम्। अस्मिंश्च पक्षे अविवक्षितकर्मत्वेनाकर्मकतामाश्रित्य गतम् भुक्तमित्यादि समर्थनीयमिति दिक् ॥

कर्मणि च ॥ कर्त्तुरिति कर्मणि षष्ठी। उभयप्राप्तौ कर्मणीति नियमात् येनेति तृतीया तदाह। येन स्पृश्यमानस्येत्यादि। नपुंसके भावे इति बोध्यम्। अत एवाह। पूर्वेणेति। नेहेति। णिजर्थं प्रतीति भावः ॥

करणाधिकरणयोश्च॥ येन नाप्राप्तिन्यायेन घञो ऽपवादोयम्। एरजपौ स्त्रीप्रत्ययांश्च परत्वाद्बाधते। उक्तं हि। "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ। विप्रतिषेधेने"ति। आकुर्वन्तीति। एत्य कुर्वन्ति व्यवहारमस्मिन्न् आकरः। उत्पत्तिस्थानम्। गोचरो देश इति। तथा च भारविः। उपारताः पश्चिमरात्रगोचरादिति। विषयपर्यायो ऽप्ययम्। तथा च प्रयुञ्जते। उपादानगोचरज्ञानमिति। सञ्चरन्ते ऽनेनेति। समस्तृतीयायुक्तादित्यात्मनेपदम्। एतेन सञ्चरन्तीति प्राचः परस्मैपदपाठः प्रत्युक्तः। अवहारेत्यादि। वृत्तिकारस्तु आधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं सञ्जग्राह। तत्र वैरूप्यं निर्मूलम्॥

उदङ्को ऽनुदके॥ हलश्चेति सिद्धे उदकप्रतिषेधार्थं वचनम्। उदकोदञ्चन इति। ननु पुंसि सञ्ज्ञायामिति घे प्राप्ते घञ् विहितः। उदके तु घञि प्रतिषिद्धे घ एव स्यादिति चेन्मैवम्। प्रतिषेधसामर्थ्यात् घस्याप्रवृत्तेः। न हीह घे घञि वा रूपे विशेषोस्ति। न च स्वरे विशेषः। घे हि सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तता घञ्यपि थाथादिस्वरेण तथैवेति। जालम्। जल घातने। ज्वलितिकसन्तेभ्यो ण इति जालशब्दः सिद्धः। अतस्तन्निपातनमिह न शङ्क्यम्॥

---

यणं भाष्ये कृतन्तदसङ्गतिरित्यपि बोद्धव्यम्। समर्थनीयमिति। भ्रान्तं देशमित्यपि कृतपूर्वी कटमितिवद्भावे क्ते साधु। वस्तुतस्तत्र गत्यर्थत्वात्सकर्मकत्वे ऽपि भावे क्तः। तेन तेभ्यो विशिष्य तयोरर्थयोस्तद्विधानात्। तयोरित्यत्र न तस्य ग्रहणम्। पूर्वोपस्थितेः क्तेस्तस्य निराकाङ्क्षत्वात् इत्यलम्। कर्मणीति। संस्पर्शादित्यपे·

खनो घ च ॥ घित्करणमिति । न हि खनः चञोरिति कुत्वार्हः कश्चिदवयवो ऽस्ति येन घित्करणमिहोपयुज्येतेति भावः । एतइति । आखनादयः षडित्यर्थः ॥

ईषद्दुःसुषु ॥ इह सामान्योक्तावपि योग्यताबलात् विशेषणस्य विषयविभागो लभ्यते । कृच्छार्थे दुरिति । अकृच्छार्थयोरितरयोरिति तदेतद्दर्शयति । कृच्छे दुष्कर इत्यादिना । भवतेति । न लोकेति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छेत्यादि किम् । ईषत्कार्यम् । अल्पमित्यर्थः । निमीति । मीनातिमिनोतिदीङां ल्यपि च । विभाषा लीयतेरिति प्राप्तं निषिध्यते । निमय इत्यादि । एरच् ॥

उपसर्गात् खल्घञोः ॥ लभेश्चेत्येव सिद्धे नियमार्थमिदम् । उपसर्गादेव खल्घञोरिति तदेतदाह । उपसर्गादेवेति ॥

कर्तृकर्मणोश्च भूकृञोः ॥ चकारः सन्नियोगार्थः । यदा कर्तृकर्मणोरीषदादीनाञ्च युगपत् प्रयोगः तदा प्रत्ययो यथा स्यात् । न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्त्विति वाच्यम् । तथात्वे ईषदादीनामेवोपपदत्वात खलः खित्त्वस्य वैयर्थ्यापत्तेः । मुमर्थं हि तत् । मुम् चानव्ययस्य विधीयते । तस्मात्कर्तृकर्मणोरित्युपपदमेव । तदेतदाह । ईषदादिषु चेति । इह कर्तृकर्मणी द्वे भूकृञौ च द्वौ तयोर्यथासंख्यं प्राप्तं स्वीकृतञ्च तथैव वृत्तिकृता । अनुसृतञ्च तदेव न्यासकारहरदत्तमाधवादिभिः । एवञ्च प्राचापि तथैवोक्तम् । तद्व्याख्यातृभिस्तथैवानुमोदितन्तदेतत्सर्वं नादर्तव्यमिति ध्वनयन्नाह । यथासंख्यं नेष्यतइति । एतच्च यथासंख्यसूत्रे भाष्यएव स्पष्टमिति भावः । स्यादेतत् । चव्यर्थयोरिति तावत् इहैव सूत्रे भाष्यवार्त्तिकयोः

---

क्षेयेति भावः । कर्तृत्वञ्च प्रत्यासत्त्या विधेयप्रकृत्यर्थनिरूपितं बोद्धव्यम् । एरजिति । पचाद्यचो ऽप्यत्र ग्रहणमित्यन्ये ।

उपसर्गादेवेति । खल्घञोरेवेति नियमस्तु न व्याख्यानादिति भावः । वैयर्थ्या-

 

स्पष्टम्। एवञ्च यथासंख्यनिराकरणस्य फलन्दुर्वचम्। न हि भवतेः कर्मणि संभवः प्राप्त्यर्थेऽकर्मकत्वात्। प्राप्त्यनुभवादिषु सकर्मकत्वेऽपि च्व्यर्थासङ्गतेः। नापि करोतेः कर्त्तरि संभवः। च्व्यर्थासङ्गतेरेवेति चेत्। तत्किं यथासंख्यसूत्रस्थं भाष्यादिकमिति ब्रूषे। ननु तस्य गतिं पृच्छामीति चेत् शृणु। अन्तर्भावितण्यर्थस्य भवतेः करोतिना कर्मकर्तृविषयस्य करोतेश्च भवतिना तुल्यार्थतया भवतेः कर्मणि करोतेः कर्तरि चोपपदे खल्प्रत्ययसिद्धिरेव यथासंख्यनिराकरणस्य फलमित्यवधेहि। स्यादेतत्। उपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिद्ध्यति। कर्तृकर्मणी हि भूकृञोरव्यवहिते इष्येते। विपरीतञ्च प्राप्नोति। ते प्राग्धातोरिति वचने सुदुरोः प्राक्त्वाभावात्। न च व्यवहितेऽपि प्राक्त्वमस्त्येवेति वाच्यम्। छन्दसि परेऽपि व्यवहिताश्चेति सूत्रारम्भेणेहाव्यवहितप्राक्त्वमेवार्थ इति स्वीकारात्। न चैवं खलः खित्त्वस्य वैयर्थ्यं स्यादिति वाच्यम्। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति सुदुर्भ्यां विशिष्टस्य खिदन्ततया ततः पूर्वस्य कूलमुद्रुजादाविव मुमः संभवात्। किं च ईषच्छब्दस्य गत्यादिसञ्ज्ञारहितत्वेन ते प्रागित्येतत्सूत्राविषयतया व्यवहितप्रयोगसंभवेन तत्र मुमर्थं खित्त्वमस्तु। तस्मादिष्टव्यवस्था कथं लभ्येतेति चेत्। अत्राहुः। बहुलग्रहणानुवृत्त्या दुराढ्यम्भवमित्यादिभाष्योदाहरणाच्च इष्टव्यवस्थासिद्धि-

---

पत्तेरिति। किञ्च चोपि व्यर्थः। यदुत्तरञ्चशब्दस्तत्सदृशसमुच्चयाङ्गीकारेणोपपदसमुच्चयासंभवादित्यपि बोद्धव्यम्। च्व्यर्थासङ्गतेरिति। अभूततद्भावस्य सत्तार्थ एव संभवो न तु प्राप्त्यर्थे। एवमघटो घटः करोतीत्यर्थे घटीकरोतीत्यस्यासंभव इति भावः। अव्यवहितप्राक्त्वमेवेति। उत्तराङ्गविकल्पस्य तस्मादित्युत्तरस्येत्यस्य प्रवृत्तेरिति भावः। मुमः संभवादिति। ईषदाढ्यम्भव इत्यादौ ईषत्पूर्वपदस्य खलोऽनभिधानमिति ते प्राग्धातोरिति सूत्रस्थभाष्यस्वरसः। गत्यादीति। आदिनोपसर्गत्वम्। केचित्तु व्यवहिताश्चेति योगविभागात्तत्र छन्दसीत्यननुवृत्त्या लोकेऽपि क

रिति। तदेतत्सु कत्वमभिप्रेत्याह। कर्तृकर्मणो चेति। भवतेः कर्त्तर्यु-दाहरति। अनाढ्येनेति। कर्मणि तु अनाढ्यः आढ्यो भूयतइति वि-ग्रहः। भाव्यतइति तदर्थः। एवमग्रे ऽपि विग्रहद्वयमन्नेयम्। यत्तु प्राचा अदुराढ्येन दुराढ्येन भूयतइत्यादि विगृहीतम्। तन्न। व्य-र्थविशेषकस्य दुर आढ्यशब्देन सह सामर्थ्याभावात् समासायोगा-त्। प्रत्युदाहरणे तु ते प्राग्धातोरित्यस्य निर्बाधत्वादाह। भूयतइ-ति। काशिकायान्तु स्वाढ्येन भूयतइत्युक्तन्तत्प्रामादिकमिति हर-दत्तः॥

क्तिच्क्तौ॥ प्राचा तु क्तिच्क्तौ चेति पठित्वा क्तिच् कृच्च स्यादिति व्याख्याय कृदुक्तिः क्तिचा बाधा मा भूदिति पठितन्तदाकरविरो-धादुपेक्ष्यम्। क्तिचश्चकारो न क्तिचीति विशेषणार्थमिति प्राञ्चः। तन्न। एकानुबन्धकपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः। यत्तु वदन्ति। तितुत्रेत्यत्र क्तिन्क्तिचोः सामान्यग्रहणार्थश्चकारः। अन्यथैकानुबन्धकत्वात् अस्यैव ग्रहणं स्यान्न क्तिन इति। तन्न। ति-तुत्रेति सूत्रे ऽनुबन्धविशिष्टरूपानुच्चारणेनोक्तपरिभाषाया उक्तिसंभव-स्यैवाभावात्। एतेन तितुत्रेति सूत्रे एकानुबन्धकत्वात्क्तिचेव गृह्येत॥ ततश्च रोदितीतीणन स्यात् इति शङ्का कृतीत्यनुवृत्त्या तत्समाधानं-च्चेति द्वयमपि प्रत्युक्तम्। भूतिरिति। यद्यपी ह परत्वात् श्र्युकः किती-त्येव इणिनषेधो न्याय्यः। तथापि वन्तितन्त्योरावश्यकत्वात्फले विशे-षाभावाच्च तितुत्रेत्युपन्यस्तम। यन्तिरित्यादि। यम उपरमे। रम क्रीडायाम्। वनु याचने। तनु विस्तारे॥

अनङ्क्त्वोः॥ पूजार्थमिति। ननु विकल्पार्थमस्तु। अक्तं रुदित्वा ऽक्तं रोदनेनेति रूपद्वयं दृश्यते इति चेन्न। वासरूपन्यायेनैव सिद्धेः।

---

चिद् व्यवहितप्रयोगज्ञापनान्न दोषः। अत एव सङ्ख्यानियमप्रयोगनियमपक्षयोर्न फलभेद इत्याहुः॥

ननु ल्युटि वासरूपन्यायो नास्ति। क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धान्तात् इति चेन्न। क्तल्युडादयो ऽपवादभूताः स्ववाध्यं नित्यं बाधन्त इति हि तस्यार्थः। इह तु ल्युटो ऽपवादः क्त्वेति वैषम्यात्। ननु प्रैषादिषु कृत्यवचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत् किं ततः। इह तदभ्युपगमे बाधकाभावात्। अनन्दत्वेति। अपात्रे न देयमित्यर्थः॥

उदीचाम्॥ मेङः कृतात्वस्यायं निर्देशो नानुबन्धकृतमनेजन्तत्वमिति ज्ञापयति। तेन घुसञ्ज्ञायान्दैपोप्यदाबिति पर्युदासः सिध्यति। अपमित्येति। समासे ऽनञ्पूर्वइति वक्ष्यमाणेन क्त्वो ल्यप्॥

परावरयोगे च॥ अप्राप्येति। दक्षिणदेशस्थानाङ्गङ्गामप्राप्य विन्ध्यः। गङ्गाप्राप्तिविरहविशिष्टदेशस्थ इत्यर्थः। अत्र विन्ध्यात्परा गङ्गेति गम्यते। अतिक्रम्येति। पर्वतस्य परस्तादित्यर्थः। प्रागुक्त एव विषये अयमपि प्रयोगः। विशेषणविशेष्यसंसर्गास्तु भिद्यन्तइति

---

इह तदभ्युपगमे इति। स्त्र्यधिकारादूर्ध्वं क्वचिद्वासरूपविधेरभाव एव तेन ज्ञाप्यतइति भावः।

मेङ इति। ङानेशिष्टस्येत्यर्थः। इह। व्यतिहारे तस्यैव वृत्तिर्न तु माङ इति भावः। समासे इति। गतिसमासे इत्यर्थः॥

परावरेति। अवरशब्दो ऽत्र पूर्ववृत्तिवाची। परावरशब्दयोः संबन्धिशब्दत्वाद्यदपेक्षं परावरत्वं गम्यते तयोः परावराभ्यां योगो बोध्यः। स च क्रियाद्वारकत्वेन साक्षाद्वा क्रियया सर्वोप्यत्र गृह्यते। तत्र यस्य यत्क्रियाद्वारकः संबन्धो यया क्रियया वा तद्वाचकात्क्त्वः आद्योदाहरणे स्थितइति शेषः। पूर्वत्वादिकञ्च तत्पुरुषतत्तदवधिभेदेन भिन्नन्तदाह। दक्षिणदेशस्थानामिति। प्राप्तिविरहेति। प्राप्तिप्रागभावेत्यर्थः। स च सामानाधिकरण्यसंबन्धेन पर्वतकर्तृकस्थितावन्वेति तदाह। विशिष्टदेशस्थ इति। फलितमाह। अत्रेति। अत्र परभूतया नद्या ऽप्राप्येत्येतद्द्वारको योगः पर्वतस्य गम्यते। अतिक्रम्येत्युदाहरणे दक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिध्वंससमानाधिकरणा नदीकर्तृका स्थितिरित्यर्थस्तदाह। पर्वतस्येति। भिद्यन्ते इति। उक्तरीत्येति भावः। साक्षात्क्रिययान्वये त्विदमुदा-

स्पष्टमेव । इह त्रिसूत्र्यां विधेयस्य क्त्वाप्रत्ययस्य यद्यपि भावमात्रम् अर्थस्तथा ऽपि द्वितीयक्रियायाः पूर्वकालत्वस्य चाभावात् । अलङ्खल्वोरिति परावरेति च लभ्यते । उदीचामिति तु पूर्वकालत्वाभावादिति विवेकः । एवञ्चेह मध्यमं विहाय सूत्रद्वये अधिकारलभ्यस्यातुसंबन्धइत्येतन्न संबन्धनीयम् । कथञ्चित्संबन्धनीयमित्याग्रहे तु अपूर्वकालायैव त्रिसूचीत्यवधेयम् ॥

समानकर्तृकयोः ॥ इह धात्वधिकारे ऽपि समानकर्तृकत्वं क्रिययोरेव संभवतीत्याशयेनाह । धात्वर्थयोरिति । निर्द्धारणे षष्ठी सप्तमी वा । पूर्वः कालो यस्यार्थस्य तस्मिन्नित्यर्थः । क्त्वा स्यादिति । स च भावे । अव्ययकृत इति वचनात् । तुमर्थ इत्यनुवृत्तेर्वा । न च सो ऽपि भाव इति कथं लभ्यतामिति वाच्यम् । तुमर्थे सेसेनिति ज्ञापकेन तल्लाभात् । तथा हि । कर्त्तरि कृदिति कर्त्तरि प्रसक्तौ तुमर्थइत्युच्यते । तथा च तुमर्थो न कर्त्तेति स्थिते भाव एव पर्यवस्यति । अ-

---

हरणम् । अनेगांसमिति विगृह्याविकशब्दादुत्पत्तिरिति । विग्रहो भिन्नत्वेन ज्ञानन्तदुत्तरकालिकी प्रत्ययकर्तृकोत्पत्तिरित्यर्थः । परावरत्वञ्चात्र तादृशज्ञानोत्तरकालिकत्वात्प्रत्ययोत्पत्तेर्लोकव्यवहाराद्विवक्षितम् । असमानकर्तृकत्वात्समानकर्तृकयोरित्यस्य न प्राप्तिः । स्पष्टञ्चेदमलङ्खल्वोरिति सूत्रे कैयटे । द्वितीयक्रियाया इति । क्त्वाप्रकृत्यर्थक्रिययान्वितायाया इत्यर्थः । पूर्वकालत्वस्य चेति । परावरेति सूत्रविषये समानकर्तृकत्वस्य चाभावइत्यपि बोद्धव्यम् । कथञ्चिदिति । परावरेति सूत्रविषये स्थितिक्रियामादाय परावरद्वयाद्यविषये ऽपि अध्याहृतक्रियामादाय तत्संबन्धसंभव इति भावः । परावरयोर्योगस्तत्तत्कारकक्रियायोगेनैवेति अस्यैव धात्वर्थसंबन्ध इति बोद्धव्यम् ॥

समानकर्तृकत्वमिति । समानशब्द एकवाची । तन्निरूपितशक्तेर्भेदाद्विशिष्टभेदेन सादृश्यम् । एवञ्चैककर्तृकत्वं फलतीत्यन्ये । तुमर्थ इत्यनुवृत्तेर्वेति । तदनुवृत्त्या एषाञ्कृत्रर्थत्वाभावे बोधिते विशेष्यार्थानिर्देशात्स्वार्थे स च संभव एवेति

निर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात्। अयमिह निष्कर्षः। भावो ऽपि घञादाविव नेह सिद्धावस्थः किं तु साध्यावस्थः स च धातुनैव लभ्यः। क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणम्। धातुसंबन्धाधिकारात्। संसर्गश्चेह सामानाधिकरण्यमुत्तरकालत्वञ्च। तत्र संसर्गविशेषे तात्पर्यग्राहकाः क्त्वाणमुलादयः। अत्र समानकर्तृकयोरिति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम्। धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानात्। निर्द्धारणविभक्त्या च द्योत्यत्वं स्फुटीकृतम्। अन्यथा हि समाने कर्तरीत्येव ब्रूयात्। निर्द्धारणविभक्तिबलादेव पूर्वकालइत्यस्य बहुव्रीहित्वं निर्णीयते। निर्द्धारणस्य सजातीयविषयतानियमेन निर्द्धार्यमाणस्य क्रियात्वलाभात्। अत एव तत्र विद्यमानादिति व्याख्यानम्। एवञ्च कर्मधारयमाश्रित्य पूर्वस्मिन्काले वाच्ये क्त्वा भवतीति केषाञ्चिद्व्याख्यानमयुक्तमेव। किञ्च पूर्वकालो न वाच्यः। तद्विशेष्यकबोधापत्तेः। न चेष्टापत्तिः। क्रियाप्राधान्यविरहेण आभीक्ष्ण्यद्वित्वाभावापत्तेः। न च गुणीभूतक्रियामाश्रित्य तदिति वाच्यम्। पाचकादावतिप्रसङ्गात्। अपि च। एवं सति धातुसंबन्धइत्यस्य बाधापत्तिः। न च परम्परासंबन्धस्तस्यार्थः। अधिकृतस्य तस्य यथाविध्यनुप्रयोग इत्यादिसूत्रद्वयविषये साक्षात्संबन्धपरतायाः दृष्टत्वात्। तथात्वे लाघवाच्च। अत एव वाक्यार्थस्थानापन्नसंबन्ध एवेह द्योत्यो न तु पदार्थभूत इति कर्मप्रवचनीया-

---

भावः। किञ्चेति। अत एव भावे इत्युपेक्ष्य तुमर्थे इत्युक्तम्। संसर्गश्चेति। भोजनोत्तरकालिकं व्रजनमिति बोध इति भावः। विशेषणनिष्ठः संसर्ग इति मते पूर्वकालः संसर्गः। भोजनपूर्वकालिकं व्रजनमिति बोध इत्यूह्यम्। समानकर्तृकेति। स च कप्प्रत्ययदर्शनात्। बहुव्रीहित्वमिति। व्यापारश्चान्यपदार्थ इति भावः। तद्विशेष्यकमिति। भोजनपूर्वकालकं व्रजनमिति रीत्येतिभावः। सूत्रद्वयविषये इति। क्रियासमभिहारादिलोटोऽयमर्थः। लाघवाच्चेति। परम्परया च प्रत्ययार्थस्येतरत्राऽन्वयः

द्वैषम्यम् । तत्र हि उपपदविभक्तेः षष्ठ्यपवादतया संबन्धस्य पदार्थत्वे सिद्धे क्रियाया द्योतको नायं न संबन्धस्य वाचकः । नापि क्रियापदार्थेपी संबन्धस्य तु भेदक इति स्वीकृतम् । किं च पूर्वत्र क्त्वाप्रत्ययस्य कालो न वाच्य इति तदैकरूप्यायेहापि तथैवोचितम् । न हि सप्तमीनिर्देशमात्रेण वाच्यत्वं लभ्यते । उदो ऽनूर्ध्वकर्मणि । कर्तृस्थे चाशरीरे कर्मणि । प्रथने वावशब्दे । गोत्रचरणात् श्लाघात्याकारतद्वेतेषु । इत्यादौ सहस्रशो व्यभिचारात् । तत्रानुशासनस्य तत्तद्विशेषावगतिरार्थेपादेव भवत्यनन्यलभ्यत्वमिति यदि तर्होहापि तुल्यमिति दिक् । द्वित्वमिति । ननु अमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् प्रत्ययो न स्यादिति चेत् नैवम् । इह हि आख्यातवाच्यक्रिया प्रधानम् । तां प्रति क्त्वान्तोपस्थिताः सर्वा एव विशेषणम् । न तु तासां परस्परं संबन्धः । गुणानां

---

याय संबन्धान्तरकल्पनागौरवमिति भावः । यद्यपि प्रत्ययार्थस्य प्राधान्यमिति न नियम आख्याते व्यभिचारात् । तथा ऽपि कर्मधारयत्वे पूर्वकाले इत्यस्य वैयर्थ्यं भूतइत्येव सिद्धेः । भूतत्वञ्च समभिव्याहृतक्रियापेक्षन्तत्व पूर्वकालवत् इति दिक् ॥ परे तु पूर्वकाले इति तद्गुणसंविज्ञानो बहुव्रीहिः । पूर्वकालविशिष्टक्रियावाचकाद्धातोरित्यर्थः । एवञ्च पूर्वकालप्रकारको बोधः । वर्त्तमानकालादिर्लडादिवत्तस्य क्त्वा द्योतकः । अत एव पूर्वं भुङ्क्ते पश्चाद्व्रजतीत्यत्र न क्त्वा । पूर्वशब्देन क्रियागतपूर्वकालस्योक्ततया धातोः पूर्वकालविशिष्टक्रियावृत्तित्वाभावात् । पूर्वकाले द्योत्ये हि क्त्वा न तु विषये इति भाष्यकैयटयोः स्पष्टम् । उक्तार्थानामिति न्यायस्य तु नात्र विषयः । तस्यानित्यत्वात् । एतदेव ध्वनयता भाष्यकृतोक्तम् । इह कस्मान्न भवति आस्यते भोक्तुमिति । अन्यथा तत्र तुमुना तादर्थ्यबोधद्वारा पूर्वकालत्वस्यास्थाने द्योतितत्वात्तदप्रवृत्तौ तदसङ्गतिः स्पष्टैव । उक्तञ्च कैयटेन आसेः पूर्वकालत्वाद्भावस्य च प्रतिपाद्यत्वादासित्वा भोक्तुमिति प्राप्नोतीति भाव इति । वासरूपन्यायेन लडिति समाहितमित्यन्यत् । क्त्वा भावे पूर्वकालविशिष्टक्रियावाचकत्वन्तुमुनः समभिव्याहारादिति तदाशयः । न हि तत्रासनोत्तरकालिकं भोजनमिति बोधः

परार्थत्वादिति न्यायात्। अत एव नियतप्रयोगः स्नात्वा भुक्त्वा पीत्वा व्रजति। पीत्वा स्नात्वा भुक्त्वा व्रजतीत्यादि। स्वरतिसूतीति विकल्पे प्राप्ते आह। स्वरत्यादेरिति। स्वृत्त्वेति। एकाच इति नेट्॥

मृड मृद॥ मृड सुखने। मृद क्षोदे। गुध रोषे च। कुष निष्कर्षे क्लिश हिंसायां दिवादिः। क्लिशू विबाधने क्र्यादिः। वद व्यक्तायां वाचि। वस निवासे। उषित्वेति। वसतिक्षुधोरितीट्। यजादित्वात्संप्रसारणम्। शासिवसीति षः॥

नोपधात्॥ अन्तग्रहणं स्पष्टार्थम्। कोथित्वा रेफित्वेति। कुथ पूतीभावे। रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। इह रलो व्युपधादिति विकल्पोऽपि न भवति। नोपधग्रहणसामर्थ्यात्। लुञ्चित्वेति। लुञ्च अपनयने। वञ्चित्वेति। वञ्चिः सौत्रो गत्यर्थः। तस्मादिधातुकविषये इयङो विकल्पनात् तदभावे कित्त्वमनेन विकल्प्यते॥

तृषिमृषि॥ ञितृषा पिपासायाम्। मृष तितिक्षायाम्। कृश तनूकरणे। काश्यपग्रहणं पूजार्थं वेति हि वर्त्तते। उदितो वेति विकल्पे प्राप्ते आह। अञ्चेरिति। अञ्चित्वेति। न क्त्वा सेडिति कित्त्वा-

---

कस्यापि सम्मतः भोजनफलकं पूर्वकालशासनमिति बोधस्तु भाष्यसंमतः। अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाऽन्येभ्यो व्रजितृभ्योऽनन्तरं व्रजतीत्यर्थे तु पूर्वं भुक्त्वा पश्चाद्व्रजतीत्युचितमेवेत्याहुः। समानकर्तृकत्वन्तु न क्त्वार्थः सामानाधिकरण्यसंसर्गेणान्वयं तस्यार्थल्लाभेनान्यलभ्यत्वात्तथा भुक्त्वैव तृप्तो न पीत्वापीत्युत्तिष्ठतीत्यादौ क्वचिद्व्याप्यनादिभानेऽपि मानान्तरगम्यत्वान्न तस्य क्त्वाद्योत्यता। इति न्यायादिति। यत्तु अनेन न्यायेनाख्यातोपस्थितक्रियाविशेषणत्वे एवायं साधुरिति। तत्र तृज्वत्क्रोष्टुरिति सूत्रस्थे आहत्य तृचो यच्छास्त्रमिति भाष्यप्रयोगे शास्त्रशब्दप्रतिपाद्यशास्त्रकरणकशासनक्रियापेक्षपौर्वकाल्याश्रयः प्रत्यय इति कैयटोक्तेः। अत एव भुक्त्वा गत इत्यादिप्रयोगोपपत्तिः। क्रियान्तरान्वितक्रियायां नान्वय इत्येव मूलतात्पर्यन्तदुक्तं भाष्ये ऽनन्त्यस्येति वक्तव्यम्। न वक्तव्यं सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यमत एवानियतः प्रयोग इति। न च ऋफऋमृफेत्यत्राद्यव्यावृत्त्यर्थं नोपधग्रहणमिति वा-

भावान्नलोपो न ॥ एवञ्चेह नाञ्चेः पूजायामिति नलोपो नेति प्रसादोक्तिर्निर्विषया ॥

जॄव्रश्च्योः ॥ जॄ इत्यस्मात् श्र्युकः कितीति निषेधे प्राप्ते श्र्युरुदित्त्वादिकल्पे प्राप्ते वचनम्। खात्वा खनित्वेति। उदितो वेति वेट्। जग्ध्वेति। झरो झरीति पाक्षिको धलोपः ॥

समासेऽनञ् ॥ नञ्महद्भमव्ययन्तत्पूर्वपदं यस्येति व्याचष्टे। अव्ययेति। प्रकृत्येति। प्रशब्दः क्त्वाप्रकृत्यर्थगतं प्रकर्षं द्योतयन् कुगतिप्रादय इति क्त्वान्तेन नित्यं समस्यते ॥

षत्वतुकोरसिद्धः ॥ को ऽसिचदिति। एङः पदान्तादतीति पूर्वरूपमेकादेशः। तस्यान्तादिवच्चेति परादिवद्भावे ओसिचदिति पदम्। तेन सकारस्यापदादितया सात्पदाद्योरिति निषेधाभावात् षत्वं प्राप्तम्। एकादेशस्यासिद्धत्वे अकारेण व्यवधानात् इणः परत्वाभावान्न भवति। प्रासङ्गिकं षत्वमुदाहृत्य प्रकृतं ल्यपि कार्यमुदाहरति। अधीत्येति। विधायेति। दधातेर्हिः। प्रदाय। दो दद्घोरिति न। प्रखन्य। जनसनेत्यात्वं न। प्रस्थाय। द्यतिस्यतीतीत्वन्न। प्रक्रम्य। क्रमश्च क्त्वीति दीर्घो न। आपृच्छ्य। प्रदीव्य। च्छ्वोः शूठौ न। इडभावस्तु प्रखन्य प्रदीव्येत्यादावेव बोध्यः ॥

न ल्यपि ॥ कथन्तर्हि "निपीय यस्ये"ति। पीङ् पाने दिवादिरित्य-

---

च्यन्तस्मिन्कृते ऽपि न क्त्वेति निषेधेनाफित्वेत्यस्यावेन दुर्वारतया द्वितीयस्यानेन विकल्पेन ऋफित्वेत्यस्य दुर्वारतया च विशेषाभावात्। न च चुरादीनामनित्यण्यन्ततया णिजभावे पृथक् प्रक्षेप इति व्यावृत्त्या चरितार्थमिति वाच्यम्। सर्वेषामनित्यण्यन्तत्वे मानाभावात्।

तत्पूर्वपदं यस्येति। क्त्वान्तोत्तरपदकस्येत्यर्थः। तेन परमकृत्वेत्यादौ स्नात्वाकालक इत्यादौ मयूरव्यंसकादिसमासे च न दोष इति भावः। अनञ इत्येव सिद्धे पूर्वग्रहणं स्पष्टार्थमिति ध्वनितमनञो वा परस्येति भाष्येण। क्रमश्च क्त्वीति। अनुनासिकस्य-

दोषः। इह प्रशाय प्रस्थायेत्यत्र शाच्छोरन्यतरस्यामिति प्राप्तस्येत्वस्याप्यभावो बोध्यः। विगणय्येति। नन्विह णौ कृतस्याल्लोपस्य पूर्वस्मादपि विधौ स्थानिवद्भावात् लघुपूर्वात्परत्वं नास्ति। न चारम्भसामर्थ्यम्। अनुगमय्येत्यादौ मित्तु चरितार्थत्वात्। अत्रोच्यते। पूर्वस्माद्विधौ स्थानिवत्त्वं नित्यं निष्ठायां सेटीति लिङ्गात्। तथा हि। तत्र सेटीति पदं न तावदनिड्व्यावृत्त्यर्थम्। णिजन्तात्तदसंभवात्। ननु सञ्ज्ञपितः पशुरित्यत्र यस्य विभाषेतीण्निषेधे संभवत्येवानिट्त्वम्। सनीवन्तेति विकल्पितेट्कत्वादिति चेन्न। यस्य विभाषेत्यत्र एकाच इत्यनुवृत्तेः। अन्यथा दरिद्रित इतीण्न स्यात्॥ तस्मात्कालावधारणार्थं सेड्ग्रहणम्। इटि कृते णिलोपो न तु ततः प्रागिति। अन्यथा कारितमित्यादौ णिलोपे क्ते एकाच उपदेशऽइतीण्निषेधः स्यादिति। यदि तु पूर्वस्माद्विधौ स्थानिवत्त्वन्तर्हि णिचा व्यवधानात् निषेधप्राप्तिरेव नास्ति इति सेटीत्यनर्थकं सत्तस्यानित्यताञ्ज्ञापयति इति स्थितम्। एतच्च वसेक्काजिति सूत्रे कैयटेनानितेरन्त इति सूत्रे हरदत्तेन च स्पष्टमेवोक्तम्। माधवस्तु परिवृढय्य गत इत्यत्र आभीयत्वेनासिद्धतामाशङ्क्य व्याश्रयत्वेन परिहृत्य पूर्वस्मादपीति स्थानिवत्त्वमाशङ्क्य प्रवेभिदय्य प्रस्तनय्येत्यादिभाष्योदाहरणबलेन तदभावमाह। अथ वा पूर्वस्मादपीति पञ्चमीसमासपक्षस्यज्यतान्तदीयोदाहरणानां बेभिदिता माथितिकः अपीपचन्नित्येषां प्रकारान्तरेणैव निर्वाहस्य प्राग-

---

त्वस्याप्युपलक्षणमिदम्।

इत्वस्याप्यभाव इति। तादिकित्त्वाभावेन ल्यपि कृते तदप्राप्तेः। ल्यपः पूर्वमपि नान्तरङ्गानपीति न्यायात्। आरम्भसामर्थ्यमिति। तेन च स्थानिवद्भावकृतव्यवधानेऽपि प्रवृत्तिरिति भावः। दरिद्रित इति। तन्निपतिदरिद्रातीति विकल्पितेट्त्वादिति भावः॥ भाष्योदाहरणबलेनेति। एकाच उपदेश इत्यत्र विहितविशेषणपक्षे सेटीति चिन्त्यप्रयोजनमिति तद्भावः। अथ वेत्यादि। अचः परस्मिन्निति सूत्रस्थकैयटानु-

वोक्तत्वाच्छब्दकौस्तुभे प्रपञ्चितत्वाच्चेति दिक्। प्रणमय्येति। मितां ह्रस्वः। प्रवेभिदय्येति। भिदेर्यङन्तात् णिचि अल्लोपे यस्य हल इति यल्लोपः। न च ह्रस्वयल्लोपाल्लोपानामाभीयत्वेनासिद्धत्वाल्लघुपूर्वात्परो णिर्नास्तीति वाच्यम्। व्याश्रयत्वात्। ह्रस्वादयो हि णौ णेरयादेशस्तु ल्यपि परत इति॥

विभाषापः॥ आप्नोतेरिति। इङादेशस्य तु लाक्षणिकत्वान्नेह ग्रहणमिति भावः। प्राप्येति। एतेन "अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते" इति व्याख्यातम्। अवाप्येत्यस्यावापय्येत्यर्थात्। एतेन तत्रान्तर्भावितण्यर्थेति क्लेशमनुभवन्तः परास्ताः। कथमिति। ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो ऽत्र दुर्लभः। तद्विधौ पूर्वकालेत्युक्तेः। न चेह तदस्ति पूर्वं ह्यसौ स्वपिति पश्चाद्व्यादत्ते। तदैव संमीलयति इति प्रश्नः। समाधत्ते। व्यादानेति। एतेन ईश्वरः सर्वं व्याप्य वर्त्तते। ज्ञात्वा तिष्ठतीत्याद्यपि व्याख्यातम्। श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते इत्यादौ समानकर्त्तृकतानिर्वाहार्थं स्थितस्येत्यादि यथासंभवमध्याहार्यम्। पाय्यंपाय्यमिति। आतो युक्। वा दीर्घ इति। गमेर्ण्यन्तात्णमुलि मितां ह्रस्व इति ह्रस्वे च कृते वा दीर्घ इत्यर्थः। ण्यन्तस्यापीति। यत्तु प्राचा ण्यन्तजागर्त्तेश्चिण्णमुलो वा वृद्धिरिति मतमुपन्यस्तम्। तदपाणिनीयमिति भावः॥

न यदि॥ अनाकाङ्क्ष इति पचाद्यजन्तं नञ्समासः। तदर्थंय-

---

सारेणोक्तं वस्तुतस्तु चिन्त्यमिति प्रागेव निवेदितम्। दिगिति। दिगर्थस्तु लघुः पूर्वो यस्मादिति बहुव्रीहावन्यपदार्थस्यानभिमतोः साजात्येन वर्णस्यान्यपदार्थतया वर्णजातिग्रहणान्न दोषः। न चैवं प्राचिकीर्ष्येत्यादौ दोषः। जातिग्रहणेनेकग्रहणे ऽपि वर्णद्वयस्यैव ग्रहणात्। अत एव सनि मीमेत्युत्तरं दम्भ इच्च आपूज्ञप्यृधामिति दम्भेरपीताभ्यां नलोपसंयोगादिलोपाभ्यां सिद्धे दम्भ इच्चेति इत्वविधानञ्चरितार्थम्। इत्वाभावे हि सनि मीमेति वर्णद्वयसत्त्वेन किस्वानापत्तेः। अइउ अपोहेत्यादावपि द्वयोरेव प्रगृह्यत्वापत्तौ

ति । नाकाङ्क्षते चेदिति । इहेति । नन्वनन्तरस्येति न्यायात् णमुल् मा भूत् क्त्वा तु सूत्रान्तरेण स्यादेवेति चेन्न । पूर्वकाले यत्प्राप्नोति तन्नेति व्याख्यानेन प्रकरणापेक्षयैव प्रतिषेधाभ्युपगमात् ॥

विभाषाग्रेप्रथमपूर्वेषु ॥ यद्यप्यग्रशब्दो देशविशेषवचनो ऽप्यस्ति प्रभोरग्रे भुङ्क्ते इति तथापीह कालविशेषवाच्येव गृह्यते प्रथमशब्दसाहचर्यात् अग्रे इति सप्तम्यन्तस्यानुकरणम् । अत एव विभक्तेर्लुङ् न कृतः । अस्यवामीयमितिवत् । अग्रेभोजमिति । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वेत्यर्थः । यदि तु अग्रेप्रभृतिभिर्व्रजनादिक्रियापेक्षं भुज्यादेः पूर्वकालत्वमुच्येत तदा क्त्वाणमुलौ न स्यातामेव ताभ्यां द्योत्यस्य पूर्वकालत्वस्य अग्रेप्रभृतिभिरेव निर्णीतत्वात् । स्वादुमीत्यर्थग्रहणं व्याख्यानात् तदाह । स्वाद्वर्थेष्विति । मान्तत्वमिति । ननु मास्तु णमुल् खमुञेवानुवर्त्तताम् । अरुर्द्विषदिति मुम् भविष्यत्येवञ्च मान्तत्वनिपातनं व्यर्थमिति चेत् मैवम् । तथा हि सति च्व्यन्तस्य मुम् न स्यात् । अनव्ययस्येति वचनात् । ततश्च स्वादुङ्कारमित्यत्र च्वौ चेति दीर्घः स्यात् । संपन्नादिषु अस्य च्वाविती त्वं स्यात् । किं च स्त्रियां वोतो गुणवचनादिति ङीष् स्यात् । ततश्च स्वाद्वीङ्कारमिति प्रसज्येत । मुमः स्वरूपेण विधाने ऽप्येते दोषाः । अतः स्वादुमीति रूपं निपात्यते ॥ ततश्चानजन्तत्वान्नेत्वदीर्घौ न वा ङीष् निपातनञ्च भावप्रत्ययमात्रविषयकम् ।

---

आकरतात्पर्यम् ।

अन्येभ्यो भोक्तृभ्य इति । साधनपौर्वकालविषयाणामेव प्रादीनाङ्ग्रहणमत्रेति समानकर्तृकयोरिति सूत्रे भाष्यकैयटाभ्यामुक्तत्वादिति भावः । णमुलिति तत्सूत्रविहितक्त्वोऽप्युपलक्षणम् । स्वादुङ्कारमिति । खितीति ह्रस्वे मुमिति भावः । एते दोषा इति । ङीषि स्वाद्वीङ्कारमिति । प्रसज्येतेति शेषः । न च प्रत्ययसंनियोगेन मुमो विधानादन्तरङ्गत्वेन पूर्वं प्रवृत्तौ नैते दोषा इति वाच्यम् । सुबन्तस्योपपदत्वेन प्रियकुत्सनादिषु ततः प्रवर्तते ऽसौ विभक्त्यन्त इति भाष्योक्तरीत्या

तेन स्वादुङ्कृत्येत्यपि सिद्धम्। व्यर्थत्वादिति। निष्प्रयोजनत्वादित्यर्थः। तदेव दर्शयति। इत्थं भुङ्क्तइत्यर्थ इति। फलितार्थकथनमेतत्। शाब्द-बोधे तु वैलक्षण्यमस्त्येव। तथा हि क्रियासामान्यवचनः करोतिः। तदीयश्च प्रकारो ऽन्यथादिशब्दचतुष्टयेनोच्यते। एवञ्चान्यथाकारमि-त्यादिभिश्चतुर्भिः प्रकारविशेषविशिष्टा क्रिया बोध्यते। सा च भुज्युपा-त्तफलविशिष्टक्रियां प्रति विशेषणतया संबध्यते। एकस्या अपि क्रियाया विशेषणोपरागेण भिन्नाया विशेषणविशेष्यभावसंभवात्कथन्तर्हि सि-द्धाप्रयोगश्चेदित्युक्तमिति चेत्। अनतिप्रयोजनत्वादिति गृहाण। न त्विह सर्वथा निष्फलत्वमिति, अभिधेयशून्यत्वमिति वा भ्रमितव्यम्। भेदनिबन्धनस्य पौर्वकालस्य समानकर्तृकत्वस्य चाभावे णमुल एव दु-र्लभत्वात्। धातुसंबन्धाधिकारबाधापत्तेश्च। अथापि वचनसामर्थ्याण्ण-मुल अपार्थकमेव णमुलन्तं प्रयोक्ष्यतइति ब्रूषे एवमपि वासरूपवि-धिलभ्यः पाक्षिकः क्त्वा न सिध्येत्। न चेष्टापत्तिः। भाष्यकृतैव तत्र प्र-युक्तत्वात्। एतेन व्याकरणाधिकरणे अन्यथाकृत्वा विदितम्। अन्य-था कृत्वा परिहारः। कथङ्कृत्वा बाधकम्। इत्यादिभाष्यप्रयोगानुदाहृ-त्य तेषां प्रामादिकतां वदन्तो भट्टपादा अपि पूर्वपक्षे स्थित्वा प्रौढि-

---

स्वार्थद्रव्यलिङ्गसंख्यानां क्रमिकत्वेन सुपः प्रागेव ङीपः प्रवृत्त्यादोषादिति भावः। निपात्यतइति। ननु निपातनमाश्रित्य खमुञेव विधीयतां किं णमुलेति चेन्न। खमुञि अव्ययार्थमेव निपातनं स्यादिति ङीषुत्रानापत्तेः। णमुलि त्वपूर्वं विधी-यमानन्तत्वं सर्वार्थमुत्तरार्थञ्च णमुलिति कैयटादयः। भावप्रत्ययमात्रेति। एतत्प्र-करणस्थभावप्रत्ययमात्रविषयकं निपातनमिति हरदत्तोक्तेरिति भावः। परं तु ण-मुल्विषयमेव निपातनं अत एवास्वादुङ्कृत्वेति भाष्यं सङ्गच्छते। अन्यथा सा-क्षात्प्रभृतिष्विति सूत्रभाष्योक्तरीत्या मान्तत्वनिपातनमित्यस्य स्वादुशब्दस्य स्वादु-मादेश इत्यर्थे लिङ्गविशिष्टपरिभाषया तस्यापि तदादेशापत्तावसङ्गतिः स्पष्टैवेति हरदत्तोक्तिरसङ्गता। स्वादुङ्कृत्वेत्यस्य स्वादुमन्नं कृत्वेत्यर्थः। उपपदत्वाभावान्न समास इत्याहुः। इत्यपीति। स्वादुङ्कारमित्यपेरर्थः। विशेषणतयेति। अभेदेने-

मात्रञ्चक्रिरित्यवधेयम्। न तु तदुक्तिः पारमार्थिकत्वेन ग्राह्या। सूत्रकारवचनबलेन णमुलन्तमपार्थकं प्रयोक्तव्यमिति स्वीकारे भाष्यकारवचनबलेन क्त्वान्तेपि तथात्वस्य सुवचत्वात् वस्तुतः क्वाप्यपार्थकता नेत्युक्तत्वात्। न च औपाधिकभेदमादाय क्त्वाप्रत्ययनिर्वाहस्यासांप्रदायिकत्वं शङ्क्यम्। भाष्यकारादप्यधिकस्य सांप्रदायिकस्याप्रसिद्धत्वात्। तदभिप्रायस्य यथातथेति सूत्रे हरदत्तादिभिरित्थमेव विवृतत्वात्। उत्तरमीमांसायामपि अन्योन्यस्मिन् अन्योन्यात्मकतामध्यस्य सत्यानृते मिथुनीकृत्य लोकव्यवहार इति भाष्यकारैः प्रत्युक्तत्वात्। तच्चापि विवरणादावित्थमेव समर्थितत्वाच्चेति दिक्। शिरो ऽन्यथा कृत्वेति। इह हि करोतेरभावे भुजिक्रियागत एव प्रकारो गम्यते न तु शिरसो ऽन्यथाकरणम्। अत आवश्यकः करोतिरिति भावः। यथाकारमिति प्रष्टुमनर्हः सन् यदि पृच्छति तदेदमुत्तरम्। अत्रापि वासरूपन्यायेन पक्षे क्त्वा बोध्यः। कन्यादर्शमिति। अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थे ऽन्वयात्साकल्यं बोध्यम्। सर्वा इति। दर्शनविषयीभूताः सर्वा इत्यर्थः। अतिशयप्रतिपादनपरमेतत्। जानातीत्यादि। सत्तार्थस्य विदेरकर्मकत्वान्नेह ग्रहणम्। किन्त्वितरेषामिति भावः॥

यावतिविन्दजीवोः॥ विदेर्लाभार्थस्यानुकरणान्तस्य विन्दतीत्यादौ शे मुचादीनामिति नुमस्ति। यावल्लभत इति। असाकल्यमनेन दर्शयति। साकल्ये हि पूर्वेणैव सिद्धम्॥

चर्मोदरयोः॥ कर्मणीत्येवेति। एवञ्च पूरेरिति एयन्तस्य निर्देशः।

---

अर्थः। सर्वथा भेदाभावे विशेषणविशेष्यभावासंभवादाह। एकस्या अपीति। क्वाप्यपार्थकता नेति। अर्थान्तरे संभवति तथा कल्पना ऽनुचिता चेत्यपि बोद्धव्यम्। इत्थमेवेति। सत्यानृतमिथुनीकरणं विना लोकव्यवहारासिद्धेरिति भावः।

न तु केवलस्याकर्मकत्वादिति भावः । उदरमिति । उदरपूरणविशिष्टा भुजिक्रियार्थः । इह पूर्वकालइति न संबध्यते ऽसंभवात् । अप्रतीतेश्च । एवमन्यत्रापि यथासंभवं बोध्यम् ॥

चेले क्नोपेः ॥ व्याख्यानादर्थग्रहणमित्याह । चेलेति । चेलक्नोपमिति । यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इत्यर्थः । निमूलमिति । निर्गतं मूलमस्य निमूलम् । सह मूलेन समूलम् । विशेषणविशेष्यभाव इति । णमुल्प्रकृत्या अनुप्रयुज्यमानधातुना च यद्यप्येक एवार्थ उपस्थितस्तथापि उपपदार्थविशिष्टो णमुल् प्रकृत्यर्थो ऽनुप्रयोगार्थं प्रति विशेषणमिति भावः ॥

स्नेहने पिषः ॥ शुष्कचूर्णेति सूत्रएव स्नेहनग्रहणं न कृतम् । तत्र हि कर्मणि दृशिविदोरिति सूत्रात्कर्मणीत्यनुवर्त्तते इह तु पूर्वसूत्रात्करणे इति ॥

सञ्ज्ञायाम् ॥ अनधिकरणार्थमारम्भः । मूलकेनोपदंशमिति । अयमर्थः । मूलकेन भुङ्क्ते । किङ्कृत्वा उपदश्य किमुपदश्य अर्थान्मूलकमिति । वचनसामर्थ्यादिति । यदि हि तृतीयान्तेन शब्दे अन्वये सत्येव प्रत्ययो भवेत्तर्हि करणइत्येव ब्रूयात् । करणे हन इतिवदिति भावः । कालयतीति । कल विक्षेपे चुरादिः । दण्डताडमिति । तड प्रतिघाते चुरादिरेव । उपपूर्वेभ्य इति सूत्रे पीडादीनां समाहारद्वन्द्वङ्कृत्वा उपपूर्वः पीडादिरिति उत्तरपदलोपी समास इति भावः ।

---

दर्शनविषयीभूता इति । साकल्यमपि तदपेक्षयैव बोद्धव्यम् । शब्दायन्ते इति । धातूनामनेकार्थत्वादार्द्रीकरणं क्नोपेरर्थ इत्यन्ये । प्रतिविशेषणमिति । अत्र प्रकरणे शाब्दबोधमात्रीयं किञ्चिद्वैलक्षण्यमाश्रित्य णमुलन्तानामनुशासनबलात्साधुत्वं बोद्ध्यम् ॥

तर्हि करणे इत्येवेति । एतेन दन्तैरुपदश्य भुङ्क्ते इत्यर्थे इत्यादौ वचनञ्चरितार्थमिति परास्तम् । न च दध्ना सह सक्तून् भुङ्क्ते इत्यर्थे दध्युपदंशं सक्तू-

पुंस्त्वन्तु सौत्रम्। पञ्चम्यर्थे प्रथमा। कर्षेति अपा निर्देशः। कृतोपधागुणस्योच्चारणात्तत्फलन्तु तुदादेर्व्युदासः। यद्यपि विलेखनएव सोऽपि पठ्यते तथाऽपि क्षेत्रविषयएव विलेखने तस्य वृत्तिः। पञ्चभिर्हलैः कृषतीति दर्शनात्। एवञ्च तौदादिकात् क्त्वाप्रत्यय एव भवति। क्षेत्रे उपकृष्य हलेनोपकृष्य। न त्विह पांसुलिति स्थितमाकरे॥

समासत्तौ॥ केशग्राहमिति सन्निकर्षप्रतिपादनपरमेतत्। केशेषु ग्रहणं भवतु वा मा भूत्। द्व्यङ्गुलोत्कर्षमिति। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्। तत्पुरुषस्याङ्गुलेरित्यच् समासान्तः। द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः। उत्खः खण्डः खण्डिका॥

द्वितीयायाञ्च॥ अथ कथमनुदात्तं पदमेकवर्जमिति। न ह्यत्र त्वरा गम्यते। अत्राहः। इहापि त्वरा विवक्षिता। तथा हि। परिभाषेयम्। तेनोदात्तः स्वरितो वा यत्र विधीयते तत्र समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्त्तव्यम् न विलम्बितव्यमिति। यष्टिग्राहमिति। एवं नाम युद्धाय त्वरन्ते यदासन्नं यष्ट्यादिकमपि गृहीत्वा धावन्ति न युद्धं प्रतीक्षन्तइति भावः॥

अव्यये॥ अयथाभिप्रेतशब्दः आख्यानक्रियाविशेषणम्। यथाभिप्रेतं न भवति तथा आख्याने इत्यर्थः। तदेतदाहायथेत्यादिना। नीचैः कृत्येति। यद्यपीह प्रियाख्यानमभिप्रेतं तथापि तत् प्रकारस्य नीचैस्त्वस्यानभिप्रेतत्वमस्त्येवेति भवत्युदाहरणम्। अत एव। अयथाभिप्रेताख्यानइति सूचितम्। न पुनरप्रियाख्यानइति। तिर्यक्कृत्वेति। अनृजुत्वादग्रतः स्थितं पार्श्वे क्षिप्त्वेत्यर्थः॥

---

न्भुङ्क्ते इत्येतस्मिन्नर्थे तृतीयाग्रहणञ्चरितार्थम्। तादृशे विषये उपदंशनिरूपितार्थकर्मत्वस्यापि सत्त्वेनोपपदविभक्तेरिति न्यायेन तृतीयाया दुर्लभत्वात्। न च वचनसामर्थ्यात्समासप्रत्ययाद्युपपत्तावपि मूलकेनोपदंशमित्यत्र समासाभावपक्षे कृद्ग्रहणपरिभाषया विशिष्टे प्रातिपदिकसञ्ज्ञापादनं समासग्रहणकृतनियमेन वारण-

स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ तस् चासौ प्रत्ययश्चेति कर्मधारयः । तस्प्रत्यये परतो यत्स्वाङ्गन्तस्मिन्नुपपदे इति प्राञ्चः । तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथाऽपि तस्मिन्नित्येतत्प्रकृतिप्रत्ययसमुदायपरमिति बोध्यम् । इह यथासंख्यं नेष्यते इति ध्वनयन्नुदाहरति । मुखतःकारमिति । मुखतोभूयेति च । आद्यादित्वात्सप्तम्यर्थे तसिः । प्रत्ययग्रहणं किम् । मुखे तस्यति मुखतः । तसु उपक्षये क्विप् । अधातोरित्युक्तेरत्वसन्तेति दीर्घो न । मुखतः कृत्वा गत इति काशिका । एतच्च प्रत्ययाप्रत्ययपरिभाषामनाश्रित्योक्तम् । वस्तुतस्तु नार्थः प्रत्ययग्रहणेन ॥

नाधार्थ ॥ नार्थौ नानाञौ । धार्थो धमुञादयः । द्वैधङ्कृत्य । द्वैधङ्कारम् । द्वैधंभूय । द्वैधंभावम् । यद्यपि धमुञादिविधौ ध इत्यनुवर्त्य तेषामादेशत्वाश्रयणात् स्थानिवद्भावेनापि सिद्धम् तथापि धमुञन्तात्स्वार्थे डदर्शनमिति डप्रत्ययान्तस्य सङ्ग्रहार्थमर्थग्रहणम् । द्वैधीकृत्येत्यादि ॥

तूष्णीमि ॥ कृञो निवृत्त्यर्थं भूग्रहणम् ॥

---

ञ्चासङ्गतं स्यात् । प्रत्यासत्त्या कृत्प्रत्ययार्थनिरूपितकारकत्वस्यैव ग्रहणादिति वाच्यम् । उपदंशे कर्मत्वेनाप्यर्थान्वयसत्त्वात्तन्निरूपितकारकत्वाक्षतेः । विभक्तिस्तु प्रधानानुरोधिनी तृतीयैव परत्वाच्चेति बोद्ध्यम् । स्थितमाकरे इति । धनुरिरभिरसह्यं मुष्टिपीडन्दधाने इति भट्टिप्रयोगे तु न णमुलन्तं किं तु घञन्तं क्रियाविशेषणत्वाच्च द्वितीयेति बोद्ध्यम् ।

न विलम्बितव्यमिति । एतच्च हरदत्तग्रन्थे स्पष्टं सौत्रत्वात्तत्साध्विसन्ये । अनृजुत्वादिति । गमनप्रतिबन्धकत्वमनृजुत्वम् । अग्रतः स्थितं काष्ठमित्यर्थः । इहेति । तत्र यद्यपीति । तत्प्रत्ययान्ते स्वाङ्गे उपपदे इत्यर्थस्तूचितः । प्रत्ययपयोः प्रकृत्योश्चेत्यर्थः । नेष्यतइति । यथासंख्यसूत्रस्थभाष्यप्रामाण्यादिति भावः । नार्थ इति वस्तुतस्तदनित्यत्वज्ञापकम् । तेन सनः क्तिचोऽप्यादौ सन्धातोर्ग्रहणं सिद्ध्यति । अनुवर्त्येति । एकाद्ध इत्यत इति भावः । सिद्धमिति ।

 

अन्वच्यानुलोम्ये ॥ नन्विह अच इत्यकारलोपे चाविति दीर्घे अनूचीति निर्देष्टुमुचितम्। उदक्प्रतीचो यदितिवत्। स्यादेतत्। अच इत्यर्थवतो ग्रहणं स चार्थो लोकप्रसिद्ध एव गृह्यते। अभिव्यक्तपदार्था ये इति न्यायात्। अतो ऽनुकरणे न भविष्यतीति। एवन्तर्हि स्त्रियो दीर्घादित्यादावियङादिकं न स्यात्। प्रकृतिवदनुकरणमित्यतिदेशाद्भवतीति चेत्। तर्ह्यचाप्यतिदेशादेवास्तु। एवञ्च तिर्यच्यपवर्ग इति सूत्रे ऽपि तिरस्चीत्येव निर्देष्टुमुचितम् इति चेत् सत्यम्। प्रकृतिवदित्यतिदेशस्य वैकल्पिकत्वाददोषः॥ वैकल्पिकत्वन्तु यत्तदेतेभ्य इति सूत्रे त्यदाद्यत्वस्य करणादेकशेषाभावदर्शनाच्च निर्णीयते इति प्रागेव प्रपञ्चितम्। अग्रत इत्यादि। अन्वक्शब्दस्य आनुकूल्यमात्रे विश्रान्तेर्देशविशेषे प्रमाणं नास्तीति सूचयितुमिदम्। पृष्ठतो भूत्वेति। इह अनुकूलो ऽननुकूलो वेति शब्देन न स्पृश्यते। अन्वक्शब्दस्य देशविशेषमात्रे पर्यवसानात् प्रमाणान्तरेण क्वचिदानुकूल्यलाभे ऽपि अन्वक्शब्दस्य तत्समर्पणे व्यापारविरहात् णमुल् न। किन्तु क्त्वैवेति व्यवस्था बोध्या॥ इति कृदन्तप्रक्रिया समाप्ता॥

---

एवञ्च धांशे नार्थग्रहणोपयोग इति भावः। निरनुबन्धकपरिभाषाया अनित्यत्वे तु नांशेपि नोपयोग इति बोद्ध्यम्। भूग्रहणमिति। अत एव च्व्यर्थइति नानुवर्त्ततइति भावः। इति प्रागेवेति। सौत्रो निर्देश इति भाष्यम्। इत एव प्रकृतिवदित्यतिदेशो ऽनित्य इति तद्भावः। किं तु क्त्वैवेति। उपपदसमासोऽपि नेति बोद्ध्यमिति शिवम्। विस्तरस्तु बृहच्छब्दरत्ने मदन्तेवासिकृते बृहच्छब्देन्दुशेखरादौ च द्रष्टव्यः॥ इति कृदन्तं संपूर्णम्॥

श्रीगणेशाय नमः ॥

अथ वैदिकशब्देषु विशेषमाह ॥

षष्ठीयुक्त इति ॥ वृषन्निति । कनिन्युवृषीति कनिनन्तस्य वृषन्शब्दस्य भत्वमुपसंख्यायते । तत्फलन्तु नलोपस्य णत्वनिषेधस्य चाभावः । लोके तु वृषवसुः । वृषाश्वः । उभयसञ्ज्ञानीति । अयस्मयादिषु चक्षुतेत्यादयः समुदाया एव बोध्याः । तेन जश्त्वमस्तु कुत्वं मा भूदिति वैपरीत्यं न प्रसज्यतइति बोध्यम् । नैनमिति । वाचामिनाः प्रभवः । तेष्वपि एनं विद्वांसं न छिन्दन्ति विवदितुं न गच्छन्तीत्यर्थः ॥

ते प्राग्धातोः ॥ ते गत्युपसर्गसञ्ज्ञा धातोः प्रागेव प्रयोक्तव्या इति प्रयोगो नियम्यते अस्यापवादश्छन्दसीत्यादि सूत्रद्वयम् । इह सञ्ज्ञानियमपक्षो ऽपि भाष्ये स्थितः । तथा हि । ते इत्यनेन प्रादीनुपनिषत्पर्यन्तान्स्वरूपेण परामृश्य धातोः प्राक्प्रयुक्तानामेवैषां सञ्ज्ञेति व्याख्येयम् । एवञ्च छन्दसीत्यादिसूत्रद्वयं न कर्तव्यम् । न चैवं लोके ऽपि यथेच्छं प्रयोगापत्तिः । क्वचिदिष्टापत्तेः । तथा च माघः । वारुणीमदविशङ्कमथाविस्स्वक्षुणो ऽभवदसाविव राग इति । भवति प्रतीत्यादि तु नापादनीयम् । अनभिधानात् । सूत्रस्य प्रयोगनियमार्थत्वे ऽपि घटस्य पट इत्यादीनामनभिधानेनैव वारणीयत्वात् । एवञ्च कर्तृकर्मणोरश्चेति सूत्रे स्वाम्येन भूयतइति वृत्तिग्रन्थो ऽप्यस्मिन्पक्षे सङ्गच्छते इति दिक् ॥

इति प्रथमोध्यायः ॥

---

तेष्वपीति । निर्द्धारणे सप्तमी । तत्समुदायान्तर्गताः केचिदपीत्यर्थः । नियम्यतइति । अत्र पक्षे ते इत्यस्य जातिपरत्वेन व्याहृतमित्यादौ न दोषः । अत एव गतिरनन्तर इत्यत्रानन्तरग्रहणञ्चरितार्थम् । एषा सञ्ज्ञेति । तत्सूत्रैकवाक्यतयेति भावः । सूत्रद्वयमिति । अनुकरणञ्चेति सूत्रे ऽमितिपरग्रहणञ्चेश्यपि बोद्धव्यम् । वृत्तिग्रन्थो ऽपीति । सुकटंकराणीति भाष्यग्रन्थो ऽप्यर्थः ॥ इति

यवाग्वाख्यमिति । न च यवाग्वग्निहोत्रशब्दयोर्भिन्नविभक्त्यवरुद्धतया तदर्थयोरभेदान्वयो न संभवतीति वाच्यम् । विभक्त्योर्भेदेऽपि कर्मार्थकतया अविशेषेणाविरुद्धार्थकत्वात् । विभक्तिभेदमात्रस्याकिञ्चित्करत्वादिति भावः । यद्यपि गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ दिवः कर्म चेत्यादीनामुदाहरणेषु विभक्तिविकल्पेऽपि विशेषणविशेष्ययोरेकविभक्तिकत्वनियमो लोके दृष्टस्तथापि वेदे नास्तीति ध्येयम् । प्राभाकरास्तु तृतीया चर्चोरिति सूत्रेण करणे द्वितीया विधीयतइत्याहुः । तन्न तत्र सूत्राक्षरानुगुणं न वा भाष्याद्यनुगुणमित्युपेक्ष्यम् । ह्वनति शयतइति । ह्वन्ति शेते इत्यर्थः । त्राध्वं त्रायध्वम् । दाति । ददाति । विवष्टि वष्टि । इह सप्तमान्ते वक्ष्यमाणेन बहुलं छन्दसीति सूत्रेणाभ्यासस्येकारो बोध्यः ॥

मन्त्रे घस ॥ ह्वृ कौटिल्ये अस्य कृतगुणस्यानुकरणं ह्वरेति । अकारस्तूच्चारणार्थः । अज्ञतेति । अजनिषतेत्यर्थः । ऐतरेयब्राह्मणे हरिश्चन्द्रं प्रति वरुणस्येदं वचनम् । विभाषेति । एतेन इह सूत्रे सिच इत्यनुवर्त्य सिचः स्थानिभूतो यो च्लिरिति व्याख्यानात् च्लिङ्लिटौ नेति हरदत्तग्रन्थः परास्तः । लोपस्य वैकल्पिकतया छन्दसि च रूपान्तर-

---

प्रथमोऽध्यायः ॥

भिन्नेति । यवाग्वेति तृतीया ऽग्निहोत्रमिति द्वितीयेति भावः । भेदमात्रस्येति । स्वरूपभेदमात्रस्येत्यर्थः । भिन्नार्थकविभक्त्यवरुद्धयोरिव न तथान्वय इति भावः । एकविभक्तिकत्वनियम इति । एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवतीति कृञ्चानुप्रयुज्यतइति सूत्रभाष्ये उक्तत्वादिति भावः । करणे द्वितीयेति । अयं भावः । अग्निहोत्रशब्दः कर्मनामधेयं स एष यज्ञः पञ्चविधो ऽग्निहोत्रं दर्शपूर्णमासावित्यादिदर्शनात् । हूयते त्यज्यते ऽस्मिन्निति होत्रम् । अग्नेर्होत्रमिति समासः । अत एव केषाञ्चिदन्तोदात्तपाठः श्रुतौ । एवञ्चाग्निहोत्राख्येनेष्टं भावयेदित्यर्थ इति । तत्र सूत्रेति । कर्मणीत्यधिकारात् । नापि भाष्येति । तत्र तृतीयाविधानार्थमिदं द्वितीया तु कर्मणीत्येव सिद्धेति सिद्धान्तिनोक्तम् । वष्टीति

स्यानापाद्यतया सिजनुवृत्तेर्वैफल्यात्। द्वितीयोऽङ्गारः॥

आद्येषु चतुर्ष्विति। तत्रापि सद्विजनिरमिभ्यो णिजन्तेभ्य आम्। चिनोतेस्तु श्लुङ्क्षादिति बोध्यम्। लोकइति। वेदेऽपि पाक्षिकमिदं बोध्यम्। विदाङ्कुर्वन्त्विति पूर्वसूत्रादन्यतरस्यांग्रहणस्येहानुवृत्तेः। पावयामिति। पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङि आम्। क्रियादित्यनुप्रयोगः। विदामक्रन्निति विदेर्लुङ्याम्। गुणाभावः। लुङन्तकरोत्यनुप्रयोगः। मन्त्रे घसेति च्लेर्लुक्॥ झोन्तः। अक्रिति। प्रागुक्ते तु तिपि सार्वधातुकगुणे हल्ङ्यादिलोपः इति विशेषः॥

गुपेः॥ आयप्रत्ययाभावस्थलएवेदं सूत्रे केवलस्योच्चारणात्। अगौप्तमिति। ऊदित्त्वादिडभावे वदव्रजेति वृद्धिः। झलो झलीति सिचो लोपः। इट्पक्षे तु अगोपिष्टम्। आयप्रत्ययपक्षे ऽगोपायिष्टम्। इत्यष्टत्वारि छन्दसि। भाषायान्तु चङन्तं वर्जयित्वा त्रीण्येवेति विवेकः। त्वायतस्त्वामिच्छतः। ऊरितुः स्तोतुर्मम काममभिलाषं मा ऊनयीः। ऊनं माकार्षीरित्यर्थः। मा ऊनन इति भाषायाम्। ऊन परिहाणे चुरादावदन्तः। ध्वन शब्दे। चुरादिरदन्तः। घटादिर्नान्तश्च। भाषायान्तु अदध्वनत्। घटादेरदिध्वनत्। इल प्रेरणे चुरादिः। ऐलयीत्। भाषायान्तु ऐलिलत्। अर्द गतौ याचने च। अर्द हिंसायाम्। हेतुमति च। आर्दयीत्।

---

प्राप्तम्॥

वैफल्यादिति। एवञ्च लिग्रहणमपि व्यर्थम्। सिच इत्यनुवर्त्य तस्यैव लुक्सिद्धेः। आदेः सिच इत्यस्य वैकल्पिकतया रूपान्तरस्यानापाद्यत्वेन तदप्रवृत्त्यर्थं लिग्रहणमित्यपि न शङ्क्यमित्यपि बोद्धव्यम्॥ इति द्वितीयः॥

प्रागुक्ते त्विति। कृञो लुङि मन्त्रे घसेति च्लेर्लुकि सार्वधातुकगुणे इत्यपि बोद्धव्यम्। इट्पक्षे त्विति। नेटीति वृद्धिप्रतिषेधाद् गुणोऽत्र पक्षे॥

भाषायान्त्वादिवत् । यत्तु प्राचा नोनयतीति सूत्रं लौकिकेऽपि सञ्चारयता इयमपि लौकइत्युक्तम् । तन्न । छन्दसीत्यस्यानुवृत्तेः काशिकादिसकलग्रन्थसंमतत्वात् । वैयर्थ्यात्तदननुवृत्तौ तु चङो दुर्लभत्वात् । यत्तु विभाषा धेट्श्व्योरिति विभाषाग्रहणमिहानुवर्त्तते न तु छन्दसीति तदाश्रयवर्णनम् । तदपि न । सूत्रे नञो वैयर्थ्यापत्तेरित्यास्तान्तावत् । अभरदिति । व्यत्ययेन परस्मैपदम् । यत्तानोरिति । यत्तु इमामृचं व्याचक्षाणैरुक्तम् । रुहेर्लङि अपि सञ्ज्ञापूर्वको विधिरनित्य इति लघूपधगुणो न भवतीति । तत् प्रौढिवादमात्रम् । लोके तु अक्षार्षीत् । असृत । अहारीत् । अरुक्षत् ॥

छन्दसि निष्ट ॥ क्यपि प्राप्तइति । ऋदुपधाच्चेति सूत्रेणेति भावः । नञ्जणि वदेरिति । न च यत्येव दीर्घो निपात्यतामिति वाच्यम् । यतोऽनाव इत्याद्युदात्तापत्तेरिति भावः । अत्र श्लोकवार्त्तिकम् ।

निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् ।
ण्यदायादेश इत्येतौ उपचाय्ये निपातितौ ॥
ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिस्तुः ॥

व्यत्ययमिति । आद्यन्तविपर्यासमित्यर्थः । चतुर्भ्य इति । देवहूयादिषु चतुर्षु चतुर्भ्यो धातुभ्यः क्यप् । उपसर्गभेदान्नयतेर्भेदः । द्वौ क्यपाविति । द्वाभ्यां धातुभ्यां द्वाविति भावः । धनुरिति सुबन्तम् । चतुरो वारान् ण्यद्विधीयतइत्यर्थः ॥

---

चुरादावदन्त इति । तस्मात् णिचि चङि णौ कृतस्याल्लोपस्य स्थानिवत्त्वाल्लशब्दस्य द्वित्वम् । अग्लोपित्वान्न सन्वद्भावदीर्घोपधाह्रस्वत्वानि । प्रौढिवादमात्रमिति सञ्ज्ञापूर्वकविधेरनित्यताया भाष्यासंमतत्वाच्चेत्यपि बोद्धव्यम् । अदारीदिति । सूत्रे दृइति दीर्घपाठे इदं ह्रस्वपाठे दतेति बोद्धव्यम् ॥

आद्यन्तविपर्यासमिति । प्रत्ययव्यत्ययमित्यपि बोद्धव्यम् । तदुक्तं षत्व-

छन्दसि ॥ वन षण सम्भक्तौ। इति भ्वादिगणे स्वरू निर्दिष्टौ गृह्येते। न तु वनु याचने षणु दाने इति तानादिकौ । सानुबन्धकत्वात्सूत्रपठितयोरेव ग्रहणस्य न्याय्यत्वाच्च । गोषणिमिति । चेचं वनति । गां सनतीति विग्रहः । सुषामादित्वात्षत्वम् ॥

हव्येनम् ॥ हव्यशब्दे उपपदे वहेर्ण्युट् स्यात् पादान्ते ॥

जनसन ॥ जन जनने । जनी प्रादुर्भावे । द्वयोरपि ग्रहणम् । षणु दाने षण सम्भक्तौ । द्वयोरपि ग्रहणमित्याहुः । अत्र च व्याख्यानं शरणम् ।

मन्त्रे ॥ श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन् स्यात् । अन्तोदात्तण्विककार्यार्थं निपातनम् । श्वेतशब्दे कर्तृवाचिनि उपपदे वहेः कर्मणि प्रत्ययः। उक्थे कर्मणि करणे वा उपपदे शंसतेः प्रत्ययः । नलोपश्च । दाशृ दाने । अस्य पुरस्पूर्वस्यादेर्डत्वं कर्मणि च प्रत्ययः ।

अवयाः श्वे ॥ चकारादुक्थशाः । एतच्च पाक्षिकम् । तथा च कैयटादयः । उक्थशादित्यपि संबुद्ध्यर्थं निपातनं कर्त्तव्यम् । यदि मन्त्रे दर्शनमस्तीति । अररिवानिति । रा दाने लिटः क्वसुः । वस्वेकाजाद्घसामितीट् आदन्तत्वात् । नञ्तत्पुरुषे ऽव्ययपूर्वपदप्रकृतिस्वरः । दीर्घादटीति नकारस्य रुत्वम् । आतोऽटि नित्यमिति रोः पूर्वस्यातो नित्यमनुनासिकः । भविषये तु वसोः संप्रसारणे कृते वलादित्वाभावादिडभावः । एतेन मानः शंसो अररुषा इत्यादि व्याख्यातम् । प्रसङ्गादघायुशब्दं साधयितुमाह । छन्दसीति । आत्मन इति विशेषणा-

---

निपातनादिति । ननु प्रयोगद्वये न यतेरेव प्रकृतित्वाच्चतुर्भ्य इत्यसङ्गतमत आह ॥ उपसर्गभेदादिति ॥

न्याय्यत्वाच्चेति । अकारविशिष्टयोरेव सूत्रे पाठाच्चेत्यपि बोद्धव्यम् । पादान्तइति सूत्रस्वारस्येनाद्यपादादावपीष्टत्वेनेदं चिन्त्यम् ॥

निपातनमिति । धातूपपदसमुदायानामिति बोद्धव्यम् । वहेः कर्मणीति ।

दृप्राप्तिः । अवायुरिति । अस्याचस्यादिति वक्ष्यमाणेनाकारादेशः । जवसवाविति । ऋद्दोरपो ऽपवादो ऽच् स्वरार्थं विधीयते ।

लेटोडाटौ ॥ आगमौ स्त इति । तौ च पर्यायेण न तु यौगपद्येन अड्विधिसामर्थ्यात् । अन्यथा सवर्णदीर्घे कृते विशेषाभावात् आडुत्तमस्येति सूत्रात् मण्डूकप्लुत्या पिच्चेत्यनुवर्त्तत इत्याशयेनाह । तौ च पिताविति । तत्फलन्तु यद्योग्या अश्वै ये विकन्दसौ उर्वरासु नवैते इत्यादौ गुणः । वृत्तौ तु पिद्ग्रहणं नानुवर्त्तितम् । तत्र छन्दस्युभयथेति सार्वधातुकत्वाद्विकरणः । आर्द्धधातुकत्वात् ङित्त्वाभावाद्विकरणस्य गुणः । अत एव क्व चिन्न । तनूरुचा तरुषि यत्कृण्वैते । तारिषदिति । तिप इकारलोपः । सिप इट् । जोषिषदिति । जुषी प्रीतिसेवनयोः । अनुदात्तेत् । व्यत्ययेन परस्मै पदम् । करवावेति । कृञो लेटो वस उः । गुणो रपरः । आट् । अङित्त्वाद्विकरणस्य गुणः । करोतेरुत्वाभावश्च । मादयैते इति । मदी हर्षे । णिजन्ताल्लेट् । आकारस्येति । प्रथमस्येत्यर्थः । द्वितीयस्य तु टित आत्मनेपदानामित्येत्वमेव नित्यत्वात् । न च शब्दान्तरप्राप्त्या अनित्यत्वम् । कृताकृतप्रसङ्गित्वमात्रेण क्व चिन्नित्यत्वाश्रयणात् । उत्तरसूत्रे अन्यत्रेति लिङ्गाच्च ॥

वैतो ॥ अन्यत्वं किमपेक्ष्येत्याकाङ्क्षायां पूर्वसूत्रविषयादिति लभ्यते । सन्निधानात्तदाह । आत इत्यादि । ईशे इति । ईश ऐश्वर्ये । उ-

---

श्वेतैरुह्यतइति श्वेतवा इन्द्रः । उक्थे इति । उक्थैरुक्थानि वा शंसत्युक्थशाः । कर्मणि चेति । पुरो दाश्यते पुरोडाः ॥

संप्रसारणे कृते इति । पदस्य विभज्यान्वाख्याने अन्तरङ्गपरिभाषाया अनित्यत्वादनाश्रयणेन नित्यत्वात्संप्रसारणे कृते इत्यर्थः । जवसवयोर्जुसू प्रकृती । स्वरार्थमिति । एवञ्च वृषादौ जवसवौ छन्दसीत्यस्य पाठः प्रामादिक इति भावः । विकरण इति । करवैत इत्यादौ ॥

विकरणस्य गुण इति । करोतेरुत्वाभावश्चेत्यपि बोद्धव्यम् । क्व चिन्नेति । गुण

त्तमैकवचनमिट्। इतस्च लोपो नास्ति परस्मैपदेष्वित्युक्तेः। टेरेत्वे तस्य ऐः गृह्यान्ता इति। ग्रहेः कर्मणि लेट्। आट् यक्। संप्रसारणम्। ह्रीन्तः। पणबन्ध इति। यदि मे भवानिदं कुर्यात्तर्हीदमहन्दास्यामीति समयकरणं पणबन्धः। आशङ्का संभावना। अहमेवेति। त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम्। पशवः संसारिणः। नेदिति। इच्छब्द आशङ्कां द्योतयति। जिह्माचरणेन नरकपातः सम्भाव्यते। स मा भूदित्यर्थः। द्वौ विकरणाविति। तत्र शप् न्याय्यः। सिप् तु बाहुलकात्। एतेन समपर्यजिह्माजो अस्मा अविष्टुः। सेमामविड्ढि इत्यादि व्याख्यातम्। अव रक्षणे। अस्मान्नोटि बाहुलकात्सिपः प्रवृत्तेः। तरुषमेति। उप्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात्सार्वधातुकार्द्धधातुकयोरिति गुणः प्राप्तः। सिजन्तस्य अपि लघूपधगुणश्च प्राप्तो बाहुलकान्न भवति। तक्षन्तीति प्राप्नोति। यत्तु सुपां सुलुगिति सूत्रे हरदत्तेनोक्तन्तक्षणुवन्तीति प्राप्तइति तु युक्तः पाठ इति। तच्चिन्त्यम्। श्नुप्रत्ययस्य वैकल्पिकतयेह शपः सौष्ठवेन बहुवचनमात्रे व्यत्ययमभिव्यञ्जन्तक्षन्तीति भाष्यकाशिकारूढपाठस्यैव न्याय्यत्वात्। कृत्तद्धीति। तेन दीव्यतीत्यादौ विधीयमानानाण्ठगादीनान्देवतादिकर्त्तृवाचकत्वादेवमुक्तं न त्विह कारकवाचित्वेप्याग्रहः। कृत्तद्धितमात्रे तात्पर्यात्। तथा च किमो र्विहितो डतिर्यच्छब्दादपि भवति। त्वम्वेत्थ यति ते जातवेदः। विश्वे देवासो मनुषोपतिष्ठन्।

आद्गम॥ ताच्छीलिकेषु व्याख्यातमिदम्। विशेषाभिधित्सया सार्यते। लिङ्वद्भावादिति। असंयोगाल्लिट् किदिति कित्त्वं सिद्धमिति भावः। ननु स्रंसिध्वंसिप्रभृतिभ्यः क्विक्विनोः संयोगात्परत्वेन कित्त्वं सा-

---

इति शेषः। परस्मैपदामिति। तिपोट् सिप इडिति बोद्धव्यम्। आडिति। वस इति शेषः॥

आडिति। लेट इत्यर्थः जिह्माचरणेनेति। जिह्मं कुटिलं पापम्। स्रंसुध्वंसु-

श्चंकमिति चेत्। तादृशलक्ष्यस्याकरे अनुदाहृतत्वात् यदि तु तादृशलक्ष्ये प्रमाणमस्ति तर्हि छन्दस्युभयथेति लिटः सार्वधातुकत्वस्यापि सत्त्वेन सार्वधातुकमपिदिति ङित्त्वात्सिद्धमिति भावः। ततुरिर्जगुरिरिति। द्विर्वचनेऽचीति स्थानिवद्भावादादेशप्रतिषेधाद्वा तॄगॄइत्यनयोर्द्वित्वन्तत उत्तरदत्ते उत्वेऽपि अभ्यासे उरदत्वं निर्बाधम्।

तुमर्थे॥ पञ्चदश प्रत्यया विधीयन्ते। तत्र। से सेन्। असे असेन्। अध्यै अध्यैन्। कध्यै। कध्यैन्। शध्यै शध्यैन्। एषान्दशानान्द्वयोर्द्वयो रूपाविशेषेऽपि स्वरे विशेषः। इतरेषु पञ्चसु रूपविशेषः स्पष्ट एव। वक्ष इति। वचः से। कुत्वम्। षत्वम्। एषे इति। इणो गुणः। नित्त्वादाद्युदात्तः। प्रेषे ति। इणः क्से। कित्त्वाद्गुणे प्राप्ते। श्रियसे इति। इयङ् नित्त्वादाद्युदात्तः। इह मन्त्रे मध्योदात्तः पठ्यते तत्र बाहुलकात्प्रत्ययस्वरो बोध्यः। मादयध्याइति। ण्यन्तात् शध्यै तस्य भाववाचित्सार्वधातुकत्वाद्यक्प्रसङ्गे व्यत्ययेन शप्। गुणायादेशौ प्रत्ययस्वरः। पिबध्या इति। यक् तस्य बहुलं छन्दसीति लुगिति हरदत्तः। पूर्ववद्व्यत्ययेन यकः प्रसङ्गे शवित्यपि सुवचम्। यत्तु प्राचो ग्रन्थं व्याचख्यौर्मादयध्याइत्यत्र यकं स्वीकृत्य व्यत्ययेन लुक् शप् चेति स्वीकृतन्तद्गौरवग्रस्तम्। यच्च काशिकायां शध्यै शध्यैन्पिबध्यै मादयध्यै इत्युदाहृतम्। अन्यैश्च तदेवानुसृतन्तद्व्युत्क्रमेण योजनीयम्। अन्यथा लक्ष्यविसंवादात्। सूतवइति। ङित्त्वान्न गुणः। दशमे मासि सूतवे इति मन्त्रे सूतवइति पदमाद्युदात्तं पठ्यते। तत्र स्वरव्यत्ययः। यद्वा तवेन्प्रत्यये नित्स्वरः। गुणाभावस्तु बाहुलकात्। यद्वा छन्दस्युभयथेति सार्वधातुकत्वे सार्वधातुकमपिदिति ङित्त्वं बोध्यम्।

---

प्रभृतिभ्य इति। छन्दसि सर्वेभ्यः किकिनौ वाच्यावित्युक्तेरिति भावः। अगुणे इति। गुणाभावे इत्यर्थः। इयङिति। श्रिञ् सेवायामित्यस्य। ण्यन्तादिति। मदेरिति शेषः। शवित्यपीति। अपिना बाहुलकाद्यगभावमात्रमित्यपि बोद्धव्यम्। लक्ष्येति।

प्रयैः । प्रपूर्वाद्यातेः कौ प्रत्ययः । रुचेरिच्छै नञ्पूर्वाड्ड्यश्च ।

दृशे विख्ये च ॥ योगविभागे फलञ्चिन्त्यम् । केप्रत्ययः । कित्त्वादृशेर्न्न गुणः । ख्यातेरातो लोपः विख्ये इति । कित्त्वान्न गुणः । क्त्वातोसुन्कसुन इत्यव्ययत्वाद्विभक्तेर्लुक् । न लुमतेति निषेधाद्त्वसन्तस्येति दीर्घो न ।

कृत्यार्थे ॥ भावकर्मणोरित्यर्थः । यद्यपि भव्यगेयादिषु कर्त्ता वह्यं करणं स्नानीयं चूर्णमित्यादौ करणं दानीयो विप्र इत्यत्र संप्रदानञ्च कृत्यानामर्थस्तथापि कृत्यत्वेन रूपेण न कर्त्रादिषु विधिरस्ति किन्तु विशिष्यैव । बाहुलकाद्वा । कृत्यतया तु भावकर्मणोरेव । तयोरेवेति सूत्रात् । अतः प्रतिपदोक्तस्यैव कृत्यार्थस्येह ग्रहणं न्याय्यं न म्लेच्छितवै । न म्लेच्छितव्यमित्यर्थः । दिदृक्षेण्य इति । दृशेः सन्नन्तात् अतो लोपः । कर्त्त्वमिति । कृत्यमित्यर्थः । यत्तु कृञो विचि गुणे रपरत्वे तस्य भाव इति त्वप्रत्यय इति व्याचक्षते तत्र रेफस्य विसर्गो दुर्वार आद्युदात्तता च दुर्लभेति दिक् ॥

अवचक्षे च ॥ एश्प्रत्ययः । शित्त्वात्सार्वधातुकत्वन्तेन ख्याञादेशो न ॥

भावलक्षणे ॥ संस्थादीनामवधित्वेन लक्षणत्वं बोद्ध्यम् । आ समाप्तेरिति । संपूर्वो हि तिष्ठतिः समाप्तौ रूढः । यतिपृच्छ्यः षडहः सन्तिष्ठते इत्यादौ दर्शनात् । आतमितोरिति । तमु ग्लानौ ।

---

पिबद्ध्यै इत्यत्रानुदात्तपाठादिति भावः । ङित्त्वं बोद्ध्यमिति । एवञ्च तवेङ् व्यर्थ इति भावः ।

इत्यव्ययत्वादिति । अन्यत्र कृन्मेजन्त इत्यव्ययत्वं बोद्ध्यम् । सन्नन्तादिति । केन्यप्रत्ययः ॥

इत्यर्थ इति । कृत्त्वमिति बोद्ध्यम् । रेफस्य विसर्ग इति । एवञ्च तत्र कस्त्वमिति रूपमिति भावः । एश् प्रत्यय इति । चक्षिङ इत्यादिः । इत्यादाविति । सन्तिष्ठते पितयज्ञ इत्यादिशब्दार्थः ॥ इति तृतीयः ॥

क्षपिष्टदोः। क्षमू गतौ। उतृदिर् हिंसानादरयोः। विक्षप इति। गमनादित्यर्थः। यत्तु व्याचख्युर्विसर्पितुमानर्दितुमित्यर्थ इति। तन्न। क्षपेरनिट्कत्वात्। भावलक्षण इत्यनुवृत्तेश्च। अत एव य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः। सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनः। अयं मन्त्रो वेदभाष्ये इत्थं व्याख्यातः। यइन्द्र अभिश्रिषः अभिश्लेषणात्सन्धानद्रव्यात्। ऋते चिद्विनापि जत्रुभ्यः ग्रीवाभ्यः आतृदः आतर्दनात्। रुधिरनिःसारणात्पुरा पूर्वमेव सन्धिः सन्धातव्यः सन्धाता संयोजयिता विह्रुतं विच्छिन्नं पुनरिष्कर्ता निष्कर्ता संस्कर्तेति तस्माद्यथोक्तमेव मनोरमम्। इति तृतीयम्॥

डुप्रत्ययान्तमिति। तेन क्विबन्तान्न ङीप्। स्वयम्भूः ञितस्वर इति। आनुगाकारस्योदात्तत्वमित्यर्थः। यत्तु न्यासकृतोक्तं मुद्गलानीशब्दे द्वितीय उदात्त इति। तद्वेदबाह्यत्वप्रयुक्तमेव। ञितीति प्रत्ययात्पूर्वस्य विधीयमानं संनिहितमानुकं विहाय द्वितीये प्रवर्त्तनइत्यत्र बीजाभावात् सकलवैदिकपाठविरोधाच्चेत्यास्तान्तावत्। अविष्टस्य इति। आविर्भूतइत्यर्थः॥

द्व्यचश्छन्द॥ मयड्वैतयोर्भाषायामित्युक्तेर्वेदे अप्राप्तो विधीयते। नोत्वत्॥ द्व्यच इति प्राप्तः प्रतिषिध्यते। मौञ्जमिति। औत्सर्गिकोऽण् वध्रश्चर्मेति वृधिवपिभ्योरन्॥

ढश्छ। सभाशब्दात्सप्तम्यन्तात् ढः स्यात्साध्वर्थे। पाथसीति। पाथोऽन्तरिक्षमिति वृत्तिकाराः। पाति भूतान्यवकाशदानेनेति व्युत्पत्तेः। यद्यपि पातेर्बले जुट् च उदके थुट् च। अन्ने चेति अन्नोदकयोः पाथःशब्दो व्युत्पादितस्तथापि बाहुलकादन्तरिक्षेपीति भावः। वैशन्तीभ्य इति। वेशन्तः पल्वलम्। विशेर्झच्॥

अग्राद्यत्॥ भवे छन्दसीत्येव सिद्धे घनादिभिर्बाधा मा भूदिति यद्विधीयते। अग्रिय इति। घच्घनोरुदाहरणम्। अन्तोदात्तमाद्युदात्तञ्च।

रक्षोयातूनाम्॥ षष्ठीबहुवचनान्ताभ्यां रक्षस्शब्दयातुशब्दाभ्यां हननकरणीभूता इत्यर्थे यत् स्यात्। रक्षस्येति। रक्षसां हननी॥ एवं यातव्या हविष्या इति। हविषे हिता हविष्या। तस्याः प्रशंसनमित्यर्थः। यस्येति लोपे कृते हलो यमामिति पक्षे यलोपः।

मायायामण्॥ पूर्वसूत्रापवादः॥

तद्वानासाम्॥ मत्वन्तप्रकृतिकात्प्रथमान्तादुपधानकरणीभूतमन्त्रार्थकात् इष्टकारूपे संबन्धिनि यत् स्यात् मतोश्च लुक्। वर्चस्यानिति। वर्चःशब्दोऽस्त्यस्मिन्सः वर्चस्वान् स च देवस्य त्वा सवितुरित्यादिकः। उपधीयन्ते ऽनेनेत्युपधानः। अथ कथं हष्टीरुपदधाति प्राणभृत उपदधातीति। हष्ट्याः प्राणभृत्या इति हि प्राप्नोति। सत्यम्। हष्ट्यादिशब्दानान्तद्वन्मन्त्रोपधेयास्विष्टकासूपचारात् प्रयोगः। न तु तद्धितान्तमेतदित्यवधेहि। पूर्वोत्तरमीमांसयोस्तु तद्धितपरतया प्रतीयमाना ग्रन्थाः भङ्क्त्वा व्याख्येयाः॥

अश्विमानण्॥ अश्विमच्छब्दादुक्तेर्थे ऽण् स्यात् यतोपवादः। मतोर्लुक्च। अश्विनीरिति। अश्विन्शब्दवान्मन्त्र उपधानो यासान्ता इत्यर्थः। मूर्धन्वतीरिति। अनो नुडिति नुडागमः। अत्रेदमवधेयम्। हत्ते वयस्यास्वित्यनुपपन्नन्तद्वानासामिति यत्प्रत्ययस्य छन्दस्येव विहितत्वात्। एवञ्च छन्दोवत्सूत्राणीति भाष्यकारेष्टेरिदमेव ज्ञापक-

---

एवं यातव्येति। यातूनां हननीत्यर्थः। कृद्योगे कर्मणि षष्ठी यातुरक्षसी पर्यायौ। बहुवचनान्ताद्विधानं स्तुत्यर्थं बहूनान्तेषां हनने हि स्तुतिर्भवति। हविष्येति। अत्र उगवादिभ्यो यत्। मत्वन्तप्रकृतिकादिति। तद्वानित्युक्तेरिदं लब्धम्। सवितुरित्यादिक इति। यद्यपि तत्र मन्त्रे पदान्तराणि सन्ति तथापि तत्प्रकृतिकमत्वन्तात्प्रत्ययो न प्रयोगानुसरणार्थेतिशब्दात्। उपचारादिति। छान्दसो ऽयमुपचारः। अश्विन्शब्दवानिति। यद्यपि बहवो मन्त्रा अश्विन्शब्दवन्तस्तथापि सामान्यापेक्षयैकवचनम्। उदाहरणे इनण्यनपत्यइति प्रकृतिभावः।

म्। अथ वा सामान्यापेक्षकं ज्ञापकं छान्दसा अपि क्वचिद्भाषायां भवन्तीति। तेनानुपस्थितपरिपन्थिभिः पार्थिवैरित्यादि सिद्धम्। यथासंख्यमिति। वृत्तिकारस्तु यतश्च चेति सूत्रं व्यभजत॥

पूर्वैः कृतम्॥ मत्वर्थइति विवृतम्। चात्थ इति वृत्तिकाराः। यत्तु नानुवर्त्तते। एतदपि पूर्वत्र योगविभागस्य फलमिति तेषां मतम्। यत्थाविति भाष्यपाठे तु यदप्यनुवर्त्ततां। तथा च पूर्वीणा इत्यपि रूपं बोध्यम्। पूर्व्या इत्याद्युदात्तत्वञ्च।

सहस्रेण॥ समि इति पाठान्तरम्।

मतौ च॥ तपःसहस्राभ्यां विनीनी इत्यस्यापवादः।

सोममर्हति यः॥ कथन्तर्हि प्रीतास्मि ते सौम्येति रघुः। छन्दोधिकारात्। उच्यते। सोम इव सोम्यः। शाखादित्वाद्यः। तत्र साधुरिति। यद्वा। सौम्येत्यादिवृद्धिपाठे तु स्वार्थे ष्यञ्।

मये च॥ आगतविकारावयवप्रकृता मयडर्थाः। यथायोगं पञ्चमीषष्ठीप्रथमाः समर्थाः विभक्तयः॥

शिवशम्॥ भाषायान्तु शान्तातिप्रभृतीनां प्रयोगश्चिन्त्य इत्याहुः।

इति चतुर्थः॥

त्वावत इति। त्वमिव त्वावान्। तस्य प्रत्ययोत्तरपदयोश्चेति त्वादेशः। आ सर्वनाम्न इत्यात्वम्। एतेन मावत इति व्याख्यातम्। साद-

---

अथवेति। इदञ्चिन्त्यम्। उक्तेष्ट्या सिद्धे ज्ञापकत्वासंभवात्। वृत्तिकारस्त्विति। अत्रारुचिबीजन्तु यथासंख्यसूत्रस्थभाष्यविरोधः।

पूर्व्या इतीति। यदि वेदे ञित्स्वरविशिष्टः प्रयोगो नास्तीत्युच्यते तदैकदेशानुवृत्तिर्बोद्ध्या। पाठान्तरमिति। पाठद्वये ऽपि तुल्य इत्यर्थः समानः। कथन्तर्हीति। अत्र छन्दोधिकारादिति भावः॥ सोम इवेति। सोमः कर्पूरचन्द्रयोः। स्वार्थे ष्यञिति। चातुर्वर्ण्यादित्वादिति भावः। यथायोग्यमिति। आगते पञ्चमीप्रकृतं प्रथमामद्ध्ययोः षष्ठीति बोद्ध्यम्। इति चतुर्थः॥

न्यमिति। अन्येषामपीति दीर्घः।

छन्दसि घस्॥ सकारः सितिचेति पदत्वार्थः। तेन भत्वाभावादोर्गुणो न। न चैवं पक्षे इको ऽसवर्णइति शाकल्यापत्तिः। छन्दसि दृष्टस्यैवानुविधेयत्वात्। वार्त्तिककृता सिन्नित्यसमासयोर्नेति तन्निषेधाच्च।

उपसर्गा॥ इह धातुशब्देन धातुवाच्या क्रिया लक्ष्यते सार्थः प्रयोजनं यस्य साधनस्य तस्मिन्नित्यर्थः। तदाह। धात्वर्थविशिष्टइति।

छन्दसि प॥ पर्यवस्थातृशब्दात् स्वार्थे इनि प्रत्ययः। अवस्थातृशब्दस्य पन्थपरइत्यादेशौ च निपात्येते। अष्ट्रावीति। अशे ष्ट्रन्। अष्ट्रा दंष्ट्रा। करिष्ठ इति। तुरिष्ठेमेयस्स्विति लोपः। इति पञ्चमः॥

स्पर्द्धेर्लङीति॥ स्पर्द्ध सङ्घर्षे। द्विर्वचनम्। अकारलोपो रेफस्य संप्रसारणञ्च निपात्यते। अस्पर्द्धेथामिति भाषायाम्॥

प्रकृत्यान्तः॥ अयं पाठः षाष्ठभाष्यानुगुणः। शाकलसूत्रे ह्रस्वश्चेति चकारेण प्रकृत्येत्यनुकृष्यतइति भाष्यदर्शनात्। इको गुणवृद्धी इति सूत्रे तु नान्तः पादमिति पाठः पुरस्कृतः। अयमपि षाष्ठभाष्ये स्पष्टः। अस्मिंश्च पक्षे एङः पदान्तादतीति पूर्वरूपं निषिध्यते। तस्मिंश्च निषिद्धे एचो ऽयवायाव इत्यपि न भवति॥ बाधके निषिद्धे बाध्यमपि

---

सादन्यामिति। सदनमर्हतीत्यर्थः। प्रयोजनं यस्येति। धातावित्येव शब्दे कार्यस्यासंभवादर्थग्रहणे सिद्धे ऽर्थपदं बहुव्रीह्यर्थमिति भावः। उपसर्गा हि क्रियासत्त्वे तद्विशेषकाः। यथा आगच्छतीत्यादौ तदसत्त्वे तु क्रियाविशिष्टसाधनबोधका यथा निष्कौशाम्बिरित्यादौ तत्र यत्र क्रियापदाश्रवणं तत्रैव यथा स्यादित्यर्थं धात्वर्थ इतीति तात्पर्यम्।

अष्ट्रेति। दंष्ट्रापर्यायोयञ्छन्दोविषयः। इति पञ्चमः॥

संप्रसारणञ्चेति। एवञ्चास्पर्द्धेथामित्येकं पदन्तिङ्ङतिङ इति निघातस्य यद्वृत्तान्नित्यमिति प्रतिषेधे आद्युदात्तम्॥

क चिन्नेति स्वीकारात् । पादस्येह न श्लोकस्य । वा च्छन्दसीत्यतो मण्डूकप्लुत्या छन्दसीत्यस्यानुवृत्तेः । तदाह । ऋक्पादेति । एङः पदान्तादतीति सूत्रादेङ इति पञ्चम्यन्तमनुवृत्तं प्रथमया विपरिणम्यत इत्याह । एङ्प्रकृत्येति । अन्तःपादं किमिति । ऋचीत्येव किं नोक्तमिति प्रश्नः । एते ऽर्चन्तीत्यत्र पूर्वपदस्यान्ते एङ्कारस्तु परपादस्यादौ । अतो निमित्तनिमित्तिनोः पादमध्यस्थत्वं नास्ति । अव्यात् । अव रक्षणे आशीर्लिङ् । अवय्यादिति पञ्चम्यन्तम् । अवक्रमुरिति । अत्रपूर्वस्य अवचच्छन्दसि चेति द्वित्वाभावः । क चित्तु अवचक्रमुरिति पठ्यते तदयुक्तम् । छन्दोविरोधात् । अश्वतेति । वृङ्वृञोर्मन्त्रे घसेति च्लेर्लुकि झस्य अदादेशे यण् । अवस्रव इति । अवेरसन् । ततः क्यच् । क्याच्छन्दसीत्युः ॥

स्यश्छन्दसि ॥ त्यदः प्रथमान्त्यस्यानुकरणम् ।

ह्रस्वात् ॥ कथन्तर्हि मघवेवेन्द्रं पुरुश्चन्द्रं विविन्दात् । पृथुश्चन्द्रमवसे चर्षणि प्राः । अधिश्चन्द्रं बृहत्पृथुरिति । न ह्यत्रोत्तरपदमस्ति । उदात्तद्वयदर्शनात् । पदकारैर्विभज्यैव पाठाच्च । सत्यम् । बाहुलकात्समाधेयम् । प्रातिशाख्ये तु विशिष्य विहितम् ।

पुरुः पृथ्वधिपूर्वेषु शकारउपजायते ।

ह्रस्वे च पूर्वपद्यान्ते चन्द्रशब्देपरेऽन्तराः ॥

इति । अन्तरेति । मध्ये इत्यर्थः । तथा चाभक्तः शकार इति

---

क चिन्नेतीति । भ्रष्टावसरत्वादिति भावः । प्रकृतसूत्रभाष्ये तु पदान्तादेङो ऽतीत्यनुवर्त्य पदान्तस्यैङो ऽति यद्यत्प्राप्नोति तस्य सर्वस्यायं निषेध इति व्याख्यातं भ्रष्टावसरन्यायस्तु नास्त्येव तौ सदित्यादिनिर्देशादिति तदाशयः । पूर्वपद्यान्ते इति । पद्यमिति पादस्य सञ्ज्ञा । आकारादेश इति । न चैवं च्छन्दोग्रहणं व्यर्थमाकारादेशस्य छन्दस्येव सत्त्वादिति वाच्यम् । स्पष्टार्थं सत्त्वात् । अन्यथोत्तरखण्डे आकारोपि निपात्यतइति संभाव्येत ।

भावः। पाणिनीये तु टित्त्वाल्लिङ्गादागम एव। स च चन्द्रशब्दस्य उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति सिद्धान्तात्।

पितरा॥ पूर्वपदस्य अराङादेशो निपात्यते उत्तरपदे तु सुपां सुलुगित्यादिना विभक्तेराकारादेशः। ऋतो ङिसर्वनामस्थानयोरिति गुणः।

सधमा॥ सधेत्यविभक्तिको निर्देशः। सह माद्यन्ति देवा अस्मिन्निति सधमादो यज्ञः। मदो ऽनुपसर्गे इत्यपि प्राप्ते अजब्भ्यां स्त्रीखलना इति तद्बाधके ल्युटि हलश्चेति घञ्। सूत्रे मादेत्यकार उच्चारणार्थः। तेन माद्यतेः क्विबन्तस्य मादिति यद्रूपं तत्रापि भवति। आ त्वा बृहन्तो हरयो युजाना अर्वागिन्द्र सधमादो वहन्तु।

साढ्यै॥ तनि तृतीयमिति। भूरिचक्रेति मन्त्रे हि साढेत्याद्युदात्तं पठ्यते। तद्भाष्ये च शत्रूणामभिभवितेति व्याख्यातम्। तृचि त्वन्तोदात्तं स्यात्। क्तप्रत्ययान्तात्त्वापि तु स्वरे दोषो ऽर्थासङ्गतिश्च स्यात्। तस्मात्तृन्नन्ततैव युक्तेति भावः। सूत्रे इतिशब्दः प्रकारार्थस्तेन निष्ठायामपि निपातनं बोद्धव्यम्। आषाळ्हो अग्ने वृषभः। आषाळ्हमुग्रं सहमानम्। आषाळ्हयुत्सु पृतनासु। आषाळ्हाय सहमानायेत्यादि। यत्तु हरदत्तेन सूत्रे साढेति ह्रस्वान्तमेवेति निर्णीय दीर्घान्तमपि लभ्यं यद्यस्ति तदा अन्यतरस्यांसूत्रे क्त्वा इतरदिति शब्देन सङ्ग्राह्यमिति वर्णितम्। तच्च यदीति सन्दिग्धोक्तिरुक्तलक्ष्यादर्शनप्रयुक्ता। यदपि वृत्तिकृता त्वचि रूपमित्युक्तन्तत्स्वरव्यत्ययाभिप्रायेण कथञ्चिन्नेयम्। प्रमाद एवेति तु हरदत्तः। उदात्तप्रयोगनिर्वाहार्थं बह्वृचप्रातिशाख्यस्यप्रमेयमाह। अचोरिति। अस्य आचार्यस्य ऊष्मणा संप्रयुक्तः सह्लकारतामेतीत्यन्वयः। स्थानिवदादेशोपि सोष्मेति भावः।

ओषधेश्च॥ न च कृदिकारादिति ङीषा गतार्थता। अन्तोदात्ततापत्तेः। इष्यते त्वाद्युदात्तः। लघावन्ते द्वयोश्चेति फिट्सूत्रात्॥

---

साढ्वेति। साढेत्यर्थकम्॥

 

क्वचित्तु ॥ घ इति स्वरूपग्रहणं न तरप्तमपोः छन्दसि घशब्दस्यैव दीर्घदर्शनात्। उत वेति। भार्याया भ्राता स्यालः ततः पञ्चमी। शृणोतेति। तप्तनप्तनथनाश्चेति तनादेशः। पित्त्वान्न ङित्त्वम्। ऊरुष्याण इति। ऊरुष्येति कण्ड्वादियगन्तो रक्षणार्थकः। सेर्ह्यः। अतोहेरिति लुक् ॥

इकः ॥ सुञीति निपातस्य ग्रहणम्। तस्य च ञकार इहैव विशेषणार्थः। न च निपातस्येति सूत्रेण गतार्थता तत्रात इत्यनुवृत्तेरिति भावः। वस्तुतस्तु मास्त्वनुवृत्तिः। मा चेदं सूत्रम्। न चातिप्रसङ्गः। अत इत्यनुवृत्तावपि अधते विश्वम्। अधद्रमितम् तमिल्वेव समतादावतिप्रसङ्गाद्बाहुलकेन समाधानस्य चेहापि सुलभत्वादिति दिक्। चक्रेतिन्तइत्यास्मद्ध्यमपुरुषबहुवचनम् ॥

शमिता ॥ इह मन्त्रइत्यनुवर्त्ततइति काशिका। अत एव शमयितेत्यर्थ इति विवरणं सङ्गच्छते। जनिष्ठा इति। इह आडागमो न। माङ्योगे ऽप्यडागममुदाहरति । मा व इति। वः युष्माकं क्षेत्रे भार्यायां परेषां बीजानि उप्तानि मा भूवन्नित्यर्थः। वपेः कर्मणि लुङ् व्यत्ययेन परस्मैपदम्। एतच्च काशिकानुरोधेनोदाहृतम्। अध्ययनन्तु वाप्सुरित्येव दृश्यते। माङ्याटस्तु उदाहरणान्तरमन्वेषणीयम् ॥

तनिपत्योः ॥ छन्दसि किम्। वितेनिरे। पेतिम।

घसिभसोः ॥ हलादावजादौ च क्ङिति अनयोरुपधालोप इष्टः। अत अचीत्याकृष्टुं वृत्तिकारेण सूत्रे चकारः प्रक्षिप्तो न त्वसावार्षः। तथा च वार्त्तिकम्। हल्ग्रहणमनर्थकमन्यत्रापि दर्शनादिति। सग्धिरिति। अदेः क्तिन्। बहुलं छन्दसीति घस्लादेशः। उपधालोपे कृते झलोझलीति सलोपः। धत्वजश्त्वम्। समानस्य सभावः। बब्धामिति।

---

मा चेदं सूत्रमिति। निपातातिरिक्तेगन्तविषयन्तु लक्ष्यं न वेदे इति भावः। अत एव। मन्त्रइत्यस्यानुवर्त्तनादेव। इहेति। अमाङ्योगे ऽपीत्यर्थः। उपधा-

भसेर्लोट् । ताम् । ध्नन्तु । परं नित्यमप्युपधालोपं बाधित्वा बाहुलका-त्प्रथमं द्वित्वन्तत उपधालोप इत्यादि । अजादौ । अग्निर्वनानि वप्सति । अभ्यासदीर्घश्चेति । तुजादित्वादिति भावः । मश्शब्दश्चेति । तस्याः सिद्धत्वाद्यस्येति लोपो न । अकृत्सार्वेति दीर्घस्तु अङ्गवृत्तपरिभाषया नेति भावः । यद्वा मकारमात्रस्य लोपः । ततो यस्येति लोपे कृते प्रत्ययाकारस्य श्रवणम् ॥ इति । षष्ठः ॥

अद्दश्रमिति । बाहुलकादेव ऋदृशोऽङीति गुणो नेत्येके । भाष्ये तु गुणं वारयितुं दृशेरग् वक्तव्य इत्युक्तम् । व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं बाह्वृच्ये । शाखान्तरे तु अद्दश्रन्नित्येव पठ्यत इति माधवः ।

क्त्वापि छन्दसि ॥ अपिशब्दाल्ल्यबपि । स च समासे यद्यपि पूर्वेणैव सिद्धः तथाऽप्यसमासे तेन प्राप्यते । एतदर्थमेव ह्यपिशब्दः । अन्यथा वा छन्दसीत्येव ब्रूयात् । तथा च छन्दोनुविदधानाः कल्पसूत्रकाराः प्रयुञ्जते आज्येनाक्षिणी अज्येति । याज्ञवल्क्यश्चाह । एवं विनायकं पूज्येति ।

सुपां सु ॥ पन्था इति । व्यत्ययो बहुलमित्येव सिद्धमिदम् । उक्तं हि तत्र सुप्तिङुपग्रहेत्यादि । तस्यैव त्वयं प्रपञ्चः । पूर्वसवर्ण इति । ईकारः प्रमाणत आन्तरतम्यात् । ततः सवर्णदीर्घः । आचांमसि वीरब्रह्मवाहो यादेव विद्म ता त्वा महान्तमिति बह्वृचाः । अत्र यानादिति । अम आत् । न विभक्तौ तु स्माः । युष्मास्वस्मभ्यमिति प्राप्त इति । यत्तु काशिकायामुक्तं यूयं वयमिति प्राप्त इति । सोयं महान्प्रमादः । तथा हि । न युष्मे इति । ऋग्मन्त्रे ऋक्षाश्वमेधनाम्नो राज्ञो दानं स्तूयते । सुरथां आतिथिग्वे स्वभी । भूरार्क्षे आश्वमेधे सुपेशसः इत्युपक्रमात् । वाजमित्यन्ननाम । अन्नदानेन ये सर्वेषां बन्धवः तेषां संबोधनं हे वाजबन्धवः । युष्मे युष्मासु । अधि इति

---

लोप इति । सलोपधत्वे इत्यपि बोद्धव्यम् । इति षष्ठः ॥

सप्तम्यर्थानुवादी विभक्त्यर्थे ऽव्ययीभावस्तु यद्यपि नित्यसमासस्त-थापि बाहुलकादिह न । निनित्सुश्च न । निन्दनेच्छाशीलोऽपि । निन्दतेर्नलोपः सन् इडभावश्च बाहुलकात् । मर्त्यः । अवद्यं न धार-यति । भवदनुसन्धानमात्रेणैव निष्पाद्यत्वादिति भावः । निनित्सुरपी-त्युक्त्या किमुत निन्दन्निति गम्यते स हि पुण्यश्लोकनाम गृह्णन् सु-तरां शुद्ध इति भावः । द्वितीयमन्त्रे ऽपि देवता प्रार्थ्यते हे इन्द्राबृह-स्पती अस्मभ्यं रयिन्धत्तमिति दधातिर्दानार्थः । न चास्मिन्मन्त्रद्वये यूयं वयमित्यस्य कश्चिदुक्तिसंभवो ऽस्ति । किं च जसः शे इति पक्षे यूयवयौ जसीति केन वारणीयम् । बाहुलकादिति चेत् । सोयम-स्थाने संरम्भः । एतेन काशिकानुगामिनः प्राचो ऽपि ग्रन्थः प्रत्युक्तः । ता अनुष्ट्येति । ताः वङ्क्रीः षड्विंशतिरस्य वङ्क्रय इति हि प्रकृत्य इदमश्विगुप्रैषे पठितम् । नन्वनुपूर्वात्तिष्ठतेः आतश्चोपसर्गइति बा-धित्वा स्थागापापचो भावइति क्तिना भाव्यमिति चेत् । सत्यम् । पू-र्वपरेति सूत्रे व्यवस्थायामिति निर्देशादङपि भविष्यति । सामान्या-पेक्षज्ञापकाश्रयणात् । तदेतद् ध्वनयति । व्यवस्थावदिति । बाहुनेति प्राप्ते इति । यत्तु काशिकायां प्रवाहुनेति प्राप्तइत्युक्तं प्राचा चानुसृ-तन्तत्सर्वं समासभ्रमप्रयुक्तत्वाद्धेयम् । प्रेति हि न समस्तं पृथक् स्वरदर्शनात् । पदकारैर्विच्छिद्य पठ्यमानत्वाच्च । अत एवाख्याता-न्वयीति ध्येयम् । एतेन प्रवाहुशब्दात्तृतीयेति व्याचक्षाणो न्यासकारः प्रत्युक्तः । स्वप्नयेति । अयाचो ऽकारः सुपि चेति दीर्घनिवृत्त्यर्थः ॥

सिवादेशस्येति । न तु द्वितीयैकवचनस्य । छन्दसि दृष्टानुविधाना-दिति भावः । प्रामादिकीति । लक्ष्ये वकारपाठस्य निर्विवादत्वादेद-भाष्येपि प्रकृतसूत्रस्य सलोपमात्रपरतोक्तेस्सेति भावः । कृणुतादिति । धिन्विकृण्व्योर चेत्युप्रत्ययः । सुनोतनेति । पित्त्वे सति ङित्त्वाभावा-द्गुणः । दधातनेति । ङित्त्वाभावाच्छ्नाभ्यस्तयोरात इत्यालोपो न । जुषध्वमिति । काशिकायां प्राचो ग्रन्थे च जुषतेति भावः ।

आज्जसेः ॥ जसेरिति पूर्वाचार्यानुरोधेन निर्देशः ।

श्रीग्रामण्योः ॥ श्रीणामिति । वामीति नदीत्वविकल्पात् रूपद्वयं प्राप्तमिति प्राञ्चः । तच्चिन्त्यम् । छन्दसि दृष्टस्य नुटः सिद्धेः । अभावस्य चापादयितुमशक्यत्वात् । तस्माद्ध्यर्थमेवेति तत्त्वम् । सूताश्च ग्रामण्यश्चेति इतरेतरयोगद्वन्द्वः । कीदृङ्ङिति । क्विन्प्रत्ययस्य कुरिति नकारस्य ङकारः । स्ववानिति । अवतेरसुन् । सुष्ठु अवौ यस्येति विग्रहः । तुधातुः सौत्रो वृद्ध्यर्थः । ततो ऽसुन् । स्वतवो वृद्धिर्यस्येति विग्रहः । ततुरिरिति । तरतेः क्विन् । उत्वम् । तस्य द्विर्वचनेचीति स्थानिवद्भावात् तॄइत्यस्य द्वित्वम् । उरदत्वम् ।

इह रेः ॥ आगन्तुना इकारेण गुणेन च निर्देश इत्याहुः । अत एव ज्ञापकात् धातुनिर्देशे किदिकार इत्यपि सुवचम् ।

सोमे ॥ इङ्गुणाविति । ङ इत्यादेशस्याभावोऽपि बोध्यः । अष्टादशेति । स्वमितेः पाठपक्षे तु एकोनविंशतिः । चतो इति । चतशब्दाङ्घापि उञा सह आङ्गुणः । निपातेन सह एकीकृत्य छेदस्तु पदकाराणां संप्रदायसिद्धः । भूयामो इति मन्त्रे भूयामो इति यथा । अश्वस्याविशस्तेति । अन्येषामपीति दीर्घः ॥

बभूथा ॥ वृञः क्रादिसूत्रेणेडभावे सिद्धे निगमएवेति नियमार्थं निपातनम् । तदेतदाह । भाषायान्तु ववरिथेति । सर्वमा इति । अस्तेर्लङ् तिप् । ईडभावे अपृक्तत्वाद्धल्ङ्यादिलोपः । रुत्वविसर्गौ । संहितायान्तु भोभगोरिति यत्वम् । लोपः शाकल्यस्येति यलोपः ।

न छन्दसि ॥ इह यदि आनन्तर्यादीत्वमात्रं प्रतिषिध्येत तर्हि अकृत्सार्वेति दीर्घः स्यात् अपवादाभावे पुनरुत्सर्गस्थितेः । अत आह । ईत्वदीर्घौ नेति । क्वचि यदुक्तन्तन्नेति भावः । अत्र च ज्ञापकमनुपदमेव वक्ष्यति । दुष्टीयतीति । प्रकृतिमात्रे तात्पर्यम् । उप्रत्ययसमा-

---

उप्रत्यय इति । कृषेरिति शेषः ॥ यस्याकारोतो लोप इति च बोद्ध्यम् ।

इतरेतरयोगद्वन्द्व इति । समाहारद्वन्द्वं कृत्वैकशेषे तु ह्रस्वान्तत्वादेव नुट्सिद्ध्या ग्रामणीग्रहणमपि व्यर्थम् । छन्दसीति तु गोः पादान्तइति सूत्रे ऋक्पादस्यैव ग्रहणार्थमावश्यकमिति बोद्ध्यम् । क्विन्प्रत्ययस्येति । स्पृशादिषु दृश इति क्विन् ।

नार्थेन त्वना दुष्ठोयितेत्यादि वा बोध्यम् ॥

देवसुम्नयोः ॥ ननु देवाञ्जिगातीति प्रत्युदाहरणमङ्गद्वयविकलं यजुषि काठकइत्यंशद्वयस्यापि तत्राभावादित्याशङ्क्याह बह्वृचानामस्तीति। तत्रेदं दृष्टमिति भावः। काठकइति किम्। यजुर्वेदे ऽपि शाखान्तरे मा भूत्। अत्र सुम्नयुरिदमस्ति।

कव्यध्वर ॥ कवि अध्वर पृतना एषामन्त्यस्य लोपः स्यात्क्यचि परे ऋचि विषये। मृगय्वादिगणे ऽप्यध्वर्युशब्दः पठ्यते तद्व्युत्पत्त्यन्तरं बोध्यम्। वसुधितमिति। वसूनान्धातारं प्रदातारमित्यर्थ इति वेदभाष्यम्। समुषद्भिरिति। वसन्तीत्युषसः। सह वासिनः। तैः संभूयेत्यर्थः। वेदभाष्ये तु उषद्भिर्ज्वलद्भी रश्मिभिः। उषदाहे। लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन श इत्युक्तम्। तदुपायान्तरं बोध्यम्। न कवतेरिरिति अनुवृत्त्यर्थ उपन्यासः।

कृषेश्छन्दसि ॥ लोके तु चरीकृष्यते कृषीवलः। आद्याखय इति। धृङः शपः श्लुः अभ्यासस्य दीर्घः परस्मैपदञ्च निपात्यते। तस्यैव यङ्लुकि रुगभावमात्रमिति वा। तच्च पक्षे मा भूदित्येतदर्थन्दर्द्धर्त्तीति रुक् निपातितः दर्द्धर्षीत्यत्र तु यङ्लुक्पक्षे न किं चिन्निपात्यम्। किं तु श्लावेव धारयतेस्तु णिलुक् श्लुः आद्ये अभ्यासदीर्घः। इतरत्र रुगागमस्य निपात्यते ॥ इति सप्तमः ॥

प्रसमुपोदः ॥ पादपूरणे किम्। प्रदेवन्देव्या धिया।

छन्दसीरः ॥ कथन्तर्हि कृणुतन्नो अध्वरं सृष्टिमन्तम्। यो अब्दिमां उदनिमां इयर्त्तीति। छन्दसि सर्वे विधयो विकल्प्यन्ते इत्यदोषः। अत्रवन्त इति। अक्षिशब्दान्मतुप्। छन्दस्यपि दृश्यत इत्यनङ्। नुटो ऽसिद्धत्वात्पूर्वं नलोपः। भूतपूर्वगत्या नुट् न तु तस्यैव वत्वप्रसङ्गः।

---

भूयामो इति यथेति। तत्रापि भूयामेयस्याद्गुणः। हल्ङ्यादिलोप इति। शपस्तु लुक्। शाखान्तरइति पाठः। शाखान्तरमात्रइत्यपपाठः। ॥ इति सप्तमः ॥

समर्थनीयत्वादिति। त्वयापीति शेषः। उत्वमिति। निपातनादिति शेषः।

वत्त्वं प्रत्यसिद्धत्वात्। यदि पूर्वान्तो नुक् क्रियेत णत्वं न स्यात्। तस्मानुडेवोचितः। नन्वेवमवग्रहे दोषः स्यात्। अश्वणिति णान्तं ह्यवगृह्णन्ति। अत्रेत्यकारान्तमवग्रहीतुमुचितमिति चेत्सत्यम्। न लक्षणेन पदकारा अनुवर्त्त्याः पदकारैर्नाम लक्षणमनुवर्त्तनीयम्। तस्माद्यथालक्षणं पदं कर्त्तव्यमिति महाभाष्ये स्थितम्। किं च देवयन्त ईयिवांसमित्यादौ पदत्वं विनापि बहुलमवग्रहः क्रियते पूर्वैभिरग्निनेत्यादौ सत्यपि पदत्वे न क्रियतइति प्रागेवोक्तम्। भूरिदावत्तर इति। आतो मनिन्निति वनिप्। अत्राप्यवग्रहः प्राग्वत्। रथीतर इति। रथशब्दात् मत्वर्थे इनिः तदन्तात्तरप्। नकारलोपे कृते ईकारः। यदि तु नलोपापवादो नकारस्य स्थाने ईद्विधीयेत तदा तस्यासिद्धत्वात्सवर्णदीर्घो न लभ्येत। एतेन नकारस्य इकारादेशे सति सवर्णदीर्घत्वमिति न्यासग्रन्थः प्रत्युक्तः। रथीतममिति। इह तु पदकाराः ह्रस्वान्तमवगृह्णन्ति। अन्येषामपीति संहितायां दीर्घ इति तदाशयः। उन्दर्नञ्पूर्वस्येति। यद्यपि नुदविदोन्दत्रेति सूत्रेणैतत्सिद्धं न च छन्दसि पाक्षिकमपि नत्वं मा भूदिति निपातनाश्रयणम्। सर्वविकल्पानां छन्दसि व्यवस्थिततया विपरीतापादनस्यासंमतत्वात्। अनुत्तमस्मै क्षत्रं विश्वायु विश्वा इन्द्रायातविषीरित्यादिमन्त्रेषु नत्वाभावस्यैव दृश्यमानत्वात्। यदि तु क्व चित्तत्त्वमपि दृश्येत तर्हि तस्य बाहुलकादिनापि समर्थनीयत्वात्। तथापि भाषायामनुन्नमिति नत्वस्य नित्यत्वं निपातनस्य फलमित्याहुः। अनुत्तमिति यत्तच्छन्दस्येवेति व्याख्यानादिति भावः। त्वरतेरिति। ज्वरत्वरेत्यूठ्। तुर्वीत्यस्येति। राल्लोपः। हृइत्यस्येति। उत्वं रपरत्वन्तूरण् रपर इत्येव सिद्धम्। कार्यकालपक्षाश्रयणेन परिभाषाणामसिद्धप्रकरणेपि प्रवृत्तेः। उभयथेति व्याचष्टे रूर्वेति। नित्ये रुत्वे प्राप्ते पक्षे रेफार्थमिदम्। अस्नः शब्द ईपदर्थे। अस्नरस्तमितः॥

---

अस्नरस्तमित इति। इति प्रयोगादिति शेषः।

भुवश्च॥ महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थन्तेन ज्ञापयतीत्यादौ पुक् सिद्ध्यति॥

मतुप्॥ अनुबन्धपरित्यागेन सकारान्तस्य वस् इत्यस्य मतुना सह द्वन्द्वः। अल्पाच्तरस्यापि सौत्रः परनिपातः। मरुत्व इति। झय इति वत्वन्तसौ मत्वर्थ इति भत्वं हरिवो मेदिनमिति संयोगान्तलोपो रुत्वे सिद्धो वक्तव्य इति वचनाद्धशि चेत्युत्वम्। प्रसङ्गादाह दाश्वानिति। अनुबन्धस्येति। अत एव वनोर चेति सूत्रेपि समान्यग्रहणमुक्तम्। इदन्तु चिन्त्यम्। उक्तरीत्या हस्व व्रीहिकालयोरिति सूत्रे सामान्यग्रहणस्य निर्बाधत्वे जहातेः ककारः सामान्यग्रहणनिर्वाहार्थ इति प्राचाङ्ग्रन्थाः कथं सङ्गच्छन्तइति। किं च ककारस्य फलमपि चिन्त्यम्। यद्यपि यङ्लुकि दीर्घो ऽकित इति दीर्घस्याप्रवृत्तिः कित्त्वसामर्थ्यादित्युत्प्रेक्षा सम्भवति तथापि प्राचीनग्रन्थैः सह लक्ष्ये विसंवादो दुर्वार इति दिक्॥ देवांअच्छेति। अनुपदं वक्ष्यमाणेनातो ऽटीति सूत्रेणानुनासिकः। तत्प्रत्याख्यानपक्षे तु अत्रानुनासिक इति सूत्रेणेति विवेकः। नेहेति। एतेन महान् हि स इति बह्वृचानां पाठो व्याख्यातः। आकरे तु महां हीत्युदाहृतम्। तच्छाखान्तरे अन्वेषणीयम्। एवञ्च विकल्पस्यैव व्यवस्थिततया प्रकृतसूत्रत्यागेन महल्लाघवम्। सूत्रारम्भे तु व्यत्ययोपि शरणीकरणीय इति महान्क्लेश इति भावः। छन्दसि विकल्पव्यवस्थयैव सिद्धे ऽप्रेत्यादिकं स्पष्टार्थमिति तत्त्वम्। एवमुत्तरसूत्राण्यपि। दिवस्पृथिव्या इति। अत्र परिः सर्वतो भावे सह चकारो ऽनुक्तसमुच्चयार्थ इत्याशयेनाह। वदिति। ऋतीषाहमिति। ऋतिशब्दस्यान्येषामपीति दीर्घः। इत्यष्टमः॥ इति प्रौढमनोरमायां वैदिकी॥

---

कथं सङ्गच्छन्तइति। एवञ्च ते चिन्त्या इति भावः। चिन्त्यमिति। चिन्ताबीजन्तु ह्रस्व व्रीहिकालयोरित्यत्र सामान्यग्रहणार्थङ्कित्त्वमिति। प्राचीनग्रन्थैरिति। दीर्घोऽकित इति सूत्रस्थभाष्यादिग्रन्थैरित्यर्थः। व्यवस्थिततयेति। छन्दसि सर्वविधीनां वैकल्पिकत्वादिति भावः। विकल्पव्यवस्थयेति। व्यवस्थितविकल्पनेति यावत्। इत्यष्टमः। लघुशब्दरत्ने वैदिकी समाप्ता॥

साधारणप्रकृतिप्रत्ययसमासतिङ्लविषयकतया पञ्चभिः प्रकारैरुदात्तादिस्वरान्व्युत्पादयितुं साधारणस्वरांस्तावदाह। अनुदात्तमिति। एकवर्जमिति। द्वितीयायां चेति णमुल्। ननु तत्र परीप्सायामित्यनुवर्तत इति चेत्सत्यम्। इहाप्यस्ति परीप्सा। तथा हि। अत्रोदात्तादिर्विधीयते। तत्र तत्समकालमेव शिष्टमनुदात्तं कर्त्तव्यं न विलम्बितव्यमिति। एतच्च द्वितीयायाञ्चेति सूत्रे हरदत्तादिभिरुक्तम्। यद्वा परीप्सायामिति प्रायिकम्। एतच्चात्रैव सूत्रे हरदत्तादिग्रन्थे स्पष्टम्। परिभाषेयमिति। अधिकारत्वे तु यद्यपि षाष्ठस्वरे न कश्चिद्दोषः तथापि स्थलान्तरवर्त्तिषु दोष एव। आद्युदात्तश्चेत्येवमादिषु हि अस्यानुपस्थानाच्छेषनिघातो न लभ्येत। किं च एकवर्जमिति व्यर्थं स्यात्। तत्तत्सूत्रविधेयानां वचनसामर्थ्यादेव निघाताप्रवृत्तेरिति भावः। परिभाषाया लिङ्गापेक्षायामाह। स्वरविधीति। एकवर्जमित्यनेन हि अनुदात्तस्य वर्जनं व्यर्थम्। अतः परिशेषादुदात्तस्वरितावेव वर्ज्येते इति तद्विधावेवास्योपस्थानमिति भावः। तमेकमचमिति। एकग्रहणात्तत्र विधीयमानस्योपलक्षणम्। तेन तवै चान्तश्च युगपदित्यादौ द्वयोर्वर्जनम्। इन्द्राबृहस्पती इत्यत्र देवताद्वन्द्वे चेति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनम्। बृहस्पतिशब्दो हि वनस्पत्यादित्वादाद्युदात्त इति बोध्यम्। गोपायतमिति। गुपू इत्यस्य धातोरित्यन्तोदात्तः। तत आयप्रत्ययः। प्रत्ययस्वरेणाद्युदात्तः। ततो धातुत्वे यकाराकार उदात्तः। स च प्रागुक्तयोरुदात्तयोः सतोः पश्चात्प्रवृत्तत्वात्सति शिष्टः। अतो बलवान्। तस्य शबकारेणाय उदात्तादनुदात्तस्येति स्वरितः। स्यादेतत्। तमिति स्वरितमाश्रित्य शेषनिघातोऽस्तु। न च सन्निपातपरिभाषया निर्वाहः। तस्या अनित्यत्वेन स्वरविधावप्रवृत्तेः। अन्यथान्तो-

 

दात्तादुत्तरपदादन्यतरस्यां ह्रस्वनुड्भ्यां मतुबित्यादिभिरपि स्वरे कृते शेषनिघातो न प्रवर्त्ततेति बहु व्याकुलीस्यात्। किं च अग्ने भद्रं करिष्यसीत्यादौ स्यप्रत्ययादीनां निघातः केन वार्यते। न हि तत्र सन्निपातपरिभाषाया उक्तिसंभवोऽस्ति। अपि च सदेवा एह वक्षतीत्यत्र एकादेश उदात्तेनोदात्त इति कृते हकाराकारो निहन्येत। एवमुदात्तस्वरितयोर्यण इति स्वरिते कृते न्याग्निञ्जातवेदसमित्यत्राग्निशब्दस्येकारो निहन्येति चेत्। अत्रोच्यते। यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रवर्त्तते। तव्यतस्तित्त्वं यतोऽनाव इति सूत्रञ्चेह ज्ञापकम्। परिभाषान्तराणि तु कार्यकालपक्षाश्रयात्प्रवर्त्तन्तएव। अतो न कश्चित्प्रागुक्तदोषः। सति शिष्टेति। एतच्च न्यायसिद्धन्तथा हि। यथोद्देशपक्षमवलम्ब्य प्रवृत्ताया अप्यस्या उदात्तस्वरितविधिभिः सह वाक्यैकवाक्यता ऽस्त्येव। उत्सर्गस्यापवादस्य वा यस्यैव यत्र चरमा प्राप्तिस्तदेकवाक्यतापन्नया ऽनया लक्ष्यं व्यवस्थाप्यते। अत एव औपगवत्वमित्यत्राण्प्रत्यये च आद्युदात्तश्चेति प्रवर्त्तमानं स्वस्यैव प्रथमप्रवृत्तिबाधेन द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति इति दिक्। अन्यत्रेति। अत्र च ज्ञापकन्तासेः परस्य लसार्वधातुकस्य निघातविधानम्। अन्यथा लकारमात्रापेक्षत्वादन्तरङ्गत्वेन च तिबादिषु कृतेषु क्रियमाणस्य तासेः स्वरस्य सति शिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकन्तत्स्यात्। गृणीत इति। अन्तोदात्तं पदम्। अत्र लसार्वधातुकनिघातो नास्ति। अदुपदेश इति तपरकरणात् श्नाप्रत्ययस्यादन्तत्वाभावात्। तिङ्ङतिङ इति निघातस्तु न भवति। यद्वृत्तान्नित्यमिति निषेधात्। स हि व्यवहितेऽपि प्रवर्त्तत इति वक्ष्यते। इह च स होता यस्य रोदसी इति पूर्वचरणे यद्वृत्तमस्तीति दिक्। देवीमिति। पचादिषु देवडिति टित्करणाट्टिड्ढेति ङीप्।

चौ॥ उदात्तनिवृत्तीति। कृदुत्तरपदप्रकृतिस्वरेण उदात्तस्या-न्त्यकारस्याच इति लोपे सति अनुदात्तस्य चेति सूत्रेणोदात्तः प्राप्तः तस्यायमपवाद इत्यर्थः। इमं मइति। मेघ्र-व्द्रात्परत्वमाश्रित्य गङ्गे प्रभृतीनान्त्रयाणामनुदात्तः। स च पदपाठे स्पष्ट एव। संहितायान्तु स्वरितात्संहितायामिति वक्ष्यमाणा प्रचयापरनामधेया एकश्रुतिः प्रवर्त्तते॥

नामन्त्रिते॥ सामान्यवचनपदं व्याचष्टे। विशेष्यमिति। विशेष्यसमर्पकमित्यर्थः। अग्ने त्रातरिति। अग्निरिह विशेष्यः। त्राणकर्त्तेति तु विशेषणम्। अग्ने भ्रातः सहस्कृतेति मन्त्रे तु शुचिव्रतेति विशेष्यत्वेन विवक्षितम्। अतोऽग्ने इत्यस्य अविद्यमानवद्भावात् भ्रातरित्यस्य निघातः। एवन्तत उत्तरेषामिति बोध्यम्। देवीः षडिति। अत्र देवीरित्यामन्त्रितन्नाविद्यमानवत्। तेन षडित्यस्य निघातः। अव्ययीभावस्य त्विति। एतञ्च अव्ययीभावश्चेति सञ्ज्ञासूत्रे भाष्ये स्पष्टम्। अभ्यभीति। उपसर्गाश्चाभिवर्जमित्युक्तेरभिशब्दोऽन्तोदात्तः। तस्य नित्यवीप्सयोरिति द्वित्वम्। अनुदात्तं चेति परस्यानुदात्तत्वं यणि कृते उदात्तयणः परत्वात्स्वरितः। खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। ततः सप्तम्येकवचनस्य उदात्तयणो हल्पूर्वादिति प्राप्तस्योदात्तस्य नोङ्धात्वोरिति निषेधः। ततोऽनेन स्वरितः। तस्य यणि ततः परस्य आशाशब्दाकारस्यानेनैव स्वरितः। आशाशब्दोऽप्यन्तोदात्तः। आशाया अदिगाख्या चेदिति फिट्सूत्रात्। अस्येति। आशाशब्दप्रथमाकारस्यानिकस्येत्यर्थः। शेषेति। आशाशब्दस्य निघातो नेत्यर्थः। स्यादेतत्। यणादेशं प्रति स्वरितस्यासिद्धत्वात् स्थानिन्येव यण् प्रवृत्तः। तथा श्रौजढदित्यत्र हृतशब्दे द्वित्वं प्रवर्त्तते। न तु ढशब्दे। न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शङ्क्यम्। अतिप्रसङ्गात्। उदात्तादनुदात्तस्य स्वरित इत्यनेन यत्र क्रियते तत्रापि स्व-

सिद्धत्वन्न स्यात्। न चेष्टापत्तिः। लक्ष्यविरोधात्। प्रत्यग्निरुषसामग्रमख्यदित्यादौ स्वरितादर्शनात्। न च नोदात्तस्वरितोदयमिति निषेधः शङ्क्यः। अनन्तरस्येति न्यायेनोदात्तादनुदात्तस्येति यत्र प्राप्तिस्तन्मात्रस्य निषेधात्। अन्यथा खलप्वाशा न्याअग्निम् पाह्यस्मान् इत्यादावपि निषेधापत्तेः। तस्मादिह समाधानान्तरमेव वाच्यमिति चेत्। अत्राहुर्भाष्यकाराः। योगविभागः कर्त्तव्यः। उदात्तयणः परस्यानुदात्तस्य स्वरितः स्यात्। ततः स्वरितयणः। इह पूर्वमनुवर्त्तते। उदात्तयण इत्येव योभिनिर्वृत्तः स्वरितस्तद्यणः परस्येत्यर्थः। एवञ्चास्यैव आश्रयात्सिद्धत्वं नान्यस्य। यद्वा स्वरितग्रहणान्न करिष्यते खलप्वाशेत्यादावपि उदात्तयणः परत्वादेव सिद्धत्वात्। न च स्वरितयणा व्यवधानं शङ्क्यम्। स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावादिति। यत्तु काशिकायामुक्तं व्यञ्जनस्य ह्यविद्यमानवद्भावो न त्वच इह तु स्थानिवद्भावादजेव। न च स्वरविधौ तन्निषेधः। स्वरदीर्घयलोपेषु लोपाजादेश एवेति सिद्धान्तात्। तस्मात्स्वरितग्रहणं न करिष्यतइत्यसङ्गतम्। योगविभागपक्षः परमवशिष्यते। सो ऽपि न। उदात्तादनुदात्तस्येति यः स्वरितः तत्स्थानिकाद्यणः परस्यापि स्वरितत्वदर्शनात्। पठ्यते हि तैत्तिरीये। यास्ते विश्वाः समिधः सन्त्यग्ने इति। तस्माद्भाष्यस्थं पक्षद्वयमपि न सङ्गच्छतइति। सोयं हलिकृतो महान्व्यामोहः। भाष्योक्तपक्षद्वयस्यापि चोदक्षमत्वात्। तथा हि। योगविभागपक्षे सन्त्यग्नइत्यत्र नानुपपत्तिः। सकाराकारमाश्रित्य उदात्तादनुदात्तस्येत्येवाग्निशब्दाकारस्य स्वरितसिद्धेः। न च स्थानिवद्भावादचा व्यवधानं पूर्वस्माद्विधाविति पञ्चमीसमासस्य प्रत्याख्यानात्स्वीकारे ऽपि वा निष्ठायां सेटीति ज्ञापकेनानित्यत्वात्। सार्वत्रिकत्वाभ्युपगमेपि पूर्वत्रासिद्धीये तदभावात्। अत एव प्रत्यग्निरित्यादौ स्वरि-

त्वं न प्रवर्त्तते नोदात्तस्वरितेत्यादिना निषेधात्। यदि हि सन्त्यग्नइत्यत्र प्रकृतसूत्रं प्रवर्त्तेत तर्हि निरपवादत्वात्पाक्ष्यस्मानित्यत्रैव प्रत्यग्निरित्यत्रापि तस्य प्रवृत्तिङ्को वारयेत्। एवं स्वरितग्रहणप्रत्याख्यानपक्षो ऽपि साधुरेव। पूर्वत्रासिद्धीये न स्थानिवदित्यस्य जागरूकत्वेन वृत्तिकारोक्तदोषस्य निरवकाशत्वादिति मात्सर्यमुत्सार्य सुधीभिराकलनीयम्। एतेन दध्याशयति इत्याह इति स्वरितयणः स्वरितत्वे उदाहरणद्वयं वदन् यथाश्रुतं वृत्तिग्रन्थं चाम्रेडयन्स्वरमञ्जरीकारः प्रत्युक्तः। लोपाजादेश एव न स्थानिवदिति नियमो हि स्वरविधौ नेति प्रतिपदोक्तस्यैव निषेधस्य न तु पूर्वत्रासिद्धीयत्वप्रयुक्तस्यापि॥

एकादेश उदात्तेनोदात्तः॥ उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम्। अन्यतरस्य अनुदात्तत्वे स्वरितत्वे वा सिद्धन्तूभयानन्तर्यादिति न्यायेनान्तरतम्यात् स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह। वोश्वा इत्यादि। अत्र व इत्यनुदात्तम्। बहुवचनस्य वस्नसावित्यत्रानुदात्तं सर्वमपादादावित्यधिकारात्। अश्वशब्द आद्युदात्तः। अशेः क्वनि व्युत्पादितत्वात्। क्वेति। किमो ऽत् तित्स्वरितम्। अवरशब्दः स्वाङ्गशिटामित्याद्युदात्तः। स्यादेतत्। क्वावरमित्युदाहरणमयुक्तम्। एकादेश उदात्तेनोदात्त इति सूत्रे पूर्वसूत्रादनुदात्तस्येत्यस्यानुवृत्तेः काशिकायाम् उक्तत्वात्। तस्यादित इति सूत्रे स्वरितोदात्तार्थञ्चेति वार्त्तिकस्य तत्र भाष्यकैयटादीनाञ्च तथैव स्वरसादिति चेत् सत्यम्। इह सर्वे प्राचां ग्रन्था अभ्युच्चयमात्रपरतया कथञ्चिन्नेयाः। वस्तुतस्तु अनुदात्तग्रहणं नानुवर्त्ततएव निष्फलत्वात्। लक्ष्यविरोधाच्च। क्वावरमित्यादौ बह्वृचानाम् उदात्तपाठस्य निर्विवादत्वात्। तैत्तिरीयाणामपि याज्यैवेनमेतया ऽप्यापयतीत्यत्राङ्प्रश्लेषे द्वितीयाक्षरस्योदात्तत्वात्। अत एव बह्वृचप्रा-

तिशाख्यम् "उदात्तवत्येकीभाव उदात्तं सन्ध्यमक्षरम्। अनुदात्तोदये पुनः स्वरितं स्वरिते पदे" इति श्लोके पूर्वार्द्धे अनुदात्तग्रहणं न कृतम्। किं तूत्तरत्ववत्तस्य पूर्वान्वयभ्रमं वारयितुं पुनःशब्दः प्रयुक्तः। शौनकीये स्वराष्टकेऽपि। 'एकादिष्टमुदात्तेन तत्त्वमेव नयेत्स्वर'मित्युक्तमिति दिक्॥ इकारयोरिति। ह्रस्वयोरेवेत्यर्थः। अस्य श्लोक इत्यत्र तु ई-यत इति दीर्घस्य प्रवेशान्न स्वरितः। इयञ्च बह्वृचानां व्यवस्थोक्ता। अन्येषामपि तदीयप्रातिशाख्यानुसारेण बोद्ध्या।

नोदात्त॥ उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः। लाघवार्थं परशब्दे प्रयोक्तव्ये मङ्गलार्थमुदयशब्दः प्रयुक्तः। तथा च भाष्यम्। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्तइत्यादि। एवञ्च वृद्धिरित्यादौ शिवशमिति मध्ये स्वरितोदयमिति चान्ते पाणिनीये मङ्गलं कृतम्। यद्यपि नञ्द्वयन्त्यक्त्वा गार्ग्यादीनामेवेति नियमो व्याख्यातुं शक्यते तथापि गार्ग्यादीनामुदात्तादिपरमेवेति विपरीतनियमशङ्कां वारयितुं नञ्द्वयात्मभावः। आगच्छ भो इति। अत्र माणवकशब्दस्य टेः प्लुतो वैकल्पिकत्वान्न कृतः। पक्षे सोपि बोद्ध्यः। स चोदात्तः प्लुत उदात्त इत्यधिकारात्। एकश्रुतिप्लुताभ्यामवयवभेदेन वाक्ये समुच्चिताभ्यां दूरात्संबोधनं द्योत्यते॥

विभाषा छन्दसि॥ अत्र तन्त्रेण आवृत्त्या वा अच्छन्दसीति नञं प्रश्लिष्य भाषायामपि ऐच्छिको विकल्पो बोद्ध्यः। तथा च दाक्षिणायनादिस्थले भाष्यम्। एकश्रुतिर्हि स्वरसर्वनामेत्यादि। अत एवाभियुक्तानां विरुद्धस्वरकतत्पुरुषबहुव्रीह्याद्याश्रयणेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते। पक्षशान्ते। श्वेतो धावति अलम्बुसानां यातेति द्व्यर्थं वाक्यमिति भाष्यञ्च। तथा च काव्यप्रकाशे वेदइव लोके स्वरो न विशेषाध्यवसायहेतुरित्युक्तम्। एकश्रुत्या व्यवहारादि-

ति तस्याशयः। किमर्थन्तर्हि फल्युपोत्तममिति प्रक्रम्य विभाषा भाषायामिति सूत्रितमिति चेत् लैस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेति गृहाण। वेति प्रकृते विभाषाग्रहणङ्कुर्वन्सूत्रकारोऽपि तन्त्रादिकमभिप्रैति। एतेन भाषायां स्वरानुरोधो नास्त्येवेति भ्राम्यन्तः परास्ताः। स्वरविधिषु छन्दोऽधिकाराभावात्। पृष्टस्य च। वा भाषायाम्। इति फिट्सूत्रस्य, फल्युपोत्तमम् विभाषा भाषायामिति षाष्ठस्य, एवं विधानामन्येषामपि निर्विषयत्वापत्तेश्च। किमर्थन्तर्हि वैदिकप्रक्रियायां स्वरव्युत्पादनं प्रक्रान्तमिति चेत् वेदे तस्यावश्यकत्वात्। न तु लोके सर्वथा ऽनुपयोगादिति गृहाण। इमं मे इति। ननु मे इति स्वरितस्य विधायकन्त्रिपादीस्थत्वादसिद्धं स्यात्। न च स्वरितादित्याश्रयात् सिद्धत्वम्। क्व वः सुम्नेत्यादौ चरितार्थत्वाद् इति चेत्। न। तस्यादित इत्यारभ्य नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भाष्यवार्त्तिकयोर्निवेशितत्वात्। न सुब्रह्मण्यायामिति सूत्रे स्वरितस्य तूदात्त इति वदता एतत्काण्डोत्कर्षस्य ज्ञापितत्वाच्च। न च सुब्रह्मण्योमिति सिद्धः स्वरितो ऽस्तीति वाच्यम्। तत्र एकादेश उदात्तेनेति सूत्रप्रवृत्तेरावश्यकत्वात्। तत्र ह्यनुदात्तग्रहणं नानुवर्त्तत इत्यवोचाम। प्राचां रीत्या तु देवब्रह्मणोरनुदात्त इति सूत्रं ज्ञापकमिति दिक्। सन्नतर इति। सन्नो ऽनुदात्तस्तदाह। अनुदात्ततरः स्यादिति॥ इति साधारणस्वरप्रकरणं प्रथमम्॥

प्रकृतिर्द्विधा धातुः प्रातिपदिकञ्च। तत्र धातुस्वरानाह। धातोरिति। अदाद्यन्तर्गण इति। आगणान्तादिति भावः।

अभ्यस्तानामादिः॥ आदिरित्यनुवर्त्तमाने पुनरादिग्रहणं नित्यार्थम्। अचीति किन्दधात्। अनिटि किं जक्षिथ॥

अनुदात्ते च॥ बहुव्रीहिरयम्। तेन माहि स्म दधात्। दधात्यत्र इत्यादौ लोपयणादेशयोः कृतयोरपि आद्युदात्तः

सिध्यतीत्याशयेनाह । अविद्यमानेति ॥

भीह्री ॥ प्रत्यये इत्येव वक्तव्ये पूर्वग्रहणं ज्ञापयति । सौ-
वर्यः सप्तम्यस्तदन्तसप्तम्य इति । ज्ञापके च मतद्वयम् । सा-
मान्यापेक्षं विशेषापेक्षञ्चेति । आद्ये ञ्नित्यादिर्नित्यमित्या-
दावपि तदन्तसप्तम्येव । द्वितीये तु यत्र तदन्तग्रहणसत्त्वा-
सत्त्वाभ्यां फले भेदः तत्रैव तदन्तसप्तमी । भीह्रीत्यत्र हि पू-
र्वग्रहणाभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीना-
मन्तोन्त्यस्य भवन्नुदात्तः प्रत्ययान्तस्य स्यात् । सप्तम्यर्थपुर-
स्कारे तु एनमपहाय भ्यादीनामेव उदात्तः स्यादिति स्पष्टः
फलभेदः । उपोत्तमं रिति चङ्यन्यतरस्यामित्यत्राप्येवमेव ।
ञ्नित्यादिर्नित्यं पथिमथोः सर्वनामस्थाने इत्यादौ तु नास्ति
फलभेदः । तदन्तग्रहणे सत्यसति च प्रकृतेरादेरेव उदात्त-
त्वात् । अतस्तत्र परसप्तम्येवेति दिक् । लोलूयंलोलूयमि-
ति । लो इत्युदात्तः । लू इति स्वरितः । ततश्चत्वारः प्रचयाः ।
लित्स्वर इति । अत्राम्रेडितान्तर्गतस्य लूशब्दस्योदात्तः । न
च तस्मिन्कर्त्तव्ये ऽल्लोपस्य स्थानिवद्भावः शङ्क्यः । स्वरविधौ
तन्निषेधात् । शेषनिघातः ॥

अचः कर्त्तृयकि ॥ इह कीर्यतइत्यादौ इत्वे रपरत्वे च सति
अयं स्वर इष्टस्तन्निर्वाहार्थन्तास्यनुदात्तेति सूत्रे समासैकदे-
शो ऽप्युपदेशशब्द इहानुवर्त्यते । सप्तम्या च विपरिणम्यते
तदाह । उपदेशे ऽजन्तानामिति । नन्वेवन्द्वादशाधा ज-
ज्ञे इत्यादाविवान्तर्भूतण्यर्थात्कर्तृकर्मविषयात् जनेर्लटि जा-
यते स्वयमेवेत्यत्र एष स्वरो न स्यादिति चेन्नैवम् । यइति
विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेव आत्वप्रवृत्तेरित्या-
ज्ञः । लूयतइति । आदिमध्यौ पर्यायेणोदात्तौ । मा हि ची-
करतामिति । अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे
कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः । उपोत्तम-
ग्रहणानुवर्त्तनात् द्वयोर्न । मा हि दधत् ॥ इति धातुस्वराः ॥

ते च प्रायेण कृत्तद्धितबलेनैव ज्ञेयाः । उणादिषु तु उणादिप्रत्ययैरव्युत्पत्तिपक्षे ऽपि फिट्सूत्रैः । क्वचित्तु विशिष्य विधानादिति विवेकः । अत एव कर्मण्यणिति सूत्रे मांसशब्दस्य नब्विषयस्येति फिट्स्वरमाशङ्क्य मनेर्दीर्घश्चेत्यौणादिकसप्रत्ययान्तत्वादन्तोदात्तता कैयटेनोक्ता । मांसमेकः पिंशतीत्यादौ तल्लभ्यमपि तथैव । यत्तु आज्यशब्दव्युत्पादनावसरे कैयटेन नब्विषयस्येति सञ्चारितन्तत्प्रौढिवादमात्रम् । स्वरनिर्वाहस्तु ण्यत्पक्षं परित्यज्य आङ्पूर्वात्क्यबिति पक्षस्य सिद्धान्तितत्वादेवेति दिक् ॥

कर्षात्वतः ॥ ञ्नित्यादिर्नित्यमित्यस्यापवादः स्थानिवत्त्वादिति । स्वरविधौ नेति निषेधस्तु नास्ति । लोपाजादेश एवेति नियमात् ॥

छन्द्युपोत्तमम् ॥ षट्त्रिचतुर्भ्यो हलादिरित्यस्यापवादः ॥

सर्वस्य सुपि ॥ सर्वशब्द उञ्छादिष्वन्तोदात्तो निपातितः । सर्वस्य विकारः सार्व इत्यत्र अनुदात्तादिप्रकृतिकसुबन्तलक्षणो ऽञ् यथा स्यादिति ङ्याप्सूत्रे भाष्ये स्थितम् । अवर्णन्तु सर्वत्रैव आद्युदात्तस्यैव । प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् ॥

पथिमथोः ॥ पथिमथिशब्दौ उणादिषु इनिप्रत्ययान्तौ व्युत्पादितौ गमेरिनिरित्यधिकारे मन्थः ॥ पथश्चेति सूत्रितत्वात् । तत्र प्रत्ययस्वरेणान्तोदात्ते प्राप्ते विधिरयम् । स्वे च्चय इति । चि निवासगत्योः । अस्मादधिकरणे घः । निवासे किम् । व्याधेः क्षयः । चि क्षये । एरजन्तः । जयोश्च इति । जयतेर्घः । करणं किम् । जयो ब्राह्मणानाम् । भावे एरच् ॥

वृषादीनाञ्च ॥ वृषु सेचने इगुपधलक्षणः कः । आकृतिगण इति । फिट्सूत्रेषु ग्रामादीनाञ्चेति सूत्रितम् । ग्रामादिरप्याकृतिगणः । एवञ्च अविहितलक्षणस्याद्युदात्तस्य

वृषादित्वङ्ग्रामादित्वं वा बोध्यम् । अन्तोदात्तत्वस्य तु उञ्छादित्वं घृतादित्वञ्चेति दिक् । एवञ्च द्वाभ्यामेव सूत्राभ्यां सर्वसिद्धौ इतरसूत्रद्वयप्रणयनं कर्तृभेदान्न दोषायेति बोध्यम् ॥

आशितः कर्ता ॥ कर्तृवाचीति । सकर्मकादप्यशेः कर्तरि क्तः उपधादीर्घश्चानेनैव सूत्रेण निपात्यतइति भाष्ये स्थितम् । अत एव कृषन्निति मन्त्रस्य वेदभाष्ये कृषन्कृष्टिङ्कुर्वन् फालः कृषीवलं भोक्तारङ्करोतीति व्याख्यातम् । वृत्तिकारस्तु अशेराङ्पूर्वादविवक्षितकर्मत्वेनाकर्मकत्वात्कर्त्तरि क्तः । तत्र थाथघञिति प्राप्तः स्वरो ऽनेन बाध्यतइत्याह । तत्क्लिष्टम् । अविवक्षितकर्मकेभ्यो ऽपि कर्त्तरि क्ते दत्तवान् पक्ववानित्यर्थे दत्तः पक्व इत्यापत्तेः । आशित इत्यवग्रहापत्तेश्च । अपर आह । कर्त्तेत्यनेन भूतपूर्वगत्या अणौ कर्त्ता णौ कर्मीभूत एव विवक्षितः । तथा च ण्यन्तात्कर्मण्येवायं क्त इति ॥

जुष्टार्पिते ॥ जुषी प्रीतिसेवनयोः । श्वीदितो निष्ठायामिति इट् प्रतिषेधः । अर्त्तेर्णिच् । अर्त्तिह्रीति पुका न केवलङ्कृतार्थत्वमात्रं किं तु आरभ्यमाणे सूत्रे दोषो ऽप्यस्तीत्याह । अर्पिताः षष्टिरित्यादिना ॥

युष्मदस्मदोर्ङसि ॥ ङयि च ॥ पृथग्योगकरणं यथासंख्यशङ्कानिरासार्थम् ॥

ईडवन्द ॥ पूर्वसूत्रे ह्यनुबन्धकस्याग्रहणात् ण्यदन्तेषु तित्स्वरएव प्राप्ते वचनम् ॥

विभाषा वे ॥ वेणुशब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः स्थो ऽणुरित्यनुवर्त्तमाने अजिवृरीभ्यो निच्चेति व्युत्पादितत्वात् । इन्धानशब्दो यदि चानशन्तः तदा चित्त्वादन्तोदात्तः । अथ शानजन्तः तर्हि लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । श्नसोरल्लोप इति

असोकारस्य उदात्तस्य लोपात् । सर्वथापि अप्राप्तमाद्युदात्तत्वं पक्षे विधीयते । नयः पचाद्यजन्ता इति । कुह विस्मापने । श्वठ असम्यग्भाषणे । चौरादिकावदन्तौ । क्रथ हिंसायाम् । मतोः पूर्वमिति । शब्दरूपापेक्षया नपुंसकस्य आदित्यस्य विशेषणम् । केचित्तु सूत्रे पूर्वशब्दं पुल्लिङ्गमेव पठन्ति । उदाहरणे चातुरर्थिको नद्यां मतुप् । मतौ बह्वचोऽनजिरादीनां शरादीनाञ्चेति दीर्घः । अहीवतीति । सञ्ज्ञायामिति वत्वम् । उत्तरो ग्रन्थः स्पष्टार्थः । क्वचित्तु विशेष उच्यते । द्वितीयपादे तृणधान्यानाम् । तिला इति । यत्तु अखावूतिलोमेति रजसि कटज्विधौ हरदत्तेनोक्तन्तिलशब्दो घृतादित्वादन्तोदात्त इति तच्चिन्त्यम् । तिलाश्च मे इत्यत्र आद्युदात्तस्यैव पठ्यमानत्वात् ॥

प्राणिनां कुपूर्वम् ॥ यत्तु कुपूर्वाणामिति पाठमुपन्यस्य कवर्गात् ये पूर्वे तन्मध्ये आदिरिति न्यासकारहरदत्तौ तस्य समूह इति सूत्रे प्रोचतुः तच्चिन्त्यम् । सर्वनामत्वेन सुटि सति कुपूर्वेषामिति प्रयोगापत्तेः । सौत्रत्वं वा शरणीकर्त्तव्यम् ॥

लघावन्ते द्वयोश्च ॥ इह आदिशब्दो न संबध्यते । तेनादेरपि गुरोरुदात्तः । अत एव वृषाकपीति शब्दस्य गुरुरुदात्त इति वृषाकप्यग्नीति सूत्रे वृत्त्यादिग्रन्थेषु विभावितम् । न च गुरूणां मध्ये य आदिरित्यर्थोऽस्त्विति वाच्यम् । अन्यतो ङीषिति सूत्रे सारङ्गकल्माषशब्दौ लघावन्त इत्यादिना मध्योदात्ताविति हरदत्तादिग्रन्थविरोधात् । कल्याण इति । पर्यायेण आदिमध्यावुदात्तौ ॥

चतुर्थपादे । उपसर्गाश्चाभिवर्जम् ॥ इह नाभिरित्येव सुवचम् । इतरेषां पूर्वेण सिद्धत्वात् । वस्तुतस्तु तदपि मास्तु । एवमादिषु अभेः सुपठत्वात् । आ त्वेति मन्त्रे उपसर्गाश्चाभिवर्जमिति वचनात्प्रातिपदिकान्तोदात्तत्वमित्युक्त्वा मा नो

मत्तां अभिद्रवन्निति मन्त्रे एवमादीनामन्त इति वदता वेदभाष्यकृता ध्वनितमेतत् ॥

यथेति पदान्ते ॥ यत्तु स्वरमञ्जरीकृता पुरा जीवगृभो यथा भ्राजन्तो अग्नयो यथेत्युपन्यस्य लित्स्वरमाश्रित्य आर्थ्यायिकप्रसिद्धिमात्रेणात्र सर्वानुदात्तत्वमित्युक्तम् । फिट्सूत्रेषु तुरीयः पादः ॥

इति प्रकृतिस्वरविषयकं द्वितीयं प्रकरणम् ॥

अथ प्रत्ययस्वराः ॥ कर्त्तव्यमिति । तव्यत्प्रत्ययः तव्यतस्तित्त्वात्स्वरितो वक्ष्यते । ननु तव्यस्यापि आद्युदात्ते शेषनिघाते कृते उदात्तादनुदात्तस्येति स्वरितो भवत्येवेति चेत्सत्यङ्किन्त्वयमसिद्धः । तित्स्वरस्तु सिद्ध इति शेषनिघातप्रवृत्त्यप्रवृत्तिभ्यां महान्फले विशेषः । तव्यतस्तित्त्वमेव च शेषनिघातपरिभाषाया यथोद्देशं प्रवृत्तौ ज्ञापकमिति ध्येयम् । युच्छतीति । युच्छ प्रमादे । अन्यके इति । अकच् । ततः परष्टिरुदात्तः । एवं यके तकदित्यत्रापि । अकचश्चित्त्वमेव च चितः प्रकृतेरित्युक्तेऽर्थे लिङ्गम् । अन्यथा तस्यैकाच्त्वादनर्थकत्वस्यात् । कौञ्जायना इति । कुञ्जस्यापत्यानि बहूनि । गोत्रे कुञ्जादिभ्यश्च्फञ् । व्रातच्फञोरस्त्रियामिति ञ्यः । बहुत्वे लुक् । इह च्फञश्चकारो व्रातच्फञोरिति विशेषणे चरितार्थः । ञकारो वृद्धौ । ततश्च चित्स्वरं बाधित्वा परत्वात् ञित्स्वरः प्राप्तः सोऽनेन बाध्यते ॥

तिसृभ्यो जसः ॥ अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचननिर्देशः । अन्तोदात्तस्य त्रिशब्दस्य आदेशस्तिसृशब्दोपि तथा तस्य अचि र ऋत इति कृते उदात्तस्वरितयोर्यण इति जसः स्वरितत्वं प्राप्तम् अनेन बाध्यते ॥

अन्तोदात्तात् ॥ नित्यशब्दः स्वर्यते तेनाधिकारगतिर्भवतीत्याशयेनाह नित्याधिकारेति । अनित्यसमासे किम् । अग्निचिता । उपपदसमासः । कृदुत्तरपदसमासः । कृदुत्त-

रुपदप्रकृतिस्वरेण चिच्छब्द उदात्तः। अधिकारग्रहणं किम्। विग्रहाभावमात्रेण यो नित्यसमासस्तत्र पर्युदासो मा भूत्। अवाचा ब्राह्मणेन। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। अत्र विभक्तेर्वैकल्पिक उदात्तो भवत्येव। दधीच इति। दध्यञ्चतीति दध्यङ् तस्य ऋत्विगादिना क्विन्। शसः परिग्रहार्थमिति। शसादिरित्येव तु नोक्तम्। नपुंसके शसि मा भूत्। सुटि च यथा स्यादिति। ऊठीति। उपधाभूत ऊठ् गृह्यते न त्वन्त्य इत्यर्थः। पञ्चमीनिर्देशादन्तस्यैव ग्रहणे प्राप्ते वचनम्। आभ्यामिति। पूर्वार्धर्चे बभ्रूशब्देनोक्तयोरिह इदमा परामर्शे ऽप्यन्वादेशो ऽस्त्येव। अन्वादेशस्य कथितानुकथनमात्रम्। न त्विदमा कथितस्येदमैवानुकथनमिति भाष्योक्तेः। नन्वेवमपि सावेकाच इति स्वरः प्राप्नोति। न चेहान्तोदात्तादित्यस्यानुवृत्तिसामर्थ्यात्सोपि न प्रवर्त्ततइति वाच्यम्। शसो व्यावृत्त्या सामर्थ्योपक्षयात्। न हि शसि सावेकाच इति प्राप्नोति। इष्यते च तत्रानुदात्तः अव यदीमेनांऽषतो अभ्यवर्षीत् हनामैनाँ इति त्वष्टा यदब्रवीत्। अन्यैरेवान्यानामभिस्मरत् इत्यादौ तथैव पाठात् तस्मादाभ्यामित्यादेरन्वादेशे कथं सर्वानुदात्ततेति चेत्। उच्यते। ऊडिदमिति सूत्रे एकाच इत्यनुवर्त्तते। पदादिविशेषणार्थम्। अत एव निश्पर्यन्ताः षडेव गृह्यन्ते न तु ततः परे ऽपि। तेषामनेकाच्त्वात् तेन ग्रीवायां बद्धोपि कच्छ आसनि मत्स्य नदीन उदनि च्छियन्तमित्यत्र आसन्न्युदनीति मध्योदात्तमन्यथा अन्तोदात्तं स्यात्। न चान्तोदात्तात्परत्वमेवेह विभक्तेर्दुर्लभमिति वाच्यम्। स्थान्यान्तरतम्येनादेशानाम्यमन्तोदात्तत्वात्। आस्यशब्दस्य ण्यदन्ततया तित्स्वरेण स्वरितान्तत्वे ऽपि पद्दन्नोमासित्यादिसूत्रे पदाद्यादेशानामन्तोदात्ततानिपातनाश्रयणात्। एवं स्थिते शसि एनादेशस्यापि एकाज्ग्रहणेनैव

वारितत्वादन्तोदात्तग्रहणस्य सामर्थ्यं निर्बाधम् । तेनाभ्यामित्यादौ सर्वानुदात्तता सुस्थेति । यद्वा सावेकाच इति सूत्रे अन्तोदात्तादित्यपकृष्यताम् । तथा च अभ्यादेशे कृते प्रसङ्ग एव नास्तीति दिक् ।

अष्टनो दीर्घात् ॥ अष्टन्शब्दो घृतादित्वादन्तोदात्तः । तेनोत्तरार्थतया ऽनुवर्त्तमानस्यान्तोदात्तादित्यस्येहापि नान्वयः । मण्डूकप्लुतिर्वा ऽस्तु । दीर्घात्किम् । अष्टभिः । इह झल्युपोत्तममिति स्वरः ॥

शतुरनुमो नद्यजादी ॥ अभ्यासं त्वा विदुषीरस्मिन्नहन् यस्यैवं विदुषो ऽग्निहोत्रं जुह्वति । अत्र वस्वादेशस्य स्थानिवद्भावेन शतृत्वात्ततः परयोर्नदीविभक्त्योरुदात्तः प्राप्तः स नेष्यते । तथा च स्थानिवत्सूत्रे वार्त्तिककृता स्वरे च वस्वादेशे इति निषेधः पठितः ॥

उदात्तयणो हल्पूर्वात् ॥ उदात्तस्वरितयोरिति स्वरिते प्राप्ते आरम्भः ॥

ह्रस्वनुड्भ्याम् ॥ अत्यखन्त इति । छन्दस्यपि दृश्यतइत्यनङ् । अनो नुडिति नुट् । पूर्वनकारस्य लोपः । नेष्यतइति । हल्स्वरप्राप्ताविति भाष्योक्तेरिति भावः । रेवानिति । रयिरस्यास्तीति मतुप् । रयेर्मतौ बहुलमिति संप्रसारणं पूर्वत्वम् । आद्गुणः । ततो ह्रस्वाभावाद्वचनम् ॥

नामन्य॥ अग्नीनामित्यादौ परत्वान्नित्यत्वाच्च दीर्घे कृते ह्रस्वाभावान्नेदं स्यात् । वचनन्तु तिसृणामित्यादौ सावकाशम् अत आह मतुपीति । प्रथमान्तमनुवृत्तं सप्तम्या विपरिणम्यतइति भावः ॥

षट्त्रि ॥ हलादिः किम् । चतस्रः पश्य ॥

न गोश्वन् ॥ इहानन्तरस्य प्रतिषेधासंभवात् सर्वस्यैव षाष्ठिकस्वरस्यायं प्रतिषेध इत्याह । प्रागुक्तमिति । एवञ्च वीरवत्तमामित्यत्र ह्रस्वनुड्भ्यां मतुबिति न भवति । यत्तु

स्वरमञ्जर्यान्तृतीयादिविभक्तेरुदात्तत्वन्न भवतीति न गोश्वन्-सूत्रं विष्टतन्तरनेन प्रत्युक्तं लक्ष्यविरोधात्। उदात्तनिवृत्ति-स्वरस्य तु प्रतिषेधो नेष्यते। देवीकुमारीत्यादीनामन्तो-दात्तत्वस्य भाष्ये तत्र दर्शितत्वात्। वेदे ऽपि दर्शनाच्च। त-न्निर्वाहार्थं न गोश्वन्निति सूत्रे अनुदात्तस्य चेत्येतदितरेषा-मेवानुवृत्त्या निषेध्य सङ्कोचो व्याख्येयः। अनुदात्तस्येत्यंशो वाक्यभेदेन पुनर्विधानार्थ इति च व्याख्येयम्। शुनश्चिच्छेफ-मिति। अत्र चिदिति पदं संहितापाठे बाहुलकात् शुनः शेफशब्दस्य मध्ये प्रक्षिप्यते। उक्तञ्च प्रातिशाख्ये। शुनश्चिच्छेफं निदितन्नराशंसम्पूषणम्। नराशंसन्दैव्यं चेत्यतानुपूर्व्य-संहिता इति। पदकाले तु शुनः शेफं चित् इति पठ्यते। शेफपुच्छलाङ्गूलेषु शुन इत्यलुक्। वनस्पत्यादित्वादुभयपदप्र-कृतिस्वरः। प्रथमैकेति। नत्विह सावेकाच इत्यत्रेव सुपो ग्रहणम्। तत्र यत्तदोस्त्रियामवर्णान्तत्वे ऽपि लिङ्गान्तरे ए-कारान्तत्वादिति भावः। राट्। राजा। परमराजा। अङ्गि त्वञ्चतेः क्विबन्तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्। यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यात्। प्राचा प्रा-ङ्भ्याम्। गतौ तु विभक्त्युदात्तः स्यादेव। प्राचा प्राचे। क्रुङ् क्विन्नन्त एव। क्रुञ्चा परमक्रुञ्चा। कृत्। करोतिः कृन्त-तिर्वा क्विबन्तः। यत्त्विह काशिकायां सुगुना सुगुभ्यामित्युदा-हृत्य अन्तोदात्तादुत्तरपदादिति प्राप्तः प्रतिषिध्यतइत्युक्तं त-द्भाष्यवार्तिकविरुद्धं स्थानिवत्सूत्रशेषे हि गोः पूर्वणित्वात्वस्व-रेष्विति वार्त्तिके तद्भाष्ये च स्वरे कर्त्तव्ये निषेद्धव्ये च गोश-ब्दस्यादेशो न स्थानिवदिति निर्णीतम्। द्युभिरिति। सा-वेकाच इति ऊडिदमिति वा प्राप्तः स्वरो निषिध्यते॥

नृ च॥ अत्र झलादिरिति प्राचां रीत्या झल इत्यस्यानुवृ-त्तिमाश्रित्योक्तम्। वस्तुतस्तु झलिति नानुवर्त्तते। तेन य एकइन्नर्यः पौसीत्यत्र नरीत्यस्याद्युदात्तत्वं सङ्गच्छते। एवं सति

दिवो झलिति सूत्रमपि शक्यमकर्तुंन्तथा हि। इत्थं सूच्यताम्। अष्टनो दीर्घात्। दिवो ऽत्रादिः। शतुरनुमो नदी चेति। किं चैवं ऊडिदमिति सूत्रे दिवो ग्रहणं मास्त्वित्यपरं लाघवम्। यत्तु हरदत्तेन नगोऽस्वन्निति सूत्रे नदीत्यस्यान्तोदात्तमुक्तान्दिवो झलिति सूत्रे झल्ग्रहणस्योत्तरत्रावश्यकत्वमुक्तम्। तदुभयं चिन्त्यम्॥

तित् स्वरितम्॥ ऋत इत् उदोष्ठ्येति सूत्रद्वये ऽपि औदिति सूत्रे च तकार उच्चारणार्थः। अतो नेदं प्रवर्त्तते। विस्तरः शब्दकौस्तुभे बोध्यः॥

तास्यनुदात्तेत्॥ तास्यादीनां समाहारद्वन्द्वः। उपदिश्यतइत्युपदेशः। ङिदिति कर्मधारयः। इत्सञ्ज्ञकङकारेण च उपदिश्यमानस्य विशेषणात्तदन्तविधिः। कर्त्तेति। लुट्। आत्मनेपदप्रथमस्य डारौरसः। तासिः। एकवचने उदात्तनिवृत्तिस्वरे ऽपि इतरयोः फले विशेषः। ङित इति। अस्याप्युपदेशविशेषणत्वान्नेह। स्तुतञ्चरितुर्हवम्। सुनुतआवधावत। अत्र अतिदेशेन ङित्। नन्वनुबन्धानामनेकान्तत्वात्। चक्षिङो ऽपि कथं ङित्त्वम् इति चेत् विशेषणसामर्थ्याद्भविष्यति। अथ वा ङिदंशे तदन्तत्वस्य बाधे मत्वर्थमात्रं लभ्यते। चनस्यतमिति। चनोन्नम्। तदात्मनइच्छतम् इत्यर्थः। क्यच्लोट् थसस्तम्। शप्। स चानुबन्धस्यानेकान्तत्वाददुपदेशः। चित्स्वरो ऽपीति। परत्वादिति भावः। हत इति। अनुदात्तोपदेशेति नलोपे कृते हन्तिरदन्तः न तूपदेशे॥

थलि च॥ आदिर्णमुलिति सूत्रादन्यतरस्यामित्यनुवर्त्तमाने वाग्रहणं कार्यविकल्पार्थं सत् आदेरपि कार्यं प्रापयतीत्याह। आदिर्वेति। त्रयाणामप्येषामुदात्तो भवति न तु युगपत्। अन्तस्य तवै युगपदित्यादौ युगपद्ग्रहणाल्लिङ्गात्। एवं स्थिते अन्यतरस्यामित्यनुवृत्तेः फलमाह। यदेति।

सेटीति किं ययाथ । इड्ग्रहणन्तु यदा इडागमः तदा तस्योदात्तार्थं स्यात् । ततश्च यथा लुलविथेत्यादौ चतुर्णामुदात्तत्वे ऽपि पपिथेत्यत्र त्रयाणां भवति एवमिडभावे ऽपि स्यात् । आहवनीय इति । बाहुलकादधिकरणे अनीयर् । प्रीणनार्थात्कर्मणि वा । ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः । इति प्रत्ययस्वरप्रकरणन्तृतीयम् ॥

यज्ञश्रियमिति । षष्ठीतत्पुरुषः । श्रीशब्देकारस्य उदात्तत्वे कृते आन्तरतम्यात् इकारो ऽप्युदात्तः । चित्रेति । श्रूयतइति श्रवः कीर्त्तिः । चित्रं श्रवो यस्य चित्रश्रवाः । ततस्तमप् । समपाद इति । समशब्दः त्वत्वसमसिमेत्यनुच्चानीति फिट्सूत्रेणानुदात्तः । हरदत्तस्त्वाह । सुञो डमबिति । पादशब्दो वृषादित्वादाद्युदात्तः । मन्द्रयत्सखमिति । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । णयन्ताल्लेट् । शवादेशः । तस्य छन्दस्युभयथेत्यार्द्धधातुकत्वेन शवभावाददुपदेशादिति निघातो न । अतः प्रत्ययाद्युदात्तत्वमेव । णेरनिटीति णिलोपस्तु न । तं प्रति सार्वधातुकत्वाश्रयणात् । न च वैपरीत्यमापादनीयम् । छन्दसि दृष्टानुविधानात् । इत्थं मन्द्रयच्छब्दोन्तोदात्तः । तत्पुरुषइति । स्यादेतत् । परमङ्कारकं परमकारकेण परमकारके इत्यत्रातिप्रसङ्गः । द्वितीयातृतीयासप्तम्यन्तपूर्वपदत्वात् । न हि विशेषणसमासः प्रथमान्तानामेवेति नियमोस्तीत्यसकृदुक्तत्वात् । सत्यम् । लक्षणप्रतिपदोक्तपरिभाषया तृतीयादिशब्दोच्चारणपूर्वकं विहितस्यैव समासस्येह ग्रहणान्नोक्तदोषः । अव्यये इति । निपातत्वादेव सिद्धे नञ्ग्रहणं परस्यापि बाधनार्थम् । तेन अकरणिरित्यादौ कृत्स्वरो न । अव्ययीत्यत्रापि एवम् । किं च अतिस्र इत्यत्र तिसृभ्यो जस इति शिष्टोपि विभक्तिस्वरो नञ्स्वरेण बाध्यते । अपि च । अचत्वारः । अनड्वाहः इत्यत्र सतिशिष्टो ऽपि आम उदात्तो बाध्यतइ-

ति बोद्धव्यम् ॥ कुग्रहणान्तु वादिषु पाठाभावाद्वस्तुतस्तु वादिष्वेव कुः पाठ्यः । इह तु न पाठ्यः । एवञ्चाव्ययत्वमपि तस्य सिद्ध्यति । स्नात्वेति । मयूरव्यंसकादिरयम् । नन्वेवन्तत्रैवान्तोदात्तत्वं निपात्यतामिति चेन्नैवम् । सामिकृतं स्वयंधौतमित्यादिवारणायेह परिगणनस्यावश्यकत्वात् ।

सदृशप्रतिरूपयोः ॥ न नु पित्रा सदृश इति विग्रहे तृतीयान्तं पूर्वपदन्तत्र तत्पुरुषे तुल्यार्थेत्येव सिद्धम् । न च तुल्यार्थयोगे षष्ठ्या अपि विहितत्वेन षष्ठीसमासार्थमिदमिति वाच्यम् । तत्रानभिधानात्षष्ठीसमासो नेत्यपि सुवचत्वादिति चेत् । मैवम् । अलुक्समासानुरोधेन षष्ठीसमासस्वीकारावश्यकत्वात् । तद्यथा । दास्याः सदृशः । वृषल्याः सदृशः । षष्ठ्या आक्रोशे इत्यलुक् । दासीवृषलीशब्दयोरन्तोदात्तयोरुदात्तयणो हल्पूर्वादिति विभक्तिरुदात्ता । न सादृश्यमिति । यत्र हि प्रतियोगिविशेषसमर्पणार्थं पूर्वपदं तत्रैव सादृश्यस्य समासार्थतेति सादृश्यग्रहणसामर्थ्यादाश्रीयतइति भावः । गृहपतिरिति । गेहे क इति कप्रत्ययस्वरेण गृहशब्दोन्तोदात्तः । पञ्चारत्निरिति । पञ्च अरत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः । प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लोपः ॥

संख्या ॥ इह राजन्यबहुवचनेति पूर्वसूत्रात् द्वन्द्वइत्यनुवर्त्तते ॥

कार्त्त ॥ कुर्भूमिः तत्र जाताः कुजाः तान्पाति कुजपः । कृतस्य कुजपस्य च अपत्यमित्यर्थे ऋष्यणन्तावेतौ ॥

कुरुगार्हपत ॥ इह पण्यकम्बलान्ताः सप्त समासाः । तत्र आदितो द्वयोः षष्ठ्याः सौत्रो लुक् । इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनम् । दासीभाराणामिति बहुवचननिर्देशादाद्यार्थो ऽवगम्यते तदाह । एषामिति । कुरूणां गार्हपतम् । कुरुशब्दो ऽन्तोदात्तः । कृग्रोरुच्चेत्युप्रत्ययान्त-

त्वात् । रिक्तगुर्वादयः कर्मधारयाः । श्रीर्यस्यास्ति तत् श्लीलम् । सिध्मादेराकृतिगणत्वाल्लच् । कपो रो ल इत्यत्र कपिलकादीनामुपसंख्यानाल्लत्वम् । न श्लीलेति नञ्समासे आद्युदात्तो ऽश्लीलशब्दः । अश्लीला चासौ दृढरूपा च लावण्यरहिता ऽपि कुब्जत्वादिरहितत्वात्संस्थानमात्रेण दृढेत्यर्थः । पारेवडवेव निपातनादिवार्थे समासो विभक्त्यलोपश्च । पारशब्दो घृतादिः । तिलशब्दान्मत्वर्थीय इति । पृषोदरादित्वात्तिशब्दस्य द्विर्वचनम् । तितिलिनो ऽपत्यम् । अण् । नस्तद्धितइति टिलोपः । तैतिलानां कद्रूः । पण्यशब्दो ऽवद्यपण्येति यदन्तत्वादाद्युदात्तः । न च द्वितीयाकृत्या इत्येव सिद्धमिति वाच्यम् । प्रतिपदोक्तो कृत्यतुल्याख्या अजात्येति समासे तत्प्रवृत्तेः । इह तु विशेषणं विशेष्येणेति समासः । ननु अजात्येति प्रतिषेधसामर्थ्यादिह दुर्लभोसाविति चेत् । अत्राहुः । अजात्येति न जातिप्रतिषेधार्थं किं तु न्यायसिद्धार्थानुवादमात्रम् । न चानुवादस्य सर्वथा नैष्फल्यं गुणक्रियावाचिनामनियमेन पूर्वनिपातप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थं सूत्रमिति व्युत्पादनेन चरितार्थत्वात् । दास्या भारो दासीभारः । यूपदार्विति । यूपशब्द आद्युदात्तः । कुयुभ्यां वेत्यत्र निदित्यनुवृत्तेः । त्वोतासइति । त्वया ऊताः रक्षिताः त्वोतासः । प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः । अवतेः क्तः । ज्वरत्वरेत्यूठ् । एत्येधत्यूठ्स्विति वृद्धेरिडागमस्य वा ऽभावश्छान्दसः । पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः । ततः स्वरितप्रचयौ ॥

गतिरनन्तरः ॥ गतिशब्दः क्तिजन्तः न तु क्तिन्नन्तः । अनन्तर इति पुंल्लिङ्गनिर्देशात् । निपातनाच्चानुनासिकलोपः । पुरोहितमिति । अत्र समासान्तोदात्तत्वम्, अव्ययपूर्वपदप्रकृतिस्वरत्वं, कृत्स्वरः, थाथादिस्वरः, इत्येतेषु

प्राप्तेषु पूर्वपदप्रकृतिस्वरो ऽनेन विधीयते । पूर्वपदञ्चेहान्तोदात्तत्वम् । पूर्वाधरावराणामसीति असि प्रत्ययस्वरेण । अनन्तर इति किम् । अभ्युद्धृतः । इह हृतशब्दस्य उच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेण आद्युदात्त उद्धृतशब्दः । तस्य पुनरभिशब्देन समासः । तत्र च क्तग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदम् । एवं स्थिते समासान्तोदात्तत्वे प्राप्ते तदपवादे कृत्स्वरे तदपवादस्थाथादिस्वरः प्राप्तः तमपोद्याभेर्गतिस्वरः स्यात्सोनन्तरग्रहणेन वार्यते । नन्वनन्तरग्रहणेनापि दुर्वारो ऽसौ कृद्ग्रहणपरिभाषया उद्धृतशब्दस्य क्तान्तत्वे अभेस्तदानन्तर्यस्य सत्त्वादिति चेन्नैवम् । अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरो गतिराश्रीयते । अभिश्च न तथेति । नन्वेवमस्मा भूदभेः स्वर इष्टसिद्धिस्तु कथम् । अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वर इष्यते । संसृष्टन्धनमुभयं समाकृतम् इति मन्त्रे समाकृतशब्दे आङः स्वरदर्शनात् । न चासौ प्रकृतसूत्रेण सिद्ध्यति । प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तिरुक्तत्वात् । न च तं बाधित्वा गतिस्वरः प्रवर्त्ततइति वाच्यम् । द्वितीयसमासे उदः पूर्वपदत्वाभावात् । अत्रोच्यते । धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरो ऽयं प्रवर्त्तते न हि क्तप्रकृतिभूतं धातुं प्रति पूर्वपदत्वङ्गतेः संभवति । तस्मादभ्युद्धृतं समाकृतमित्यादि तावत्सुस्थम् । इदं त्वत्रशिष्यते । उक्तरीत्या दूरादागत इत्यादौ कारकपूर्वेपि गतिस्वरः स्यात् । इष्यते तु थाथादिस्वरः । तदर्थं कारकाद्दत्तश्रुतयोरिति सूत्रे कारकादिति योगो विभज्यते । क्तग्रहणङ्गतिग्रहणञ्चानुवर्त्तते । कारकात्परं क्तान्तं सगतिकमुत्तरपदम् अन्तोदात्तं स्यादित्यर्थः । तत्र दूराद्गत इत्यादौ थाथादिसूत्रेणैव सिद्धत्वात् दूरादागत इत्यादौ ग-

तिरनन्तर इत्यस्य बाधनार्थमेवेदं सूत्रमिति दिक् ॥

तादौ च ॥ ननु कृतीति व्यर्थम् । तथा हि । गतेरयं स्वरो विधीयते । गतिसञ्ज्ञा च धातुमाक्षिपति स च प्रत्ययविशिष्ट एव प्रयोगार्हः । प्रत्ययश्चेह परिशेषात् कृत् एवेति चेत्सत्यम् । कृद्ग्रहणं कृत्सञ्ज्ञाप्रवृत्तिकालोपलक्षणम् । तेन कृदुपदेशे तादित्वलाभात् प्रलपिता इत्यादि सिद्ध्यति । स्वरप्रवृत्तिवेलायान्तादित्वाभावे ऽपि पूर्वन्तत्सत्त्वात् । आदिग्रहणन्तु शक्यमकर्त्तुम् । यस्मिन्विधिरित्येव सिद्धेः । अताविति किम् । आगन्तुः । स्यादेतत् । अताविति पर्युदासः क्तिन एवोचितः । न विन्धे अस्य सुष्टुतिम् । सुहवां सुष्टुती हुवे । वृष्णोचोदस्व सुष्टुतिम् । यास्ते राके सुमतयः इत्यादौ गतिस्वरादर्शनादिति चेत् । मैवम् । उदाहृतप्रयोगेषु उपायान्तरस्यैवानुसर्त्तव्यत्वात् । न ह्यताविति पर्युदासमात्रेण तन्निर्वाहः । कृदुत्तरपदप्रकृतिस्वरेण धातोरुदात्ततापत्तेः । अन्तोदात्ततायाश्च तवेष्टत्वात् । किं च । अताविति क्तिनः पर्युदासे प्रभूतौ सङ्गतिमित्यादौ गतिस्वरो न सिद्ध्येत् । तस्मात्तुन एवायं पर्युदास इति स्थितम् । का तर्हि सुष्टुतेर्गतिरिति चेत् शृणु । स्तोत्रकरणीभूताया ऋचः साध्वसिच्छिनत्तीतिवत्कर्तृत्वविवक्षायां क्तिजन्तमिदन्न तु क्तिन्नन्तम् । यत्तु के चित् । मन्क्तिन्व्याख्यानेत्यादिना अन्तोदात्तमित्याहुस्तन्न । तत्र कारकादित्यस्य वृत्तिकृता ऽनुवर्त्तितत्वात् । प्रभूतावित्यादिसिद्धये तदनुवृत्तेर्न्याय्यत्वाच्चेति दिक् ॥

तवै च ॥ कृत्स्वरापवादो ऽयम् । अन्त उदात्त इति । यद्यपि उदात्तग्रहणं नानुवर्त्तते । तथापि गतिः प्रकृत्या भवतीत्युक्ते उदात्तो बुद्धिमारोहति स एवान्तस्य भवतीति भावः । प्रत्यञ्च इति । कृदुत्तरपदप्रकृतिस्वरः । परत्वादिति । चुस्वरस्यावकाशः साकञ्चीचो । अस्यावकाशः । ये पराञ्चः ।

उभयप्रसङ्गे परत्वादयमित्यर्थः । ननु चुस्वरः सति शिष्टः । भसञ्ज्ञायामल्लोपे च कृते प्राप्तत्वात्सत्यम् । नायं विप्रतिषेधः किं तर्हि इष्टिरेवेति हरदत्तः । चौरनिगन्तोञ्चतावप्रत्ययइति वार्त्तिकग्रन्थोपि इष्टिपरतयैव व्याख्येय इति तदाशयः । इहापि मूले परत्वादित्यस्य इष्टत्वादित्यर्थः । न्यङ्ङिति । उदात्तस्वरितयोर्यण इति स्वरितः । दिवोदासायेति । दिवस्स्र दासे इति षष्ठ्या अलुक् ॥

नञो ऽजरमरमित्रमृताः ॥ नञ्सुभ्यामित्यस्यापवादः । जरणञ्जरः । ऋदोरप् । मरणं मरः । अस्मादेव निपातनादप् । ञिमिदा स्नेहने । क्तः । मित्रम् । मृङो नपुंसके भावे क्तः । सूत्रे तु शब्दपरत्वात्पुंस्त्वम् । अमित्रमिति । मध्योदात्तोयम् । एतेन अमित्रस्य व्यथया मन्युमिन्द्र इत्यादि व्याख्यातम् । अमेर्द्विषतीति इत्रचप्रत्यये तु अन्तोदात्त उक्तः । नञ्तत्पुरुषे त्वाद्युदात्तो ऽपि । न च तस्य परवल्लिङ्गतापत्तिः । भ्रवामिवष्टत्वमेद्धाः पुंसीति लिङ्गानुशासनसूत्रात् । एवञ्च ईश्वरीशकल्यादिशब्दवदमित्रशब्दोपि त्रिविधः । यत्तु द्विषो ऽमित्रइति सूत्रे हरदत्तेन दोषद्वयमुक्तं क्लीबत्वमाद्युदात्तत्वञ्च स्यादिति । तदापातत एवेत्यवधेयम् ॥

सोर्मनसी ॥ सुकर्माण इत्यादि । यद्यपि आद्युदात्तं द्व्यच्छन्दसीत्यनेन सिद्धमिदम् । तथापि सुप्रथिमेत्यादि बह्वर्थमच्छन्दोर्थञ्च सूत्रमिति बोध्यम् ॥

गतिकारकोपपदात् कृत् ॥ इह शितेर्नित्याबह्वज्बहुव्रीहावभसत् । इति पूर्वसूत्रस्थं बहुव्रीहिग्रहणं नानुवर्त्तते । स्वरितत्वात् । किं तु व्यवहितमपि तत्पुरुषग्रहणान्तत्पुरुषे शालायान्नपुंसकइति सूत्रादनुवर्त्ततइत्याह । तत्पुरुषइति । प्रकारकइति । कुगतीति समासः । लित्स्वरेणोत्तरपदमाद्युदात्तम् । नृवाहसेति । नृन् वहतइति विग्र-

ह्नः । वसेर्णिदिति सूत्राण्णिदित्यनुवृत्तेः । असुनो णित्त्वा-दुपधावृत्तिः । णित्स्वरेणोत्तरपदमाद्युदात्तम् । उच्चैःकार-मिति । णमुल्विधावुच्चैरित्युपपदम् । इह कृद्ग्रहणमाकरे प्रत्याख्यातम् । तथा च वार्त्तिकम् । "गत्यादिभ्यः प्रकृतिस्व-रत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावा"दिति । तत्रेदं विचार्यते । तिङन्तसमासे अयं स्वरो भवति न वेति । आ-द्यो यः स्वर्रं स्वरद्यन्वविन्दत यो जातः पर्यभूषत् इत्यादि-प्रयोगाणां सौष्ठवे ऽपि यत्रा नरो देवयन्तो युगानि वित-न्वते इत्यत्र श्रूयमाणमन्तोदात्तत्वन्न सङ्गच्छते कृद्ग्रहणङ्कु-र्वता सूत्रकृता विरोधश्च । सहेति योगं विभज्य तत्पुरुषस-ञ्ज्ञातः प्रागेव तिङ्समासं कृतवतो भाष्यकृतो ऽपि प्रति-कूलमिदमिति दोषत्रयम् । द्वितीये तु समासान्तोदात्तत्वेन वितन्वतइत्यस्य सिद्धावपि अन्वविन्दत् पर्यभूषत् इत्यादौ उ-त्तरपदाद्युदात्तत्वं न सिध्येत् । कृद्ग्रहणं प्रत्याचक्षाणेन तत्पु-रुषाधिकारे तिङ्समासं विदधता कात्यायनेन विरोधश्चे-ति । किं च कैयटहरदत्तादयो ऽप्यत्र उत्तरपदप्रकृतिस्वरस्य वार्त्तामप्यकृत्वा समासान्तोदात्तत्वमात्रं भवति न वेति सं-दिग्धमेव व्यवजह्रुः । तथा च सह सुपेत्यत्र कैयटः । अनुव्य-चलदित्यत्र समासमुक्त्वा शाकलप्रतिषेधं तत्फलमभिधाय समासान्तोदात्तत्वन्तु न भवति तिङ्ङतिङ इति निघातेन बाधितत्वादिति के चिदाहुरित्युक्त्वा एवं सति अनुप्राविश-दित्युदाहरणं भाष्योक्तं निष्फलं स्यात् । तस्मात्सति शिष्टत्वा-त्समासान्तोदात्तत्वेन भाव्यमित्यपरे इत्युक्त्वा तत्र तिङा ए-कत्वस्योक्तत्वात्प्रातिपदिकत्वे ऽपि सुबनुत्पत्तिरित्युक्त्वा अन्ये त्वित्युपक्रम्य वचनग्रहणादुक्ते ऽप्येकत्वे सोरुत्पत्तिं हल्ङ्या-दिलोपं च विधाय तदुपष्टम्भार्थम् अत एवैकपद्यादामनुप्रा-विश देवदत्तेत्याम एकान्तरमामन्त्रितमिति निघातप्रतिषे-धः सञ्ज्ञायाः प्रयोजनमस्त्येवेति तिङन्तनिघातवादिन आ-

ङ्गरित्युपसञ्जहार। हरदत्तो ऽप्येवं कैयटोक्तिमात्रमन्ववादीत्। एवं हि वदता किं परत्वान्निघात उत सति शिष्टत्वात् समासान्तोदात्त इति नावधारितम्। तत्रापि अनुव्यचलदित्यादौ यथा तथास्तु यो जात इत्यादौ तु यद्वृत्तान्नित्यमिति निघाते निषिद्धे समासान्तोदात्तत्वं केन वार्यताम्। किं च द्वितीयपक्षे अत्यायाहि शश्वतो वयन्ते इत्यत्र आङ उदात्तः कथं निर्वोढ्यः। अपि च युधे यदिष्णान आयुधान्यृघायमाणो निरिणातीत्यत्र च निशब्दो निहन्यते। वितन्वतइत्यत्र विशब्दश्चेति तावन्निर्विवादम्। समासान्तोदात्तत्वन्तु रिणातीत्यत्र न। तन्वत इत्यत्र तु भवतीति वैषम्यं दुरुपपादमिति महत्सङ्कटम्। अत्रेदं तत्त्वम्। वार्त्तिकमते तावदाद्य एव पक्षः कृद्ग्रहणस्य प्रत्याख्यानात्। तत्पुरुषत्वाभ्युपगमाच्च। वितन्वतइत्यत्र तु निचक्रादित्वादन्तोदात्तत्वं कल्प्यम्। अत्यायाहीत्यत्र तु तिङ्ङतिङ इति निघाते आङा समासः। उत्तरपदस्योदात्तशून्यतया गतिस्वराभावादव्ययपूर्वपदप्रकृतिस्वरेण आङुदात्तः। ततो अतिशब्देन समासे कृते कृद्ग्रहणप्रत्याख्यानात् उत्तरपदप्रकृतिस्वरेणेष्टसिद्धिः। निरिणातीत्यत्र तु यच्छब्दयोगे निघातनिषेधात्पूर्ववदेवेष्टं सिद्धम्। भाष्यमते तु तत्पुरुषत्वाभावात् गतिस्वरस्याव्ययपूर्वपदप्रकृतिस्वरस्य चाभावे समासान्तोदात्तत्वेनैव वितन्वतइति सिद्धम्। अन्वविन्दत् निरिणातीत्यादौ उत्तरपदप्रकृतिस्वरत्वन्तु बाहुलकात्समाधेयम्। नित्यं क्रीडेत्यत्र नित्यमिति योगं विभज्य लक्ष्यानुरोधेन क्व चित्तत्पुरुषता वा स्वीकर्त्तव्या। अत एवोदात्तवतेत्यस्य भाष्ये द्विः पाठः सङ्गच्छते। अप्रसूतिराशचीभिः, उपप्रेतकुशिका इत्यादौ तु समासो न कृतः। गतिर्गताविति तु सर्वविधीनां छन्दसि विकल्पान्न कृतम्। अपदादावित्यधिकाराद्वेति दिक्। बृहच्छब्द इति। अन्तोदात्तो ह्यसौ। इन्द्र

ऋतुर्हि ते बृहन् इत्यादौ तथा दर्शनात् । तनूनपादिति । तनूशब्दो ऽन्तोदात्तः । तस्येहाद्युदात्तत्वं निपात्यते । तनूनपादुच्यते गर्भ आसुर इत्यादौ तथा दर्शनात् । तनूनपात् पय ऋतस्येत्यत्र तु षाष्ठ आमन्त्रितस्वरो बोध्यः । नरा एनं शंसन्तीति नराशंसः । नृनये । अस्मादप् । शंसतेर्घञ् ॥

नोत्तरपदे ॥ इह पृथिव्यादिपर्युदासो ज्ञापयति । स्वरविधौ व्यञ्जनमविद्यमानवदिति । तेनाग्निमीडे इत्यादौ स्वरितः सिध्यति ॥

थाथघञ् ॥ आवसथः प्रभेदः दूरादागतः प्रत्ययः प्रबलः प्रलवित्रम् प्रदेषः । पुरुष्विति । तृतीयातत्पुरुषे तु तृतीया कर्मणीति सूत्रेण कर्मणि क्तान्ते उत्तरपदे तृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरः स्यादिति भावः ॥

बह्वोर्न ॥ बहुयवो देशः । बहुजरः । इह नञोजरेत्येतदतिदिश्यते ॥

परादिश्छन्दसि बहुलम् ॥ उरुक्षयेति । उरूणाम्बहूनाङ्क्षयौ क्षयो निवासइत्याद्युदात्तः क्षयशब्दः । समासस्येत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितम् । अतो बाहुलकेनोत्तरपदाद्युदात्तत्वमिति वेदभाष्ये स्थितम् । एतच्च क्षि निवासगत्योरिति धातोर्बाहुलकादधिकरणे एरजिति माधवमतेनोक्तम् । वस्तुतस्तु घप्रत्ययान्तः क्षयशब्द इति हरदत्तोक्तरीत्या थाथादिस्वरस्येहाप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैवेदं सिद्धम् । परादिश्छेत्यस्योदाहरणन्तु चोदयित्री सूनृतानामिति बोध्यम् । ऊन परिहाणे । चुरादिष्वदन्तः । णिच् । क्विप् । सुतरामूनयत्यप्रियमिति सूनं प्रियं ऋतञ्च सूनृतम् । अयस्मयादीनि इति भत्वान्नलोपो न । सुष्टिहत्ययेति । मुष्ट्या हननं मुष्टिहत्या । हनस्त चेति सुबन्तउपपदे क्यप् । कृदुत्तरपदस्वरो ऽत्र प्राप्तः । त्रिचक्र इ-

ति । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः । विश्वायुरिति । विश्वमायुर्यस्मिन्धने इति बहुव्रीहिः । विश्वशब्दः क्वन्प्रत्ययान्तः । पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिह प्राप्तम् ॥ इति समासस्वरप्रकरणम् ॥

तिङ्ङतिङः ॥ अतिङः किम् । पचति भवति । पाको भवतीत्यर्थः । वस्तुतस्तु अतिङ्ग्रहणं व्यर्थम् । समानवाक्याधिकारस्य वार्त्तिकोक्तस्यावश्यकत्वात् ॥

निपातैः ॥ यदित्यादीनां यचेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक् । न तु युक्तशब्देन समासः । निपातैरिति विशेषणस्यानन्वयापत्तेः । यत् पदार्थे च हेतौ च विचारे यदि चेद्वयोः । हन्त हर्षे ऽनुकम्पायां वाक्यारम्भविषादयोः । कच्चित्प्रश्ने नेन्निषेधे प्रशंसायाङ्कुविस्मृतः । यचेत्याधारे । तत्र मूले केचिदुदाहृताः । अन्ये ऽप्यूह्याः । यथा । हन्त करोति । कथन्तर्हि हन्ताहं पृथीवीमिमां निदधानीह वेहवा । अत्र दधानीति तिङन्तस्य निघातनिषेधः प्राप्नोति । सत्यं बाहुलकान्निघातः । एतेन हन्तो नु किमासस इति व्याख्यातम् । हन्तो इत्यखण्डनिपातो वा बोध्यः । तथैव पदकारैः पाठात् । नेच्चेच्छब्दौ तु निपातसमाहारात्मकौ नेद्देवमायुजन्नत्र देवाः । अन्यस्मेन्नाभिगच्छति । अत्र नञ्वाभ्यां विच्छिद्य इच्छब्दस्य पदकाले पाठात् । चणिति । चेदर्थएव णित् । समुच्चयादौ त्वणित् । इन्द्रश्च मृडयाति नः । इन्द्रश्चेदस्मान्सुखयेदित्यर्थः । त्वञ्च सोम नो वशो जीवातुन्नमरामहे । हे सोम त्वञ्चेन्नो जीवातुं वशः । वश्यः कामयेथा इत्यर्थः । निपातैः किम् । यत्कूजति शकटम् । एतीति यत् । इणः शतरि इणो यणिति यण् । ननु प्रतिपदोक्तत्वाद्यद्यादिभिः साहचर्याच्च निपात एव ग्रहीष्यते सत्यम् । ज्ञापनार्थमिदम् । अत्र प्रकरणे उक्तरीत्या सङ्कोचो नेति । तेन यावद्यथाभ्यामिति सूत्रे यत्तदेतेभ्य इति

वत्वन्तोपि यावच्छब्दो गृह्यते । तथा च प्रयुज्यते । तावद्गुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना । अत्रारदइत्यट्स्वरेणाद्युदात्तम् । युक्तग्रहणाङ्क्तिम् । अन्वान्विते मा भूत् । यत्र क्व च ते मनो दक्षं दधस उत्तरम् । इह यत्रेत्यस्योत्तरमित्यनेन साक्षात्संबन्धः । दध धारणे अनुदात्तेत् । भोव्यसइति । अदुपदेशात्परत्वात्सेइत्यस्य निघातः । मध्योदात्तं पदम् ॥

किंवृत्तञ्च ॥ इह जात्वपूर्वमिति पूर्वसूत्रादपूर्वग्रहणमनुवर्त्तते तद्व्याचष्टे अविद्यमानेति । तेनेह न । देवदत्तः किंचित्पठति । नान्यैरिति । यदि हन्तेत्यादिभिरित्यर्थः । उत्तरवाक्ययोरिति । दिवो वा पार्थिवादधि । इन्द्रं मह्नो वा रजसः । इत्येतयोरित्यर्थः । इन्द्रं प्रतिसातिश्चनदानमधीमहे आधिक्येन याचामहे । वैदिकनिघण्टौ याच्ञाकर्मसु ईमहे इति पाठात् । कस्माल्लोकादित्याकाङ्क्षायामाह । इतो ऽस्मात्पार्थिवात् वा दिवो वा मह्नो महतः । प्रौढाद्रजसो रञ्जकात् । अन्तरिक्षलोकाद्वेति मन्त्रार्थः । ननु श्रुतस्यैव तिङन्तस्योत्तरत्रानुषङ्गः तत्कथं प्राथम्यमिति चेत् अनुषक्तस्यापि औपाधिकभेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात् । एतच्चेहैव मन्त्रे नियेन मुष्टिहत्ययेति मन्त्रे च वेदभाष्ये स्पष्टम् । इन्द्रवाजेष्विति । अवेति । तिङन्तस्येह निघातः । निघाताभावस्य तु उदाहरणान्तरं बोध्यम् ॥

यद्वृत्तान्नित्यम् ॥ यद्वृत्तात्परमिति अव्यवधानांशस्तु नेहापेक्ष्यते । तेन यो जात एव पर्य्यभूषत् इत्यादौ निघातनिषेधः सिध्यति । अत्र प्रमाणन्तु पूजनात्पूजितमिति सूत्रे पूजितग्रहणम् । तथा हि । पूजनात्पूजितमनुदात्तमिति सूत्रेण काष्ठाध्यापकः दारुणाध्यापकः परमाध्यापक इत्यादौ अनुदात्तता विधीयते । तत्र काष्ठादिभ्य इति वार्त्तिकं वृत्तिकृता सू-

त्वावयवत्वेन पठितम्। उदाहरणेषु मयूरव्यंसकादित्वात्समास इति वृत्तिमतम्। असमासे एव क्रियाविशेषणीभूतानां दारुणमित्यादीनां मलोपो निपात्यतइति भाष्यवार्त्तिकयोः स्वरसः। कैयटादयो ऽप्येवम्। उभयथा ऽपि पूजनादित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरप्रतिपत्त्यर्थं सत् ज्ञापयति। इह प्रकरणे पञ्चमीनिर्देशे ऽप्यानन्तर्यं नाश्रीयतइति॥ इति तिङन्तस्वरनिरूपणप्रकरणं पञ्चमम्॥

संहितायान्त्विति। तयोर्य्वावचि संहितायामिति सूत्रे संहितायांग्रहणस्याशास्त्रसमाप्तेरधिकृतत्वात्। स्वरितविधेस्तु तदन्तर्भूतत्वादिति भावः। नन्वसंहितायाङ्कालव्यवायादेव स्वरितो न भविष्यति तत्किमुक्तेन संहिताधिकारेणेति चेत्। मैवम्। संहिताधिकारबहिर्भूतानां कालव्यवाये ऽपि प्रवृत्तिञ्ज्ञापयितुं तदारम्भात्। तेनाग्नाविष्णू इत्यग्नाविष्णू इत्यादाववग्रहे ऽपि आनङादयः पदविभागे वस्वसादयः अग्निमीळइत्यत्र पदविभागे ऽपि निघातश्च सिध्यति। संहिताधिकारस्थन्तु यणादिकं स्वरितप्रचयादिकं च नेति विवेकः। नन्वेवं पुरः हितमिति विग्रहे हितशब्दस्य स्वरितत्वं बह्वृचैः पठ्यमानं न सिद्ध्येदिति चेत् मैवम्। तदीयप्रातिशाख्ये विशिष्य विधानात्। उक्तं हि "यथा सन्धीयमानानामनेकीभवतां स्वरः। उपदिष्टस्तथा विद्यादक्षराणामवग्रहे"॥ इति। नन्वेवमुपह्वत्वै अन्वेतवा इत्यादीनामवग्रहे उत्तरखण्डाद्यवर्णस्य प्रचयः स्यादिति चेन्न। पद्यादीस्तु ह्युदात्तानामसंहितवदुत्तरानिति विशेषवचनात्। एवं रत्नधातमम्, अलाभवन्तीरित्यादीनां क्रमकाले इतिशब्दोत्तरभागे प्रचयो न प्रवर्त्तते। परिग्रहे त्वनार्षान्तात्तेन चैकाक्षरीकृतात्। परेषां न्यासमाचारं व्यालिस्तौ चेत्स्वरौ परौ। इति वचनात्। इत्यमन्यत्रापि मुनित्रयवचांसि तत्तत्प्रातिशाख्यानि तद्व्याख्यातृगिरो निरू-

क्तादिग्रन्थांश्च पर्यालोच्य तत्त्वं निर्णेयम् । तदाह । यथाशास्त्रमुन्नेयमिति ॥

अखण्डमपि यत्सर्वङ्कृतद्धितपरं परम् ।
अशेषशास्त्रसंवेद्यमक्षरं तदुपास्महे ॥ १ ॥
सिद्धान्तकौमुदीव्याख्या सेयं प्रौढमनोरमा ।
भट्टोजिदीक्षितकृतिर्भूयाद्विश्वेशतुष्टये ॥ २ ॥

इति पदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां प्रौढमनोरमायामुत्तरार्द्धं समाप्तम् ॥



